# दशकुमारचरितम् ।

महाकवि-श्रीदण्ड्याचार्य्यप्रणीतम् ।

पण्डितकुलपतिना, बि, ए, उपाधिधारिणा,

श्रीमज्जीवानन्द-विद्यासागर-भट्टाचार्य्येण

विरचितया व्याख्यया समुद्भासितम् ।

तदात्मजाभ्यां

पण्डित-श्रीआशुबोध-विद्याभूषण-पण्डित-श्रीनित्यबोध-

विद्यारत्नाभ्यां टीकया परिवर्द्धितं

संस्कृतं प्रकाशितञ्च ।

सप्तमसंस्करणम् ।

कलिकातामहानगर्य्याम्

वाचस्पत्ययन्त्रे

मुद्रितम् ।

ई १८९५ ।



[ मूल्यं [illegible] ] ।

प्रकाशक— पण्डित-श्रीआशुबोध विद्याभूषण
तथा
पण्डित श्रीनित्यबोध-विद्यारत्न।

प्राप्तिस्थान— २ नं०, रमानाथ मजुमदार ष्ट्रीट्, आम्हार्ष्ट-
ष्ट्रीट् पोष्ट-अफिस, कलिकाता।

प्रिण्टर—वि, वि, मुखर्जी।

२ नं०, रमानाथ मजुमदार ष्ट्रीट्, कलिकाता।

# दशकुमारचरितस्य सङ्क्षिप्तकथायां

## पूर्वपीठिका।

---

### अथ प्रथमोच्छ्वासः।

प्रणम्य परमात्मानं श्रीजीवानन्दशर्मणा।
कथा दशकुमारस्य सङ्क्षेपात् लिख्यते मया॥

अस्ति मगधो नाम महान् जनपदः। तत्रासीत् पुष्पपुरी नाम नगरी। राजहंसो नाम महाप्रतापस्तस्यां राजा बभूव। तस्य वसुमती-नाम्नी महादेवी, परमविधेया धर्मपाल-पद्मोद्भव-सितवर्मनामधेयास्त्रयो-ऽमात्याश्चासन्। तेषाञ्च धर्मपालस्य सुमन्त्रसुमित्रकामपालाः, पद्मोद्भवस्य सुश्रुतरत्नोद्भवौ, सितवर्मणः सुमतिसत्यवर्माणौ इति सूनवः समभवन्। तेषु धर्मशीलः सत्यवर्मा संसारस्य असारतां बुद्ध्वा तीर्थयात्रार्थं देशान्तर-मगमत्। कामपालः वारनारीपरो दुर्विनीतः पितुरग्रजस्य च शासन-मतिक्रम्य भुवं बभ्राम। रत्नोद्भवः वाणिज्यार्थं समुद्रपारगमनमकार्षीत्। अपरे सुमन्त्रसुमित्रसुश्रुतसुमतयः पितृषु सुरलोकमितेषु यथापूर्वमन्वतिष्ठन्।

एकदा मगधाधिपतिः मालवेन्द्रं मानसारं जिगीषुः महता बल-समुदायेन सङ्ग्रामभूमिमवातरत्। सोऽपि चतुरङ्गबलोद्रिक्तः सविग्रहो दर्प इव तमभिजगाम। तयोश्च शस्त्राशस्त्रि हस्ताहस्ति परस्पराभिहतसैन्यं महत् जन्यम् अजनि। जितश्च मालवनाथो मगधनाथेन। अथ कृपा-क्रान्तचेता मगधेश्वरो मालवेन्द्रं प्रत्यर्पितसकलसैन्यं पुनः स्वराज्ये स्थापया-मास। ततः स राजा राजहंसो विजयप्रफुल्लमनाः स्वराजधानीं प्रत्येत्य अनन्यशासनां धरां शासदपि केवलमनपत्यतया जातदैन्यः सकललोकैक-शरण्यं नारायणमजस्रमाराधयामास।

अथ तदग्रमहिषी वसुमती प्रत्यूषसि सुस्वप्नम् अवलोकितवती ; ततो दैवानुग्रहेण दयितमनोरथपुष्पभूतं गर्भमधत्त। राजाऽपि तद्विदित्वा सानन्दः समाहूतनिखिलबन्धुवर्गः निजोत्साहसम्पदनुरूपं सीमन्तोन्नयना-दिकं च उत्सवमन्वतिष्ठत्। कदाचित् सभासीनो नृपः सभासिनमेक-

मागतमभाषत—“ननु तापस ! देशं सापदेशं भ्रमन् किमपि कश्चिदवगतश्चेत् कथयतु भवान्” इति। तेन कृताञ्जलिना अभाषि—“देव ! देवस्याज्ञां शिरसि धृत्वा अनेन अनाशङ्कनीयेन वेषेण मह्यीं चरन् मालवदेशमनुप्रविश्य तत्र सुगूढं तिष्ठन् तस्य राज्ञः समस्तवृत्तान्तम् उपलभ्य प्रत्यागमम्। मानी मानसारः सङ्ग्रामे भवतः पराजयमवाप्य नितरामवमानितः सुदीनमना महाकालनिवासिनं महाकालम् आराध्य तपःसन्तुष्टात् तस्मात् एकवीरारातिघातिनीं महागदां प्राप्य कृतार्थंमन्यः साम्प्रतं भवन्तमभियोक्तुम् उद्यच्छतीति श्रुत्वा देवः प्रमाणम्” इति। तदाकर्ण्य अमात्या ऊचुः,—“देव ! यदयमरातिरप्रतिविधेयेन दैवबलेन योद्धुमायाति तदस्माकमनेन योद्धुमसाम्प्रतम्।” एवं बहु विज्ञापितोऽपि तैः नरपतिः महता गर्वेण परीतः तेषां वचनमनादृत्य प्रतियोद्धुमना आसीत्। महेश्वरदत्तबलो मानसारः समस्तसाधनसमेतो मगधदेशं प्राविशत्। अत्रान्तरे मन्त्रिणो राजानं राजहंसं कथञ्चिदनुनीय तदीयावरोधान् रिपुदुर्गमे विन्ध्याटवीमध्ये मूलबलरक्षितान् न्यवेशयन्।

अथ राजा महाबलसामग्रीसमेतः सङ्ग्रामभूमिमवातरत्, अवाकिरच्च महान्तमरातिं मालवराजम्। महति सम्प्रहारे चलति मालवराजो महतीं तां गदां मगधेश्वराय प्राहिणोत्। सा तु निशितशरशतेन शकलीकृताऽपि अन्ततः दैवशक्तेरप्रतिविधेयतया सूतं निहत्य राजानं राजहंसं रथस्योपरि एव मूर्च्छितमकरोत्। ततो वीतप्रग्रहा अक्षतविग्रहाश्च वाहा दैवगत्या रथमादाय अन्तःपुरशरण्यं महारण्यं प्राविशन्। तत्र अमात्याः कथञ्चिदक्षतशरीराः समागत्य राजानमनवलोक्य दैन्यपरीता देवीमवापुः। सा च तेभ्यो निखिलसैन्यक्षतिं राज्ञोऽदृश्यत्वञ्चाकर्ण्य शोकार्णवनिमग्ना राजानं गतजीवितं मन्यमाना तदनुसरणे मतिमकरोत्। अथामात्यपुरोहिताः समेत्य तां “कल्याणि ! देवस्य निधनमनिश्चितम्, अन्यच्च, दैवज्ञेन कथितं भवत्या उदरे सार्वभौमः कुमारो वसतीति, तदिदानीं तव मरणाय समुद्योगो न युक्तः” इति प्रबोध्य कथञ्चित् समसान्त्वयन्।

अथ अर्धरात्रे निद्रानिखिलपरिजने सा महिषी शोकार्णवमपारमुत्तर्तुमशक्नुवती सैनानिवेशं शनैरतिक्रम्य यस्मिन् रथस्य संसक्ततया

तदानयनपलायनपरिश्रान्ता गन्तुमक्षमाः क्षमापतिरथ्याः समाकुलाः समतिष्ठन्, तत्र निकटे वटतरुशाखायाम् उत्तरीयार्द्धेन बन्धनं विरच्य मर्त्तुकामा साश्रुकण्ठा व्यलपत्। तदाकर्ण्य तल्पस्थो मगधपतिरवशेन्द्रियः कथञ्चिदनुत्क्रान्तजीवितः लब्धचैतन्यः तत् विलपितं देवीवाक्यमेव निश्चिन्वानः शनैस्तामाह्वयत। सा तु तद्वचनं स्वरेण भर्तृवाक्यमेव मन्यमाना ससम्भ्रमम् आगत्य प्रफुल्लवदना तं नेत्राभ्यां पिबन्तीव विकस्वरेण स्वरेण पुरोहितामात्यादिकं समाहूय तेभ्यस्तमदर्शयत्। ते ऊचुः,—"देव! वाहाः सारथ्यपगमे रथं रभसात् अरण्यमनयन्निति हृष्ट-मस्माभिः"। ततो राजा अब्रवीत्—"तत्र निहतसैनिकग्रामे सङ्ग्रामे मालवराजेन प्रहितया गदया ताड़ितोऽहं मूर्च्छामेत्य अत्र वने वाहैरानीतो निशीथपवनेन लब्धसंज्ञोऽस्मि" इति। ततो मन्त्रिपुरोहितादयः तं शिविरमानीय अपनीताशेषशल्यं विरोपितव्रणम् अकार्षुः। प्रियभाषिण्या राज्ञ्या वसुमत्या असौ सुदीनान्तराला महीपतिर्विविधप्रबोधवचनैः समाश्वासि।

अथ कियता कालेन समाश्वस्तचित्तो राजा सकलसैन्यसामन्तसमवेतः महातापसं वामदेवं समाजगाम। तेन च कृतातिथ्यो राजा तदाश्रमे कियन्तं कालमुषित्वा तं समाराधयन् समब्रवीत—"भगवन्! मानसारः प्रबलेन दैवसहायेन मां निर्जित्य मद्राज्यं भुनक्ति। अहमपि उग्रं तपो विरचय्य तद्बलेन तमरातिमुन्मूलयितुमिच्छन् भवन्तं शरणं गतः" इति। ततो मुनिरभाषत—"राजन्! तपसा अतिक्लेशकारिणा अलम्। तवाग्रमहिषीगर्भस्थितो राजकुमार एव तव मनोरथं सम्पादयिष्यति। कञ्चन कालमपेक्षस्व" इति। तदानीञ्च गगनचारिण्या वाचा तदेवानु-मोदितम्। राजा तदेव वचनमनुसरन् तत्र कालं प्रतीक्षाञ्चक्रे।

अथ कालेन प्राप्तप्रसवकाला वसुमती शुभे मुहूर्त्ते सर्वलक्षणलक्षितं सुतमसूत। अथविन् राजा महानन्दपरीतः तेन मुनिना जात-संस्कारं कुमारं राजवाहननामानमकरोत्। एतस्मिन्नेव काले सुमति-सुमन्त्रसुमित्रसुश्रुतानां मन्त्रिणां प्रमतिमित्रगुप्तमन्त्रगुप्तविश्रुताख्याश्चत्वारः सूनवः समजायन्त। राजवाहनस्तैर्मन्त्रिपुत्रैरात्मबिम्बैरिव सह बाल-केलीरनुभवन्नवर्द्धत।

# उपहारवर्मोत्पत्तिकथा ।

कदाचित् कश्चित्तापसः कमपि सुलक्षणं कुमारं राज्ञे राजहंसाय समर्प्य अवोचत्—"नृपते ! कुशसमिदाहरणार्थिना मया वनमध्ये काचिदनाथा रुदती नारी अवलोकिता । 'निर्जनेऽस्मिन्नरण्ये किमिति रुदति ?' इति पृष्टा सा अश्रूणि प्रमृज्य सगद्गदमवादीत्—'भगवन् ! मिथिलेश्वरे प्रहारवर्मणि निजसुहृदो मगधनाथस्य सीमन्तिनीसीमन्तमहोत्सवाय सपुत्रदारे पुष्पपुरीमेत्य कञ्चन कालमधिवसति मालवाधीश्वरो मानसारो मगधमाचक्राम । तत्र महति सम्पराये सुहृदो राजहंसस्य साहाय्याय रणभूमिमवतीर्णो मिथिलेश्वरो रिपुणा मालवराजेन निर्जित्य कारुण्येन विसृष्टो हतावशिष्टेन सैन्येन सह स्वपुरं गच्छन् वनभूमौ अधिकबलेन शबरसैन्येन रभसादाक्रम्यमाणो मूलबलरक्षितान्तःपुरः पलायिष्ट । यमजयोस्तदीयार्भकयोः धात्रीभावेन परिकल्पिताऽहं मद्दुहिता च द्रुतगतिं नृपतिमनुगन्तुमक्षमे अभूव । तत्र व्यात्ताननः कोऽपि व्याघ्रः शीघ्रं मामन्वधावत् । भयस्खलिताऽहं पाषाणोपरि पर्य्यपतम् । मत्पाणिस्थितः शिशुः प्रभ्रष्टः कस्यापि गोशवस्य क्रोडमध्यलीयत । तच्छवमाकर्षतस्तस्य शार्दूलस्य प्राणान् कोऽपि शबरः शरेणापाहरत् । स च बालः शबरैः क्वापि अनीयत । अपरं राजकुमारमुद्वहन्ती मम सुता क्व गतेति न जानामि । साऽहं मोहं गता केनापि कृपालुना गोपालेन स्वकुटीरं नीत्वा विरोपितव्रणा अभवम् । ततः स्वस्थीभूय भूयः स्वामभर्तुरन्तिकमुपजिगमिषुः असहायतया दुहितुरनभिज्ञतया च व्याकुलीभवामि' इत्यभिदधाना 'एकाकिन्यपि स्वामिनं गमिष्यामि' इति कृतमतिरगात् । अहमपि भवन्मित्रस्य मिथिलेश्वरस्य दुरवस्थामनुस्मरन् तदीयं कुमारमन्विष्यन् एकं चण्डिकामन्दिरमगच्छम् । तत्र गत्वा एनं कुमारं शबरैः अनेकधा हन्यमानमालोक्य जातदयस्तानभ्यधां—'ननु भद्राः ! अस्मिन् घोरे कान्तारे भ्रष्टपथः स्थविरोऽहं ब्राह्मणः मम पुत्रकं क्वचित् तरुच्छायायां रक्षित्वा मार्गान्वेषणाय कञ्चिदन्तरम् अगमम् । प्रत्यागत्य स कुत्र गतः केन वा गृहीतः इति नावधारयितुं शक्नुवन् युष्मदन्तिकमायातोऽस्मि यदि युष्माकं दर्शनपथं गतोऽसौ' इति । एवमुक्ते ते 'ब्रह्मन् ! अयमेकः शिशुरस्माभि-

रधिगतः, यदि सत्यमेव तवात्मजो भवेत् तदा गच्छाय' इत्युक्त्वा मध्यमदुः । अथाहं तेभ्यो दत्ताशीर्बालकमेनमादाय शिशिरोपचारादिना समाश्वास्य निःशङ्कं भवदन्तिकमानीतवानस्मि । भवानिदानीमस्य पितृस्थानीयः परिपालयतु तावदायुष्मन्तम्" । राजा सुहृदापन्निमित्तं शोकं तदीयकुमारमुखावलोकनसुखेन किञ्चित् सङ्कोच्य तमुपहारवर्मनाम्ना आहूय स्वपुत्रनिर्विशेषमपुषत् ।

---

## अपहारवर्मोत्पत्तिकथा ।

एकदा राजा तीर्थस्नानाय गच्छन् किरातपल्लीमार्गेण कयाचित् उपलालितमेकं सुकुमारं कुमारमवलोक्य तामवादीत्—"भद्रे ! कोऽयं बालः ? कस्य वा नयनानन्दः ? केन वा निमित्तेन दीन इव लक्ष्यते ?" । तया सप्रणाममभिहितं—"महात्मन् ! अस्मिन् मार्गे गच्छतः शक्रतेजसो मिथिलेश्वरस्य सर्वस्वमपहरति शबरसैन्ये मत्पतिना अपहृत्य बालोऽयं मह्यमर्पितः, मया च सयत्नं लाल्यते" । राजा तदाकर्ण्य मुनिकथितं द्वितीयं राजकुमारमेनं निश्चित्य सामदानाभ्यां तां शबरीं सन्तोष्य अपहारवर्मनामानं कृत्वा देव्यै समर्पयामास ।

---

## पुष्पोद्भवोत्पत्तिकथा ।

कदाचित् वामदेवान्तेवासी सोमदेवशर्मा नाम कमपि बालं राज्ञः पुरतो नीत्वाऽब्रवीत्—"देव ! रामतीर्थे स्नात्वा समागच्छता मया वनभूमौ कयाऽपि वनितया लाल्यमानमेनं समुज्ज्वलरूपं कुमारमवलोक्य सा अभाणि—'भद्रे ! का त्वम् ? को वाऽसौ शिशुस्त्वया आयासेन लाल्यते ?' इति । सा अब्रवीत्—'भगवन् ! कालयवनद्वीपे कालगुप्तो नाम कश्चित् महाधनो वैश्यवरोऽस्ति । एतस्मात् द्वीपात् गतो मगधराजमन्त्रिसुतो रत्नोद्भवो नाम तदीयां कन्यां सुवृत्तां नामोपयम्य श्वशुरेण समाहूतस्तत्रैव तस्थौ । कालेन सा सुवृत्ता गर्भिणी जाता । ततः सहोदर-

दर्शनार्थी रत्नोद्भवः श्वशुरमनुनीय अनया भार्य्यया सुवृत्तया सह प्रवहणम् आरुह्य पुष्पपुराभिमुखः प्रतस्थे। दुर्दैवगत्या तत्प्रवहणं समुद्राम्भसि न्यमज्जत्। अहन्तु अस्या धात्रीभावेन परिकल्पिता तस्मिन्नेव प्रवहणे स्थिता कराभ्यां तां सुवृत्तामुद्वहन्ती फलकमेकमवलम्ब्य कथमपि तीरभूमिमासादयम्। रत्नोद्भवस्य गतिर्न मया विदिता। क्लेशस्य परां काष्ठां गता सुवृत्ता अस्मिन् अटवीमध्ये सुतमसूत। मार्गमन्वेष्टुकामाऽहं प्रसववेदनया विश्रान्तायास्तस्याः समीपे बालकं निक्षिप्य गन्तुमयुक्तमिति तं शिशुमनयम्' इति। अत्रान्तरे कश्चित् वन्यो वारणः प्रत्यदृश्यत। तमालोक्य सा भीता तं बालकं निपात्य प्राद्रवत्। अहमपि सन्निहितलतागुल्ममासाद्य परोक्षमाणः स्थितः। अथ निपतितं बालकं पल्लवकवलमिवाददति गजराजे कश्चित् सिंहः समभ्यधावत्। तदवलोक्य भयाकुलेन गजेन झटिति वियति समुत्पात्यमानो बालकः न्यपतत्। दीर्घायुष्यतया असौ केनचित् वानरेण पक्वफलबुद्ध्या परिगृहीतः पुनः फलेतरबुद्ध्या विततरुस्कन्धमूले निक्षिप्तोऽभूत्। स च केशरी गजपतिं निहत्य प्रतस्थे। वानरोऽपि क्वापि गतः। अहन्तु तस्मात् लतागुल्माभ्यन्तरात् निर्गत्य बालकमेनमवनिरुहस्कन्धात् अवतार्य्य वनान्तरे तां वनितामप्राप्य गुरवे निवेद्य तदादेशेन भवदन्तिकमनयम्"। राजा तु तदाकर्ण्य रत्नोद्भवः कथमभवदिति चिन्तयन् तन्नन्दनं पुष्पोद्भवनामानं कृत्वा तद्वृत्तान्तं सुश्रुताय व्याख्याय विषादसन्तोषौ अनुभावयन् तदनुजतनयं समर्पितवान्।

---

# अर्थपालोत्पत्तिकथा।

एकदा कमपि बालकमुत्सङ्गे धृतं वसुमत्या दृष्ट्वा राजा अब्रवीत्— "देवि ! कुतोऽसौ कथं लब्धः ?" इति। सा प्रोवाच—"नाथ ! अतीतायां रजन्यां काचन दिव्याङ्गना मत्पुरतः कुमारमेनं समर्प्य निद्रितां मां विबोध्य सविनयमब्रवीत्—'देवि ! त्वन्मन्त्रिणो धर्मपालनन्दनस्य कामपालस्य वल्लभाऽहं यक्षकन्या तारावली नाम नन्दिनी मणिभद्रस्य। धनपतेः आदेशेन मदात्मजमेनं तव तनयस्य भाविचक्रवर्त्तिनः राजवाहनस्य

परिचर्य्याकरणार्थमानीतवत्यस्मि। त्वमेनं संवर्द्धय' इति। मया च विस्मितया सत्कृता असौ यक्षो तदैवान्तर्हिताऽऽसीत्" इति। राजा तदाकर्ण्य सविस्मयं सुमित्रं मन्त्रिणमाहूय तदीयभ्रातृपुत्रमर्थपालं नाम कृत्वा सर्वं वृत्तान्तं तस्मै समाख्याय प्रादात्।

---

## सोमदत्तोत्पत्तिकथा।

अन्येद्युः वामदेवशिष्यः कमपि शिशुमानीय राजानमब्रवीत्—"देव! तीर्थयात्राप्रसङ्गेन कावेरीतीरं गतोऽहं बालकमेनमुत्सङ्गे कृत्वा रुदतीं कामपि स्थविराम् आलोक्य अवोचं—'स्थविरे! का त्वम्? कथं वा रोदिषि? बालकश्च कस्य नेत्रानन्दकरः?' इति। सा करयुगेन वाष्पं प्रमृज्याब्रवीत्—"ब्रह्मन्! राजहंसामात्यस्य सितवर्मणः कनीयान् सुतः सत्यवर्मा तीर्थयात्राप्रसङ्गेन देशमिममागतः। स कुत्रचित् ग्रामे कालीं नाम कामपि विप्रतनयामुपयम्य तस्या अनपत्यतया तत्कनीयसीं भगिनीं गौरीं नाम परिणीय तस्यामेनं तनयमलभत। काली तु सासूयं धात्र्या मया सह बालकं केनचित् मिषेण आनीय अस्यामेव तटिन्याम् अक्षिपत्। अहन्तु करेणैकेन बालकमुद्धृत्य अपरेण अम्भसि प्लवमाना नदीवेगागतस्य कस्यचित् तरोः शाखामालम्ब्य तत्र शिशुं निधाय नदीवेगेन उह्यमाना तत्तरुस्थितेन कालसर्पेण दष्टाऽस्मि। मदाश्रयभूतोऽयं तरुर्दैवगत्या अस्मिन् देशे तीरमलगत्। विषस्य सुतीक्ष्णतया मयि मृतायाम् अरण्ये कश्चन शरण्यः नास्तीति मया रुद्यते' इति।

ततो विषमविषज्वलया सा वराकी धरणीतले न्यपतत्। सञ्जातदयोऽहं मन्त्रबलेन विषज्वालामपनेतुमक्षमतया सन्निहितकानने औषधिविशेषमन्विष्य प्रत्यागच्छन् मृतां ताम् आलोकयम्। तदनु अग्नि-संस्कारं विधाय व्याकुलचेता बालमेनमगतिम् आदाय भवदमात्यनन्दनस्य भवानेव रक्षितेति भवदन्तिकमानीतवानस्मि।"

तदाकर्ण्य राजा सत्यवर्मचिन्तया खिन्नमनाः सुमतये मन्त्रिणे

सोमदत्तं नाम तदनुजतनयं समर्पितवान्। सोऽपि सोदरमिव तं मन्यमानो विशेषेणापुषत्।

---

इत्थं मिलितेन कुमारवर्गेण सह बालकेलिमनुभवन् राजवाहनः क्रमेण चूडोपनयनादिकं संस्कारमवाप। ततः सकललिपिषु सकलदेशभाषासु षडङ्गसहितवेदेषु काव्यनाटकाख्यानादिषु धर्मशास्त्रज्योतिषतर्कमीमांसादिषु शस्त्रविद्यासु नीतिशास्त्रेषु कलासु मणिमन्त्रौषधादिप्रयोगेषु हस्तितुरगादिविद्यासु अन्येषु च विविधेषु वैषयिकव्यापारेषु तत्तदाचार्येभ्यः सम्यक् वैचक्षण्यं समासाद्य यौवनेन विलसन्तम् अनलसं कुमारनिचयं वीक्ष्य राजा साम्प्रतं शत्रुदुर्दर्षोऽहं जात इति मन्यमानः परमानन्दमविन्दत।

इति प्रथमोच्छ्वासः।

---

# अथ द्वितीयोच्छ्वासः।

एकदा वामदेवः राजानं कुमारनिचयञ्च प्रणतशिरसं गाढमालिङ्ग्य विहिताशीर्मधुरया वाचा प्रावोचत्—"राजन्! राजपुत्रो राजवाहनः साम्प्रतं सम्पूर्णलावण्यं तारुण्यमनुभवति, ससहचरस्यास्य दिग्विजयाय अयं कालः, तदस्य विजयप्रस्थानमङ्गलमाचरतु भवान्" इति। कुमाराश्च सर्वे तद्वाक्यमभिननन्दुः। ततः स राजा तत्रापि युक्तमितरेषां विधाय समुचितमुपदिश्य शुभे मुहूर्त्ते सपरिजनं कुमारं विससर्ज। राजवाहनः पित्रा कृताशीः शुभशकुनं विलोकयन् कांश्चित् देशानतिक्रम्य विन्ध्याटवीमविशत्, अपश्यच्च तत्र हेतिहतिकिणाङ्कं कालायसकर्कशकायं यज्ञोपवीतमात्रानुमितविप्रभावं प्रकटितकिरातप्रभावं दुर्दर्शं कमपि पुरुषम्। तेन च कृतातिथ्यः स राजतनयः समभ्यधात्—"ननु निर्जने घोरेऽस्मिन् कान्तारे किमिति एकाकी भवान् निवसति? भवत्कण्ठस्थमेतत्

यज्ञोपवीतं विप्रभावमवगमयति, ईतिवृत्तिभिश्च किरातभावम् । तत् कथय को भवान् ? कथमिदम् ?" इति । स पुमान् राजवाहनं महानुभावप्रकृतिं महापुरुषं मन्यमानः तद्वयस्येभ्यस्तन्नामजनने च विदित्वा सविनयमवादीत्—"राजकुमार ! अत्राटव्यां केचित् स्वाचारं हित्वा पुलिन्दानुचरास्तदन्नभोजिनो बहवो ब्राह्मणब्रुवाः प्रतिवसन्ति । तेषां कस्यापि पुत्रो दुश्चरितमात्रपरः मातङ्गो नामास्मि । स च किरातबलेन विचरन् ग्रामं नगरञ्च प्रविश्य तत्रत्यान् धनिनः सदारपुत्रान् बधबन्धनादिना निर्जित्य तेषां सर्वस्वानि अपहरन् निर्दयं व्यचरम् ।

कदाचित् क्वचित् विपिने मल्लचरगणैर्जिघांस्यमानं कञ्चित् द्विजमालोक्य सहसा सञ्जातदयोऽहमब्रवं—'ननु पापाः ! न हन्तव्यो ब्राह्मणः' इति । ते मां सक्रोधा निरभर्त्सयन् । अहं तेषां निर्भर्त्सनमसहमानस्तस्य ब्राह्मणस्य रक्षणार्थं चिरं प्रयुध्य तैर्निहतोऽभवम् । ततश्च यमपुरीमेत्य सभामण्डपे रत्नसिंहासनस्थं प्रेतपतिं दृष्ट्वा प्राणमम् । सोऽपि मामवेक्ष्य चित्रगुप्तमब्रवीत्—'मन्त्रिन् ! पश्य, अयमस्य न मृत्युसमयः । अयञ्च निन्दितचरित्रोऽपि द्विजरक्षार्थं मृतः, इतः परमस्य निष्पापस्य पुण्यार्जने मतिरुदेष्यति । तदयं पापिभिः अनुभूयमानां यातनां विलोक्य पुनः पूर्वशरीरं लभताम्' इति । चित्रगुप्तोऽपि तत्र तत्र निरयवासिनां दुर्गतीर्दर्शयित्वा सुबुद्धिमुपदिश्य मामसुञ्चत् । ततस्तदेव पूर्वशरीरमवाप्य तेनैव विप्रेण परिरक्ष्यमाणः क्षणमतिष्ठम् । अथासौ द्विजः कृतज्ञः मह्यं विविधविद्यां शिक्षयित्वा सदाचारमुपदिश्य शिवपूजायां मां निवेश्य प्रायात् । ततः प्रभृति किरातसम्बन्धमुत्सृज्य देवं शङ्करं मनसा स्मरन् अत्रैव निवसामि ।

राजपुत्र ! भवते किञ्चित् विज्ञापनीयं रहस्यम् अस्ति, तदागम्यताम्" इत्युक्त्वा स मातङ्गः वयस्यगणादपेतं तं रहसि समभाषत—"नृपनन्दन ! अतीते निशान्ते गौरीपतिः स्वप्नसन्निहितः निद्रालोलुलोचनं मां विबोध्याब्रवीत्—'मातङ्ग ! दण्डकारण्यमध्यवर्त्तिन्यास्तटिन्यास्तीरदेशे सिद्धसाध्याराध्यस्य स्फटिकलिङ्गस्य पश्चात् पार्वतीपदपङ्क्तिचिह्नितस्य अश्मनः सविधे विधिराननमिव किमपि विलं वर्त्तते । तत् प्रविश्य तत्र निक्षिप्तं ताम्रशासनं शासनमिव विधातुः समादाय तदुपदिष्टं विधिं विधाय त्वया

पातालाधीश्वरेण भाव्यम्। भवत्साहाय्यकरो राजकुमारः अद्य श्वो वा समागमिष्यति' इति। तदादेशानुगुणमेव भवदागमनं, तत् साहाय्यार्थिनो मम कुरु साहाय्यम्" इति।

अथ राजवाहनः "तथा" इति प्रतिज्ञाय तान् सहचरान् प्रसुप्तान् निशीथे विहाय तेन मातङ्गेन चचाल। ते च कुमाराः प्रातः समुत्थाय राजपुत्रमनवलोकयन्त, विषण्णचेतसः अन्विष्यन्तः समन्तात् यदा न प्रापुस्तदा निश्चितपुनःसङ्गमसङ्केताः परस्परं वियुज्य ययुः। मातङ्गोऽपि तेन लोकवीरेण रक्ष्यमाणः महेश्वरनिर्दिष्टं बिलं निर्भयं प्रविश्य गृहीतताम्रशासनः रसातलं गत्वा शासनविधिना होमं विरच्य तस्मिन्नेव ज्वलदग्नौ समन्त्रं स्वदेहमाहुतीकृत्य दिव्यां तनुम् अवाप।

अथ काचन सर्वावयवसम्पन्ना सर्वालङ्कारालङ्कृता कन्यका समागत्य मणिमेकं समुज्ज्वलमुपायनीकृत्य उदञ्जलिः तमभाषत—"विप्रवर्य! अहमसुरराजनन्दिनी कालिन्दी नाम, मम पिता अस्य लोकस्य शासिता भगवता विष्णुना समरे निहतः। मान्तु पितृशोकसागरपतितामालोक्य कश्चित् सिद्धतापसः सदयमवादीत्—'वत्से! कश्चिन्मानवो दिव्यदेहधारी तव वल्लभो भूत्वा पातालं पालयिष्यति' इति। तदादेशात् चातकीव घनागमनं तवागमनं प्रतीक्षमाणा अतिष्ठम्। अद्य मम सुप्रभातं येन त्वं मयाऽद्य प्राप्तः, तदिदानीं मां परिगृह्य रसातललक्ष्मीमनुभव' इति। मातङ्गोऽपि राजपुत्रानुमत्या तां तरुणीं परिणीय रसातलसिंहासनमध्यास्य परमानन्दमलभत।

राजपुत्रस्तु वयस्यगणान् प्रति समुत्सुकः कालिन्दीदत्तं क्षुत्पिपासादिक्लेशहरं मणिं साहाय्यकरणतोषितात् मातङ्गात् समवाप्य कञ्चन पन्थानम् अनुवर्तमानं तं विसृज्य तेनैव बिलपथेन निर्ययौ। तत्र च मित्रगणमप्राप्य भुवं क्रमेण भ्रमन् कस्यचित् महतो ग्रामस्य उपशल्ये आक्रीडम् एकमासाद्य विश्रामाय तत्र प्रविश्य आन्दोलिकारूढं रमणीसहितम् आप्तजनपरिवृतं कमपि पुरुषमपश्यत्। सोऽपि राजपुत्रं दृष्ट्वा आनन्दविह्वलः "ममैषः स्वामी सोमकुलावतंसो राजवाहनः, महाभाग्यतया सहसा मे दर्शनपथं गतः" इत्यभिधाय आन्दोलिकाया अवतीर्य सत्वरमुपेत्य प्रणनाम। राजवाहनश्च प्रत्यभिज्ञाय "कथं स एव मे वयस्यः

सोमदत्तः !!" इति व्याहरन् गाढमालिलिङ्ग। ततः कस्यचित् पुन्नागतरोः प्रच्छायशीतले तले समुपविश्य सप्रश्रयमभाषत—"सखे! कालमेतावन्तं कथं तिष्ठसि? तरुणी चेयं का? कस्मायं परिजनः?" इति। सोऽपि आनन्दमुकुलिताक्षः सविनयं स्ववृत्तान्तमाख्यातुमुपचक्रमे।

इति द्वितीयोच्छ्वासः।

---

# अथ तृतीयोच्छ्वासः।

## सोमदत्तचरितम्।

"देव! भवच्चरणदर्शनार्थी अहं भ्रमन् कस्यामपि वनभूमौ पिपासाकुलः लतावेष्टितं शीतलं नदसलिलं पिबन् समुज्ज्वलं रत्नमेकमासादयम्। आदाय च तत् कियन्तमध्वानं गत्वा प्रखरसूर्य्यकिरणासहिष्णुतया गन्तुमक्षमः किमपि देवतायतनं प्राविशम्, अपश्यञ्च तत्र बहुतनयसमेतं वृद्धं भूसुरम् एकम्। स तु दैन्यकारणं पृष्टो मया साग्रहमवोचत्—'महाभाग! सुतान् एतान् मातृहीनान् अनेकैः उपायैः रक्षन् इह कथञ्चित् भैक्ष्यम् आचर्य्य अस्मिन् शिवमन्दिरे वसामि' इति। 'ब्रह्मन्! एतत्कटकाधिपतिः कस्य देशस्य राजा? किन्नामधेयः? कथं वा अत्र आगमनमस्येति कच्चित् विदितमस्ति?' इति पुनः पृष्टोऽब्रवीत्—'सौम्य! मत्तकालो नाम लाटेश्वरो देशस्य अस्य पालयितुर्वीरकेतोस्तनयां वामलोचनां नाम तरुणीललामभूतां श्रावं श्रावम् अवधूततत्प्रार्थनस्य पाटलीं नाम नगरीमरौत्सीत्। वीरकेतुस्तु भीतो महदुपायनमिव तां कन्यां तस्मै प्रादात्। स च तरुणीलाभसन्तुष्टः 'परिणेया निजपुरे एव' इति निश्चित्य गच्छन् निजदेशे मृगयाऽऽदरेण यस्मिन् शिविरमकल्पयत्। कन्याऽपसारणार्थं नियुक्तो मानपालो नाम वीरकेतुमन्त्री चतुरङ्गबलसमन्वितः स्वप्रभोरवमानखिन्नमानसोऽन्यत्र रचितशिविरस्तमन्तर्बिभेद' इति।

तदाकर्ण्य 'विप्रोऽसौ बहुतनयः विद्वान् दरिद्रः स्थविरश्च दानयोग्यः' इति तस्मै सकलमपि तत् रत्नं दत्त्वा अध्वश्रमात् तत्र एकदेशे निद्राम् अलभे; ब्राह्मणश्चासौ कुत्रचित् जगाम। क्षणेन च पश्चान्निगड़ित-बाहुयुगलः स विप्रः कशाहतगात्रः बहुनिस्त्रिंशधारिपुरुषैः अनुगम्य-मानोऽभ्येत्य मां 'दस्यु' इति अदर्शयत्। ते च तं परित्यज्य मद्गत-रत्नावाप्तिप्रकारमनाकर्ण्य मां गाढं नियम्य रज्जुभिः आनीय कारा-वासम् 'एते तव सखायः' इति निगड़ितान् कांश्चित् निर्दिशन्तो मामपि निगड़ितचरणमकार्षुः। तान् कारावासिनः उद्दिश्य मयोक्तं— 'ननु पुरुषाः वीर्य्यवन्तः! कथं निर्विशथ कारावासदुःखम्? यूयं वयस्या इति निर्दिष्टमेतैः किम्?' इति। ते च मामवेत्य चौरवीराः अवोचन्—'महाभाग! वीरकेतुमन्त्रिणो मानपालस्य किङ्करा वयं, तदाज्ञया लाटेश्वरनिधनाय रात्रौ सुरङ्गाद्वारेण तदागारं प्रविश्य तत्र राजाभावेन विषण्णाः बहुधनमपहृत्य महाटवीं प्राविशाम। अपरेद्युश्च अन्वेषिणो राजानुचरा बहवोऽभ्येत्य हृतधनचयान् अस्मान् परितः परिवृत्य दृढं बद्धा निकटमानीय समस्तवस्तुप्रत्यर्पणेऽपि एकस्य अमूल्यरत्नस्याभावेन अस्मद्वधाय इत्थमशृङ्खलयन्' इति।

अथ अहं रत्नलाभवृत्तान्तं ब्राह्मणाय तद्दानं तेन च आत्मनो दुरवस्थां नाम धाम भ्रमणकारणञ्च सर्वं तेभ्यः सम्भाष्य तैः मैत्रीमकार्षम्। ततो-ऽर्द्धरात्रे तेषां मम च शृङ्खलबन्धनं निर्भिद्य तैः अनुगम्यमानो निद्रितस्य द्वाःस्थगणस्य अस्त्रजालमादाय पुररक्षकान् पुरतोऽभिमुखागतान् पराक्रमे-णाभिद्राव्य मानपालशिविरं प्राविशम्। मानपालो निजकिङ्करेभ्यः मम वृत्तान्तं तात्कालिकविक्रमञ्च निशम्य मामार्चयत्।

अन्येद्युः मत्तकालेन प्रेषिताः कतिपये मानपालमुपेत्य अवोचन्— 'मन्त्रिन्! मदीयराजमन्दिरे सुरङ्गया बहुधनमपहृत्य चौरा भवत्कटकं प्राविशन्; तान् अर्पय, नो चेत् महान् अनर्थः सम्भविष्यति' इति। तदा-कर्ण्य कोपारुणनयनो मानपालो 'लाटपतिः कः?' इति तान् निरभर्त्सयत्। तदनु ते प्रत्येत्य मत्तकालाय सर्वमकथयन्। स च कुपितो भुजवीर्य्यदर्पेण अल्पसैन्यसमेत एव योद्धुमभ्यगात्। पूर्वमेव कृतरक्षानिश्चयौ,

मानी मानपालः सबहुयोधो निःशङ्कं निरगात् । अहमपि सबहुमानं मन्त्रिदत्तातिबहुलतुरङ्गमोपेतं चतुरसारथिं रथं दृढतरं कवचम् अनुरूपं चापं विविधबाणपूर्णौ तूणद्वयं अन्यानि च विविधानि आयुधानि गृहीत्वा युद्धसन्नद्धो मन्त्रिणमन्वगाम् । इत्थं प्रवृत्ते शस्त्रसम्पाते अरातीन् अवलीलया प्रहरन् मत्तकालमभ्येत्य निशितशरेण तच्छिरःकर्त्तनमकार्षम् । तस्मिंश्च निपतिते पलायितेषु शेषसैनिकेषु मन्त्री मम अनेकविधां सम्भावनाम् अकार्षीत् ।

अथ मानपालप्रेषितात् तदनुचरात् सर्वमुदन्तजातमाकर्ण्य राजा परमप्रीतमनाः समभ्यागतो मत्पराक्रमेण विस्मयमानः सम्महोत्सवम् अमात्यबान्धवानुमत्या शुभेऽहनि निजतनयां मह्यमदात् । ततो यौवराज्याभिषिक्तोऽहमनुदिनं राजानमनुरञ्जयन् भवद्विरहवेदनाकुलमानसः सिद्धादेशेन सुहृज्जनावलोकनफलं प्रदेशं महाकालनिवासिनः शङ्करस्य आराधनाय अद्य कान्तासमेतः समागतोऽस्मि । भक्तवत्सलस्य अस्य देवस्य प्रसादेन भवच्चरणारविन्दसन्दर्शनसुखमद्य लब्धम्" इति ।

तदाकर्ण्य अभिनन्दिततत्पराक्रमः राजवाहनस्तस्य निरपराधक्लेशप्रदं दैवमुपालभ्य तस्मै क्रमेण आत्मवृत्तान्तमकथयत् । अस्मिन्नेव अवसरे सहसा पुरतः समुपस्थितं पुष्पोद्भवं विलोक्य तं कृताञ्जलिं गाढमालिङ्ग्य "सोमदत्त ! अयं स मे पुष्पोद्भवः" इति सानन्दं तं दर्शयामास । तौ च चिरविरहदुःखं विहाय अन्योऽन्यालिङ्गनसुखमन्वभूताम् । ततस्तस्यैव तरोश्छायायामुपविश्य राजपुत्रोऽब्रवीत्—"वयस्य ! भूसुरकार्य्यं चिकीर्षुरहं 'मित्रगणो विदितार्थः सर्वथा अन्तरायं करिष्यति' इति निद्रितान् भवतः परित्यज्य निरगाम । तदनु प्रबुद्धो वयस्यवर्गः किमिति निश्चित्य मदन्वेषणाय कुत्र गतवान् ? भवांश्च एकाकी क्व गतः ?" इति । सोऽपि कृताञ्जलिः सविनयमवादीत् ।

इति तृतीयोच्छ्वासः ।

---

# अथ चतुर्थोच्छ्वासः ।

## पुष्पोद्भवचरितम् ।

"देव ! देवेन गन्तव्यं देशं निर्यातुमशक्नुवाने मित्रगणे देवान्वेषणाय इतस्ततः प्रवृत्ते अहमपि तदेककर्मा महीमटन् कदाचित् प्रखरसौर-किरणोत्तापितशिराः कस्यचित् गिरितटरुहस्य तरोः प्रच्छायशीतले तले क्षणम् उपाविशम् । सहसा मध्याह्नसमये मत्पुरतः भानुपच्छायां निरीक्ष्य उन्मुखः पतन्तं कमपि पुरुषमम्बरतलात् अन्तराले एव सञ्जातदयोऽवलम्ब्य शनैः अवनीतले स्थापयित्वा दूरापातवीतसंज्ञं तं शिशिरोपचारेण विबोध्य शोकावेगविगलद्बाष्पं कारणमपृच्छम् । सोऽपि कराभ्यामश्रूणि प्रमृज्य अभाषत—'सौम्य ! मगधेश्वरामात्यस्य पद्मोद्भवस्य आत्मजो रत्नोद्भवो नामाहं वाणिज्येन कालयवनद्वीपमुपेत्य तत्र कामपि वणिक्तनयां परिणीय तया सह प्रत्यागच्छन् अम्बुधौ तीरस्य अनतिदूरे एव प्रवहणस्य भग्नतया सर्वेषु निमग्नेषु कथमपि दैवानुकूल्येन तीरमवाप्य कान्ताविरह-दुःखार्णवे प्लवमानः कस्यापि सिद्धतापसस्यादेशात् षोडशवत्सरान् कथञ्चित् नीत्वा दुरवस्थापारम् अनवेक्षमाणो गिरिपतनम् अकार्षम्' इति ।

अस्मिन्नेव अवसरे किमपि नारीकूजितम् अश्रावि, 'न खलु समुचितमिदं यत् सिद्धादिष्टे पतितनयमिलने विरहासहिष्णुतया अग्नि-प्रवेशः' इति । तदाकर्ण्य मनोविदितजनकभावं तमवादिषं—'तात ! भवते विज्ञापनीयानि बहूनि सन्ति ; भवतु, पश्चात् तत् सम्भवन्ति, अधुना नारीकूजितमनुपेक्षणीयं, तत् क्षणमात्रमत्र भवता स्थीयताम्' इति । तदनु सोऽहं त्वरया किञ्चित् अन्तरं गत्वा पुरतो ज्वलदग्नि-प्रवेशोद्यतां कामपि वनितामवलोक्य ससम्भ्रमम् अनलात् अपनीय कुजन्त्या वृद्धया सह मत्पितुरन्तिकमभिगमय्य स्थविरामब्रवं—'वृद्धे ! भवत्यौ कुतस्त्ये ? कथमत्र कान्तारे केन निमित्तेन दुरवस्था अनुभूयते ?' इति । सा सगद्गदम् अवादीत्—'पुत्र ! कालयवनद्वीपे कालगुप्तनाम्नो वणिजः कन्येयं सुवृत्ता नाम रत्नोद्भवेन निजकान्तेन आगच्छन्ती जलधौ भग्ने प्रवहणे निजधात्र्या मया सह फलकमेकमवलम्ब्य दैवयोगेन कूलमुत्तीर्णा आसन्नप्रसववेदना कस्याञ्चिदटव्यां सुतमसूत । मम तु मन्दभाग्यतया

चालि वनमातङ्गेन गृह्णीते मदेकाश्रया परिभ्रमन्ती 'षोडशवर्षानन्तरं भर्तृपुत्त्रसङ्गमो भविता' इति सिद्धवाक्यप्रत्ययात् एकस्मिन् पुण्याश्रमे तावन्तं समयं नीत्वा शोकमपारं सोढुमक्षमा साम्प्रतं समुज्ज्वलिते हुताशने शरीरमाहुतीकर्त्तुमुद्यता' इति। तदाकर्ण्य स्वां जननीं ज्ञात्वा दण्डवत् प्रणम्य तस्यै मद्‌वृत्तान्तमखिलमाख्याय धात्रीभाषणाफुल्लवदनं विस्मय-विकसिताक्षं जनकमदर्शयम्। पितरौ तु साभिज्ञानम् अन्योऽन्यं विदित्वा मुदितान्तरात्मानौ विनीतं माम् आनन्दवाष्पेण अभिषिच्य गाढमाश्लिष्य शिरसि उपाघ्राय कस्याश्चित् महीरुहच्छायायामुपाविशताम्। 'कथं वर्त्तते महीपतिः राजहंसः ?' इति पित्रा पृष्टोऽहं तस्य राज्यच्युतिं त्वदीय-जननं सकलकुमारावाप्तिं तव दिग्विजयारम्भं मातङ्गानुसरणम् अस्माकं युष्मदन्वेषणकारणं सर्वमानुपूर्व्येण अभ्यधाम्। ततस्तौ कस्यचित् मुनेराश्रमे संवस्य देवान्वेषणपरः वित्तमेव अखिलकार्य्यनिमित्तं निश्चित्य कस्यचित् सिद्धस्य अनुकम्पया लब्धसिद्धाञ्जनः विन्ध्याटवीमध्ये पुरातनपत्तनस्थानानि उपेत्य विविधनिधिसूचकानां महीरुहाणाम् अधोनिहितान् बहुसुवर्णान् कलशान् ज्ञात्वा खनित्रेकल्पाय दीनारान् असङ्ख्यान् सङ्गृह्य तत्कालागतम् अनतिदूरस्थितं वणिक्कटकं गत्वा ततो बलिनो बलीवर्दान् गोणीश्च क्रीत्वा द्रव्यान्तरमिषेण सर्वं वसु तद्गोणीसंस्थितं कृत्वा तेश्च बलीवर्दैरुह्य-मानं कृत्वा तत्कटकाधिकारिणमगच्छम्। क्रमेण च तेन चन्द्रपालनाम्ना वणिक्तनयेन सञ्जातसौहृदः साकम् अमुनैव उज्जयिनीमगाम्। पितरौ तदनु तां पुरीं नीत्वा सकलगुणनिलयेन बन्धुपालनाम्ना चन्द्रपालपित्रा नीयमानो मालवनाथदर्शनं विधाय तदनुमत्या गूढवसतिमकार्षम्। ततः काननेषु भवदन्वेषणोद्युक्तं मां परममित्रं बन्धुपालो निशम्य अवदत्— 'मित्र! अखिलां धरित्रीमन्वेष्टुमक्षमो भवान् साम्प्रतं निरुद्वेगेन अत्र तिष्ठतु, भवत्प्रभोरवलोकनाय शुभशकुनं निरीक्ष्य पश्चात् कथयिष्यामि' इति। अहञ्च तद्वचनमनुसरन् तदन्तिके एव अतिष्ठम्।

कदाचित् बालचन्द्रिकां नाम कामपि वणिक्कन्यां नयनचन्द्रिकां निरीक्ष्य तल्लावण्यमुग्धचित्तः मदनशरशरव्यताम् अयासिषम्। साऽपि माम् अवलोक्य मदवस्थामेव नीता मकरकेतनेन। अहन्तु तस्याः सुख-सङ्गमोपायं चिन्तयन् परेद्युर्बन्धुपालेन शकुनैः भवद्गतिं प्रेक्षिष्यमाणेन सह

पुरप्रान्तविहारवनमुपेत्य शकुनवचनानि शृण्वन् स्थितः। तत्र च तामेव मत्प्राणेश्वरीं दीनवदनां बालचन्द्रिकामागतां वीक्ष्य तदीयमुखारविन्दे विषादं मदनावेशजनितं विभाव्य तदन्तिकमेत्य अवादिषं—'सुन्दरि! कथं ते मुखारविन्दे दैन्यलक्षणम्?'। सा रहसि सञ्जातविश्रम्भतया विहाय लज्जाभये शनैः अवादीत्।

'महाभाग! मानसारो मालवाधीशो वार्द्धक्यात् निजनन्दनं दर्पसारम् उज्जयिन्याम् अभ्यषिञ्चत्। स च सप्तसागरपरिखां महीं पालयिष्यन् निजपितृष्वस्रेयौ चण्डवर्मदारुवर्माणौ राज्यरक्षणे नियुज्य तपश्चरितुं कैलासगिरिमगमत्। राज्यं सर्वमसपत्नं शासति चण्डवर्मणि दारुवर्मा मातुलाग्रजन्मनोः शासनमतिक्रम्य दुर्वृत्तपरो मन्मथसदृशस्य भवतो लावण्यायत्तचित्तां माम् एकदा विलोक्य बलात्कर्तुम् उद्यच्छति, तच्चिन्तया मे दैन्यम्' इति। अहन्तु तस्याः मयि आसक्तिं तदन्तरायञ्च तं निशम्य ताम् अश्रुमुखीम् आश्वास्य प्रावोचं—'प्रिये! भवदभिलाषिणं दुरात्मानम् एनं निहन्तुं मदुरयम् उपायश्चिन्त्यते, यथा—'यक्षः कश्चित् अधिष्ठाय बालचन्द्रिकां निवसति। यः कश्चित् साहसिकः सम्बन्धयोग्यः तं यक्षं रतिमन्दिरे निर्जित्य तया एकसखीसमेतया मृगाक्ष्या संलापसुखम् अनुभूय कुशली निर्गच्छेत् तेन सा विवाह्या इति सिद्धेन एकेन उक्तम्' इति युष्मद्बान्धवैः पुरजनस्य पुरतः पुनः पुनः कथनीयम्। तदनु दारुवर्मा तं प्रवादम् आकर्ण्य यदि भिया निवर्त्तते तदा भद्रं, यदि च भुजवीर्य्यदर्पेण तथा अङ्गीकरिष्यति तदा युष्मत्परिजनैः इत्थं वाच्यं—'महाभाग! दर्पसारनृपामात्यस्य तव अस्मिन् क्षुद्रे निवासे साहसकरणमनुचितम्। पौरजनसमक्षं स्वमन्दिरं नीतया अनया सह क्रीडन् यदि कुशली स्याः तदा परिणीय एनां मनोरथान् निर्विश' इति। स यदि तथा अङ्गीकुर्य्यात् तदा त्वं सखीवेशधारिणा मया सह तस्य मन्दिरं गच्छ, ततो मया निर्जने तस्मिन् निकेतने मुष्टिजानुपादाघातैः तं तरसा निहत्य पुनरपि तेनैव वेशेन भवतीं निःशङ्कं स्वगृहं नेष्यामि। त्वञ्च विगतभयलज्जा मातापितृसोदराणां पुरतः आवयोः प्रेमातिशयम् आख्याय सर्वथा मत्परिणयाय तान् अनुनयेः, तेऽपि कुलसम्पल्लावण्यशालिने यूने मह्यं त्वाम् अवश्यं दास्यन्ति।

त्वया एवं दारुवर्मणो मरणोपायं तेभ्यः आख्याय तेषामुत्तरं मह्यम् आवेदनीयम्’ इति ।

सा च किञ्चिदुत्फुल्लवदना ‘सुभग ! त्वयोक्तं सर्वमाचरिष्यामि’ इति कथयित्वा मामसकृत् विवृत्तवदना विलोकयन्ती मन्दमन्दम् आगारम् अगात् । अहमपि शकुनज्ञबन्धुपालात् ‘त्रिंशद्दिनानन्तरमेव भवत्सङ्गः सम्भविता’ इति अशृणवम् । अत्रान्तरे दारुवर्मणा रिरंसुना रतिमन्दिरे समाहूता बालचन्द्रिका तं गमिष्यतीति दूतिकां मत्समीपम् अभिप्रेषितवती । अहमपि सखीवेशम् आस्थाय तया वल्लभया सह तदागारम् अगच्छम् । नगरप्रचारितां यक्षकथां परीक्षमाणो नागर-जनोऽपि दारुवर्मणः प्रतीहारभूमिम् अगमत् । विवेकशून्यमतिरसौ रागातिरेकेण रत्नपर्य्यङ्के तरुणीं नीत्वा तस्यै मह्यञ्च मनोरमस्त्रीवेशाय सकर्पूरताम्बूलादिकं दत्त्वा मुहूर्त्तद्वयं हास्यकौतुकैः संलपन् अतिष्ठत् । ततो यदा रागान्धः सुमुख्या आलिङ्गने मतिम् अकरोत् तदा अहं रोषारुणाक्षः पर्य्यङ्कतलात् निःशङ्कः एनं निपात्य मुष्टिजानुपादप्रहारैः न्यहनम् । ततो भयकम्पितां कान्तां समाश्वास्य मन्दिराङ्गणमुपेतः साध्वसकम्पित इव उच्चैः अकूजं—‘हा ! बालचन्द्रिकाऽधिष्ठितेन घोरेण यक्षेण दारुवर्मा सहसा निहन्यते, समागत्य पश्यत’ इति । तदाकर्ण्य मिलिता जनाः ‘हा ! किमेतत् !! बालचन्द्रिकामधिष्ठितं यक्षं जानन्नपि दारुवर्मा रागान्धः कथं तामकामयत ? तदसौ स्वेनैव कर्मणा निहतः, किं तस्य अनु-शोचनेन ?’ इति वदन्तः प्राविशन् । तस्मिंश्च तुमुले कोलाहले तया सह नैपुण्येन सहसा निर्गतो निजावासमगाम् । ततो गतेषु कतिपयेषु दिवसेषु पौरजनसमक्षं तां विवाह्य यथाभिलषितं सुखमन्वभवम् ; अभूवञ्च बन्धुपालशकुननिर्दिष्टे दिवसेऽस्मिन् पुरादहिर्वर्त्तमानो भवच्चरणारविन्द-दर्शनसुखभाजनम्” ।

एवं मित्रवृत्तान्तं निशम्य प्रफुल्लवदनो राजसूनुः स्वस्य सोमदत्तस्य च वृत्तमस्मै समाख्याय सोमदत्तं “महाकालेश्वराराधनानन्तरं भवद्वल्लभां स्वं निकेतनं प्रापय्य आगच्छ” इति समादिश्य पुष्पोद्भवेन सह अवन्तिपुरम् अविशत् । तत्र “अयं मम स्वामिकुमारः” इति बन्धुपालप्रमुखाय बन्धुजनाय कथयित्वा तेन सादरं बहुविधां सपर्य्यां कारयन् “सकल-

कलाकुशलो द्विजवर एषः" इति प्रख्यापयन् पुष्पोद्भवः स्वमन्दिरे एनं पर्य्यचरत्।

इति चतुर्थोच्छ्वासः।

---

# अथ पञ्चमोच्छ्वासः।

## राजवाहनचरितम्।

एकदा वसन्तोदाररमणीये काले अवन्तिसुन्दरी नाम मानसारनन्दिनी वयस्यया बालचन्द्रिकया सह नगरोपान्ते रम्योद्याने पौरविलासिनीजनपरिवृता मनोभवम् अर्चयितुमगात्। तत्र रतिमिव अवन्तिसुन्दरीं दिदृक्षुः काम इव वसन्तसहायः पुष्पोद्भवानुचरो राजवाहनः समाजगाम। सा तु अवन्तिसुन्दरी तं क्रमेण अन्तिकम् आयान्तं स्वेनैव आराध्यमानं वाञ्छितप्रदानार्थम् आविर्भूतं मूर्त्तिमन्तम् अनङ्गमिव समालोक्य मन्दमारुतान्दोलिता लतेव मदनाविष्टवनी चकम्पे; तस्यो च तत्समक्षं लज्जमाना सखीजनान्तरिता अपाङ्गवीक्षणेन तमवलोकयन्ती। बालचन्द्रिका तु तयोः अन्योऽन्यरागवृत्तिम् अनुभवन्ती "कान्तासमाजसन्निधौ राजनन्दनोदन्तं सम्यक् आख्यातुमयुक्तम्" इति लोकसाधारणैर्वचनैः अभाषत—"भर्तृदारिके! अयं सकलकलानिपुणो देवतासान्निध्यकरणे आहवनिपुणो [illegible]जकुमारो मणिमन्त्रौषधचतुरः परिचरणीयो भवत्या" इति। तदाकर्ण्य सा अभिनन्दिततद्वचना जितमारं कुमारं समुचितासनासीनं कृत्वा सखीहस्तेन गन्धमाल्यादिना समुपाचरत्।

राजवाहनोऽचिन्तयत्—"नूनमेषा पूर्वजन्मनि मे जाया यज्ञवती, नो चेत् कथमेतस्याम् एवंविधोऽनुरागो मे वर्त्तते? शापावसानसमये तपोनिधिदत्तं जातिस्मरत्वम् आवयोः समानं, तत् यावत् विशेषसूचकैर्वाक्यैः अस्याः स्मरणमुत्पादयामि"। तस्मिन्नेव समये कोऽपि राजहंसः केलिविधित्सया तदुपकण्ठम् अगमत्। समुत्सुकया राजनन्दिन्या मरालग्रहणे

नियुक्तां बालचन्द्रिकामालोक्य "समुचितो वचनावसर एषः" इति राजवाहनः सविलासमलपत्—"सखि! पुरा शाम्बो नाम कश्चित् नृपतिः कान्तया सह विहारार्थं सरोवरमेत्य तत्र निद्राधीनं राजहंसं शनैर्गृहीत्वा बिसगुणेन तस्य चरणयुगलं निगडयित्वा कान्तामुखं विलोकयन् मन्दस्मितमवादीत्—'प्रिये! मया बद्धो मरालः शान्तो मुनिरिव वर्त्तते, तत् स्वेच्छया अनेन गम्यताम्' इति। तथोक्ते स राजहंसः शाम्बम् अशपत्—'राजन्! यदस्मिन् पद्मे अनुष्ठानपरायणतया परमानन्देन तिष्ठन्तं नैष्ठिकं मामकारणं राज्यगर्वेण अवमानितवानसि, तदेतेन पातकेन रमणीविरहसन्तापमनुभव' इति। शाम्बस्तु घोरमशनिपातमिव जीवितश्वरीविरहमसहिष्णुर्भूतलनिहितशिरास्तं सविनयम् अभाषत—'भगवन्! अज्ञानतया मया कृतमेतत् क्षमस्व' इति। स तु करुणार्द्रचेताः प्रावोचत्—'राजन्! जन्मनि अस्मिन् मा ते शापफलभोगोऽस्तु, मद्वचनस्य अमोघतया भाविनि जनने देहान्तरं गताया अस्या रसेन रमणो भूत्वा मुहूर्त्तद्वयं मच्चरणयुगलबन्धनेन मासद्वयं शृङ्खलनिगडितचरणो रमणीवियोगविषादम् अनुभूय तदनु दीर्घकालं कान्तयाऽनया सह राज्यसुखमवाप्स्यसि' इति। ततश्च स भृशमनुनीतस्तयोर्जातिस्मरत्वमपि अन्वगृह्णात्। तस्मात् मरालबन्धनं त्वया न करणीयम्" इति।

साऽपि राजबाला तद्वचनाकर्णनाभिज्ञातस्वपुरातनजननवृत्तान्ता "नूनमयं मत्प्राणनाथः" इति मनसा जानती रागफुल्लमानसा समन्दहासमभाषत—"सौम्य! पुरा शाम्बो यज्ञवतीसन्देशपरिपालनाय तथाविधं हंसं बबन्ध, तथा हि, लोके विद्वांसोऽपि दाक्षिण्येन अकार्य्यं कुर्वन्ति" इति।

कन्याकुमारौ इत्थम् अन्योऽन्यपुरातनजनननामधेये परस्परज्ञानाय साभिज्ञानमुक्त्वा मनोजरागाविष्टचेतसौ भृशमानन्दमन्वभूताम्। तस्मिन्नेवावसरे मालवेन्द्रमहिषी सपरिजना दुहितुः केलिदिदृक्षया तमुद्देशमाजगाम। बालचन्द्रिका तामवलोक्य रहस्यनिर्भेदभिया हस्तसंज्ञया पुष्पोद्भवसेव्यमानं राजवाहनं वृक्षवाटिकाऽन्तरितम् अकार्षीत्। सा तु राजमहिषी चिरं दुहितुः क्रीड़ाकौतुकमालोक्य निजागारगमनाय समुद्यता अभवत्। राजकुमारी कथमपि मातरमनुगच्छन्ती "राज-

हंसकुलतिलक ! केलिवाञ्छया मदन्तिकमागतं भवन्तमकाण्डे एव समुल्लङ्घ्य नोचितमपि जनन्यनुगमनं क्रियते, तदनेन भवन्मनो मा अन्यथा भूत्" इति मरालमिव कुमारम् उद्दिश्य समुचितमालपन्ती पुनः पुनः परिवृत्तानना दीननयना स्वमन्दिरमयासीत्। तत्र हृदयवल्लभ-कथाप्रसङ्गे बालचन्द्रिकया कथिततदन्वयनामधेया मन्मथशरविद्धमानसा विरहवेदनया दिने दिने बहुलपक्षशशिकला इव क्षामक्षामा आहारादि-सर्वव्यापारवर्जिता रहस्यमन्दिरे मलयजरसक्षालितपल्लवकुसुमकल्पिततल्प-मालायत्तदेहा तस्थौ। वयस्यागणास्तां तदवस्थाम् आलोक्य नितान्तविषण्णाः काञ्चनकलशसञ्चितानि हरिचन्दनोशीरघनसारमिलितानि सलिलानि, बिसतन्तुमयानि वासांसि, नलिनीदलतालवृन्तानि च सन्तापहराणि सर्वाणि समाहृत्य ताम् असेवत। तच्च शीतलोपचरणं सलिलमिव तप्ततैले तदङ्गे दहनमिव समन्तात् आविश्चकार। किंकर्त्तव्यताविमूढां विवशां बालचन्द्रिकाम् ईषदुन्मीलितेन कटाक्षवीक्षितेन बाष्पाकुलेन विलोक्य लताङ्गी सगद्गदमभाषि—"सखि ! पञ्चशरः कुसुमायुध इत्यलीकमुच्यते, अहन्तु अनेन अयोमयैः असङ्ख्यैः इषुभिः हन्ये। चन्द्रमसं वडवानला-दधिकसन्तापकरं मन्ये, यदस्मिन् चन्द्रमसि अन्तः प्रविशति शुष्यति समुद्रः, मयि निर्गते एव वर्द्धते। भास्य दुष्कार्थ्यं किमपि, यदनेन सहोदरायाः पद्मालयायाः आश्रयभूतमपि कमलं ताड्यते। विरहानल-सन्तप्तहृदयस्पर्शेन नूनमुष्णीकृतः स्वल्पायते मलयपवनः। नवपल्लवकल्पितं तल्पमिदम् अनङ्गाग्निशिखापटलमिव सन्तापं तनोति तनोः, हरिचन्दन-मपि पुरा निजयष्टिसंश्लेषवदुरगरदनालिप्तोल्बणगरलसङ्कुलितमिव तापयति शरीरम्। तदलमायासेन वः, अत्र तावत् राजकुमार एव भिषक्, सोऽपि अलभ्य एव, किं करोमि ?" इति। बालचन्द्रिका तादृशीं तामवलोक्य समचिन्तयत्—"अत्र तावत् कुमारः सत्वरमानेतव्यो मया, नो चेत् एनां स्मरणीयां गतिं नेष्यति मदनः। कुमारयोश्च तस्मिन् उद्याने अन्योऽन्याव-लोकनवेलायामसमसायकः समं मुक्तसायक एव, तस्मात् कुमारानयनं सुकरमेव"।

इत्यवधार्य सा सखीगणं राजबालाया रक्षणे नियुज्य राजसूनो-रन्तिकमगमत्। सोऽपि प्राणवल्लभामुद्दिश्य पुष्पोद्भवेन सह तल्लाभोपायं

तर्कयन् आगतां तां सखीमालोक्य सन्तुष्टमनाः "इतो निषीद" इति निर्दिष्टासनोपवेशिताम् अवन्तिसुन्दरीप्रेषितं सकर्पूरं ताम्बूलादिकं विनयेन ददतीं कान्तोदन्तमपृच्छत्। सा सविनयमवादीत्—"देव! विहारोद्याने भवदवलोकनादारभ्य मन्मथमथ्यमाना सा पुष्पतल्पादिष्वपि सन्तापशमनमलभमाना वामनेव उन्नततरुफलम् अलभ्यत्वदुरःस्थलालिङ्गनसुखं लिप्सुः स्वयमेव पत्रिकामालिख्य 'वल्लभाय एनाम् अर्पय' इति मां विसृष्टवती, तदत्र देवः प्रमाणम्" इति। राजकुमारः पत्रिकां पपाठ।

"सुभग! कुसुमसुकुमारं जगदनवद्यं निरीक्ष्य ते रूपम्।
मम मानसमभिलषति त्वं चित्तं कुरु तथा मृदुलम्॥"

इति पठित्वा सादरमवादीत्—"सखि! छायाबन्धामनुवर्त्तमानस्य पुष्पोद्भवस्य वल्लभा त्वमेव तस्या मृगाक्ष्या बहिश्चराः प्राणा इव वर्त्तसे, त्वच्चातुर्य्यमस्यां क्रियायां लतायामालवालमिव वर्त्तते। यत् तवाभीष्टं, येन मनोरथः सेत्स्यति, तत् सर्वं करिष्यामि। तया मन्मनसः काठिन्यमाख्यातं, परन्तु यदा अहं तद्दर्शनपथं गतः, तदैव सा अपहृतमन्मानसा स्वं मन्दिरमगात्, तत् कस्य चेतसः काठिन्यं कस्य वा माधुर्य्यं तत् स्वयमेव सा वेत्ति। दुष्करः कन्याऽन्तःपुरप्रवेशः, तदनुरूपमुपायमुद्भाव्य श्वः परश्वो वा प्रियां सङ्गमिष्ये। एवं मद्वृत्तान्तमुक्त्वा यथा शिरीषमृद्व्याः शरीरबाधा न जायेत तथा अविलम्बम् उपायमाचर" इति। सा दूती अपि तस्य एवं सप्रेमवचनं श्रुत्वा प्रीता कन्यापुरमयासीत्।

राजपुत्रोऽपि पुष्पोद्भवेन सह यत्र हृदयवल्लभावलोकनं जातं तत्रैव विरहवेदनाविनोदनाय प्रतस्थे। तत्र समन्तात् विचरन् क्वचिदपि अवस्थातुमशक्नुवन् कमपि चतुरवेशं मुण्डितशिरसं द्विजमवालोकयत्, अपृच्छच्च आशिषा संवर्द्धयन्तं "को भवान्? कस्यां विद्यायां निपुणः?" इति। सः "विद्येश्वरनामाहम् ऐन्द्रजालिकविद्याकोविदो नानादेशेषु राजन्यान् तोषयन् उज्जयिनीमद्यागतः" इत्यभिधाय राजपुत्रं सम्यगालोक्य "अस्मिन् लीलोद्याने किमिति भवतः पाण्डुरतानिमित्तम्?" इति पप्रच्छ। पुष्पोद्भवस्तस्य चातुर्य्यं स्वकार्य्योपयोगि तर्कयन् सादरं तमुवाच—"ननु ब्रह्मन्! सख्यस्याभाषणपूर्वतया भवानस्माकं वयस्यो

जातः, वयस्यसन्निधौ न खलु किमपि अवाच्यम्। अस्मिन् कैलिवने वसन्तमहोत्सवागतायाः मालवेन्द्रनन्दिन्याः अस्य राजपुत्रस्य च आकस्मिक-दर्शनेन अन्योऽन्यानुरागातिशयः सञ्जातः, तस्याश्च सङ्गमोपायविरहेण असौ ईदृशीमवस्थामनुभवति" इति।

विद्येश्वरो लज्जावनतवदनं राजवाहनमालोक्य सस्मितम् अभाषत— "राजनन्दन! अनुचरे मयि विद्यमाने भवतः किम् असाध्यमस्ति? अहम् इन्द्रजालविद्यया मालवेन्द्रं मोहयन् पौरजनसमक्षमेव तत्तनया-परिणयं सम्पाद्य कन्याऽन्तःपुरं प्रवेशयिष्यामि, वृत्तान्तश्चैषः राजबालायै सखीमुखेन पूर्वमेव सन्देष्टव्यः" इति। राजपुत्रः प्रीतात्मा तमकृत्रिममित्रं विद्येश्वरं सबहुमानं विसृज्य फलितमिव आत्मनो मनोरथं मन्यमानः स्वमन्दिरं सख्या सह उपेत्य बालचन्द्रिकामुखेन प्रियायै विद्येश्वर-करिष्यमाणं सङ्गमोपायं वेदयित्वा कौतुकाकृष्टचेताः कथञ्चिदपि क्षपां क्षपितवान्।

परेद्युः प्रभाते विद्येश्वरो गीतिनीतिचतुरः महता परिजनेन सह राजभवनद्वारमुपेत्य दौवारिकेण स्ववृत्तान्तं निवेद्य तद्दर्शनकुतूहलाविष्टेन सावरोधेन मालवनाथेन समाहूतः कक्षान्तरं प्रविश्य सविनयम् आशिषं प्रयुज्य राजानुमत्या परिजनवाद्यमानेषु वादित्रेषु गायिकासु सुस्वरं गायन्तीषु पिच्छिकां भ्रामयन् मुकुलितनयनः क्षणमस्थात्। अनन्तरं विषमं विषमुद्वमन्तः फणावन्तः शिरोरत्नराजिभिस्समुद्देशम् उद्भासयन्तो विचरन्ति स्म। गृध्राश्च बहवः तुण्डैस्तान् फणीन् अहीन्द्रान् आदाय अन्तरीक्षमलञ्चक्रुः। ततो द्विजवरः नरसिंहस्य हिरण्यकशिपोर्विदारणमभिनीय राजानं महदाश्चर्यान्वितं कृत्वा अभाषत—"राजन्! उपसंहारे भवता किञ्चित् शुभशकुनं द्रष्टव्यं, तत् कल्याणावाप्तये भवदात्मजाकृतेः कस्या अपि तरुण्याः सर्वगुणालङ्कृतेन केनचित् राजकुमारेण परिणयः सम्पादनीयः, तत् यदि अभ्यनुज्ञा स्यात् तदा दर्शयामि" इति। अथ "तथा" इति अनुमोदितः सः सर्वजन-मोहनमञ्जनं चक्षुषोर्निक्षिप्य समन्तात् व्यलोकयत्। सर्वेषु तदैन्द्रजालिकमेव इति पश्यत्सु साकुलं रागप्रफुल्लहृदयेन राजवाहनेन पूर्वसङ्केतसमागतामनेक-भूषणभूषिताङ्गीमवन्तिसुन्दरीं वैवाहिकमन्त्रतन्त्रनैपुण्येनाग्निं प्रत्याक्ष

साक्षीकृत्य च समयोजयत्। तदनु "सर्वे ऐन्द्रजालिकाः स्वस्थानं व्रजन्तु" इति द्विजेनाभिहिते सर्वे ते मायापुरुषाः यथायथमन्तर्हिताः; राजवाहनश्च यथासुखं कन्याऽन्तःपुरमविशत्। मालवपतिस्तु तदद्भुतं मन्यमानस्तस्मै द्विजन्मने प्रभूतं धनं दत्त्वा विसृज्य स्वं मन्दिरमाविवेश। एवं दैवमानुषबलेन मनोरथसाफल्यम् उपेतौ रहसि कान्तया सुरतसुखमुपभुञ्जन् दिने दिने चतुर्दशभुवनवृत्तान्तवर्णनेन प्रियां रञ्जयामास।

इति पञ्चमोच्छ्वासः।

पूर्वपीठिका समाप्ता।

---

## अथ उत्तरपीठिकायां

## प्रथमोच्छ्वासः।

कदाचित् सुरतखेदसुप्ताभ्यां ताभ्यां स्वप्ने विसगुणनिगडितपादो हंसः कश्चिददृश्यत, अबुध्येतां चोभौ। अथ तस्य राजपुत्रस्य रजतशृङ्खलानिगडितं चरणयुगलमालोक्य "किमेतत्!!" इति परित्रासाकुला राजबाला उच्चैश्चक्रन्द, येन तत् सकलमेव कन्यान्तःपुरमग्निपरीतमिव पिशाचोपहतमिव वेपमानं, किंकर्त्तव्यविमूढम्, अगण्यमानरहस्यरक्षासमयम्, अवनितलाहन्यमानगात्रम्, आक्रन्दविदीर्य्यमाणकण्ठम्, अश्रुप्लुतकपोलमाकुलीबभूव। तुमुले च अस्मिन् समये अबाधितप्रवेशाः "किं किम्?" इति सहसा उपसृत्य विविशुः अन्तःपुरचारिणः पुरुषाः, ददृशुश्च तदवस्थं राजकुमारम्। तत्प्रभावनिकषनिग्रहसामर्थ्यास्तु ते सद्य एव तमर्थं चण्डवर्मणे निवेदयामासुः। सोऽपि कोपादागत्य निर्दहन्निव दहनगर्भया दृशा निशाम्य जातप्रत्यभिज्ञः "कथं स एवैषः मदनुजमरणनिमित्तभूतायाः पापाया बालचन्द्रिकायाः पत्युः नगरवित्तस्य वैदेशिकवणिक्पुत्रस्य पुष्पोद्भवस्य मित्रं रूपाभिमानी कलाकोविदः नैकविधविप्रलम्भोपायपाटवावर्जितमूढपौरजनाध्यारोपितवितथदेवतानुभावः कपटधार्मिकः भिक्षुकपापशीलः

चपलो ब्राह्मणयुवः !! कथमिव एनम् अनुरक्ता मादृशीष्वपि पुरुषसिंहेषु सावमाना पापेयमवन्तिसुन्दरी !! पश्यतु पतिमद्यैव शूलाधिरूढ़-मनार्य्यशीला कुलपांसनी” इति निर्भर्त्सयन् भीषणभ्रुकुटिदूषितललाटः काल इव काललोहदण्डकर्कशेन बाहुदण्डेन अवलम्ब्य हस्ताम्बुजे रेखाऽम्बुजरथाङ्कलाञ्छने राजपुत्रं सरभसम् आचकर्ष। स तु स्वभाव-धीरः सहिष्णुतैकप्रतिक्रियां देवीमेव ताम् आपदमवधार्य्य “स्मर तस्या हंसगामिनि ! हंसकथायाः, सहस्व वासु ! मासद्वयम्” इति प्राणत्याग-रागिणीं प्राणसमां समाश्वास्य रिपुवश्यतामगात्।

अथ विदितवार्त्तावार्त्तौ महादेवीमालवेन्द्रौ जामातरमाकारपक्ष-पातिनौ प्राणत्यागोपन्यासेन शत्रुणा जिघांस्यमानं ररक्षतुः, न तु शेकतुः तमप्रभुत्वादुत्तारयितुम् आपदः। स किल चण्डशीलः चण्डवर्मा सर्व-मुदन्तजातं राजराजगिरौ तपस्यते दर्पसाराय सन्दिश्य सर्वमेव पुष्पोद्भव-परिजनं सर्वस्वहरणपूर्वकं सद्य एव बन्धने निक्षिप्य कृत्वा च राजपुत्रं मृगराजशावकमिव दारुपञ्जरनिबद्धम् अवधूतदुहितृप्रार्थनस्य अङ्गराजस्य उन्मूलनाय अङ्गानभियास्यन् अनन्यविश्वासान्निनाय, करोध च बलभर-दत्तकम्पश्चम्पाम्। चम्पेश्वरोऽपि सिंहवर्मा सिंह इव असह्यविक्रमः प्राकारं भित्वा महता बलसमुदायेन निर्गत्य स्वप्रहितदूतगणाहूतानां साहाय्य-दानाय अतिसत्वरमापततां राज्ञामचिरभाविन्यपि सन्निधौ अदत्तापेक्षः साधादिवावलेपो वपुष्मान् प्रतिबलमाचक्राम, जगृहे च महति सम्प्रहारे अतिमानुषप्राणबलेन चण्डवर्मणा। स च तद्दुहितरि अम्बालिकाया-मतिमात्राभिलाषः प्राणैरेनं न व्ययूयुजत्, परमनीनयत् बन्धनगृहम्, अजीगणच्च गणकैः “अद्यैव निशान्ते राजबाला विवाह्या” इति।

इत्थं गते च तस्मिन् कुबेराचलात् प्रतिनिवृत्य एणजङ्घो नाम कश्चित् दूतः प्रभोर्दर्पसारस्य प्रतिसन्देशम् आवेदयत्—“रे मूढ़ ! किमस्ति कन्यान्तःपुरदूषकेऽपि कश्चित् कृपाऽवसरः ? स्थविरः स राजा जराविमूढ़-चित्तो दुहितृपक्षपाती यदेव किञ्चित् प्रलपति, त्वयाऽपि किं तदनुमत्या स्थातव्यम् ? अविलम्बितमेव तस्य कामोन्मत्तस्य चित्रवधवार्त्ताप्रेषणेन अस्माकं श्रोत्रोत्सवो विधेयः, सा च दुष्टकन्या सहानुजेन कीर्त्तिसारेण निगडितचरणा कारायां निरोद्धव्या” इति। तदाकर्ण्य “प्रातरेव

राजभवनद्वारे तं कुमारीपुरदूषकं स्थापय, अहं कृतविवाहस्य समुत्थाय चण्डपोतेन मातङ्गपतिना तं विनाश्य तदधिरूढ एव मत्सुसाहाय्याय प्रत्यासीदतो राजन्यान् प्रतिग्रहीष्यामि" इति समादिदेश पार्श्वचरान् ।

अथ प्रत्यूषे एव राजद्वारानीतस्य राजवाहनस्य अङ्घ्रियुगलममुच्यत रजतशृङ्खलया। सा च काचित् अप्सरोरूपिणी भूत्वा प्राञ्जलिर्व्यजिज्ञपत्—"देव! कुरु कृपां मयि, अहमस्मि सोमरश्मिसम्भवा सुरतमञ्जरी नाम सुरसुन्दरी। एकदा मे नभसि नलिनलुब्धमुग्धकलहंसानुबन्धश्रान्तायाः तन्निवारणक्षोभविच्छिन्नविगलिता हारयष्टिर्हैमवते सरसि मन्दोदके मग्नोन्मग्नस्य महर्षेर्मार्कण्डेयस्य मस्तके समपतत्; पातितश्च कोऽपि तेन कोपितेन मयि शापः,—'पापे! भजस्व लोहजातिमजातचैतन्या सती' इति। स पुनः प्रसाद्यमानस्त्वत्पादपद्मद्वयस्य मासद्वयमात्रं सन्दानतामेत्य निस्तरणीयामिमाम् आपदमपरिक्षीणशक्तिञ्च इन्द्रियाणाम् अकल्पयत्। तथाभूताञ्च मां कदाचित् ऐक्ष्वाकस्य राज्ञो वेगवतः पौत्रः पुत्रो मानसवेगस्य वीरशेखरो नाम विद्याधरः शङ्करगिरौ समभ्यगमत्। अथासौ पितृप्रयुक्ते वैरे वर्त्तमाने विद्याधरचक्रवर्त्तिनि नरवाहनदत्ते निराशः "तदपकारक्षमोऽयम्" इति तपस्यता दर्पसारेण समसृज्यत, प्रतिश्रुतञ्च तेन अस्मै स्वसुः अवन्तिसुन्दर्या दानम्।

एकदा मनोरथप्रियाम् अवन्तिसुन्दरीं दिदृक्षुरसौ कामपरवशः तत्कुमारीपुरमुपेत्य अन्तरिततिरस्करिण्या विद्यया तां त्वदङ्कोपाश्रयां सुरतखेदखिन्नगात्रीं ददर्श। स तु कुपितोऽपि त्वदनुभावप्रतिबद्धनिग्रहाध्यवसायः पाण्डुलोहशृङ्खलमय्या मया तव पादपद्मयुगलं निगडयित्वा सकोपमपासरत्। अवसितश्च ममाद्य शापः, प्रसीद, किमिदानीं तव करणीयम्?" इति प्रणिपतन्तीं तां स राजपुत्रः "वार्त्तया अनया मत्प्रियासमां समाश्वासय" इति व्यादिश्य व्यसर्जयत्।

अस्मिन्नेव क्षणे "हतो हतश्चण्डवर्मा केनचित् दुष्करकर्मकारिणा तस्करेण एकेनैव नखरप्रहारेण, राजमन्दिरोदरञ्च अशरणमयमापादयन् अचकितगतिः असौ विहरति" इति वाचः समुदचरन्। तदाकर्ण्य राजवाहनस्तमेव मत्तहस्तिनमधिरुह्य सवेगं राजभवनमुपेत्य गम्भीरेण स्वरेण समभ्यधात्—"कः स महापुरुषः येनैतत् मानुषमलङ्घ्यं महत्

कर्म अनुष्ठितम्? आगच्छतु, स मया सह इमं मत्तहस्तिनमारोहतु। अभयमेव मदुपकण्ठवर्तिनो देवदानवैरपि विगृह्यमाणस्य" इति। निशम्य एतत् सञ्जातहर्षं तं पुमांसं कृताञ्जलिमारोहन्तं कुञ्जराधिपं निर्वर्ण्य हर्षोत्फुल्लदृष्टिः "अहो! प्रियवयस्यो मे अपहारवर्मा!!" इति पश्चात् निषीदतः अस्य बाहुदण्डयुगलमुभयभुजमूलप्रवेशितमग्रेऽवलम्ब्य स्वमङ्ग-मालिङ्गयामास, पर्य्यवेष्टयच्च स्वयं पृष्ठतः चालिताभ्यां बाहुभ्याम्।

अनन्तरञ्च अपहारवर्मा विविधप्रहरणजातमुपयुञ्जानः प्रतिबलवीरान् बहुप्रकारयोधिनः क्षितौ विचिक्षेप, ददर्श च क्षणेन तदपि सैन्यमन्येन समन्ततोऽभिमुखमभिधावता सैन्यनिचयेन परिक्षिप्तम्। ततश्च कश्चित् परमसौम्याकृतिः इषुवर्षेण रिपुकुलमभिवर्षन् प्रजविना गजेन सन्निकृष्य पूर्वपरिचयदानप्रत्ययात् "अयमेव स देवो राजवाहनः" इति प्रणम्य अपहारवर्मणा निर्दिष्टदृष्टिः आचष्ट—"वयस्य! त्वदादिष्टेन मार्गेण उपस्थापितम् एतत् अङ्गराजसाहाय्यदानाय उपस्थितं राजन्यकम्, अरिबलञ्च विहतविध्वस्तं स्त्रीबालहार्य्यशस्त्रं वर्त्तते, किमन्यत् कर-णीयम्?" इति। हृष्टस्तु व्याजहार अपहारवर्मा—"देव! दृष्टिदानेन अनुगृह्यतामयमाज्ञाकरः। सोऽयमपि अहमेव, अमुना रूपेण धन-मित्राख्यया च अन्तरितौ मन्तव्यः। स एव अद्य निर्गमय्य बन्धनात् अङ्गराजम् असमत्यन्वयिना अमुना च राजन्यकेन सह एकान्ते सुखोपविष्टं देवमुपतिष्ठतु यदि न दोषः?" इति। देवोऽपि "यथा ते रोचते" इति तम् आभाष्य क्वचित् गङ्गातरङ्गपवनशीतले महीरुहतले द्विरदात् अवतीर्य्य प्रथमसमवतीर्णेन अपहारवर्मणा स्वहस्तसत्वरसमीकृते भागीरथीपुलिनदेशे सुखं निषसाद। तथा निषण्णञ्च तम् उपहारवर्मा-र्थपाल-प्रमति-मित्रगुप्त-मन्त्रगुप्त-विश्रुतैः मैथिलेन च प्रहारवर्मणा काशी-भर्त्रा च कामपालेन चम्पेश्वरेण सिंहवर्मणा च सह समुपेत्य धनमित्रः प्रणिपपात। सोऽपि सहर्षम-युत्थितः "कथं समस्त एवैषः मित्रगणः समागतः!! का नाम अयमभ्युदयः!!" इति कृतयथोचितोपचारान् गाढं परिरेभे, काशीपतिर्मैथिलाङ्गराजांश्च सुहृन्निवेदितान् पितृवत् अपश्यत्। तैश्च हर्षकम्पितपलितं सवेगमुपगूढः परमभ्यनन्दत्। ततः प्रवृत्तासु प्रीतिसङ्कथासु प्रियवयस्यगणानुयुक्तः स्वस्य सोमदत्तपुष्पोद्भवयोश्च

चरितमनुवर्ण्य सुहृदां वृत्तान्तं क्रमेण श्रोतुं जातप्रसङ्गः तान् अपृच्छत्। तेषु प्रथममाह स्म किल अपहारवर्मा।

इति उत्तरपीठिकायां प्रथमोच्छ्वासः।

---

# अथ द्वितीयोच्छ्वासः।

## अपहारवर्मचरितम्।

"देव! त्वयि पातालमवतीर्णे त्वदन्वेषणार्थं सुहृत्सु इतस्ततः प्रस्थितेषु अहमपि प्रस्थितः कदाचित् 'अङ्गेषु वहिः चम्पायाः कश्चिन् महामुनिरस्ति' इति लोकवादात् अवगम्य तस्मात् भवदुद्देशं जिज्ञासुः तत्समीपमगमम्, अदर्शञ्च कमपि मलिनकान्तिं तापसम्; अप्राक्षञ्च तं 'क्वासो महर्षिः?' इति।

असौ निःश्वस्य अवादीत्—'भद्र! आसीदत्र महाप्रभावो मुनिः। एकदा काममञ्जरी नाम अतल्या काचित् वाराङ्गना सनिर्वेदमुपेत्य चरणयोस्तस्य अपतत्। पश्चाच्च तस्मिन् तस्या मातृप्रभृतय आप्तवर्गाः समुपस्थिताः। स तु मुनिस्तां समाश्वास्य कारणमपृच्छत्। सा सलज्जविषादगौरवं अब्रवीत्—'भगवन्! अहं श्रेयःसाधनाय भवत्पादमूलं प्रपन्ना' इति। तस्यास्तु जननी कृताञ्जलिरभाषत—'भगवन्! वयं जात्या वेश्याः, अस्याश्च वेश्याया मातुर्मे वेश्योचिताचरणानुशासनम् एनां प्रतीपयति। अयञ्चेह्गाचारः. आजन्म परिमितेन धातुसाम्यकृता वर्णरूपमेधाजननेन आहारेण प्रतिपालनं, पञ्चमात् वर्षादारभ्य क्रमेण कामशास्त्रशिक्षणं, नृत्यगीतवाद्यनाट्यादिनानाविधासु विलासकलासु उपदेशः, निखिलव्यापारेषु सामान्यज्ञानं, द्यूतादिक्रीडासु नैपुण्यविधानं, विश्वस्तजनात् प्रथमसुरताभ्यासः, उत्सवादिषु सुसज्जितायाः प्रेषणं, सुलक्षणख्यापनं, नागरिकपुरुषेषु रूपशीलचातुर्यादिप्रस्तावनं, क्रमेण तरुणजनलक्ष्यीभूतायाः समधिकशुल्केन

अवस्थापनं, भावविलासदर्शनेन मत्तात् जनात् छलेन बह्वर्थग्रहणं, निःस्वीकृतानां वहिष्करणम्, अर्थदानाक्षमात् धर्माधिकरणे अभियोगेन अर्थादानम्, इत्थं बहुधा युवजनवञ्चनम्। अस्याश्च युवजनानां विविधेन वाग्व्यापारेण मनस्तोषणं न तु रङ्गेन, सत्यामपि प्रीतौ मातुः शासनेन तथाऽऽचरणमिति।

एवं स्थिते एषा हतभाग्या स्वधर्ममुल्लङ्घ्य क्वचित् आगन्तुके रूप-मात्रधने विप्रकुमारे स्वेनैव धनेन समासक्ता मासमतिवाहितवती, अर्थवन्तं कमपि न आदृतवती, अस्माभिः अर्थागमविरहेण अवसद्यते। 'एषा कुमतिर्न कल्याणी' इति निवारयन्त्यां मयि वनवासाय कोपात् प्रस्थिता इयं यदि नं प्रत्यानीयते तदा सर्व एव स्वकुटुम्बवर्गः अनशनेन अत्रैव संस्थास्यते' इत्यरोदीत्।

अथ तां वाराङ्गनां मुनिरब्रवीत्—'भद्रे! वनवासोऽतिदुःखाकरः, फलमस्य मोक्षः स्वर्गो वा, आद्यस्तु प्रकृष्टज्ञानेन साध्यत्वात् प्रायेण दुःसम्पादनीयः। द्वितीयस्तु सर्वस्यैव स्वधर्मानुष्ठायिनः सुलभः; तदस्मादारम्भात् विरम्य स्वधर्ममनुसर' इति। 'यदि भगवता मे प्रसादो न क्रियते तदा अहमग्निं प्रवेक्ष्यामि' इतिवादिनीं तां दृष्ट्वा तन्मातरमवदत्—'सम्प्रति गच्छ गृहं, प्रतीक्षस्व कानिचित् दिनानि, इयं सुकुमाराङ्गी अत्र स्थिता तपःक्लेशमसहमाना सोढुम् अचिरेण एव पुन-र्गृहाय यथा प्रतिगमिष्यति तथा प्रबोधप्रदानादिना करिष्यामि' इति।

ततः 'तथा' इति तस्याः प्रतियाते स्वजने सा युवतिः तन्निमित्तभुक्ति-नीत्यादृतशरीरसंस्कारा तदुपोतकालबालपूरणैः देवार्चनकुसुमावचयनैः स्थानसम्मार्जनादिभिश्च शिवपूजार्थं गन्धमाल्यधूपदीपनृत्यगीतादिभिः एकान्ते धर्मार्थकामसम्बन्धिभिः आलापैरल्पेनैव कालेन अन्वरञ्जयत्।

एकदा तं मुनिं रक्तं विलोक्य सा सस्मितम् अवादीत्—'मूढोऽयं लोकः यः सह धर्मेण अर्थकामौ गणयति' इति। मुनिः अवोचत्—'वत्से! कथय केनांशेन अर्थकामातिशायी धर्मस्तव विदितः?' इति। सा सलज्जम् अभाषत—'ब्रह्मन्! अस्मात् किल जनात् भगवतस्त्रिवर्गबला-बलज्ञानं नैव सम्भवति, अथवा एषः अनुग्रहप्रकारो दास्याः; तत् श्रूयतां, धर्मो हि अर्थकामयोः प्रभवः, स तु तदनपेक्ष एव, अर्थः कामश्च

धर्मेण बाध्यते, स तु तत्त्वदर्शनोपबृंहितः कथञ्चित् सेविताभ्यामाभ्यां न बाध्यते, बाधितोऽपि अल्पायासेनैव प्रतिसमाधीयते। तथा हि, भवानीपतेः मुनिपत्नीसहस्रसन्दूषणेन, पितामहस्य तिलोत्तमाऽभिलाषेण, विष्णोः व्रजाङ्गनाविहारेण, प्रजापतेः स्वदुहितरि प्रणयेन, देवराजस्य गुरुदाराभिगमनेन, चन्द्रमसो गुरुपत्नीहरणेन, सूर्य्यस्य वड़वालङ्घनेन, अनिलस्य अञ्जनागमनेन, बृहस्पतेर्ज्येष्ठभार्य्याऽभिसरणेन, पराशरस्य योजनगन्धागमनेन, व्यासस्य भ्रातृदारसङ्गत्या, अत्रेः मृगीसमागमेन च समुत्पन्नं धर्मपीड़नमचिरेणैव अग्निपतितम् इन्धनमिव दह्यते। देवानाञ्च तेषु तेषु कार्य्येषु असुरविप्रलम्भनानि ज्ञानप्रभावात् न धर्मं पीडयन्ति; तत् मन्ये, धर्मो न अर्थकामयोः समानः, प्रत्युत तदतिशायी' इति।

श्रुत्वैतदृषिः उद्दीप्तरागः अब्रवीत्—'अयि विलासिनि! साधु उक्तं त्वया, तत्त्वदर्शिषु अधर्मो न स्थानमाप्नोतीति। परम् आ-जन्मनः अर्थकामयोः अनभिज्ञा वयं, तदाचक्ष्व, किं-स्वरूपावेतौ? किं-फलौ? किं-परिवारौ? कथं वा ज्ञेयौ?' इति। सा अवोचत्—'ब्रह्मन्! अर्थः तावत् अर्जनवर्द्धनरक्षणात्मकः, कृषिपाशुपाल्यवाणिज्यसन्धिविग्रहादिपरिवारः, तीर्थप्रतिपादनफलश्च। कामश्च विषयातिसक्तचेतसोः स्त्रीपुंसयोर्विरतिशयसुखस्पर्शविशेषः, परिवारस्तस्य यावदिह रम्यमुज्ज्वलञ्च, फलं पुनः परमाह्लादनं परस्परविमर्द्दजञ्च। एतदर्थमेव जनाः कष्टानि तपांसि महान्ति दानानि युद्धानि समुद्रलङ्घनादीनि समाचरन्ति' इति।

निशम्यैतत् स मुनिः स्वनियममनादृत्य तस्यां प्रासजत्। सा तु अतिप्रमत्तं तं प्रवहणेन आरोप्य राजमार्गेण स्वभवनमनैषीत्, अघोषयच्च 'श्वः कामोत्सवः' इति। परेद्युश्च तं मुनिं कामिजनवत् सुसज्जितं नितान्तरक्तम् उत्सवसमाजं नीत्वा युवतिशतवृतस्य राज्ञः पुरतः समुपतस्थे। तेन च हसता 'भगवता सह निषीद' इति समादिष्टा सविभ्रमकृतप्रणामा निषसाद। तत्र काचित् युवतिरुत्थाय कृताञ्जलिरभाषत—'देव! जिताऽहमनया, अद्य प्रभृति अस्या दासी संवृत्ताऽस्मि' इति राजानं प्रणनाम; अभूच्च सविस्मयं महान् कोलाहलः। ततश्च हृष्टेन राज्ञा सत्कृता सा वराङ्गनाभिः पौरैश्च प्रशस्यमाना तमृषिमभाषत—'भगवन्! अयमञ्जलिः; चिरमनुगृहीतोऽयं दासजनः, स्वार्थं इदानीमनुष्ठेयः'

इति। स तु नितरामनुरक्तोऽग्निहत इव उद्भ्राम्य अब्रवीत्—'प्रिये! किमेतत्? कृतस्ते एतादृशोद्वेगोऽन्यम्? क्व गतस्ते मय्यनुरागः?' इति। सा सस्मितम् अवोचत्—'ब्रह्मन्! यया अद्य राजसमीपे मत्तः पराजयोऽभ्युपेतः, तस्या मम च कश्चित् मत्सरे 'मरीचिमावर्जितवतीव श्लाघसे' इति तया साधिक्षेपम् उक्ता ऽस्मि, दास्यपणबन्धनेन अस्मिन् अर्थे प्रावर्त्तिषि, सिद्धार्था च अस्मि भवत्प्रसादात्' इति।

इत्थमवधत. तया स मुनिः क्षतानुशयः शून्यवत् न्यवर्तिष्ट। यस्तयैवं कृतः, तमेव मां मन्यस्व। अचिरादेव त्वदर्थसाधनक्षमो भवितुं यते, अस्यामेव पुर्य्यां तावत् वस' इति।

अस्मिन्नवान्तरे रविः अस्तमगात्। कृतसन्ध्योपासनश्च तं मुनिमनुमान्य तत्रैव कथञ्चित् नीतरात्रिः प्रभाते नगराय प्रातिष्ठ, अपश्यञ्च नगरसवित्रे रक्ताशोकतरुतले निषण्णम् अतिविरूपं विषादभूमिं कमपि क्षपणकम्, अप्राक्षञ्च तमन्तिकोपविष्टः तस्य आधिकारणम्। सोऽब्रवीत्—'सौम्य! अहमस्यां चम्पायां निधिपालितनामकस्य श्रेष्ठिनो ज्येष्ठसूनुर्वसुपालितो नाम, वैरूप्यात् तु विरूपक इति प्रसिद्धः। अन्यश्च अत्र सुन्दरक इति यथार्थनामा कलागुणैः समृद्धो वसुना नातिपुष्टः अभूत्। रूपधनाभ्यां निमित्ताभ्यां तस्य मम च वैरं धूर्त्तैरुदपादयत। ते निरधारयन् 'रूपं धनं वा न पुंस्त्वमूलम्, अपि तु परमसुन्दरी नारी यं कामयते स एव पुमान्; अतो युवतिललामभूतया काममञ्जर्य्या यः प्रार्थ्यते स एव सुभगपताकां लभताम्' इति। आवाञ्च 'तथा' इति तस्यै दूतं प्राहिणुव, आगतायाश्च तस्याः स्मरोन्मादहेतुरहमेवासम्। सुभगेन च मया सा स्वधनजीवनयोरधीश्वरीकृता, तया च अहं कृतः कौपीनशेषः। ततश्च लोकोऽद्रहास्यतामेत्य इह जैनायतने केनचित् जैनेन समुपदिष्टमोक्षवर्त्मा 'सुकर एव वेशो वेशविनिर्गतानाम्' इति जातवैराग्यः तदपि कौपीनमत्यजम्। 'मम एतत् निन्द्यवेशं निरयफलं विप्रलम्भप्रायमधर्मवर्त्म धर्मवत् समाचरणीयम्' इति प्रत्याकलयन् विविक्तम् एतदासाद्य दुःखेन रोदिमि' इति।

श्रुत्वा चैतत् 'तिष्ठ कञ्चित् कालं यथा असौ वेश्या त्वां निजधनेन योजयिष्यति तथा यतिष्ये' इति तमाभाष्य प्रस्थितोऽहं नगर-

माविशन्नेव लोकवादात् 'धूर्त्तसमस्तपूर्णं पुरम्' इति विदित्वा अर्थानां नश्वरत्वं प्रदर्श्य प्रकृतिस्थान् अमून् विधास्यन् तत्कारणवृत्तौ मतिमाधाय द्यूतसमाजम् अगमम्। तैश्च सङ्गत्य तेषां द्यूतक्रीडासु नानाविधं कौशलं विदित्वा क्वचित् अनभिज्ञे कितवे प्राहसम्। प्रतिकितवस्तु सकोपं रक्तचक्षुर्मामभिवीक्ष्य 'शिक्षयसि रे! द्यूतकर्म हास्यव्याजेन? आस्तामयमशिक्षितो वराकः, त्वयैव तावत् विचक्षणेन देविष्यामि' इति अभिधाय द्यूताध्यक्षानुमत्या मया सह देवितुमासजत्। मया च षोड़शसहस्राणि दीनाराणां तस्मात् जित्वा अर्द्धं द्यूताध्यक्षाय सभ्येभ्यश्च दत्त्वा उदतिष्ठम्। सर्वे च तत्रत्याः सहर्षं मां प्रशशंसुः। द्यूताध्यक्षानुरोधात् च तदहः तदागारे विविधद्रव्यमभ्यवहरन् अतिष्ठम्। यन्मूलश्च मे द्यूतावतारः, स मे विमर्द्दको नाम विश्वास्यतरं द्वितीयं हृदयमासीत्। तन्मुखेन च सर्वमेव नगरवृत्तान्तमवगम्य तमिस्रायां निर्गत्य तस्करोचितविविधोपकरणयुक्तः कस्यचित् लुब्धेश्वरस्य गेहे सन्धिं छित्वा प्रभूतं धनमादाय निर्गच्छन् घोरान्धकारसमावृतायां राजवीथ्यां झटिति शतह्रदासम्पातमिव चलमालोकमद्राक्षम्। अथातो नगरदेवता इव नगरमोषरोषिता निःसम्बाधवेलायां निःसृता काचित् युवतिः सर्वालङ्कारभूषिता सन्निकृष्टा आसीत्। 'कासि वासु!? क यासि?' इति मया सदयमुक्ता सा सत्रासगद्गदमगदत्—'आर्य्य! पुर्य्यामस्यां कुबेरदत्तो नाम वसति वैश्यश्रेष्ठः। तस्य अहं कन्या। मां जातमात्रां धनमित्रनाम्ने अलत्याय कस्मैचित् धनिकपुत्राय भार्य्यात्वेन प्रतिज्ञातवान् मे पिता। स तु धनमित्रः पित्रोरन्ते अत्युदारतया स्वधनैः क्रीत्वेवार्थिवर्गात् दारिद्र्यं दरिद्रति सति 'उदारकः' इति प्रीतलोकाधिरोपितापरश्लाघ्यनामनि च मां तत्क्षणीभूतां वरयति एव 'अधनः' इति अदत्त्वा अर्थपतिनाम्ने अपरस्मै यथार्थनाम्ने सार्थवाहाय पुनर्दित्सति पिता। तस्यामङ्गलस्य अद्य प्रभाते भविष्यात् प्रागेव प्रियतमदत्तसङ्केता वञ्चितस्वजना निर्गत्य बाल्याभ्यस्तेन वर्त्मना तद्गृहमभिसरामि, तन्मां मुञ्च, गृहाण एतदलङ्कारजातम्' इति उन्मुच्य मह्यम् अर्पितवती। सदयमहं तां—'एहि साध्वि! नयेयं त्वां त्वत्प्रियतमावासम्' इति त्रिचतुराणि पदानि अगच्छम्।

अत्रान्तरे सहसा नागरिकबलं दीपिकाऽऽलोकध्वस्ततिमिरमनल्पं यष्टिकृपाणपाणि समापतत्। कम्पमानां कन्यकामवदं—'भद्रे! मा भैषीः, अस्त्ययमसिद्वितीयो बाहुः। परं त्वदर्थं मृदुरयमुपाय उद्भावितः, अहं सर्पदष्ट इव शये, त्वया अमी वाच्याः,—'भद्राः! निशि वयमिमां पुरीं प्रविष्टाः, ममैष पतिर्भुजङ्गदष्टः, यदि वः कश्चिन्मन्त्रवित् कृपालुरेनं जीवयेत् तदाऽहमनाथा जीवामि' इति। साऽपि बाला उपायान्तरमपश्यन्ती रुदती तथैवान्वतिष्ठत्। तेषु कश्चित् विषवैद्याभिमानी मां निर्वर्ण्य मुद्रातन्त्रादिभिरुपायैरुपक्रम्य अकृतार्थः 'गत एवायं कालदष्टः, शुचा अलं वत्से! श्वोऽग्निसात् करिष्यामः, कोऽतिवर्त्तते दैवम्?' इति सहेतरैः प्रायात्।

अहमुत्थितः उदारकाय तां नीत्वा अवोचं—'भद्र! अहमस्मि कश्चित्तस्करः, त्वद्गतेन मनसा त्वामभिसरन्तीमेनामन्तरे प्राप्य त्वत्समीपमुपानैषम्। इदञ्चास्या अलङ्कारजातम्' इति तत् सर्वमर्पितवान्। स च तदादाय लज्जाहर्षसम्भ्रमसमन्वितः प्राब्रवीत्—'आर्य्य! नात्र किमपि वक्तुं जानामि; यदद्य त्वया कृतं तस्य निष्क्रयो नास्ति, नैतादृशं केनापि कृतपूर्वं नापि क्रियते न च करिष्यते, तदिदानीम एतावदेव वाच्यं यदद्य प्रभृति भर्त्तव्यः अयं दासजनः' इति मम पादयोरपतत्।

अहश्चोत्थाप्य तं गाढमाश्लिष्याब्रवं—'भद्र! काऽद्य ते प्रतिपत्तिः?' इति। सोऽभ्यधत्त—'सौम्य! न शक्नोमि चैनामत्र नगरे पित्रोरनुज्ञया विना उपयम्य जीवितुं, अतोऽस्यामेव रजन्यां देशमिमं त्यजामि। अथवा को वा अहम्? यथा तुभ्यं रोचते' इति। मयोक्तं—'स्वदेशो विदेशो वेति नेयं गणना विदग्धस्य, किन्तु बाला अनल्पसौकुमार्य्येयं, कष्टाः विघ्नबहुलाश्च कान्तारपथाः, ईदृशेन देशत्यागेन अनर्थकरेण प्रत्याशस्त्वयोः शैथिल्यमिव प्रतिभाति। तत् सहैवानया अत्र नगरे सुखं वस्तव्यम्। एहि, नयावैनां स्वमावासम्' इति। तेन च अविचार्य्यैव अनुमोदमानेन सद्य एव तां स्वगृहं नीत्वा तथैवापसर्पभूतया तत्पितृगृहे सर्वं द्रव्यजातं, तदनन्तरमर्थपतिभवनं गत्वा तत्रत्यं सर्वस्वं चोरयित्वा स्वगृहं गत्वा शयनमधिशिश्रियाव।

ततश्चोदिते भगवति गभस्तिमालिनि मिहिरे उत्थाय आवां चौलवस्त्री

प्रातःकृत्यमनुष्ठाय अस्मत्कर्मानुगुणं नगरमनुविचरन्तौ वरवधूगृहेषु कोलाहलमशृणुव। अथार्थः कुबेरदत्तमाश्वास्य तत्कन्याविवाहं मासावधिकमकल्पयत्। अत्रान्तरे धनमित्रमहमशिक्षयम्—'सखे! चर्मरत्नभस्त्रिकामेकां कल्पयित्वा एकान्ते राजानम् अङ्गराजमाचक्ष्व, 'जानात्येव देवो महाधनस्य वसुमित्रस्य पुत्रं धनमित्रं मां, मयि अर्थनाशात् दरिद्रे मदर्थमेव संवर्द्धितां कुलपालिकां नाम कन्यां तत्पिता कुबेरदत्तः अर्थपतये दित्सतीति ज्ञात्वा वैराग्यात् प्राणान् विहातुं जरद्वनं गत्वा कण्ठन्यस्तपाशः केनापि कृपालुना जटाधरेण निवार्य्य एवमुक्तः, 'किमिति अकार्य्यं क्रियते?' इति। मयोक्तं—'लोकावमानसोदर्य्यात् दारिद्र्यात्।' स पुनरब्रवीत्—'मूढोऽसि, नान्यत् पापतममात्मघातात्, आत्मानमात्मनैव अनवसाद्योद्धरन्ति सन्तः, सन्त्युपाया बहवो धनार्जनस्य नैकोऽपि छिन्नकण्ठप्रतिसन्धानस्य। मया मन्त्रबलेन एषा चर्मरत्नभस्त्रिका लक्षग्राहिणी अधिगता, तामिमां दयमानस्तुभ्यं ददामि, प्रतिगृहाण, मदन्यत्र चेयं वणिग्भ्यो वाराङ्गनाभ्यश्च दुग्धे; किन्तु यत्तत्काशादन्यायापहृतं तत्तस्मै प्रत्यर्पणीयं, न्यायार्जितन्तु देवब्राह्मणेभ्यो देयम्। ततश्चेयं देवतेव शुचौ देशे निवेश्य अर्च्यमाना प्रातः प्रातः सुवर्णपूर्णैव दृश्यते इति अस्याः कल्पः' इत्यभिधाय कृताञ्जलये मह्यमेनां दत्त्वा अन्तर्दधे। इयञ्च रत्नभूता चर्मभस्त्रिका देवाय अनिवेद्य नोपजीव्या इति आनीता, तदत्र देवः प्रमाणम्' इति। राजा च नियतम् एवं वक्ष्यति, 'भद्र! प्रीतोऽस्मि, गच्छ, यथेच्छमेनामुपभुङ्क्ष्व' इति। भूयश्च ब्रूहि—'यथा न कश्चिदेनां मुष्णाति तथा अनुगृह्यताम्' इति। सोऽवश्यं तदपि अभ्युपैष्यति। ततः स्वगृहमेत्य यथोक्तमर्थत्यागं कृत्वा दिने दिने पूर्य्यमाणां लोयलञ्चैरर्थैः नक्तमापूर्य्य एनां प्रातः लोकाय दर्शयिष्यसि, ततः कुबेरदत्तस्तृणाय मत्वा अर्थपतिं कन्यकां स्वयमेव तुभ्यं प्रदास्यति। यदि कुपितोऽर्थपतिः अर्थगर्वात् अभियोक्ष्यते तमपि चित्रैरुपायैः कौपीनावशेषं करिष्यावः, स्तेयञ्च चौर्य्यमनेनैव प्रच्छन्नं भविष्यति' इति।

धनमित्रस्तथैव प्रहृष्टश्चान्वतिष्ठत्। तदहरेव मदादेशात् विमर्दकोऽर्थपतिसेवानियुक्तः तस्य उदारके वैरमवर्द्धयत्। अर्थलुब्धश्च कुबेरदत्तः धनमित्रायैव तनयां प्रादित्सत्, प्रत्यवध्नात् चार्थपतिः।

अत्रान्तरे काममञ्जर्याः कनीयसी स्वसा रागमञ्जरी मां कथमपि चकमे। अहञ्च तद्गुणाकृष्टः नितरां तदनुरक्तः सञ्जातः। सा च गुणानुरागिणी नार्थाकाङ्क्षिण्येव मयि अनुरागमकरोत्, परं तद्भगिनी काममञ्जरी माता च माधवसेना विना शुल्कं मत्प्रवेशं न्यवारयत्। अहन्तु काममञ्जर्याः दासीं धर्मरक्षितां नाम अर्थेनाऽऽवर्ज्य तन्मुखेन तया बन्धक्या पणाबन्धम् अकरवं यथा—'धर्मरत्नं धनमित्रात् मुषित्वा मया तुभ्यं देयम्' इति। ततस्तस्यां 'तथा' इति प्रतिपन्नायां तथा तमर्थं सम्पाद्य रागमञ्जरीमग्रहीषम्। यस्याञ्च निशि धर्मरत्नस्तेयवादः, तस्याः प्रारम्भे मत्प्रणिधिर्विमर्दकोऽर्थपतिगृह्यो नाम भूत्वा धनमित्रं बहु अतर्जयत्। धनमित्रेणोक्तं—'भद्र! कस्तवार्थः यत् परस्यार्थे मामाक्रोशसि? किन्ते मयाऽपकृतम्?' इति। स भूयोऽपि तर्जयन्निवाब्रवीत्—'स एष धनगर्वो नाम यत् परस्य भार्यां शुल्कक्रीतां पुनस्तत्पितरौ द्रव्येण विलोभ्य स्वीकर्त्तुम् इच्छसि, ब्रवीषि च 'कस्तवापकारो मत्कृतः?' इति। ननु प्रतीतम् एवैतत् 'विमर्दकोऽर्थपतेर्बहिश्चराः प्राणाः' इति। अहं तदर्थं प्राणानपि परित्यजामि, ब्रह्महत्यामपि न गणयामि, ममैकरात्रजागरप्रतीकारस्तवैष चमरत्नाहङ्कारदाहज्वरः' इति। तथा ब्रुवाणश्च पौरैः सामर्षं निवार्य्य ताड़ितो गतोऽभूत्।

धनमित्रेण च आर्त्तेनेव इयं वार्त्ता पार्थिवाय प्रागेव निवेदिता। स च अर्थपतिमाहूय एकान्तेऽपृच्छत्—'भद्र! अस्ति कश्चित् विमर्दको नाम तव?'। तेन च मूढात्मना 'अस्ति देव! परं मित्रम्' इति कथिते राज्ञोक्तं—'तेन किञ्चित् प्रयोजनमस्ति, तमाह्वय।' अथ स स्वगृहमेत्य नानास्थानेषु तम् अन्वेष्टुम् आरब्धवान्, न च कुत्रापि प्राप। कथं लभ्यते? स खलु तदहरेव मदादेशात् त्वदन्वेषणार्थम् उज्जयिनीं गतः। अर्थपतिस्तु तमदृष्ट्वा तत्कृतमपराधं स्वमेव मत्वा मोहात् भयाद्वा प्रत्याख्याय पुनर्धनमित्रविभावितेन राज्ञा निगृह्य निगड़बन्धनमनीयत।

तेषु च दिवसेषु कल्पोक्तेन विधिना चर्मरत्नं दोग्धुकामा काममञ्जरी पूर्वदुग्धं चपणकीभूतं विरूपकं रहसि गत्वा ततोऽपहृतं सर्वमर्थं तस्मै प्रत्यर्पयामास। सोऽपि कथञ्चित् चपणकग्रहमोचितात्मा मयोपदिष्टो

ऽतिप्रीतः स्वधर्ममेव प्रत्यपद्यत। काममञ्जरी अपि अजिनरत्नदोहेच्छया स्वमभ्युदयं निःशेषमकरोत्।

अथ मदादिष्टो धनमित्रः पार्थिवं मिथो व्यजिज्ञपत्—'देव! वार-मुख्या काममञ्जरी नितरां धनलुब्धा अद्य सर्वस्वं निरपेक्षं वितरति, तन्मन्ये मदीयचर्मरत्नलाभोऽस्य हेतुः, अस्याश्च तादृश एव कल्प इति पूर्वमुक्तं, तदमुष्यामस्ति मे शङ्का' इति। राजा तु सद्य एव तां तज्जननीञ्च समाजुहाव।

अहन्तु सविषादमिव रहसि तामकथयम्—'आर्ये! नूनं सर्वस्वत्यागात् अतिप्रकाशात् आशङ्कनीयचर्मरत्नलाभाऽसि, तद्वार्त्ताप्रश्नाय राज्ञा समा-हूयसे। पुनः पुनश्च आग्रहेण पृष्टया त्वया नियतमेव तदागतित्वे-नाहमपदेश्यः, ततश्च भावी मम चित्रवधः, मृते च मयि न जीवि-ष्यत्येव ते भगिनी, त्वञ्च निःस्वीभूता, चर्मरत्नञ्च धनमित्रमेव भजिष्यति; तदियमापत् समन्ततोऽनर्थानुबन्धिनी, तदत्र उपायश्चिन्त्यताम्' इति। तया तन्मात्रा च अश्रूणि विमुच्योक्तम्—'अस्मद्बालिश्यात् निर्भिन्नं रहस्यं, परमर्थपतौ तदयशो रूढं, तेन चास्माभिः सङ्गतेन तदस्मभ्यं दत्तमिति अपदिश्य अलमात्मानं शोधयितुम्' इति मामुक्त्वा राजान्तिक-मगमताम्।

राज्ञा निर्बन्धेन पृष्टे च पुनः पुनः कर्णनासाच्छेदभीषिते तमेवार्थ-पतिं तदागतित्वेन प्रकटितवत्यौ। कुपितं राजानं तस्य प्राणेषु दण्डयन्तं धनमित्रः प्राञ्जलिर्निषिध्याब्रवीत्—'देव! मौर्य्यदत्त एष वरः वणिजाम्, ईदृशेषु अपराधेषु नास्त्यसुभिरभियोगः, वरं हृतसर्वस्वो निर्वासनीय एषः' इति। तेन च राजा सन्तुतोष, धनमित्रञ्च लोकाः प्राशंसन्। अर्थपतिश्च कौपीनावशेषः सर्वजनसमक्षं निरवास्यत। तद्-द्रव्यायाश्च केनचिदंशेन निःस्वा काममञ्जरी धनमित्रानुवर्त्तनेन राज्ञा सानुकम्पमनुगृहीता। धनमित्रश्च शुभे दिने कुलपालिकां परिणीतवान्।

एवं भिक्षकामेन मया लुब्धसमृद्धवर्गस्तथा मुषितः यथा कपालपाणिः स्वैरेव धनैर्मद्दत्तैः समृद्धीकृतस्यार्थिवर्गस्य गृहेषु भिक्षार्थमभ्रमत्।

न हि अतिनिपुणोऽपि जनो नियतिम् अतिक्रमितुं शक्नोति। एकदाऽहं सुरापानमत्तः रागमञ्जरीगृहात् शृगालिकया नाम तद्दास्या

अनुगम्यमानो रजन्यां राजवीथ्यामटन् नागरिकबलैः 'तस्करः' इति अभिहन्यमानः पार्श्वस्थितेन निस्त्रिंशेन द्वित्रान् निहत्य अवघूर्णमानताम्रदृष्टिः अपतम्, आगमच्च ममाभ्यासं शृगालिका आर्त्तरवान् विसृजन्ती, अबध्ये च अहम् अरिभिः। आपदा तु मत्तताऽपहारिण्या सद्य एव बोधितो व्यचिन्तयम्—'अहो! मोहोऽयं मम; प्रख्याततरञ्च सख्यं मया सह धनमित्रस्य, मत्परिग्रहत्वञ्च रागमञ्जर्याः, मत्पापेन च तौ द्वौ निग्राहयिष्येते, तदत्र तादृगुपायः कर्त्तव्यः यथा तौ नापदमाप्नुतः, अहञ्च अनर्थात् मोक्ष्ये' इति विचिन्त्य शृगालिकामब्रवम्—'अपेहि जरतिके! या तामर्थलुब्धां दग्धगणिकां रागमञ्जरीम् अजिनरत्नमनेन भ्रातृव्या मे मित्रच्छद्मना धनमित्रेण सङ्गमितवती, सा हताऽसि; तस्य पापस्य चर्मरत्नमोषात् दुहितुश्च ते साराभरणापहारात् अहमद्य एभिर्धृतो जिहासामि प्राणान्' इति। सा तु परमधूर्त्ता साश्रुमङ्गदं तान् रक्षिकपुरुषान् मम पुरतः सविनयमब्रवीत्—'भद्राः! प्रतीक्ष्यतां कञ्चित् कालं यावदस्मात् अस्मदीयं सर्वं मुषितम् अवगच्छथम्' इति। 'तथा' इति तैः प्रतिपन्ने मामासाद्याबादीत्—'सौम्य! क्षमस्वास्य दासीजनमैकमपराधम्, अस्तु स त्वत्कलत्राभिमर्शी वैरास्पदं धनमित्रः, स्मरंस्तु चिरकृतां परिचर्य्यामनुग्रहीतुमर्हसि दासीं रागमञ्जरीम्। तद्ब्रूहि क्व निहितमस्या भूषणजातम्?' इति। ततोऽहं दयमान इवाब्रवं—'भवतु, मृत्युहस्तपतितस्य किं ममामुष्यां वैरानुबन्धेन?' इति कर्णे एवैनामशिक्षयम्—'एवमेवं प्रतिपत्तव्यम्' इति। सा तु प्रतिपन्नार्था 'जीव वत्स! चिरम्' इति अभिधाय क्षणात् प्रासरत्। रक्षिभिश्चाहमानीये बन्धनगृहम्।

उत्तरेद्युरागत्य दृप्ततरः सुभगमानी सुन्दरम्मन्यः युवा कान्तको नाम काराध्यक्षः किञ्चिदिव भर्त्सयित्वा मामभ्यधात्—'चेद्धनमित्रस्य अजिनरत्नं रागमञ्जरीभूषणजातञ्च न प्रयच्छसि, द्रक्ष्यसि पारमष्टादशानां कारणानाम्, अन्ते च मृत्युमुखम्' इति। मया तु ईषद्धसता अभिहितं—'यद्यपि दशामा-जन्मनो मुषितमर्थजातं, न त्वर्थप्रतिदाराप्रहारिणः प्रतीमं मित्रमुखस्य धनमित्रस्य चर्मरत्नभस्त्रायां पूरयेयमिति मे द्रढीयसि मन्था' इति।

अथ कदाचिद्दिवसावसाने शृगालिका समेत्य सहर्षं मामब्रवीत्—'सौम्य! फलिता ते सुनीतिः, यथा त्वयाऽऽदिष्टाऽस्मि तथा धनमित्रमेत्याब्रवम्—'आर्य! तवैवमापन्नः सुहृदित्युवाच, 'अहमद्य पानदोषात् मत्तः, त्वया तु निःशङ्कम् अद्यैव राजा विज्ञापनीयः, 'देव! देवप्रसादादेव पुनरपि तद्‌जिनरत्नमर्थपतिमुषितमासादितम्। अथ तु भर्ता रागमञ्जर्याः कश्चिद्दत्तवृत्तः कथञ्चित् मया सख्यमबध्नात्। तत्सम्बन्धात् वस्त्राभरणादिना सन्तोष्य तन्नार्यो रहसि प्रतिदिनमन्ववर्त्त, तदसावशङ्किष्ट, कुपितश्च मम तद्‌जिनरत्नं तथाश्चाभरणजातममुष्णात्। साम्प्रतं भूयस्तेयाय भ्रमन्नगच्छत नागरिकबलैः, आपन्नेन च तेन कदर्थ्ये रागमञ्जरीपरिचारिकाश्च पूर्वप्रणयानुवर्त्तिना तद्भूषणनिधानोद्देशः कथितः, ममापि चर्मरत्नं यथा प्रायच्छत् तथा देवपादैरनुग्रहः कार्यः' इति। तथा निवेदितश्च राजा मामसुभिरवियोज्य सान्त्वनेन स्वं ते दापयितुं यतिष्यते, ततः पथ्यम्' इति। अचैव त्वदनुभावप्रत्ययादत्रस्तेन तेन तत्तथैव सम्पादितम्। अथाहं रागमञ्जर्याः सकाशात् यथेप्सितानि वस्तूनि आदाय त्वदादिष्टेन मार्गेण राजदुहितुरम्बालिकाया धात्रीं माङ्गलिकीमनुरञ्जयन्तो तामेव मङ्गमीकृत्य रागमञ्जर्याश्चाम्बालिकायाश्च सख्यमवर्धयम्। क्रमेण तत्समोपगतागतेनाहं तस्याः परं प्रसादपात्रम् आसम्। एकदा च तस्याः स्थानस्थिरमपि कर्णकुवलयं सस्तमिति प्रतिसमादधती प्रमत्तेव भ्रंशयित्वा पुनरुत्क्षिप्य भूमेः तेन, केनापि कारणेन कन्यकाऽन्तःपुरं प्रविष्टस्य कान्तकस्योपरि पारावतत्रासनापदेशात् प्रहसन्ती प्रहृतवती। सोऽपि किञ्चिदुन्मुखः स्मयमानो मत्कर्मप्रहासितायाः राजदुहितुः विलासप्रायम् आकारमालाभिलाषमूलमिव यथा तर्कयेत् तथा मयाऽपि संज्ञयैव किमपि चतुरमाचेष्टितम्। स तु कामपरवश एव कथं-कथमपि कन्यकाऽऽगारात् अपासरत्।

अथाहं सायं राजकन्याऽङ्गुलीयकमुद्रितां वासताम्बूलादिगर्भां पेटिकां रागमञ्जर्ये प्रेषितां नीत्वा कान्तकागारमगमम्। स च गाधे प्रेमसागरे मग्नो न वमिव मामासाद्य परम् अहृष्यत्। अवस्थान्तराणि च राजकन्यायाः सुदारुणानि वर्णयन्त्या मया स दुर्मतिः सुतरामुदश्रुयत। तत्र च समुत्सुकितकामाग्निरेकान्ते स मयोक्तः,—'आर्य! मम

प्रतिवेशो कश्चित् सामुद्रिकः तव सुलक्षणानि दृष्ट्वा माम् एकान्ते-ऽवदत् यथा, 'राज्यमिदं कान्तकस्य हस्ते पतिष्यति' इति। तदनु-रूपञ्च राजकन्या त्वां कामयते, तदेकापत्यश्च राजा तया सङ्गतञ्च त्वामुपलभ्य कुपितोऽपि नोच्छेत्स्यति, प्रत्युत ग्राहयिष्यत्येव तुभ्यं राज्यं. तदेवमर्थोऽर्थान्तरानुबन्धी कथं नानुष्ठीयते? यदि कुमारीपुरप्रवेशाभ्यु-पायं नावबुध्यसे, ननु काराभित्तेर्व्यामत्रयमन्तरालम् आरामप्राकारस्य, केनचित् निपुणेन तस्करेण तावतीं सुरुङ्गां कारयित्वा प्रविष्टस्योपवनं तदुपरि अस्मदायत्तैव रक्षा; रक्षितरश्च तस्याः परिजनो 'रहस्यं न भेत्स्यति' इति।

साऽब्रवीत्—'भद्रे! साधूक्तम्, अस्ति कश्चित्तस्करः खननकर्मणि सुनिपुणः, स चेल्लब्धः क्षणेनैतत् कर्म साधयिष्यति' इति। 'क्वाऽसौ? कथं न लभ्यते?' इति मयोक्ते सः 'येन तत् धनमित्रस्य चर्मरत्नं मुषितं सः' इति त्वामेव निरदिक्षत्। 'यद्येवम् एहि 'त्वयाऽस्मिन् कर्मणि साधिते चित्रेणपायेन त्वामहं मोचयिष्यामि' इति शपथं कृत्वा तेन सह सन्धाय सिद्धेऽस्य भूयोऽपि निगडयित्वा 'चौरोऽयं सर्वथा उपक्रान्तोऽपि न तदर्जनरत्नं दर्शयिष्यति' इति राज्ञे विज्ञाप्य चिर-मेनं घातयिष्यामि, तथा सति अर्थः सिध्यति रहस्यञ्च न भेत्स्यति' इति मयोक्ते सोऽतिहृष्टः 'तथा' इति प्रतिपद्य मामेव त्वत्प्रलोभने नियुज्य बहिरवस्थितः। किमतःपरं विधेयं चिन्त्यताम्' इति।

प्रीतेन मयोक्तं—'मदुक्तमल्पं, त्वमेव एवात्र सहाय्, आनयैनम्' इति। अथानीतोऽयं मन्मोचनाय शपथं कृतवान्, अहञ्च रहस्यानिर्भेदाय। ततोऽहं छिन्नबन्धनः काराभित्तिकोणादारभ्य उरगास्येन सुरुङ्गां कृत्वा अचिन्तयं—'जिघांसुनैवामुना मन्मोचनाय शपथः कृतः, तदमुं घ्नन्नाऽपि न दोषेण लिप्ये' इति निष्पतत एव मे निगडनाय प्रसार्यमाणपाणेस्तस्य पादेनोरसि प्रहृत्य पातितस्य तस्यैव छुरिकया शिरो न्यकृन्तम्। ततश्च 'शृगालिकामुखेन कन्याऽन्तःपुरसन्निवेशं ज्ञात्वा अमुतः किञ्चित् चोरयित्वा निर्गमिष्ये' इति मनसि कृत्वा तदुपदर्शितमार्गेण प्रविश्य कन्याऽन्तःपुरं दुग्धफेननिभे पर्यङ्कतले विस्रब्धप्रसुप्तां शरदम्भोधरोत्सङ्ग-शायिनीमिव सौदामनीं राजकन्यामपश्यम्।

दृष्ट्वैव काममग्न्यारयितव्यनिस्पृहतयैव तावच्चौर्यमायचहृदयः किं-कर्त्तव्यविमूढः क्षणं स्थित्वा व्यचिन्तयं—'चेदिमां नाश्रयां न मृष्यति मां मदनः, तदिदमत्र प्राप्तरूपम्' इति विविच्य तत्रत्यं फलकमेक-मादाय मणिसमुद्गकात् वर्णवर्त्तिकाम् उद्धृत्य तथा:-शयानां तस्याश्च चरणा-लग्नमाबद्धाञ्जलिं मामालिखम् आर्य्याञ्चेमाम्।—

'त्वामयमाबद्धाञ्जलि दासजनस्त्वमिममर्थयते।
स्वपिहि मया सह सुरतव्यतिकरखिन्नेव मा मैवम्॥'

ततश्चाङ्गुलीयकविनिमयं कृत्वा कथंकथमपि तस्मात् निर्गत्य सुरुङ्गया पुनर्बन्धनागारमेत्य च तत्र बद्धस्य नागरिकवरस्य सिंहघोष-नाम्नः तेषु तेषु दिनेषु मित्रत्वेनोपचरितस्य 'एवं मया हतः कान्तक इति रहस्यं निर्भिद्य लब्धव्यो मोक्षः' इत्युपदिश्य शृगालिकया सह निरगाम्। राजपथे च नागरिकपुरुषान् वञ्चयित्वा रागमञ्जरीगृह-मेत्य चिरवियोगखिन्नां तामाश्वास्य नीत्वा च तां निशां प्रभाते पुनरुदार-केण सह समगच्छे।

अथ भगवन्तं मरीचिं पुनःप्राप्तप्रभावमुपगम्य तस्मात् त्वद्गति-मुपलेभे। सिंहघोषश्च कान्तकापचारं निर्भिद्य तत्पदे प्रसन्नेन राज्ञा प्रतिष्ठापितः तेनैव सुरुङ्गापथेन कन्याऽन्तःपुरं मां पुनरनयत्। सम-गंसि चाहं शृगालिकामुखविज्ञातवार्त्तानुरक्तया राजदुहित्रा। अत्रान्तरे चण्डवर्मा सिंहवर्माऽवधूतदुहितृप्रार्थनः कुपितः चम्पामवारुणत्, अज-यच्च सिंहवर्माणं बलेन। अम्बालिकाञ्च बलात् स्वशिविरं नीत्वा 'नृपान्ते विवाहः' इति कौतुकम् अबध्नाच्च। अहञ्च धनमित्रमब्रोचं—'सखे! समापतितमङ्गनायसहायं राजन्यमलं सुगूढं सम्भूय पौरवृद्धैस्तदुपावर्त्तय, ततश्च कृतशिरसमेव शत्रुं द्रक्ष्यसि' इति। तथा च तेनाभ्युपगते अहमस्य भवनमलक्ष्यशस्त्रः प्रविश्य अम्बालिकापाणिम् अग्नौ साक्षिणि आदित्समानस्य बाहुदण्डमाकृष्य छुरिकयोरसि प्रहृत्य अन्यांश्च कति-पयान् तत्सहायान् निहत्य हतविध्वस्तं तद्गृहमनुविचरन् वेपमानमधुर-गात्रीं प्रियामाश्वास्य तदालिङ्गनसुखमनुबुभूषुस्तामादाय गर्भगृहमविशम्, अभवच्च तव नवाम्बुवाहगम्भीरस्वरेण अनुगृहीतः" इति।

श्रुत्वा स्मित्वा च राजपुत्रः "कथं कार्कश्येन कर्णीसुतम् अत्यति-

क्रान्तः !!" इत्यभिधाय उपहारवर्माणं प्रति तद्वृत्तान्तकथने समादिदेश।

इति द्वितीयोच्छ्वासः।

---

# अथ तृतीयोच्छ्वासः।

## उपहारवर्मचरितम्।

स प्रणम्य अभ्यधत्त—"देव! अहमेकदा पर्यटन् विदेहेषु कश्चित् मठिकायां विश्रमितुमेत्य कामपि वृद्धतापसीमपश्यम्। तान्तु मद्दर्शनेनाश्रुमुखीमालोक्य 'किमेतत्?' इति मयोक्ता सकरुणम् अब्रवीत्—'आयुष्मन्! मिथिलाधिपतिः प्रहारवर्मा नाम मगधराजस्य राजहंसस्य परं मित्रमासीत्। तयोश्च महादेव्यौ वसुमतीप्रियंवदे परस्परमप्रतिमं सख्यमादधाताम्। कदाचित् प्रथमगर्भाभिनन्दितां प्रियसखीं वसुमतीं दिदृक्षुः प्रियंवदा सह भर्त्रा पुष्पपुरमगमत्।

तस्मिन्नेव समये मालवेन मगधराजस्य महाजन्ये प्रवृत्ते मगधराजे दुर्लक्ष्यां गतिमुपगमवगम्य मैथिलः कथञ्चित् प्राणितः स्वविषयं गच्छन् पथि ज्येष्ठस्य पुत्रैर्विकटवर्मप्रभृतिभिराक्रान्तं राज्यमुपलभ्य स्वस्रीयात् सुह्मपतेर्बलमादित्सुरटवीपथमवगाहमानः लुब्धकलुप्तसर्वस्वः अभूत्। अहञ्च कनीयसा तत्सुतेन हस्तवर्तिना वनचरशरपतनत्रस्ता वनमवगाह्य केनचिद् शार्दूलेनाक्रान्ता निपतिता। मत्पाणिभ्रष्टश्च स बालः कस्यापि गोशवस्य क्रोडमभ्यलीयत। सहसा तस्मिन् व्याघ्रे शबरशरेण निहते स बालकः शबरदारकैरपहृतः, अहञ्च मोहविकलः केनचित् पशुपालेन स्वकुटीरं नीत्वा सुस्थीकृता स्वभर्तुरन्तिकगमनाय यावत् यते तावत् मद्दुहिता केनापि यूना सह तमुद्देशमागता।

सा रुदती स्वहस्तगतस्य राजपुत्रस्य किरातहस्तगमनम्, आत्मनश्च केनापि चारेण विवाहं स्वस्यायाश्च पुनस्तेनोपयन्तुमिष्टाया निकृष्टजातिसंसर्ग-

वैक्लव्यात् प्रत्याख्याने, तद्वचनेन च तेन निर्जने वने स्वशिरःकर्त्तनोद्यमम्, अमुना च यूना सहसोपनीतेन तस्य दुरात्मनो हननम् आत्मनश्च उपयमनम् अकथयत्। स च पृष्टः मिथिलेन्द्रस्येव कोऽपि सेवकः कारणविलम्बो तन्मार्गानुसारी जातः। ततस्तेन सह आवां भर्त्तुरन्तिकमुपेत्य पुत्त्रयोर्वृत्तान्तेन तं राजानं प्रियंवदाञ्च नितरां व्यथयामासिव। स च राजा दुर्दैवात् ज्येष्ठभ्रातृपुत्रैश्चिरं विग्रह्य बद्धः देवी च बन्धनं नीता। हतभाग्याऽहं जीवितमपारयन्ती हातुं प्रव्रज्याम् आश्रयम्। दुहिता तु मम अगत्या विकटवर्ममहिषीं कल्पसुन्दरीमशिश्रियत्। तौ चेद्राजसुतौ निर्बाधमजीविष्यताम् इयता कालेन तवेमां वयोऽवस्थामप्स्यताम्। तयोश्च सतोः यदा नरेन्द्रस्य नेदृशीं दशां घटयेयुः' इत्युक्त्वा प्रवृद्धबाष्पमरोदीत्।

तदाकर्ण्याहमपि वाष्पमुत्सृजन्नभ्यधां—'मातः! समाश्वसिहि, यस्ते हस्तात् प्रच्युतो बालः स केनचित् मुनिना लब्धः संवर्द्धितश्च। वार्त्तयं महती, किमनया, सोऽहम्। मया च असौ विकटवर्मा कथमपि निहन्तुं शक्यः। मामिहत्यः कश्चिदपि ईदृक्तया नो जानाति, पितरावपि न संविद्राते किमुतान्य? तदेनमर्थमुपायेन साधयिष्यामि' इति।

सा तु वृद्धा सरुदितं परिष्वज्य प्रस्नुतस्तनी सगद्गदमगदत्—'वत्स! चिरं जीव, अद्य सुप्रसन्नो विधिः, अद्येव प्रहारवर्मणि अधिविदेहाः जाताः। अहो! महत् भाग्यं देव्याः प्रियंवदायाः' इति अभिधाय सहर्षं स्नानभोजनादिना मामुपाचरत्। रात्रौ कटशय्यामधिश्रितः 'विनोपधिमयमर्थो न साध्यः, स्त्रियश्चोपधीनां महत् क्षेत्रम्, अतोऽन्तःपुरवृत्तान्तमस्या अवगम्य तद्द्वारेण किञ्चिदारचयिष्यामि' इति चिन्तयत एव मे सा त्रियामा व्ययासीत्, उदगाच्च भगवान् सहस्रदीधितिः।

उत्थाय च मयि अवसितदिनमुखविधौ तां तापसीं 'मातः! विकटवर्मणः कच्चिदन्तःपुरवृत्तान्तमवगच्छसि?' इति वदति एव काचिदङ्गना प्रत्यदृश्यत। तामालोक्य सहर्षासं 'पुत्रि पुष्करिके! पश्य भर्तृदारकम्, अयमस्याकृपया मया वने परित्यक्तः पुनरप्येत-

मधिगतः' इति वदन्त्यां तस्यां मे धात्र्यां सा हर्षनिर्भरनिपीडिता चिरं प्ररुद्य निलय साम्त्विना मया राजान्तःपुरवृत्तान्तमाचख्यौ— 'कुमार! कामरूपेश्वरस्य कलिन्दवर्मणः कन्या कल्पसुन्दरी नाम कलासु रूपे च अप्सरसोऽप्यतिक्रान्ता पतिमभिभूय वर्तते, पतिस्तु बहुवरोधोऽपि तदेकवल्लभ' इति।

तदाकर्ण्याहं तत्रैवापसर्पभूतया राजमहिष्याः भर्तरि द्वेषं क्रमेण कोशलेन सम्पाद्य आत्मनः प्रतिकृतिमभिलिख्य मन्मात्रा तस्यै मत्त-काशिन्यै प्रहितवान्। सा तु चित्रीयमाणा तदवलोक्य 'ईदृशं सौन्दर्य देवेऽपि कुसुमसायके न सन्निधत्ते, केनेदमालिखितम्?' इति समादृतवती। दृष्ट्वा सा मम धात्री सस्मितमवादीत्—'देवि! सदृशमाज्ञापयसि, भगवान् मकरकेतुरेवं सुन्दर इति न शक्यते वक्तुं, तत् यदि ईदृशः पुमान् स्यात् स किं लभ्यते?' इति। तयोक्तम्, "अम्ब! किमुच्यते, शरीरं जीवितं हृदयमिति, सर्वमेतदस्यत्यमनर्हम्, ततो न किञ्चिल्लभ्यते? न चेदयं विप्रलम्भ तदमुष्य दर्शनानुग्रहेण यथा चक्षुश्चरितार्थं स्यात् तथा कार्य्यम् इति। अन्यच्चातिगोप्यं कथयामि, मम तातस्य राज्ञा प्रहारवर्मणा परं सख्यमासीत, मातुश्च मे मानवत्या देवी प्रियंवदा सखी आसीत्, ताभ्यां पुनरजातापत्याभ्यां समयः कृतः, 'आवयोः पुत्राय दुहितृमत्या दुहिता देया' इति। तातस्तु मां जातां प्रनष्टपुत्रा प्रियवदेति विकटवर्मणे दत्तवान्। अयन्तु निष्ठुरः कामोपचारेषु अविचक्षणः, मृषावादी न रोचते मे भर्त्ता। परलोकभय-मेवेच्छिन्न अन्तरितम्, अतोऽमुना यूना मामद्य श्वो वा समागमय' इति। तदाकर्ण्य सा मदन्तिकमेत्य तत् सर्वं निवेद्य 'अतःपरं भर्तृदारकः प्रमाणम्' इत्युक्त्वा विरराम।

ततोऽहं तन्मुखात् राजमन्दिरसंविभागं सम्यक् ज्ञात्वा तां पुष्करिकां कृतसङ्केतां राजमहिष्याः सन्निधौ सम्प्रेष्य निशायां शयनगतो व्यचिन्तयं— 'सिद्धप्राय एवायमर्थः, किन्तु परदारपरामर्शात् धर्मव्यतिक्रमः स्यात्, स चार्थकामयोर्द्वयोरधिगमे नीतिं न बाधते, प्रत्युत पित्रोरुद्धारसम्पादनेन महान्तं धर्ममावहति। एतदाकर्ण्य देवो राजवाहनः सुहृदो वा किं वक्ष्यन्ति' इति चिन्तापन्न एव निद्रामभजे; दृष्टश्च स्वप्ने भगवान् गजा-

प्राह—'सौम्य उपहारवर्मन्! मा अत्र संशयः कार्य्यः, त्वं मदंशः, असौ च मत्तकाशिनी सुरसरित्, अमूं कदाचित् गणपतिः जलक्रीड़ां कुर्वन्नवातरत्, सा तु सपत्नीतनयविच्छिन्नां विलोड़नामसहमाना तमशपत् 'एहि मर्त्यत्वम्' इति। सोऽपि अहेतुकशापप्रदानात् कुपितस्तां शशाप, 'यथा ह्यहं बहुभोग्या तथा प्राप्यापि मानुष्यकमनेकसाधारणी भव' इति। इत्थं प्रतिशप्ता सा सुदुःखिता मामेत्य सगद्गदमगदत्—'नाथ! भवच्चरणनिरताऽहं गजाननेनेत्थं शप्ता।' तदाकर्ण्य सकृपेण मयोक्तं—'प्रिये! न अस्य शापोऽन्यथा भवेत्, परमहं त्वदनुग्रहार्थं द्विधा भूत्वा विकटवर्मोपहारवर्मरूपाभ्यां मर्त्यलोकेऽवतरिष्यामि। त्वं कामरूपेश्वरस्य कन्या कल्पसुन्दरी नाम भूत्वा ज्यायसा मदंशेन विकटवर्मणा किञ्चित् कालं सङ्गता ततस्तस्मिन् स्वमूर्त्ताविव लयमुपगते उपहारवर्मणा मत्कनिष्ठांशेन साकं चिरं विविधसुखमनुभविष्यसि।' तदयमर्थो भव्यः, मा अत्र शङ्का कार्य्या' इति।

अहञ्च तत्क्षणप्रतिबुद्धः कथञ्चित् तदहर्गमयित्वा समागतायां निशायां सञ्चरत्सु तिमिरेषु नीलनिवसनः खड्गपाणिः मातृनिर्दिष्टान्तःपुरसन्निवेशस्मरणेन सोत्साहं पूर्वसङ्केतितं माधवीलतामण्डपं प्रविश्य कान्तया सह समगंसि। कृतालिङ्गनश्च तां विशाललोचनामनगलकलप्रलापिनीं यथाकाममरीरमम्। ततश्च मां निर्यान्तम् आलोक्य सा दीनानना सवाष्पमाचष्ट—'नाथ! यदि प्रयासि, प्रयातु मे जीवितं गणय, नय मामपि यथा ते रोचते' इति कृताञ्जलिं तामवादिषं—'प्रिये! कः पुमान् ईदृशीं कामिनीं न कामयते? यदि मयि अनुरागस्ते निश्चलः, तदाचराविचारं मदुपदिष्टम्; दर्शय राज्ञे मच्चित्रपटम्, आपृच्छ च 'किमियमाकृतिः सौन्दर्य्यस्य परां कोटिमारूढ़ा न वा?' इति। 'वाढ़म्' इति स नियतं वक्ष्यति। पुनश्च ब्रूहि—'यदि एवम्, अस्ति काऽपि तापसी नानादेशभ्रमणलब्धवेदग्ध्या मन्मातृभूता, तया इदमालेख्यरूपं प्रदर्श्य अहमुक्ता—'पुत्रि! अस्ति तादृङ्मन्त्रः, येन त्वमुपोषिता पर्वणि विविक्तायां भूमौ पुरोहितैर्हुतमन्त्रे हुताशने नक्तमेकाकिनी शतं चन्दनसमिधः शतमगुरुकाष्ठानि कर्पूरमुष्टीः पट्टवस्त्राणि च हुत्वा भविष्यस्येवमाकृतिः। ततश्चालयिष्यसि घण्टां, घण्टारवाऽऽहृतश्च भर्त्ता

तुभ्यं सर्वं रहस्यमाख्याय निमीलिताक्षी यदि त्वामालिङ्गेत् इयमाकृतिस्तमुपसङ्क्रामेत्, त्वन्तु यथापुराऽऽकृतिरेव भविष्यसि। यदि भवत्यै राज्ञे च एतं रोचेत तदा अविचारमिदमनुष्ठीयतां, न अत्र विसंवादशङ्का कार्य्या' इति। अतो वपुष्वेदिदं तवाभिमतं, सह सुहृद्भिः मन्त्रिभिः पौरवर्गैश्च सम्मन्त्र्य तदनुमतेन कर्मणि अस्मिन् अभियुज्यताम्' इति।

स नियतमभ्युपेष्यति। ततश्च त्वं कृतकनर्मस्मिता विकटवर्माणं कर्णे एवमालपिष्यसि 'धूर्त! त्वमकृतज्ञः, मदनुग्रहलब्धेनापि रूपेण लोकलोचनोत्सवायमानेन मत्सपत्नीरभिरमयिष्यसि, न अहमात्मविनाशाय वेतालोत्थापनमाचरेयम्' इति। श्रुत्वेदं त्वद्वचः स यत् वदिष्यति तन्मह्यं ज्ञापयिष्यसि। साम्प्रं मत्पदचिह्नानि च उपवने पुष्करिकया प्रमार्जय' इति। सा 'तथा' इति शास्त्रोपदेशमिव मदुक्तमादृत्य अत्यप्रसुरतरागेव कथमप्यन्तःपुरमगात्। अहमपि यथापूर्वं निर्गत्य स्वमावासं प्रत्ययासिषम्।

अथ सा तथैव तमर्थमन्वतिष्ठत्। अतिष्ठच्च स दुर्मतिः तन्मते, अभ्रमच्च पौरजानपदेषु इयमद्भुतायमाना वार्त्ता, बृहस्पतिप्रतिमबुद्धिभिरपि मन्त्रिभिः अनुमोदितं, 'यद्येवं नान्यदतःपरमस्ति किमप्यद्भुतम्, अचिन्त्यो मणिमन्त्रौषधीनां प्रभावः' इति प्रसृततरेषु लोकवादेषु प्राप्ते पर्वदिवसे प्रगाढ़ायां तिमिरनिपीड़ितायां प्रदोषवेलायाम् अन्तःपुरोद्यानादुद्गमत् महान् धूमसञ्चयः। चोराज्यदधितिलगौरसर्षपत्वसामांसरुधिराहुतीनां परिमलः पवनानुसारी दिशि दिशि प्रावासीत्। अथ प्रशान्ते च तस्मिन् धूमोद्गमे रहोद्यानम् अहमगमम्, आगमच्च सा गजगामिनी; आलिङ्ग्य मां सस्मितमभाषत—'धूर्त! सिद्धं ते समीहितम्, अवसितश्च पशुः असौ। अमुष्योपप्रलोभनाय त्वदादिष्टया दिशा मयोक्तं—'कितव! न साधयामि सौन्दर्य्यं, त्वमेवं-सुन्दरो भूत्वा अप्सरसामपि स्पृहणीयो भविष्यसि किमुत मानुषीणां, मधुकर इव निसर्गचापलात् यत्र क्वचिदासज्जति भवादृशो जनः' इति। तेन तु पादयोर्निपत्याभिहितं—'प्रिये! क्षमस्व मत्कृतानि दुष्कृतानि, मनसा अपि न अतःपरं चिन्तयेयम् अपरनारीः, त्वरस्व प्रकृते कर्मणि' इति।'

एवमालपन्तीं तां समालिङ्ग्य पुनःपुनश्चुम्बित्वा 'इहैव कुरवकगुल्मगर्भे तिष्ठ यावदहं साधयेयं कार्य्यम्' इति विसृज्य उपसृत्य च होमप्रदेशं यथाप्रथमाश्रयम्; अनुजग्राह सा तं जनं कृतान्तदूतीव आक्रयन्ती, आययासीश्च राजा तं देशम्। अगुरुचन्दनानि जुह्वतं मां दृष्ट्वा प्रश्नापन्नमिव तं सविस्मयं विचार्य्य तिष्ठन्तमब्रवं—'ब्रूहि सत्यं भूयोऽपि भगवन्तं चित्रभानुं साक्षीकृत्य न चेदनेन रूपेण मत्पत्नीरभिरमयिष्यसि, ततस्त्वयि इदं रूपं सङ्क्रामयेयम्' इति। स तदैव 'देव्येवेयं नोपधिः' इति सञ्जातप्रत्ययः शपथाय प्रावर्त्तत। ततः स्मित्वा पुनर्मयोक्तं— 'कथय कानि ते रहस्यानि, तत्कथनान्ते च त्वत्स्वरूपभ्रंशः' इति।

सोऽब्रवीत्—'अस्ति वृद्धो मत्पितुः कनीयान् भ्राता प्रहारवर्मा, तं विषान्नेन व्यापाद्य अजीर्णदोषं ख्यापयेयमिति मन्त्रिभिः सहाध्यवसितम्। अनुजाय विशालवर्मणे दण्डचक्रं पुण्ड्राभियोगाय दीक्षितम्। पौरवृद्धः पाञ्चालिकः परिव्रातश्च सार्थवाहः खलतिनाम्नो यवनात् वज्रमेकं वसुन्धरामूल्यं लवीयसा मूल्येन लभ्यमिति ममैकान्तेऽमन्त्रयेताम्। गृहपतिश्च ममान्तरङ्गभूतो जनपदमहत्तरः शतहलिरलीकवादशीलमवलेपवन्तं दुष्टग्रामण्यमनन्तसीरं जनपदकोपेन घातयेयमिति दण्डधरानुसारकर्मणि मत्प्रयोगान्नियोक्तुमभ्युपागमत्। इत्थमिदमचिरं प्रवृत्तं रहस्यम्।' इत्याकर्ण्य तमहम् 'इयत्तवायुः, उपपद्यस्व स्वकर्मोचितां गतिम्' इति क्षुरिकया द्विधाकृत्य कृत्तमात्रं तस्मिन्नेव समार्चिषि अजुहवम्, अभूच्चासौ भस्मसात्। अथ स्त्रीस्वभावविक्लवां प्राणवल्लभां समाश्वास्य चूतक्रिसलये गृहीत्वा गत्वा च तद्गृहम् आहूय च तदनुमत्या सर्वाण्यन्तःपुराणि सद्य एव सेवां दत्तवान्। ततो विस्मितान् तान् सर्वान् विसृज्य शय्यागृहे तया कान्तया सह प्रविश्य तामभिरमयन् सुखमिव तां निशामनैषम्, अध्यगमञ्च तन्मुखात् राजकुलस्य शीलम्।

अथ उषसि स्नात्वा कृतमङ्गलो मन्त्रिभिः समागतस्तान् अवादिषम्— 'आर्य्याः! रूपेणैव परिवृत्तो मम स्वभावः, य एष विषान्नेन हन्तुमिष्टः पिता मे, स मुक्त्वा स्वमेव राज्यं भूयोऽपि ग्राहयितव्यः। पितृवदस्मिन् शुश्रूषयैव वर्त्तामहे, न हि अस्ति पितृवधात् पातकम्' इति। भ्रातरं विशालवर्माणमाहूय उक्तं—'वत्स! न सुभिक्षाः

साम्प्रतं पुष्कुः, ते उपद्रुता राष्ट्रं नः सुभिक्षमर्मभिद्रवेयुः, अतो न अद्य यात्रा कार्य्या' इति। नगरवृद्धाश्चैवादिषन्—'अल्पीयसा मूल्येन महार्हं वस्तु न क्रेतव्यम्, अनुरूपेणैव मूल्येन क्रीयताम्' इति। शतहलिश्चोक्तवान्—'योऽसौ अनन्तसीरः प्रहारवर्म्मणः पत्र इति निनाशयिषितः, सोऽपि पितरि मे प्रकृतिस्थे किमिति नाश्यते? तत् त्वयाऽपि न अत्र संरम्भः कार्य्यः' इति।

ते च सर्वे सर्वमेतदाभिज्ञानिकमुपलभ्य 'स एवायम्' इति निश्चित्वाना विस्मयमाना मां महादेवीञ्च प्रशंसन्तो मन्त्रबलानि च उद्घोषयन्तः बन्धनात् पितरौ मोचयित्वा स्वं राज्यं प्रत्यपादयन्। अहञ्च सर्वमिदं तया मे धात्र्या आचेष्टितं पितरौ अवगमय्य प्रहर्षकाष्ठाधिगतयोस्तयोः पादमूलमभजे, अभज्ये च यौवराज्यलक्ष्म्या तदनुज्ञातया। इत्थं सिद्धकामो देवपादविरहदुःखदुर्भगान् भोगान् उपभुञ्जानः भूयोऽस्य पितृसखस्य सिंहवर्म्मणः लेख्यात् चण्डवर्म्मणः चम्पाऽभियोगमवगम्य 'शत्रुवधो मित्ररक्षा च उभयमपि करणीयम्' इति अलघुना सैन्यचक्रेण अभ्यसरम्, अभवञ्च भूमिः त्वत्पादपद्मसाक्षात्कारानन्दराशेः" इति।

श्रुत्वैतद्देवो राजवाहनः सस्मितमवादीत्—"पश्यत, पारदारिकमुपधियुक्तमपि गुरुजनबन्धमोक्षहेतुतया दुष्टामित्रवधसाधनतया राज्यलाभमूलतया च पुष्कलौ अर्थधर्मावसाधयत्। किं हि बुद्धिमद्भिः प्रयुक्तं न अभ्युपैति शोभाम्?" इति अर्थपालमुखे दृष्टिं निधाय "भवोतु भवान् आत्मीयं चरितम्" इत्यादिदेश।

इति तृतीयोच्छ्वासः।

---

## अथ चतुर्थोच्छ्वासः।

---

## अर्थपालचरितम्।

सोऽब्रवीत्—"देव! अहमपि भवदन्वेषणैककर्मा पर्यटन् कदाचित् काशीपुरीमेत्य मणिकर्णिकायामुपस्पृश्य भगवन्तमन्धकमथनमभिप्रणम्य

प्रदक्षिणां कुर्वन् कमपि पुरुषमायामवन्तमाबध्यमानपरिकरं रुदितोच्छून-ताम्रदृष्टिम् अपश्यम्, अतर्कयच्च—'कर्कशोऽयं पुरुषः कार्पण्यमिव वर्षति स्रागत रेण चक्षुषा, आरम्भश्च साहसमनुवदति ; नूनमसौ प्राणनिस्पृहः किमपि घोरव्यसनमूलं कृच्छ्रं प्रपित्सते' इति। अपृच्छमेनं—'भद्र ! सन्नाहः अयं साहसमवगमयति, न चेत् गोप्यं श्रोतुमिच्छामि।' स मां सबहुमानं निर्वर्ण्य 'को दोषः? श्रूयताम्' इति क्वचित् करवीरतले मया सह कथामकार्षीत्।—

'सौम्य ! अहमस्मि पूर्वं कामचारी पूर्णभद्रो नाम। पित्रा प्रयत्न-संवर्धितोऽपि दैवगत्या चौर्यवृत्तिः आसम्। अथ अस्यां काशीपुर्यां वैश्यश्रेष्ठस्य कस्यचित् गेहे चारयित्वा अपहृतवस्तुना अभिग्राहितो बद्धः। बद्धं च मयि मृत्युविजयो नाम हिंसाविहारी मत्तगजः पश्यतः कामपालनाम्नः प्रधानामात्यस्य शासनात् मां प्रति महावेगेन समापतत्। मया च निर्भयेण निर्भर्त्सितः भीतवन्न्यावर्तत। तदवलोक्य मन्त्री मामाहूयावादीत्—'भद्र ! मृत्युरिवायं हिंसाविहारी गजेन्द्रः त्वयैवं निराकृतः ! तत् प्रीतोऽस्मि ते, विरमास्मादपकर्मणः, अद्य प्रभृति आर्यवृत्त्या मामनुवर्तस्व' इति। 'यथा आज्ञापयसि' इति मयोक्तः मित्रमिव मामनुगृह्य जातविश्रम्भेण मयैकदा पृष्टः स्वचरित-माचष्ट।—

'आसीत् कुसुमपुराधिपतेः मन्त्री धर्मपालो नाम, तस्य पुत्रः सुमित्रो नाम पितेव समः प्रज्ञागुणेषु। तस्यास्मि वैमात्रेयः कनीयान् भ्राताऽहम्। शैशवे दुर्वृत्तोऽहं तेनोपदिष्टोऽपि यदृच्छया दिक्षु भ्रमन् अस्यां वाराणस्यां समेत्य अस्याः पतेश्चण्डसिंहस्य कन्यां कान्तिमतीं चकमे, कथञ्चन सङ्गमे च। गूढं विहरता मया सा सञ्जातगर्भा पुत्रमेकमसूत, अत्याचोक्ष 'मृतजातः' इति परिजनः अस्याः तं बालं क्रीडाशैले, शवरी च काचित् श्मशानं निनाय। रक्षिकपुरुषभीतया तया अगत्या रहस्य-निर्भेदे कृते राजाज्ञया अहं श्मशानमुपनीय मातङ्गोद्यतेन खड्गेन प्राजिहीर्षि। दैवबलात् लूनबन्धनोऽहं तमसिम् आच्छिद्य तं मातङ्गम् अन्यांश्च कांश्चित् प्रहृत्य पलायमानो निराश्रयश्च भ्रमन् कयाऽपि दिव्ययोषिता उपास्थायिषि। सा 'का त्वम्? कथं मामनुगृह्णासि?'

इति सादरमभिहिता मया कृताञ्जलिः अब्रवीत्—'आर्य! अहमस्मि तारावली नाम यक्षकन्या। अहमेकदा वाराणस्याः प्रेतावासे कमपि रुदन्तं बालकं दृष्ट्वा आदाय स्नेहेन पित्रोः सकाशमनैषम्, अनैषीच्च तातो देवस्य अलकेश्वरस्य आस्थानीम्। तेन देवेनाहमाहूय अभिहिता, 'वत्से! बालेऽस्मिन् कीदृशस्ते भावः?' इति। 'औरस इवास्मिन् वत्सलता' इति मयोक्ते सः 'सत्यमाह वराकी' इति तन्मूलां महतीं कथामकरोत्। तत्र एतत् मया अवगतं, त्वं मम जन्मान्तरीणः पतिः, तस्मिंश्च जन्मान्तरे शिशुरयं मद्गर्भजः, मम च विनयवती नाम या सपत्नी आसीत् तया असौ बालः स्नेहेनावर्द्धत। ततश्च तस्यां कान्तिमत्यवस्थायामथ स बालः समुदभूत्। एवं मृत्युमुखपरिभ्रष्टं दैवात् मयोपलब्धं तं तस्यैव देवस्यादेशात् वने तपस्यतो राजहंसस्य देव्यै वसुमत्यै तत्सुतस्य भाविचक्रवर्त्तिनो राजवाहनस्य परिचर्य्यार्थं समर्प्य गुरुभिरनुज्ञाता साम्प्रतं कृतान्तबलात् कृतान्तमुखपरिभ्रष्टस्य भवतः पादपद्मशुश्रूषार्थमागताऽस्मि' इति।

श्रुत्वा तां जननान्तरप्रियामसकृदाश्लिष्य सहर्षं तत्प्रभावरचिते महति मन्दिरे अहर्निशं भूमिदुर्लभान् भोगान् भुञ्जानः कदाचित् तामवादिषं—'प्रिये! प्रत्यपकारेण मत्प्राणद्रोहिणश्चण्डसिंहस्य वैरनिर्यातनसुखमनुबुभूषामि' इति। तया सस्मितयोक्तम्—'एहि कान्त! कान्तिमतीदर्शनाय' इति निशीथे अहं राज्ञो वासगृहमनीये। अहन्तु तच्छिरोभागवर्त्तिनीमसियष्टिमादाय तं नृपं प्रबोध्याब्रवम्—'अहमस्मि तव जामाता, त्वदनुमतिमन्तरेण त्वत्कन्याऽभिमर्शी, तमपराधमनुवृत्त्या प्रमार्ष्टुम् आगतः' इति।

सोऽतिभीतो बद्धाञ्जलिरवदत्—'अहमेव मूढोऽपराधी यस्तव दुहितृसंसर्गानुग्राहिणो ग्रहग्रस्त इवोत्क्रान्तसीमा वधमादिशम्। आस्तां तावत् कान्तिमती, राज्यमिदं जीवितञ्च मम अद्य प्रभृति त्वदायत्तम्' इति। परेद्युश्च प्रकृतिमण्डलम् आहूय यथाविधि कन्यां मह्यमदात्। तारावली च कान्तिमत्यै तनयवार्त्तामश्रावयत्। इत्थञ्च मन्त्रिपदापदेशं यौवराज्यम् अनुभवन् सुखं विहरामि।'

एवं गते स महाभागः कालेन अलसकेन स्वर्गते श्वशुरे, ज्यायसि

च श्याले चण्डघोषनाम्नि स्त्रीषु अतिप्रसङ्गात् क्षयरोगेण प्रागेव क्षयं गते पञ्चवर्षदेशीयं सिंहघोषाख्यं कुमारमभ्यषेचयत्, अवर्द्धयच्च यथाविधि तं स साधुः। अथ असौ यौवनोन्मत्तः कतिपयैर्दुर्मन्त्रिभिरित्यमग्राह्यत यथा 'तव अनेन स्वसा प्रसह्य बलात्कृता लम्पटेन; ततश्च प्रसुप्ते राजनि प्रहर्त्तुमुद्यतासिः आसीत्। तच्च देवश्चेष्टं विषेण हत्वा बालोऽयमसमर्थ इति त्वमद्यापि प्रकृतिविश्रम्भणायोपेक्षितः। तत् शीघ्रमेवामुमन्तकपुरं नेतुमर्हति देवः' इति। स एवं दूषितोऽपि यक्षिणीप्रभावात् नामुष्मिन् पापम् आचरितुमशक्नोत्।

अथ केनापि कारणेन यक्षिण्या विरहितमुपलभ्य निर्भयोऽसौ यथापूर्वं राजकार्य्याणि कुर्वन्तं तं पूर्वसङ्केतितैः पुरुषैरभिग्राह्य अबन्धयत्, आदिशच्च तस्य मरणफलं नेत्रोत्पाटनमिति। अतोऽहमेकान्ते यथेष्टमश्रु मुक्त्वा तस्य साधोः पुरः प्राणान् मुमुक्षुः बध्नामि परिकरम्' इति।

मया अपि तत् पितृव्यसनमाकर्ण्य साश्रु अभिहितं—'सौम्य! किं गोपनेन? यत्करन्यस्य वसुमतीहस्ते यः समर्पितः पोतः सोऽहमस्मि, तदत्र किं प्रतिपत्तव्यम्?' इति वदति एव मयि सहसा आशीविषः प्रत्यदृश्यत, तमहं मन्त्रबलेन सङ्गृह्य पूर्णभद्रमन्वादिशं—'भद्र! सिद्धं नः समीहितम्, अनेन पितरं नेत्रोत्पाटनार्थमानीतं यदृच्छया पातितेन दंशयित्वा तथा विषं स्तम्भयेयं यथा मृत इत्युदास्यते।' ततश्च पूर्णभद्रमुखेन मातरं प्रबोध्य तया यत् यत् करणीयं तत्तदुपदिश्य च घोषणास्थाने तिन्तिडीवृक्षमारुह्य गूढतनुः अतिष्ठम्। तावन्मे पितरं तस्करमिव पश्चाद्बद्धभुजमनेकजनानुयातमानीय मदभ्यासे एव स्थापयित्वा मातङ्गः लिवारन् अघोषयत्—'एष मन्त्री कामपालः भर्त्तारं चण्डसिंहं युवराजं चण्डघोषञ्च निहत्य पुनर्देवेऽपि सिंहघोषे पापमाचरिष्यन् विश्वासात् रहस्यभूमौ अमात्यं शिवनागादिकमाहूय राजवधायोपजप्य स्वामिभक्त्या तद्विहितगुह्यः 'राज्यकामुकस्य अस्य ब्रह्मघ्नस्य अन्धतमःप्रवेशो न्याय्यः' इति विचारपतिवाक्यादद्य दण्डयितुं नीयते' इति।

ह्येतत् अत्र तत्क्षणे जनसमूहे पितुरङ्गे तमाशीविषं न्यक्षिपम्,

अस्तम्भयच्च क्षणेन विषम्, अपतच्च स भूमौ मृतकल्पः। स च दर्वीकरस्तमपि चण्डालं दृष्ट्वा तासद्रुतलोकदत्तमार्गः प्राद्रवत्। अथ मे माता प्राक् पूर्णभद्रप्रबोधिता तादृशेऽपि व्यसने नातिविक्लला पश्चात्मेव आगत्य मत्पितुरुत्तमाङ्गमुत्सङ्गेन दधती राजानं समदिशत्, 'एष मम पतिस्तवापकर्त्ता न वेति दैवमेव जानाति, न मेऽनया चिन्तयाऽस्ति फलम्, अस्य तु गतिमननुप्रपद्यमाना भवत्कुलं कलङ्कयेयम्, अतोऽनुमन्तुमर्हसि भर्त्रा सह चितामधिरोढुम्' इति। तदाकर्ण्य प्रीतः स राजा समादिशत्, 'क्रियतां कुलोचितमनुष्ठानम्, अनुभूयताञ्च मे भगिनीपतिना उत्सवोत्तरः पश्चिमो विधि.' इति। अथानीतः पिता मे विविक्तायां भूमौ स्थापितश्च। अथ मदम्बा सहमरणमण्डनम् अनुष्ठाय रुदती पितुरन्तिकं मे प्राविशत्। तत्र च पूर्वमेव पूर्णभद्रोपस्थापितेन मया मन्त्रबलेन निर्विषीकृतं पितरमैक्षत। ततश्च हृष्टतमा पितुर्मे पादयोरश्रुमुखी पतन्ती मां मुहुर्मुहुः परिष्वज्य सहर्षमङ्कमारोपयन्ती तस्मिन् क्षणे किमप्यन्यादृशीवाजनिष्ट। पिताऽपि मे पूर्णभद्रमुखेन सविस्तरं विदितमद्वृत्तान्तः भगवतो मघवतोऽपि भाग्यवन्तमात्मानमजीगणत्। अथाहं पित्रोरकथयम्—'आज्ञापयतं किमिदानीं करणीयम् ?' इति। पिता अब्रवीत्—'वत्स ! गृहमेतदस्मदीयमतिविशालं, मन्यत्र बहूनि अक्षय्याणि आयुधानि, अलङ्घ्या च गुप्तिः, उपकृताश्च मया अतिबहवः सन्ति सामन्ताः, प्रकृतयश्च बह्व्यो न मे व्यसनमनुमोदन्ते, सुभटानाञ्चानेकसहस्रमस्ति, अतोऽत्रैव स्थित्वा कथमपि दुर्दान्तमेनम् उच्छेत्स्यामः' इति। अनुमोदितञ्च मया तातस्य तदभिप्रेतम्।

इत्थमवस्थितेषु अस्मासु राजा विज्ञातोदन्तः अस्मदुच्छेदाय बहून् उपायान् प्रायुङ्क्त, ते चास्माभिरहन्यन्त। एतस्मिन्नवसरे पूर्णभद्रमुखात् राज्ञः शयनस्थानमवगम्य स्वमन्दिरकोणात् सुरङ्गामकार्षम्। गता च सा भूमिस्वर्गकल्पमनल्पकन्यकाजनं कमप्युद्देशम्। तत्र च मां दृष्ट्वा प्रव्यथितेषु नारीजनेषु काचिद्विद्युल्लतेव स्वलावण्येन रसातलान्धकारं निह्नुवाना राजलक्ष्मीरिवानेककुन्तपपरिवाराय महीविवरं प्रविष्टा निष्टप्तकनकपुत्रिकेवावदातकान्तिः कन्यका चन्दनलतेव मलयमारुतेन मद्दर्शने-

नीदकम्पत। काचिच्च तन्मध्यात् स्थविरा पादयोर्मे निपत्य सत्रास-मब्रवीत्—'दीयताम् अभयदानमस्मै अनन्यशरणाय स्त्रीजनाय। किमसि देवकुमारो दनुजयुद्धतृष्णया रसातलं विविक्षुः? आज्ञापय कोऽसि? किमर्थमागतोऽसि?' इति। मयोक्तं—'मा स्म भवत्यो भैषुः; अहमस्मि कामपालात् विप्रमुख्यात् देव्यां कान्तिमत्यामुत्पन्नोऽर्थपालो नाम। सत्यर्थं निजगृहात् नृपगृहं प्रविशन् युष्माभिर्दृष्टः। कथयत काः स्थ यूयम्? कथं वा अत्र निवसथ?' इति।

सा कृताञ्जलिरभ्यधात्—'भर्तृदारक! भाग्यवत्यो वयं यास्त्वामद्य एभिरेव चक्षुर्भिरद्राक्ष्म। श्रूयतां, तव मातामहेन चण्डसिंहेन चण्ड-घोषः कान्तिमती चेत्यपत्यद्वयमुदपादि। चण्डघोषस्तु युवराजः स्त्रीष्वति-प्रसङ्गात् प्रागेव क्षयमगात् भार्यायाम् आचारवत्यामन्तर्वत्न्याम्। असौ च इमां मणिकर्णिकां नाम कन्यां प्रसूय तत्प्रसववेदनया त्यक्त-प्राणा पञ्चत्वमगात्। तत्र देवश्चण्डसिंहो मां रहसि समाज्ञापयत्, 'अङ्गमतिके! कन्यामिमां सुलक्षणां वर्द्धयित्वा मालवेन्द्रनन्दनाय दर्पसाराय दित्सामि, बिभेमि च कान्तिमतीवृत्तान्तेन कन्यकानां प्रकाशावस्थानात्। अतोऽत्रैव महति भूमिगृहे प्रभूतपरिवर्हया भवत्या संवर्द्धतामियम्। अस्त्यत्र भोग्यवस्तु वर्षशतेनाप्यक्षय्यम्' इत्यभिधाय निजवासगृहस्याङ्गभित्तावर्द्धपादं किष्कुविष्कम्भमुद्भृत्य तेनैव द्वारेण स्थानमिदमस्मानवीविशत्। इह वसन्तीनां नो द्वादश समाः समत्ययुः। इयञ्च वत्सा तरुणीभूता, न चाद्यापि स्मरति राजा। काममियं पितामहेन दर्पसाराय दित्सिता, परं त्वदम्बया कान्तिमत्या चेयं गर्भस्थैव वृतजिता स्वमाता तत्रैव जायान्वेन सङ्कल्पिता, तदत्र प्राप्तरूपं चिन्त्यतां कुमारेण' इति। अहन्तु 'अद्यैव राजगृहे किमपि कार्य्यं साधयित्वा प्रतिनिवृत्तो यथाऽर्हं प्रतिपत्स्ये' इति तामुक्त्वा तेनैव दीपदर्शितविलपथेन अर्द्धरात्र एव वासगृहं प्रविश्य विश्रब्धसुप्तं सिंहघोषं जीवग्राहम् अग्रहीषम्, आकृष्य च तमहिमिवाहिशत्रुः स्फुरन्तमनेनैव भित्तिरन्ध्रेण स्वैरासविधिं ततः स्वभवनञ्च नीत्वा आयसनिगड़सन्दानित-चरणयुगलमवनमितमलिनवदनमश्रुबहलरक्तचक्षुषं पितोर्ममादर्शयम-कथयञ्च विलकथाम्।

अथ पितरौ तं निकृष्टाशयं सिंहघोषं बन्धने नियम्य यथाविधि तस्या दारिकायाः मां पाणिमग्राहयेताम्। अराजकञ्च तद्राज्यमस्मदायत्तमेव जातम्। प्रकृतिकोपभयात्तु मन्मातुः सुमुच्चितोऽपि न मुक्त एव सिंहघोषः। तथा स्थिता वयं सहसा सिंहवर्मणः देवपादभक्तस्य अमित्राभियोगमाकर्ण्य अभिसरन्तः देवचरणदर्शनसुखमलभामहि।" इति अभिधाय कृताञ्जलिं तिष्ठन्तं तं देवो राजवाहनः सस्मितं प्राह स्म—"बहु पराक्रान्तं, बुद्धिश्च समुपयोगिनी, साम्प्रतं मुक्तबन्धस्ते श्वशुरः पश्यतु माम्" इत्यभिधाय प्रीतिपूर्णः "त्वमपि स्वचरितमाख्याहि" इति प्रमतिमन्वयुङ्क्त।

इति चतुर्थोच्छ्वासः।

---

## अथ पञ्चमोच्छ्वासः।

## प्रमतिचरितम्।

सोऽब्रवीत्—"देव! भवदन्वेषणाय भ्रमन्नहं विन्ध्याद्रिपार्श्वरूढस्य कस्यचित्तरोरधः सन्ध्यायां समुपास्य सन्ध्यां भूतले किसलयशय्यामधिशयानः कृताञ्जलिः 'या अस्मिन् वनस्पतौ वसति देवता, सैव मेऽद्य शरणमस्तु' इति उपधाय वामभुजं निद्रामगच्छम्। क्षणेन च अवनिदुर्लभेन स्पर्शेन किमपि सुखायितगात्रः परिस्फुरितदक्षिणभुजः 'किमेतत्!!' इति मन्दं मन्दम् उन्मिषन् वामतः सौधोपरि चित्रास्तरणोपेतशय्यायां प्रसुप्तमङ्गनाजनं दक्षिणतश्च परमसुन्दरीं कामपि तरुणीं निद्रितामालोकयम्, अतर्कयञ्च— 'क्व गता सा महाटवी!! कुत एतत् अभ्रङ्कषं सौधमागतं!! कश्चासौ सुराङ्गनाजन इव स्वैरसुप्तः सुन्दरीजनः!! का चेयं देवीवारविन्दवासिनी शयनतलमधिशेते!! अस्ति यानतिक्रान्तशिष्टमर्यादचेतसो ममास्यामासक्तिः; तदलं यद्भवतु तद्भवतु, भाग्यं परीक्षिष्ये' इति तां स्पृष्टास्पृष्टमेव किमपि सञ्जातरागसाध्वसं लघुसुप्तः स्थितोऽस्मि। साऽपि मत्स्पर्शेन

किमपि सुखायमानेन मन्दमन्दमुद्भिद्यन्ती चारुनिद्राविद्रावणशङ्का-विलासविभ्रमव्यवहितानि व्रीडान्तराणि कानि कानि कालेनावस्थान्तराणि कामयमाना कथमपि भावविशेषात् निगृह्य सस्पृहेण मधुर-सङ्कुचितविभागेन मन्दमन्दप्रसारितेन चक्षुषा मां निर्वर्ण्य तस्मिन्नेव शयनतले सचकितम् अशयिष्ट। अहं तु कथमपि निद्रामभजे। सहसा प्रबुद्ध्यालक्षयं, सैव महाटवी, तदेव तरुतलं, तदेव पर्णशयनम्। विभावरी च व्यगात्। 'किमिदम्!!' इति विस्मितः 'तत्त्वत एतदविदित्वा न त्यक्ष्यामि भूमिशयनं, यावदायुरपत्यार्थे देवतायै प्रतिशयिष्यामि' इति कृतमतिरतिष्ठन्।

अथ आविर्भूय कापि वराङ्गना विरहिणीव लक्ष्यमाणा प्रणि-पतन्तं मामुत्थाप्य पुत्रवत् परिष्वज्य स्नेहगद्गदमगादीत्—'वत्स! श्रुतमस्त्येतदायुष्मतः मगधराजमहिषीमुखात् यथा 'बालमर्थपालं मम हस्ते निक्षिप्य मणिभद्रस्य यक्षस्य कन्या तारावली अन्तर्हिता' इति। साऽहमस्मि धर्मपालसूनोः कामपालस्य गृहिणी। कथमपि भर्तृपाद-मूलात् निष्कारणकलुषिता प्रोष्य जातानुशया स्वप्ने केनापि रक्षसा शप्ताऽस्मि 'चण्डिके यां त्वयि वर्षमात्रं वसामि प्रवासदुःखाय' इति ब्रुवन्नेव अहमाविष्टा प्रारुदे। गतश्च तद्वर्षं वर्षसहस्रदीर्घम्। अतीता-यान्तु यामिन्यां 'श्रावस्त्यां देवदेवस्य उत्सवसमाजमवलोक्य पतिपादमूलं गमिष्यामि' इति प्रस्थितायामेव मयि त्वमत्रागत्य 'प्रतिपन्नोऽस्मि शरणमिहत्यां देवताम्' इति प्रसुप्तोऽसि। तदा तु न तत्त्वतः परिच्छिन्नो भवान्, एवं शरणागतमस्यां महाटव्यां परित्यज्य गन्तुमयुक्तमिति त्वां राज्ञः श्रावस्तीशस्य धर्मवर्धनस्य प्रासादे विश्रब्धप्रसुप्तायाः दुहितुः नवमालिकायाः पार्श्वे शाययित्वा तमुद्देशम् अगमम्। तत्र च गत्वा उत्सवमनुभूय भगवतीं गौरीमभिवाद्य सद्य एव प्रत्यापन्नास्मि प्रति-निवृत्य त्वां यथावदभ्यजानं, 'कथं मत्सुत एवायं वत्सस्यार्थपालस्य सखा प्रमतिरिति, दृश्यते चायमस्यामासक्तभावः, कन्या चैनं कामयते युवानम्, उभौ चेमौ लब्धसुखौ त्रपया साध्वसेन च न किञ्चिज्जानाति। गन्तव्यञ्च मया, साम्प्रतं नयामि तावत् यथास्थानं कुमारं, परतश्च कथमपि उपायैरर्थम् इमं साधयिष्यति' इति भवन्तम् एतदेव पत्रशयनमनैषम्।

साम्प्रतं गच्छामि भर्तृपादमूलम्' इति प्राञ्जलिं मामभिधाय प्रायात् ।

अहञ्च कामवशः श्रावस्तीं गच्छन् पथि ताम्रचूडयुद्धनैपुण्यप्रदर्शनेन कमपि वृद्धविटं मित्रत्वेनाभिगृह्य तेनातितरां समादृतः 'स्मर्त्तव्योऽस्मि सत्यर्थे' इति तेन विसर्जितः श्रावस्त्याम् अध्वश्रान्तो वाह्योद्यानलता-मण्डपे शयितोऽस्मि। हंसरवप्रबोधितश्च उत्थाय मदन्तिकमायान्तीं कामपि तरुणीम् अपश्यम्। सा तु करतलवर्त्तिनि चित्रपटे लिखितं कमपि पुरुषं मां च पर्य्यायेण अवलोकयन्ती सस्मितं मामवादीत्—'सौम्य! देशातिथिरसि, दृश्यन्ते च ते अध्वश्रान्तानीव गात्राणि, तदद्य मद्गृहे आगत्य अतिथिसत्कारोऽनुभूयताम्' इति। अहञ्च तथेति तद्गृहगतो राजार्हेण स्नानभोजनादिना परिचरितः सुखं निषण्णस्तया रहसि परिपृष्टः,—'महाभाग! किञ्चिदद्भुतमुपलब्धं भवता कुतोऽपि?' इति। अहन्तु लब्धावसरः,—'भद्रे! देहि चित्रपटम्' इत्युक्त्वा तया दत्ते चित्रपटे चित्रितयुवकस्य पार्श्वे तामपि तथैव व्याजसुप्तां वल्लभा-मभिलिख्य 'काचिदेवंरूपा युवतिरीदृशस्य पुंसः पार्श्वे अरण्यान्यां शयानेन मयोपलब्धा, किमेष स्वप्नः' इत्यालपम्। हृष्टया तया सविस्तरं पृष्टः सर्वं वृत्तान्तमकथयम्। सा तु सख्या मन्निमित्तानि दशान्तराणि अवर्णयत्। अहन्तु तदाकर्ण्य 'यदि तव सख्या मय्यनुग्रहः, तदा कानिचित् दिनानि गमय, कमपि उपायं शीघ्रमाचरिष्यामि' इति तां विसृज्य तेन मित्रेण वृद्धविटेन समगंसि। तेनापि पूर्ववत् समादृतः 'किमर्थमचिरात् प्रत्यागतः?' इति पृष्टस्तमवादिषं—'मित्र! श्रावस्तीश्वरस्य दुहिता प्रत्यादेश इव श्रियः नवमालिका नाम मया कथमपि दृष्टा कामनाराचपङ्क्तिमिव कटाक्षपङ्क्तिं मां प्रति व्यकिरत्। तच्छल्योद्धरणक्षमस्त्वदृते नेतरोऽस्ति वैद्य इति प्रत्यागतोऽस्मि, तदत्र कमप्युपायं कर्तुं प्रसीद। मां स्त्रीवेशधारिणीं निजकन्यां कृत्वा त्वं धर्मासनगतं धर्मवर्द्धनं समेत्य वक्ष्यसि, 'ममेयमेकैव कन्या, जात-मात्रायामस्यां जनन्यस्याः संस्थिता, कथमपि एनामवर्द्धयम्। एतदर्थमेव विद्यामयं शुल्कमर्जयितुमवन्तीं गतोऽस्मद्वैवाहिकतनयः। तस्मै दुहिता चेयं तदधीनभूता, स च विलम्बितः, तेन तमानीय पाणिमस्याः ग्राहयित्वा,

सन्न्यसिष्ये। दुरभिरक्ष्यतया च दुहितॄणां विशेषतो मुक्तशैशवानाम् अमातृकाणाम् इह देवं पितृमातृस्थानीयमागतोऽस्मि। सैषा भवद्भुजतरुच्छायायामखण्डचरित्रा तावदास्तां यावदस्याः पाणिग्राहकम् आनयेयम्' इति। स एवमुक्तो नियतमङ्गीकरिष्यति, वासयिष्यति च स्वदुहितृसन्निधौ माम्। ततश्च अहं कियन्तं कालं तया रहसि विहृत्य पुनः कथमपि त्वत्सकाशमागमिष्यामि। ततश्च नृपात्मजां मामितस्ततोऽन्विष्य अनासादयन्तीं 'तया विना न भोक्ष्ये' इति रुदतीमालोक्य परिजनेषु व्याकुलेषु महति कोलाहले किंकर्तव्यतामूढे च राजनि त्वं मां जामातरं कृत्वा राजसभां गत्वा वक्ष्यसि, 'देव! स एष मे जामाता समागतः, अधीती चतुर्ष्वाम्नायेषु विविधविद्याविचक्षणः चतुःषष्टिकलानिपुणः गजतुरगरथतत्त्ववित् धनुर्वेदविशारदः महागुणशाली, तदस्मै दुहितरं समर्प्य अन्यमाश्रमम् आश्रयेयम्' इति। स राजा इदमाकर्ण्य विवर्णवदनः सामात्यस्त्वामनुनेतुं महान्तं यत्नं करिष्यति। त्वन्तु तेषु अदत्तकर्णोऽग्निं कृत्वा राजमन्दिरद्वारे चिताऽधिरोहणायोपक्रमिष्यसे, तदैव स त्वत्पादयोर्निपत्य यथाऽभिलषितैरर्थैस्त्वां परितोष्य दुहितरं मह्यं दत्त्वा मद्गुणैर्यथासमाराधितः समस्तमेव राज्यभारं मयि समर्पयिष्यति, सोऽयमुपायोऽनुष्ठीयताम्' इति।

सोऽपि विप्राग्रणीरसकृदभ्यस्तकपटप्रपञ्चः पाञ्चालशर्मा यथोक्तमभ्यधिकञ्च अन्वतिष्ठत्, आसीच्च मम इष्टसिद्धिः, अन्वभवञ्च मधुकर इव नवमालिकां तां सुमनसम्। ततश्च अस्य राज्ञः सिंहवर्मणः साहाय्यदानं सुहृत्सङ्केतभूमिगमनञ्चापेक्ष्य सर्वबलसमूहेन चम्पामभिगतो दैवात् देवदर्शनसुखम् अनुभवामि" इति।

श्रुत्वैतत् देवो राजवाहनः सस्मितं "विलासप्रायमूर्जितं मृदुप्रायं चेष्टितम्, इष्ट एव मार्गः प्रज्ञावताम्" इति प्रमतिमभिनन्दयन् मित्रगुप्तं प्रति वक्तुमादिदेश।

इति पञ्चमोच्छ्वासः।

# अथ षष्ठोच्छ्वासः।

---

## मित्रगुप्तचरितम्।

सोऽब्रवीत्—"देव! सोऽहं भवदन्वेषणपरः कदाचित् दामलिप्ताह्वयस्य नगरस्य बहिरुद्याने महति उत्सवे वर्तमाने कमपि विजने वीणया आत्मानं विनोदयन्तं कोशदासनामानं युवानमपश्यम्, अपृच्छञ्च—'भद्र! को नाम अयमुत्सवः? किमर्थं वा समारम्भः? कथं वा भवान् उत्सवमनादृत्य एकान्ते विषण्ण इव तिष्ठति?' इति। सोऽभ्यधात्—'सौम्य! सुह्मपतिस्तुङ्गधन्वा नामानपत्यः अस्मिन् आयतने स्थितां विन्ध्यवासिनीम् आराधयन् अपत्यद्वयं प्रार्थयामास। अनया किल स्वप्ने समादिष्टम्, 'उत्पत्स्यते तव एकः पुत्रः, कन्या च एका, स तु तस्याः पाणिग्राहकमनुजीविष्यति। सा तु सप्तमात् वर्षादारभ्य आ-परिणयं प्रतिमासं कृत्तिकासु कन्दुकनृत्येन गुणवद्भर्तृलाभाय मामाराधयतु, यञ्चाभिलषेत् सा अस्मै देया, स च उत्सवः कन्दुकोत्सवनामास्तु' इति। ततोऽल्पेनैव कालेन राजमहिषी मेदिनी नामैकं पुत्रमसूत कन्याञ्च एकाम्। सा कन्दुकावती नाम अद्य कन्दुकनृत्येन देवीमाराधयिष्यति, तन्निमित्तोऽयमुत्सवः। तस्यास्तु सखी चन्द्रसेना नाम मम प्रिया आसीत्। सा साम्प्रतं राजपुत्रेण भीमधन्वना बलादाक्रान्ता। तदहमुत्कण्ठितो मन्मथशरविद्धचेताः कलेन वीणारवेणात्मानं किञ्चिदाश्वासयन् विविक्तमध्यासे' इति। अस्मिन्नेव क्षणे काचिदङ्गना तमुद्देशमागमत्। दृष्ट्वैव स तामुन्मुखदृष्टिरभ्यधात्—'सा इयं मे प्राणसमा, यद्विरहो दहन इव दहति माम्। एनामपहरति राजसूनुः, न च शक्नोमि तस्य किमपि प्रतिविधातुम्, अतोऽद्य अनया आत्मानं सुदृष्टं कारयित्वा परित्यक्ष्यामि निरुपायान् प्राणान्' इति। सा तु रुदती कथमपि प्रियमाश्वास्य अब्रवीत्—'नाथ! नय मामभीप्सितं देशम्।' सोऽवदत् मां—'भद्र! भवद्दृष्टेषु राष्ट्रेषु कतमत् सुरम्यं सुसमृद्धञ्च?'। तमहमीषत् विहस्याब्रवं—'भद्र! विस्तीर्णेयमर्णवनेमिः, न पर्यन्तः अस्ति

'स्थाने स्थाने रम्याणां जनपदानाम्। न चेदिह युवयोः सुखनिवासोपायं कर्त्तुं प्रभुयां तर्ह्यहमेव भवेयमध्वदर्शी।' तावदेव किमपि नूपुरक्वणित-माविरभूत्। ततश्च असौ जातसम्भ्रमा 'प्राप्तैव भर्त्तृदारिका, अनिषिद्ध-दर्शना च इयमस्मिन् कन्दुकोत्सवे, सफलमस्तु युष्मच्चक्षुः, आगच्छतं द्रष्टुम्, अहमस्याः पार्श्ववर्त्तिनी भवेयम्' इत्ययासीत्। तामन्वगाव च आवाम्। अहन्तु तां कन्दुकेन क्रीड़न्तीं साक्षाल्लक्ष्मीमिव मनोभुवः समवलोक्य नितान्तविक्लवतामयासिषम्। साऽपि मामवलोक्य किमपि अवस्थान्तर-मापद्यमाना कथञ्चित् कन्दुकेन यथायथं विहृत्य चन्द्रसेनादिभिः सखीभिः सह भगवतीं विन्ध्यवासिनीं प्रणिपत्य मनसा मे सानुरागेणेव परि-जनेनानुगम्यमाना कुवलयशरमिव कुसुमशरस्य मयि अपाङ्गं विक्षिपन्ती सापदेशम् असकृदावर्त्यमानवदनचन्द्रमण्डलतया स्वहृदयमिव मत्समीपे प्रेषितं प्रतिनिवृत्तं न वेत्यालोकयन्ती कुमारीपुरमगात्।

अहञ्च कामवशः कोशदासेन स्वं गेहं नीत्वा स्नानभोजनादिकं कारितोऽस्मि। सायञ्च चन्द्रसेना समुपेत्य रहसि मां प्रणम्य कोश-दासेन सानन्दं परिष्वक्ता समुपविश्य अभाषत—'नाथ! मा व्यथिष्ठाः, सिद्धं नः समीहितम्, अद्य खलु कन्दुकोत्सवे युवानमेन-मवहसितमनोभवाकारमभिलषन्ती रोषादिव हरद्विषा अतिमात्रमा-यास्यते राजपुत्री। सोऽयमर्थो मया राजमहिष्यै, तया च राज्ञे निवेदयिष्यते। विदितार्थस्तु नृपः त्वां दुहितरमस्मै प्रदास्यति, ततश्च राजपुत्रेण अस्य महाभागस्यानुजीविना भाव्यम्, एष देवताऽऽदिष्टो विधिः। एतदायत्ते च राज्ये नालमेव भीमधन्वा मामेवं रोद्धुम्। तत् सहतां त्रिचतुराणि दिनानि' इत्यभिधाय प्रियमालिङ्ग्य प्रायासीत्। तदाकर्ण्य मम कोशदासस्य च बहु विकल्पयतोः कथञ्चिद-क्षीयत क्षपा।

अन्येद्युर्भीमधन्वा कथञ्चित् विदितमद्वृत्तान्तः केनचित् अपदेशेन मां स्वावासं नीत्वा राजवदुपचरितं पर्य्यङ्कोपरि सुखसुप्तं पूर्वसङ्केतितैः पुरुषैर्बन्धयित्वा आयसनिगड़ेन सागराम्भसि न्यक्षेपयत्। अहन्तु निरवलम्बनः भुजाभ्यामितस्ततः प्लवमानः किमपि दैवदत्तं काष्ठमेकमुप-श्लिष्य तावदप्लोषि यावदपासरत् वासरः शर्वरी च। प्रातश्चैकम्-

दृश्यत वह्निकम्। तत्र स्थिता यवना मामुद्धृत्य रामेषुनाम्ने नाविक-नायकाय समर्पयन्। क्षणे चास्मिन् नैकनौपरिवृतं कमपि नौदस्युम् अभिधावन्तं दृष्ट्वा भयमापुर्यवनाः। प्रतिनावश्चातिवेगेन श्वान इव वराहमस्मत्पोतं पर्य्यरुन्धन्; प्रावर्त्तत सम्प्रहारः, पराजिता यवनाः। तानहमगतीन् समाश्वास्यावादिषम्—'अपनयत मे निगडबन्धनम्, अवसादयामि वः सपत्नान्' इति। श्लथितबन्धनश्च तैरहं तान् सर्वान् प्रतिभटान् भल्लवर्षिणा धनुषा लवलवीकृताङ्गान् अकार्षम्। अभिपत्य च हतविध्वस्तं तत्पोतम् अमुत्र स्थितं नाविकनायकं जीवग्राहम् अग्रहीषम्। असौ च स एव भीमधन्वा। तश्चाहं जातव्रीडमभाषे—'तात! दृष्टानि कृतान्तविलसितानि?'। ते तु सांयात्रिका मदीयेनैव निगडेन तम् अतिगाढं बद्ध्वा हर्षरवमकुर्वन्, मां चापूजयन्। दुर्वारा तु सा नौरननुकूलवातनुन्ना कमपि द्वीपमाश्लिष्टवती। तत्रासीन्महा-शैलः। अहन्तु तस्य रम्यतामवलोकयितुमवतीर्णः इतस्ततो विचरन् परमकमनीयमेकं सरः समभ्यगाम्। स्नातश्च तत्र कांश्चिदमृतस्वादून् बिसभङ्गानास्वादयन् तीरवर्त्तिना केनापि भीमरूपेण ब्रह्मराक्षसेनाभि-पत्य 'कोऽसि? कुतस्त्यो वा?' इति निर्भर्त्स्यताऽभिहितोऽहं निर्भयः समभ्यधां—'सौम्य! अहमस्मि द्विजन्मा, शत्रुहस्तादर्णवम् अर्णवात् यवननावं यवननावः चित्रमेनं पर्वतं प्राप्तो यदृच्छया अस्मिन् सरसि विश्रमामि' इति। सोऽब्रूत—'न चेत् ब्रवीषि प्रश्नानश्नामि त्वाम्' इति। मयोक्तं—'पृच्छ तावत्।' अथाऽऽवयोरेकयाऽऽर्य्यया आसीत् संलापः।

'किं क्रूरम्? स्त्रीहृदयं, किं गृहिणः प्रियहिताय? दारगुणाः।
कः कामः? सङ्कल्पः, किं दुष्करसाधनम्? प्रज्ञा॥'

'तत्र धूमिनी-गोमिनी-निम्बवती-नितम्बवत्यः प्रमाणम्' इति उक्ते मया सोऽब्रूत—'कथय कीदृश्यस्ताः?' इति। ततो मयोक्तं—'त्रिगर्त्ताख्ये जनपदे महति दुर्भिक्षे वर्त्तमाने त्रयो भ्रातरः धनक-धान्यक-धन्यकाख्याः क्रमेण सर्वाणि धनानि अपत्यानि ज्येष्ठमध्यमभार्य्ये अपि भक्षयित्वा 'कनिष्ठभार्य्या धूमिनी श्वो भक्षणीया' इति समकल्पयन्। कनिष्ठस्तु प्रियां स्वामतुमक्षमस्तस्यामेव यामिन्यां पलाय्य मार्गक्लान्तां कान्तां स्वमांसासृगपनीतक्षुत्पिपासामुद्वहन् वनं प्रविष्टः कमपि विकलेन्द्रियम्

अवनौ लुठन्तमद्राक्षीत्। जातदयश्च तमपि स्कन्धेनोद्वहन् कन्दमूलमृगबहुले वनोद्देशे यत्नरचितपर्णशालो वसन् तमपि विकलमिङ्गुदीतैलादिभिः शिरोपितव्रणमामिषादिना स्वनिर्विशेषमपुषत्। एकदा मृगयार्थं गते पत्यौ सा धूमिनी अनिच्छताऽपि तेन विकलेन बलात्कारमरीरमत्, न्यक्षिपच्च पतिमागतं जलार्थिनं कूपे। अथ तं विकलं स्कन्धे गृहीत्वा देशान्तरं गता 'पतिव्रता' इति तत्तद्देशीयजनेभ्यः प्रशंसाः पूजाश्च लेभे। अथ कथञ्चित् कूपात् कैश्चित् कृपालुभिरुद्धृतम् अन्तिके चरन्तं पतिं धन्यकमालोक्य सा पापा 'येन मे पतिर्विकलीकृतः स दुरात्मा अयम्' इति तस्य साधोश्चित्रवधमज्ञेन राज्ञा समादेशयाञ्चकार। स तु वराकः सशेषत्वादायुषः 'यदि असौ विकलः ममापराधं वदेत् तदा मे युक्तो दण्डः' इत्यदीनमाचष्ट। तथा कृते स विकलः पर्यश्रुः पादपतितस्तस्य साधोस्तत् सुकृतम् असत्याश्च तस्यास्तथाभूतं दुश्चरितमाचचक्षे। ततः कुपितो राजा तां पापां विरूपितमुखीं कृत्वा धन्यकं प्रसादयामास। तत् ब्रवीमि, 'क्रूरं स्त्रीहृदयम्' इति।

अस्ति द्रविडदेशेषु काञ्ची नाम नगरी। तस्यां शक्तिकुमारो नाम कश्चिन्महाधनो वणिक्सुतो गुणवतीं भार्यां परिणेतुमितस्ततो ज्योतिषिकच्छद्मना परिभ्रमन् कामपि कन्यकां परीक्ष्य 'सुलक्षणा' इति निश्चित्य शालिप्रस्थमेकं तस्यै दत्त्वाऽब्रवीत्—'भद्रे! शक्नोषि किमनेन शालिप्रस्थेन गुणवदन्नमस्मानभ्यवहारयितुम्?' इति। सा तु सलज्जस्मितं वृद्धदासीहस्तेन तं शालिप्रस्थमादाय तं वणिक्पुत्रमुपवेश्य विविधकौशलेन सुचारु अन्नं पक्त्वा यथोचितं स्नानाहारादिप्रदानेन पर्यतोषयत्। परितुष्टश्च स तां विधिवदुपयम्य गृहमनैषीत्। नोत्वैतदनपेक्षः कामपि गणिकामवरोधम् अकरोत्। तामप्यसौ प्रियसखीमिवोपाचरत्, पतिञ्च दैवतमिव अनलसा पर्यचरत्, अन्वतिष्ठच्च गृहकार्याणि यथायथम्, अकरोच्च परिजनं दाक्षिण्येन स्ववशम्। ततश्च तद्गुणवशीकृतो भर्त्ता सर्वमेव कुटुम्बं तदायत्तमेव कृत्वा तदेकाधीनजीवितस्त्रिवर्गं निर्विवेश। तद्ब्रवीमि, 'गृहिणः प्रियहिताय दारगुणाः' इति।

अस्ति सौराष्ट्रेषु वलभी नाम्नी नगरी। तस्यां गृहगुप्तनाम्नः महाविभवशालिनः कस्यचिन्नाविकपतेः कन्यां रत्नवतीं नाम मधुमती-

निवासी बलभद्रो नाम कश्चित् सार्थवाहसुतः परिणिनाय। सा तु नवोढासुलभलज्जया पत्युरभिलषितसाधनपराङ्मुखी भर्तृद्वेष्यताम् अयासीत्। तदारभ्य भर्त्ता तां कथमपि द्रष्टुं न इयेष। ततश्च सर्वे तां दुर्भगां 'नेयं रत्नवती निम्बवती' इति समाख्याय आजुहुवुः।

गते च कस्मिंश्चित् काले सा तु नितरां तप्यमाना गत्यन्तरमपश्यन्ती कामपि प्रव्राजिकां शरणमापन्ना रुदती सकरुणं प्राह—'मातः! किञ्चिदस्मि वक्तुकामा, मत्तो दुर्भगा काऽपि नास्ति भूतले। दौर्भाग्यं हि जीवमरणमङ्गनानां विशेषतः कुलवधूनाम्। मातृप्रमुखो बन्धुवर्गोऽपि मां सावज्ञं पश्यति, तत् यथाऽहं पत्युरनुग्राह्या भवेयं तथा उपायः क्रियतां भवत्या, नो चेत् त्यक्ष्यामि निष्प्रयोजनान् प्राणान्' इति। सा तु सकरुणा तामुवाच—'वत्से! मा साहसम् अवलम्बस्व, यदि कश्चिदुपायस्ते मनसि वर्तते तत् ब्रूहि, अहं तदनुसारेण यते, बुद्धिमती असि' इति। अथासौ किञ्चित् ध्यात्वा अब्रवीत्—'भगवति! अस्ति अस्मत्प्रतिवेशिनः कस्यचित् धनिनः कनकवती नाम कन्या मत्समानरूपावयवा मम प्रियसखी, तया सह तद्गृहहर्म्यतले ततोऽपि द्विगुणमण्डिता विहरिष्यामि। त्वया तु तस्मात्प्रार्थनं सकरुणमभिधाय पतिरेनमहं कथञ्चनानेयः, आनीतश्च तं प्रति अहं तथा अभिलाषं दर्शयिष्यामि यथाऽसौ कनकवतीमेव मां मन्यमानो मदासक्तिञ्च जानन् गृहं प्रतियास्यति। ततस्त्वया यथाऽसौ मां कनकवतीमेव विदित्वा देशान्तरं नेष्यति तथाऽप्युपायः करणीयः' इति।

सा तु धूर्त्ता तथैव सर्वं सम्पादितवती। अथासौ बलभद्रः तां सरत्नाऽऽभरणपरिच्छदामादाय निशि पलाय्य प्रावसत्। सा तु प्रव्राजिका वार्त्तामवोधयत् 'नन्दन मया निर्निमित्तम् उपेक्षिता रत्नवती, श्वशुरौ च परिभूतौ, तदत्रैव पुनः संसर्गं जिहेमि' इति पूर्वंधुर्मात्मकथयत् बलभद्रः, 'नूनम् असौ रत्नवती तेन नीता' इति। ततोऽसौ बलभद्रः खेटकपुरं गत्वा तत्र वाणिज्यकौशलेन बहूनि धनानि उपार्ज्य प्राधान्यमगात्। क्रमेण कदाचिद्दास्या कारणेन केनापि रोषितया निर्भिन्नं रहस्यम् 'अयं बलभद्रः निधिपति-

दत्तस्य कन्यां कनकवतीमपहृत्य अत्रैव वसति' इति। ततो राज्ञा तस्य सर्वस्वहरणे दण्डे आज्ञप्ते भीतं बलभद्रमेकान्ते प्राह रत्नवती—'नाथ! न भेतव्यं, ब्रूहि, 'नेयं कनकवती, परं मया न्यायोढ़ा रत्नवती गृहगुप्तदुहिता; न चेत् प्रतीथ प्रणिधिं प्रहिणुत अस्या बन्धुपार्श्वम्' इति।' अथ तद्बन्धुवर्गः समागतस्तां दुहितरं जामात्रा सह हृष्टः स्वपुरं प्रत्यनैषीत्। ततो रत्नवतीं कनकवतीं भावयतस्तस्य सा अतिप्रिया आसीत्। तत् ब्रवीमि, 'कामो नाम सङ्कल्पः' इति'।

तदनन्तरमसौ नितम्बवतीवृत्तान्तमपृच्छत्। अहमब्रवम्—'अस्ति मथुरा नाम्नी पुरी, तस्यां कोऽपि कलहकण्टको नाम वणिक्पुत्रः कलासु गणिकासु चातिसक्तः प्रतिवसति स्म। एकदाऽसौ एकं चित्रपटं कस्यापि हस्ते ददर्श। तत्र काचिदालिखिता युवतिरस्य कामार्त्तं मनश्चकार। अब्रवीच्च तं—'विडम्बमिवैतत् दृश्यते, यतः कुलजादुर्लभं वपुः, आभिजात्यशंसिनी च नम्रता, पाण्डुरा च मुखच्छविः; न चैषा प्रोषितभर्त्तृका, प्रवासचिह्नस्य वेण्यादेः अदर्शनात्; तदियं वृद्धस्य कस्यचित् नातिपुंस्त्वस्य यथाऽर्हसम्भोगालाभपीड़िता गृहिणी भवितुमर्हति' इति। चित्रपटधारी प्राह—'सत्यमुपलक्षितम्, एषा अवन्तिपुर्य्यामनन्तकीर्तिनाम्नः सार्थवाहस्य वनिता यथार्थनाम्नी नितम्बवती नाम। सौन्दर्य्यविस्मितेन मया आलिखिता' इति।

स तु कलहकण्टको नाम तदाकर्ण्यैव जगामोज्जयिनीम्। तत्र दैवज्ञो नाम भूत्वा भिक्षामिषेण तद्गृहं गत्वा तामवलोक्य नितरां मन्मथजर्जरः पौरमुख्येभ्यः तत्रत्यश्मशानरक्षामयाचत अलभत च। क्रमेण च कामपि श्रमणिकां वशीकृत्य दूतिकाकार्य्यार्थं शिक्षयित्वा नितम्बवतीसकाशं प्राहिणोत्। सा तु धूर्त्ता 'पुत्रवती भव' इति तामाशिषा संवर्द्ध्य विविधालापमकरोत्। ततश्चान्यद्युः पुनरागत्य प्राब्रवीत्—'वत्से! भर्त्ता तव पाण्डुरोगग्रस्तः शृयते भोगे चासमर्थः, मम चाशीर्वादोऽवितथः, न च शक्यं तस्य विघ्नमप्रतिकृत्यापत्यमस्मात् लब्धुम्। तत् प्रसीद, निशि मदुपनीतस्य कस्यचिन्मन्त्रवादिनः करे चरणमर्पयित्वा तदभिमन्त्रितेन चर-

येन प्रणयकुपिता नाम भूत्वा भर्त्तारमुरसि प्रहर्त्तुमर्हसि, ततोऽसौ भर्त्ता नीरोगोऽपत्योत्पादनक्षमो भविता; नात्र शङ्का कार्य्या' इति। सा तु सरला तद्वचसि विश्वस्ता निशायां तया उपनीतस्य तस्य कलहकण्टकस्य हस्ते यावत् स्वचरणं न्यस्यति, तावदेव स धूर्त्तस्तदूरु-मूले छुरिकया किमप्यालिख्य नूपुरमेकं चरणादाच्छिद्य द्रुतम् अपासरत्।

सा तु सत्रासा स्वमेव दुर्नयं गर्हमाणा तं व्रणं पटबन्धनेनाच्छाद्य आमयापदेशेन कितचुराणि दिनानि शयनपरा अतिष्ठत्। स तु धूर्त्तः 'विक्रेष्ये' इति तेन नूपुरेण तमनन्तकीर्त्तिम् आससाद। स दृष्ट्वैव 'मद्गृहिण्या एष नूपुरः कथं त्वयोपलब्धः?' इति तमपृच्छत्। स तु निर्बन्धपृच्छयाऽपि यदा न किञ्चित् अब्रवीत् तदाऽसौ वणिक् 'स्वनूपुर-युगलं प्रेषय' इति गृहिणीं सन्दिदेश। सा तु सलज्जं सत्रासञ्च 'अद्य रात्रौ क्वापि स्खलितः अन्विष्टोऽपि नाधिगत एकः, अयं पुनर-परः' इति द्वितीयं प्राहिणोत्। अथ समवेतेषु वणिग्वर्गेषु स धूर्त्तः पुनः पुनरनुयुक्तः सविनयमवादीत्—'विदितमेव भवतां यथाऽहं श्मशानरक्षणे नियुक्तः तदुपजीवी तिष्ठामि, धूर्त्ताश्च कदाचिन्मद्दर्शन-भीरवः निशि दहेयुरपि शवानीति निशास्वपि श्मशानमधिशये। पूर्वेद्युर्निशि कामपि दग्धादग्धं शवमाक्रामन्तीं चितायां नारीमालोक-यम्। अर्थलोभात् साहसमवलम्ब्य सा मया गृहीत्वा शस्त्रिकया चोरुमूले किञ्चिदालिख्य नूपुरमेकं पदादाच्छिद्य च मुक्ता पलायिष्ट। एष तावदस्यागमः, परं भवन्तः प्रमाणम्' इति।

ततो विमर्शेण तस्याः शाकिनीत्वं पौरैर्निश्चितम्। भर्त्रा च सा परित्यक्ता तस्मिन्नेव श्मशाने बहु विलप्य मर्त्तुकामा तेन धूर्त्तेन नक्तं पादयोर्निपत्य अनुनीता अगत्या तत्प्राणवल्लभा आसीत्। तदुक्तं 'दुष्करसाधनं प्रज्ञा' इति'।

एतदाकर्ण्य ब्रह्मराक्षसो मामपूजयत्। तस्मिन्नेव क्षणे सहसा अम्बरतलात् मुक्ताफलस्थूलाः सलिलबिन्दवोऽपतन्। अहन्तु 'किमिदम्?' इति उच्चक्षुः आलोकयं कमपि राक्षसं कामयङ्गनामाकर्षन्तम्। 'कथमयमकामामनाचारो हरति!' इति गगनगमनमन्दशक्तौ अशस्त्रे च मयि तप्यमाने स तु ब्रह्मराक्षसः 'तिष्ठ रे पाप! क्वापहरसि?'

इति भर्त्सयन् उत्पत्य तेन राक्षसेन समसृज्यत। तान्तु रोषादन-पेक्षापविद्धाम् अन्तरीक्षादापतन्तीम् अहमुन्मुखः प्रसारितोभयकरः अग्रहीषम्। गृहीत्वा च वेपमानां सम्मीलिताक्षीं मदङ्गस्पर्शेनोद्भिन्न-रोमाञ्चां ताम् अनवतारयन्नेव निर्वर्ण्य मन्त्राणवल्लभां राजकन्यां कन्दुकवतीमेवालक्षयम्। तावत् तावपि राक्षसब्रह्मराक्षसौ परस्परं सम्प्रहारेणाक्षपयेताम्। अहन्तु तां पुलिने समवरोप्य समाश्वास्य अपृच्छं—'किमिदम्?' इति। सा तु निर्य्यन्नामभिवीक्ष्य जातप्रत्यभिज्ञा सकरुणमरोदीत्, अब्रवीच्च—'नाथ! त्वद्दर्शनादपोढ़रागा अहं चन्द्रसेनया त्वत्कथाभिरेव समाश्वासिताऽस्मि। अत्रान्तरे पापेन मद्भ्राता त्वां समुद्रे मज्जितं श्रुत्वा सखीजनं परिजनञ्च वञ्चयित्वा जीवितं त्यक्तुकामा एकाकिनी क्रीड़ावनमुपागमम्। तत्र मामसौ पापः अवक्रन्त। ततः सोऽयं मया भीतयाऽवधूतप्रार्थनः मां स्फुरन्तीं गृहीत्वा गगनमुदपतत्, अभवच्च साम्प्रतमवसितः। अहञ्च दैवात् तवैव जीवितेशस्य हस्ते पतिता' इति।

एतदाकर्ण्य तया सह नावमभ्यारोहम्। मुक्ता च नौः प्रतिवातं नीयमाना तमेव दामलिप्तं प्रत्युपातिष्ठत, अवतीर्णाश्च वयमग्रमेव। 'तनयस्य तनयायाश्च नाशात् तुङ्गधन्वा सकलत्र एव गङ्गारोधसि अनशनेनोपरन्तुं प्रतिष्ठते, सह तेन मर्त्तुमिच्छति अनुरक्तः पौरजनः' इति अश्रुमुखीणां प्रजानामाक्रन्दं शृण्वन् अहं सत्वरं समेत्य अस्मै राज्ञे यथावृत्तमाख्याय तदपत्यद्वयं समार्पयम्। प्रीतेन तेन जामाता कृतोऽस्मि। तत्पुत्रश्च मदनुजीवी जातः, चन्द्रसेना च निर्बाधं कोशदासमभजत। ततश्च सिंहवर्मसाहाय्यार्थमागत्य भर्त्तुस्ते दर्शनसुख-मनुभवामि" इति।

श्रुत्वा राजवाहनः "चित्रेयं दैवगतिः, पुष्कलः पुरुषकारः" इति तमभिनन्द्य मन्त्रगुप्ते हर्षोत्फुल्लं चक्षुः पातयामास।

इति षष्ठोच्छ्वासः।

## अथ सप्तमोच्छ्वासः ।

## मन्त्रगुप्तचरितम् ।

सोऽब्रवीत्—"देव ! नगरभ्रमणगतस्य ते गतिं जानन् कदाचिदहं गतः कलिङ्गनगरम् । तत्र श्मशानसन्निकृष्टस्य कस्यचित्तरोः किसलयसम्भृते तले स्थित्वा निद्रामभजे । निशीथे शीतवातस्पर्शात् गतनिद्रः 'कथं खलेनानेन दग्धसिद्धेन विरामाकाले निर्देशं दिशता जन एष रागाविष्ट इत्थं विरक्तीकृतः, अपि क्रियेत केनचिच्छक्तिमता अस्य सिद्धेरन्तरायः ?' इति किङ्करस्य कातरं विलपितमाकर्ण्य 'क एष सिद्धः ? का च सिद्धिः ? किञ्च किङ्करेण करिष्यते ?' इति दिदृक्षुः तद्गतया दिशा किञ्चित् सविधवर्त्ती नरास्थिशकलरचितालङ्कारं भस्मकृताङ्गरागं जटिलं हिरण्यरेतसि तिलसिद्धार्थादीन् विकिरन्तं कञ्चिदद्राक्षम् । तस्याग्रे कोऽपि किङ्करः तिष्ठति । सोऽनेन निकृष्टाऽऽशयेनाऽऽदिष्टः, 'गच्छ, कलिङ्गराजस्य कर्दनस्य कन्यां कनकलेखां नाम कन्यागृहादिहानय' इति । तेन च तत्क्षणादानीतां त्रासकम्पितकलेवरां 'हा तात ! हा मातः !' इति क्रन्दन्तीं केशेषु गृहीत्वा असिना कर्त्तितुमचेष्टत । अहन्तु झटिति तस्य हस्तात् तमसिमाच्छिद्य तेन तस्य शिरश्छित्त्वा कस्यचित् सालतरोः स्कन्धे न्यधिषि । तदवलोक्य स किङ्करः प्रहृष्टः प्रोवाच—'आर्य्य ! अनार्य्यस्यास्य पारतन्त्र्यात् अद्य मोचितोऽस्मि कल्याणिना, साधु कृतं यदेषः पापः कीनाशनिकेतनं नीतः ; तदत्र दयानिधेर्भवतः काञ्चिदाज्ञां चिकीर्षति अयं जनः, आदिशतु भवान्' इति प्राशंसीत् । आदिशञ्च तं—'सखे ! इयमक्लेशार्हा राजनन्दिनी अनेन दुराचारेण अत्ययं क्लेशिता, तदयैनां स्वनिलयं, नान्यदितः किञ्चिन्मे प्रियमस्ति' इति ।

तदाकर्ण्य सा चञ्चलतारकां दृशं तिर्य्यक् सञ्चारयन्ती रागलज्जाऽन्तरवर्त्तिनी किमपि मन्दमधुरमभाषत—'आर्य्य ! किमर्थमिमं जनं कालहस्तादाच्छिद्य रणरणिकावाहिनि अनङ्गरागसागरे निक्षिपसि ?

यद्यस्ति दया अस्मिन् जने, तदा त्वया अनन्यसाधारणः क्रियतामयं जनश्शरणासेवायाम्। यदि च कन्यापुरे रहस्यभेदादनर्थं आशङ्केत; तदपि नास्ति, रक्ततरा हि नः सख्यः यथा न कश्चिदेतत् ज्ञास्यति तथा यतिष्यन्ते' इति। अहञ्च तद्दर्शनेन नितरां रागपूर्णस्तं किङ्कर-मगादिषम्—'इयं चार्वङ्गी यथा कथयति तथा चेन्नाचरेयं नयेत मदनः चणेन अन्यां दशां, तत् सहानया हरिणाच्या जनमिमं कन्यकागारं नय' इति। नीतश्चाहं तेन किङ्करेण राचसेन कन्यकापुरं तत्रैकदेशे प्रियानिदेशात् चणमतिष्ठम्। सा च मत्र्याः सखीः निद्रिताः हस्तपरामर्शेन प्रबोध्य सर्वं वृत्तान्तं ताभ्यः कथयित्वा ताभिः प्रणताभिरतिगौरवात् पूज्य-मानं मां निजनिकेतनम् अनैषीत्। ततश्चाहं सखीजनेनातिदाचिण्येन दृढतरीकृतस्नेहनिगड़ः तया सङ्गम्य सुखेन कालमगमयम्।

कदाचिन्मधुमासे कलिङ्गनाथः सहाङ्गनाजनेन तनयया सकलेन च पौरजनेन त्रयोदशदिनानि सागरतीरकानने क्रीड़ारसेन कालं नयन् अन्ध्रनाथेन जयसिंहेन रन्ध्रान्वेषिणा अनेकबलसमेतेन द्रागा-गत्यागृह्यत सकलत्रः। सा च प्रिया मे सह सखीजनेनानीयत तं देशम्। अहन्तु तां प्रियां चिन्तयन् किंकर्तव्यविमूढ़ोऽतर्कयं—'गता सा कलिङ्गराजकन्या पितृभ्यां सहारिहस्तं, निरस्तधैर्य्यः स राजा नियतं तां सञ्जिहचेत्, तदसहा च सा सती गररसादिना सद्यः सन्तिष्ठेत, तस्याञ्च मृतायाम् अयं जनो हन्येत कामेन, काऽत्र गतिः?' इति।

अत्रान्तरे अन्ध्रदेशात् कश्चिदग्रजन्मा समायातः। तन्मुखात् श्रुतं 'जयसिंहेन जिघांसितः स कर्दनः कनकलेखादर्शनजेन रागेणैव अरच्यत। सा च राजदारिका यचेण केनचिदाविष्टा न तिष्ठति कस्याप्यग्रे नरस्य। जयसिंहश्च तन्निराकरणार्थं नानाचिकित्सकादि-सङ्घेण आयस्यति, न चास्ति सिद्धिः' इति।

अहन्तु तदाकर्ण्य सञ्जातप्रत्याशः जटाचीरकन्याधरः सन्यासी भूत्वा कांश्चित् शिष्यानग्रहीषम्, अकार्षञ्च तान् नानाऽऽश्चर्य्यक्रियाविप्र-लम्भात् जनादाहृतान्नवस्त्रादिदानेन अत्यन्तानुरक्तान्; अयासिषञ्च अन्ध्रनगरम्। तत्र कस्यचित् महासरसस्तीरकानने कृताश्रमः शिष्य-वर्गैरित्थमकीर्त्यं दिशि दिशि 'य एष यतिः सरस्तीरे स्थण्डिलशायी

तिष्ठति, तस्य सर्वाणि सरहस्यानि सषडङ्गानि छन्दांसि रसनाग्रवर्त्तीनि अन्यानि च शास्त्राणि, यस्य यत् ज्ञातुमिच्छा स्यात् स तत्सकाशात् तस्य निर्णयं करोतु, अस्य नालीकं किञ्चिदपि, मूर्त्तिमान् दयाराशिरयम्, अस्य चरणरजसा शिरसि स्पृष्टस्य चिकित्सकैरप्रतिकार्य्यस्य व्याधेरुपशमः स्यात्, न तस्य शक्तेः शक्यमियत्ताज्ञानम्' इति।

इयञ्च वार्त्ता कर्णपरम्परया तस्य राज्ञो जयसिंहस्य श्रुतिपथम् अगात्। स च अहरहरागत्य आदरातिशयेन शिष्यान् मे सन्तोष्य तन्मुखेन काङ्क्षितार्थसाधनाय मामयाचत। अहन्तु ध्यानधीरः सहेलं निरीक्ष्यैनमकथयं—'तात! स्थाने एव हि यत्नः, तस्य कन्यारत्नस्य सर्वलक्षणसमेतस्याधिगतिः ससागरायाः पृथिव्याः आसादानाय साधनं, न च स यत्नः तदधिकारी केनचिन्नरेन्द्रेण प्रतिकर्त्तुं शक्यः। तदत्र सहस्व त्रीणि अहानि येरहं यतिष्येऽस्य अर्थस्य साधनाय' इति। तथाऽऽदिष्टे च हृष्टे नृपे गते निशि निशि तमिस्रायां निशीथे नदीकूतः सरस्तटं तीर्थसन्निकृष्टं खनित्रेण छिद्रीकृतान्तरालम् अकार्षम्। कृत्वा च घनशिलाच्छन्नच्छिद्राननं तत्तीरदेशं जनैरशङ्कनीयं प्रातः स्वनिकेतनं न्यशिश्रियम्।

गते च दिनत्रये स राजा समागत्य कृताऽऽनतिः कृताञ्जलिश्च मत्पुरोवर्त्ती मया आदिष्टः,—'अनुद्योगिनं कदाचित् श्रियः न संश्रयन्ते, भावीयसा ते सच्चरितेनाकृष्टचेतसा मया सरस्तथा संस्कृतं यथा तेऽद्य सिद्धिः स्यात्। तदद्य निशीथे गाहयित्वैतत् सरः सलिलतले अन्तःसञ्चारिणः वायून् सन्निरुद्ध्य शयानेन जलसङ्घातस्याऽऽरटितं क्षणात् जनिष्यमाणं श्रोतव्यम्। ततः शान्ते तद्रटिते क्लिन्नगात्रः किञ्चिदारक्तनयनः येन आकारेण निर्यास्यसि, तमवलोक्य सर्वजनानन्दजननं स यत्नः न शक्ष्यति अग्रतः स्थातुं, कन्यकायाश्च तस्या हृदयं सद्य एव त्वय्यतिसक्तं स्यात्, करतलगतञ्च भूमण्डलं, नात्र संशयः। इच्छसि चेदिमं विधिं नानाशास्त्रवेदिभिरधिकृतैरन्यैश्च हितैः आकलय्य जालिकशतमानाय्य यथेष्टदृष्टान्तरालं सरः क्रियेत, सैनिकैश्च यथास्थानस्थितैः रक्षा विधेया; कस्तत् जानाति यच्छिद्रेण अरयश्चिकीर्षन्ति!!' इति। तत्

तस्य हृदयहारि जातं, तदधिकृतैश्च तदनुमोदितम् । स पुनर्मयोक्तः,—‘राजन् ! अत्र तवाधिकारे चिरं स्थितं, न चैकत्र नः चिरस्थानं युक्तं, तत् कृतकृत्यः पुनर्मां न द्रक्ष्यसि । तव राष्ट्रे यत् अन्नादि आसादितं तस्य किञ्चित् अनुपकृत्य न गन्तव्यं, तच्चाद्य सिद्धम् । गच्छेदानीं गृहान्, यथासमयमागत्यार्थसिद्धये यतेथाः’ इति । स किल कृतज्ञतां दर्शयन् भाविनि मद्विरहे कातर इव गृहानयासीत् । अहञ्च निर्जने निशीथे सरस्तीररन्ध्रनिलीनः ईषच्छिद्रदत्तकर्णोऽतिष्ठम् । स च राजा कृतयथाऽऽदिष्टक्रियः स्थाने स्थाने कृतरक्षाविधानः निःशङ्कं सरःसलिलमगाहत । यथाऽऽदेशं शयानञ्च तत्र सलिलतले तं कम्बरायां दृढं निगृह्य करचरणैस्तथा प्राहरं यथा सद्यः प्राणानजहात् । आकृष्य च तच्छरीरं तीरच्छिद्रे निधाय नीरान्निरगच्छम् । सद्यः-सङ्गतानाञ्च सैनिकानां तदत्यचित्रीयत आकारान्तरग्रहणम् ।

अथ गजस्कन्धगतः राजभवनं प्रविश्य कथमपि निशां नीत्वा प्रातः कृतनित्यक्रियः सिंहासनासीनः पार्श्ववर्त्तिनोऽमात्यादीन् प्रावोचं—‘दृश्यतां शक्तिरार्षी, अद्य नास्तिकानां जायेत लज्जानतं शिरः ।’ ते च हर्षविस्मयाक्रान्तचेतसः ‘जय प्रभो ! स्वतेजसा अतिशय्य दश दिशः’ इत्याशास्य यथाऽधिकारमन्वतिष्ठन् । अहञ्च प्रियायः सखीं शशाङ्कसेनां रहसि समागतामब्रवं—‘कच्चित् अयं दृष्टस्त्वया जनः ?’ इति । सा मां निरीक्ष्य हर्षकाष्ठां गता बद्धाञ्जलिः ‘नितरां दृष्टः यदि न स्यादैन्द्रजालिकस्य जालं, तत् कथयतु देवः किमेतत् ?’ इति सनिर्बन्धम् अकथयत् । अहञ्चास्यै सर्वं यथावदाख्याय तन्मुखेन प्रियां प्रीणयित्वा तयैव दयितया निरर्गलीकृतातिसत्कृतकलिङ्गनाथ-न्यायदत्तया सङ्गत्य अन्ध्रकलिङ्गराज्यं कलिङ्गनाथे न्यस्य अरिणा लिलङ्घयिषितस्याङ्गराजस्य साहाय्यार्थं बहुभिः साधनैः समागतः सखिजनसमेतस्य देवस्य यादृच्छिकदर्शनसुखम् अनुभवामि” इति ।

तदाकर्ण्य देवो राजवाहनः “चित्रमिदं महामुनेर्वृत्तम्” इति स्मितविकसिताननस्तमभिनन्द्य विश्रुते दृष्टिं चिक्षेप ।

इति सप्तमोच्छ्वासः ।

# अथ अष्टमोच्छ्वासः।

## विश्रुतचरितम्।

सोऽब्रवीत्—"देव! मयाऽपि पर्य्यटता विन्ध्याटव्यां कोऽपि कुमारोऽष्टवर्षीयः क्वचित् कूपाभ्याशे क्लिश्यन् दृष्टः। स त्रासगद्गदमगदत्—'महाभाग! क्लिष्टस्य मे क्रियतां किञ्चित् साहाय्यं, मम प्राणापहारिणीं पिपासां प्रतिकर्त्तुमुदकमुत्तोलयन्निह कूपे कोऽपि स्थविरः ममैकशरणभूतः पतितः, तं नाहम् उद्धर्त्तुमलम्' इति। अहं तदाकर्ण्य व्रतत्या कयाऽपि वृद्धमुत्तार्य तञ्च बालं कथमपि उद्धृताभिरद्भिः फलैश्च पञ्चषैर्वृक्षात् पाषाणपातितैः प्रत्यानीतप्राणवृत्तिमापाद्य तरुतलनिषण्णं वृद्धमभाषे—'तात! क एष बालः? कश्च भवान्? कथमिमं देशमापद्य आपदि पतितः?' इति। सोऽश्रुगद्गदमवादीत्—'महाभाग! आसीत् विदर्भाधिपतिः परमधार्मिकः राजनीतिकुशलः पुण्यवर्मा नाम। तस्मिंश्च कालेनोपरते तत्सुतोऽनन्तवर्मा नाम तत्सिंहासनमध्यतिष्ठत्। स तु सर्वगुणसम्पन्नोऽपि दण्डनीत्यां नातिकुशल आसीत्। एकदा रहसि वसुरक्षितो नाम महामन्त्री तं दण्डनीत्यनुशीलने सविशेषमनुरुरोध, दर्शयामास च तदनुशीलनस्य फलमननुशीलनस्य च दोषम्।

स तु तदाकर्ण्य 'स्थाने एव गुरुभिरुपदिश्यते, तथा क्रियते' इत्युक्त्वा अन्तःपुरगतः तद्वार्त्तां प्रमदानां सन्निधौ समाचष्ट। तत्र स्थितस्तस्य नर्मसचिवश्चित्तानुवृत्तिकुशलः सङ्गीतव्यापारनिपुणः परमर्मान्वेषणपरः सकलदुर्नयोपाध्यायः कामतन्त्रकर्णधारः कुमारसेवको विहारभद्रो नाम सस्मितमभाषत—'देव! दैवानुग्रहेण यदि कश्चित् भाजनं भवति विभूतेः, तं विविधकौशलैः प्रतार्य्य स्वार्थं साधयन्ति धूर्त्ताः। सम्यक् नीतिशास्त्रपरिशीलनं केवलं क्लेशाय, नात्र अणुरपि सुखमुपकारो वा। यावता च नयेन विना न लोकयात्रा, स लोकत एव सिद्धः, न अत्र शास्त्रेणार्थः। स्तनन्धयोऽपि विना उपदेशं

जनन्याः स्तन्यं पिबति, तदपास्य अतियत्नेन अनुभूयन्तामिन्द्रियसुखानि। येऽप्युपदिशन्ति 'इन्द्रियाणि जेतव्यानि, अरिषड्वर्गस्त्याज्यः, सामादिः उपायवर्गः स्वेषु परेषु च अजस्रं प्रयोज्यः, सन्धिविग्रहादिचिन्तयैव नेयः कालः, स्वल्पोऽपि सुखावकाशो न देयः' इति, तैरपि धूर्त्तैः युष्मच्छौर्य्यार्जितं धनं दासीगृहेषु भुज्यते। ये च नीतिशास्त्रकाराः शुक्राङ्गिरसपराशरप्रभृतयः, तैः किमरिषड्वर्गो जितः? कृतं वा तैः शास्त्रानुष्ठानम्? तैरपि प्रारब्धेषु कार्य्येषु दृष्टे सिद्धासिद्धी। दैवस्य किमनुपपन्नम्? सर्वलोकाराध्या जातिः, नवं वयः, दर्शनीयं वपुः, अपरिमिता विभूतिः, एतत् सर्वं सर्वभोगवर्जितः मा कृथा वृथा। सन्ति ते दन्तिनां दशसहस्राणि, हयानां लक्षत्रयम्, अनन्तञ्च पादातं, पूर्णान्येव हेमरत्नैः कोषगृहाणि, सर्व एव जीवलोकः युगसहस्रं भुञ्जानः न क्षयं नेष्यति। जीवितं हि नाम क्षणिकं, तत्रापि भोगयोग्यं वयः अत्यल्पम्, अपण्डिताः पुनरर्जयन्त एव ध्वंसन्ते, नार्जितस्य लवमपि आस्वादयितुमीहन्ते। किं बहुना, राज्यभारम् अन्तरङ्गेषु समर्प्य अप्सरःप्रतिरूपाभिरन्तःपुरिकाभिः रममाणो गीतपानगोष्ठीश्च यथर्त्तु अनुभवन् यथार्थं कुरु शरीरलाभम्' इति पञ्चाङ्गस्पृष्टभूमिः अञ्जलिचुम्बितचूडः चिरं प्राणमत्।

तदाकर्ण्य अन्तःपुरिकागणः प्राहसीत्। जननाथश्च सम्प्रहृष्टः समुत्तिष्ठन् तं प्रणतमुत्थाप्य—'ननु हितोपदेशात् गुरवो भवन्तः, किं गुरुत्वविपरीतम् अनुष्ठितम्?' इति वदन् क्रीड़ानिर्भरमतिष्ठत्।

अथ वृद्धमन्त्रिणोपदिष्टं वचसा अनुमोदते स्म परं कार्य्यतः न अनुतिष्ठति स्म। क्रमेण नयज्ञे तस्मिन् विद्वेषमेव अदर्शयत्, अभवच्च कामप्रवृत्तो भोगसुखेषु नितरामासक्तः। एवं गते चन्द्रपालितो नामाश्मकेन्द्रस्य वसन्तभानोर्मन्त्रिपुत्त्रः पितृनिर्वासितो नाम भूत्वा बहुभिश्चारणैर्वक्रोक्तिभिरनल्पकौशलाभिः शिल्पकारिणीभिरनेकैश्च प्रच्छन्नकिङ्करैर्गूढ़पुरुषैश्च परिवृतोऽभ्येत्य विविधकौशलैः विहारभद्रमात्मसादकरोत्, अलभत च अमुनैव द्वारेण राजन्यास्पदम्। स च लब्धरन्ध्रः राजानं व्यसनानां गुणव्याख्यानेन नितरां प्रीणयन् तदेकासक्तम् अकार्षीत्। असावपि राजा गुरूपदेशमिव तन्मतमन्ववर्त्तत।

प्रकृतयश्च तच्छीलानुवर्तिन्यः विश्रृङ्खलम् असेवन्त व्यसनानि। सर्वश्च समानदोषतया न कस्यापि दोषान्वेषणे अयतिष्ट। समानभर्तृप्रकृतयश्च राष्ट्राध्यक्षाः स्वानि स्वानि राजस्वादीनि स्वयमभक्षयन्। क्रमेण आयद्वाराणि व्यशोर्य्यन्त, व्ययाश्च विभोविंटविधेयतया प्रतिदिनमवर्द्धन्त। सामन्तपौरजानपदाश्च समानशीलतया उपारूढविश्रम्भेण राज्ञा सजानयः पानगोष्ठीष्वभ्यन्तरीकृताः स्वं स्वमाचारम् अत्यक्रामन्। तदङ्गनासु च राजा ते च राजान्तःपुरिकासु निर्भयं विहरन्ति स्म। सर्वश्च कुलाङ्गनाजनः छिन्नचारित्रबन्धनतृणाय अपि न मत्वा भर्तॄन् जारेषु अरमत। तन्मूलाश्च विवादाः सक्रोधानामुदभवन्। अहन्यन्त च दुर्बलाः प्रबलैः। अपहृतानि धनवतां धनानि तस्करादिभिः। हृतबान्धवा हृतवित्ता बधबन्धातुराश्च मुक्तकण्ठमाक्रोशन् अश्रुकण्ठाः प्रजाः। दण्डश्च अयथाप्रयुक्तो भयक्रोधावजनयत्। कुटुम्बिषु लोभः पदम् अधत्त। विमानिताश्च तेजस्विनो मानेन अदह्यन्त।

अस्मिंश्च समये अश्मकेन्द्रप्रयुक्ताः तीक्ष्णरसदादयो गूढपुरुषाः नानाविधकौशलैः प्रच्छपितप्रवीरमनन्तवर्मकटकं जर्जरम् अकुर्वन्। अथ वसन्तभानुर्भानुवर्माणं नाम वनचराधिपं प्रोत्साह्य अनन्तवर्मणा व्यग्राहयत्। अनन्तवर्मा च तदाक्रान्तराष्ट्रपर्य्यन्तक्षमभियोक्तुं बलसमुत्थानम् अकरोत्। अश्मकेन्द्रश्च वसन्तभानुः सर्वेभ्यः सामन्तेभ्यः प्राक् आगत्य अस्य प्रियनरोऽभूत्। अपरे च सामन्ताः प्रभुसाहाय्यार्थं समागताः नर्मदारोधसि शिविरं सन्न्यविशन्त। अस्मिंश्च अवसरे राजा अनन्तवर्मा महासामन्तस्य कुन्तलपतेरवन्तिदेवस्य नर्त्तकीं चन्द्रपालितादिभिर्नृत्यमद्राक्षीत्, अतिरक्तश्च भुक्तवानिमां मधुमत्ताम्। ततोऽश्मकपतिः कुन्तलेश्वरम् एकान्तेऽवदत्—'प्रमत्त एष राजा कलत्राणि नः परामृशति, कियत्यवज्ञा सोढ्या? मम शतमस्ति दन्तिनां, पञ्च शतानि ते; तदावां सम्भूय मुरलेशं वीरसेनम् ऋचीकेशमेकवीरं कोङ्कणपतिं कुमारगुप्तं नासिक्यनाथं नागपालञ्च उपजपाव, ते च अवश्यम् अस्याविनयमसहमाना अस्मन्मतेनैव उपावर्त्तेरन्। अयञ्च वनेचराधिपः भानुवर्मा प्रियं मे मित्रम्, अमुना

एनं दुर्विनीतम् अग्रतः अभियुक्तं पृष्ठतः प्राहरेम, कोषवाहनञ्च विभज्य गृह्णीमः' इति।

हृष्टेन च अमुना 'तथा अस्तु' इति स्वीकृते तानपि सामन्तानसौ वसन्तभानुः स्वमतावस्थापयत्। परेद्युश्च सर्वे मिलित्वा अनन्तवर्माणं व्यनाशयन्। वसन्तभानुश्च तत्कोषवाहनं शाठ्येन सर्वान् सामन्तान् भ्रंशयित्वा आत्मसात् कृत्वा भानुवर्माणं कियतांऽशेन सन्तोष्य अनन्तवर्मराज्यमग्रहीत्।

अस्मिंश्च अवसरे मन्त्रिवृद्धो वसुरक्षितः कैश्चिन्मौलैः सम्भूय बालमेनं भास्करवर्माणम् अस्य एव ज्यायसीं भगिनीं त्रयोदशवर्षीयां मञ्जुवादिनीमनयोश्च मातरं महादेवीं वसुन्धरामादाय अपसर्पन् अस्या आपदो भावितया दाहज्वरेण देहमजहात्। किंकर्त्तव्यमूढैश्च अस्माभिः नीत्वा माहिष्मतीं भर्तृहमातुराय भ्रात्रे मित्रवर्मणे सापत्न्या देवी दर्शिता। तां च आर्य्यां असौ अन्यथा अभ्यमन्यत। निर्भर्त्सितश्च तया 'सुतमियम् अखण्डचारित्रा राजानं चिकीर्षति' इति नैर्घृण्यात् बालमिमम् अजिघांसीत्। इदन्तु ज्ञात्वा देव्या अहमाज्ञप्तः,—'तात नालीजङ्घ! जीवता अनेनार्भकेण यत्र क्वचिदवलाय जीव, जीवेयञ्चेदहमपि एनमनुसरिष्यामि, ज्ञापय च मां क्षेमवार्त्ताम्' इति। अहन्तु सङ्कुले राजकुले कथञ्चिदपसार्य्य एनं विन्ध्याटवीं व्यगाहिषि। पादचारक्लान्तमेनं क्वचित् घोषे कानिचिदहानि विश्रमय्य तत्रापि राजपुरुषसम्पातभीतो दूरमपासरम्। तत्र अस्य दारुणपिपासापीड़ितस्य पयो दातुकामः कूपेऽस्मिन् पतितस्त्वया एवमनुगृहीतः। त्वमेव अस्य शरणमेधि विशरणस्य राजसूनोः' इत्यञ्जलिमबध्नात्।

'का जातिरस्य मातुः?' इति पृष्टे मया तेन उक्तं—'पाटलिपुत्रस्य वणिजो वैश्रवणस्य दुहितरि सागरदत्तायां कोशलेन्द्रात् कुसुमधन्वनोऽस्य माता जाता' इति। 'यदि एवमेतन्मातुर्मत्पितुश्चैको मातामहः' इति सस्नेहं तमहं सस्वजे। वृद्धेन 'सिन्धुदत्तपुत्राणां कतमस्ते पिता?' इति अनुयुक्ते 'सुश्रुतः' इत्युक्तवन्तं मामसौ श्रुत्वा भृशमनन्दत्। अहन्तु 'तं नयावलिप्तम् अशक्तं नयेनैवोन्मूल्य बालमेनं पित्र्ये पदे प्रतिष्ठापयेयम्' इति प्रतिज्ञाय 'कथमस्य सुखं क्षपयेयम्?'

इति यावद्दचिन्तयं, तावत् आपतितौ कस्यापि व्याधस्य लौनिषूनतौत्य द्वौ मृगौ स च व्याधः। अहन्तु तस्य हस्तादिषुद्वयं कोदण्डञ्च आचिप्य मृगाववधिषं, तत्रैकः सपत्नाकृतः अपरो निष्पत्नाकृतः पपात। एकञ्च मृगं मृगयवे दत्त्वा अन्येन तयोरात्मनश्च वृत्तिम् अकार्षम्। तेन च कर्मणा तुष्टं किरातमपृच्छम्—'अपि जानासि माहिष्मतीवृत्तान्तम्?' इति। असौ आचष्ट—'तत्र व्याघ्रत्वचो विक्रीय अद्य एवागतोऽहं, किं न जानामि? प्रचण्डवर्मा नाम चण्डवर्मानुजो मित्रवर्मदुहितरं मञ्जुवादिनीं लिप्सुरभ्येति, तेन एव उत्सवोत्तरा पुरी' इति।

तदाकर्ण्य करण्वृडमब्रवं—'धूर्त्तो मित्रवर्मा दुहितरि सम्यक् प्रतिपत्त्या मातरं विश्वास्य तन्मुखेन बालकमाकृष्य जिघांसति, तत् प्रतिगत्य कुशलमस्य मद्वार्त्ताञ्च देव्यै रहः निवेद्य 'कुमारः शार्दूलभक्षितः' इति प्रकाशमाक्रोशः कार्य्यः। स दुर्मतिरन्तःप्रीतो वहिर्दुःखं दर्शयन् देवीमनुनेष्यति। पुनस्तया त्वन्मुखेन स वाच्यः, 'यदपेच्चया त्वन्मतमतिक्रमितवती सोऽपि बालः पापेन मे परलोकमगात्; अद्य तु त्वदादेशवर्त्तिनी एवाहम्' इति। स तथोक्तः परां प्रीतिमापत्स्यते। अथ विषयुक्तया मालया असौ धर्षयितुमागतः पापः 'स एवायम् असिप्रहारस्ते पापीयसो भवतु यदि अस्मि पतिव्रता' इति तथा प्रहर्त्तव्यः, यथा सद्य एव प्राणान् त्यजेत्। ततश्च सा माला गूढ़मगदेनानेन सङ्गमिते अम्भसि चालिता स्वदुहित्रे देया। मृते तस्मिन् तस्याञ्च निर्विकारायां सत्यां 'सती' इत्येवैनां प्रकृतयोऽनुवर्त्तिष्यन्ते। प्रचण्डवर्मणे च सन्देष्टव्यम् 'अनाथकम् इदं राज्यम्, अनेनैव सह बालिका इयं स्वीकार्य्या' इति। आवाञ्च कापालिकवेशच्छन्नौ देव्या एव दीयमानभिक्षौ पुरात् वहिरुपश्मशानं वत्स्यावः। पुनरार्य्यप्रायान् पौरवृद्धान् मन्त्रिवृद्धांश्च एकान्ते ब्रवीतु देवी 'स्वप्नेऽद्य मे देव्या विन्ध्यवासिन्या कृतः प्रसादः, 'चतुर्थेऽहनि प्रचण्डवर्मा मरिष्यति, पञ्चमेऽहनि रेवातटवर्त्तिनि मद्भवने परीक्ष्य जनेषु निर्गतेषु कवाटमुद्घाट्य त्वत्सुतेन सह कोऽपि द्विजकुमारो निर्यास्यति। स राज्यमिदम् अनुपाल्य बालं ते पित्र्ये पदे प्रतिष्ठापयिष्यति। स खलु बालो मया व्याघ्रीरूपया तिरस्कृत्य रक्षितः। सा च इयं सुता मञ्जुवादिनी तस्य

द्विजसुतस्य दारत्वेन कल्पिता' इति। तदेतद्गतिरहस्यं युष्मासु सुगुप्तं तिष्ठतु यावदेतदुपपत्स्यते' इति।

स च स्थविरोऽतिहृष्टः प्रयातः सर्वमर्थं यथाऽऽदिष्टं समपादयत्। प्रतिदिशञ्च लोकवादः प्रासर्पत् 'अहो माहात्म्यं पतिव्रतायाः !! असिप्रहार एव असौ मालाप्रहारस्तस्मिन् जातः, न शक्यमुपधियुक्तमेतत् वक्तुं, यतस्तदेव दत्तं दाम दुहितुः स्तनमण्डनमेव जातं नास्या मृत्युः, योऽस्याः पतिव्रतायाः शासनमतिवर्त्तते स भस्मैव भवेत्' इति।

अथ महाव्रतिवेशं मां पुत्रञ्च भिक्षार्थं प्रविष्टं दृष्ट्वा सा देवी प्रस्नुतस्तनी सहर्षमब्रवीत्—'भगवन् ! अनुगृह्यतामयं जनः, मया एकः स्वप्नो दृष्टः, स किं सत्यः ?'। मयोक्तं—'फलमस्य अद्य एव द्रक्ष्यसि' इति। अथ मद्दर्शनरागबद्धसाध्वसां मञ्जुवादिनीं प्रणमय्य भूयोऽवदत्—'तच्चेन्मिथ्या, सोऽयं युष्मदीयो बालकपालो श्वो मया निरोद्धव्यः' इति। अहन्तु 'तथा' इत्युक्त्वा पृष्ठत आयान्तं नालीजङ्घमपृच्छं—'क्व असौ प्रचण्डवर्मा ?'। सोऽवदत्—'राज्यमिदं मम इति कृतमतिरास्थानमण्डप एव तिष्ठति।' 'यदि एवमुद्याने तिष्ठ' इति तं वृद्धमादिश्य तत्प्राकारैकपार्श्वे परिच्छदान् अङ्गादपनीय तद्रक्षणे राजपुत्रं नियुज्य कृतकुशीलववेशः प्रचण्डवर्माणमेत्य रञ्जयन् प्रमत्तमेनं सहसा छुरिकया वक्षसि प्रहृत्य अन्यांश्च तदनुचरान् निपात्य प्राकारम् अत्यलङ्घयम्। आगत्य च पुनर्नालीजङ्घसविधं प्रतिमुक्तपूर्ववेशः सह कुमारेण मत्कर्मतुमुलराजवर्त्मना श्मशानोद्देशमभ्यगाम्। पूर्वमेव तस्मिन् दुर्गागृहे प्रतिमाधिष्ठाने एव मया कृतं स्थूलप्रस्तरस्थगितवाह्यद्वारं विलम्। निशीथे च वपेवरोपनीतमहार्हरत्नभूषणपट्टनिवसनौ तं विलमावां प्रविश्य तूष्णीम् अतिष्ठाव।

देवी तु पूर्वेद्युः प्रचण्डवर्मणे अग्निसंस्कारं दत्त्वा चण्डवर्मणे तामवस्थामस्मत्केन्द्रोपधिकृतामिव सन्दिश्य उत्तरेद्युः प्रत्यूषसि पौरामात्यपरिवृता अभ्येत्य भगवतीमर्चयित्वा सर्वजनसमक्षं तद्भवनं परीक्ष्य सङ्केतानुरूपं महान्तं पटहनादम् अकारयत्। तेन च नादेनाहं दत्तसंज्ञः शिरसा एव उत्क्षिप्य सप्रतिमं लोहपादपीठम् एकतो निवेश्य निरगमं, निरगमयञ्च कुमारम्। अथ यथापूर्वमर्चयित्वा देवीमुद्घाटितकपाटः प्रत्यक्षीभूय विस्मिताः सर्वाः प्रकृतीरभ्यधां—'देवा

विन्ध्यवासिनी मन्मुखेन एवं वः समाज्ञापयति 'मया सकृपया शार्दूलरूपेण तिरस्कृत्य रक्षितोऽयं बालोऽद्य दत्तः। अद्य प्रभृति मत्पुत्रतया अयं परिगृह्यताम्।' मां च अस्य रक्षितारं मन्यध्वं, रक्षणवेतनञ्च अस्य स्वसा मञ्जुवादिनी' इति।

श्रुत्वैतत् 'अहो !! भाग्यवान् भोजवंशः, यस्य त्वं देवीदत्तो नाथः' इति परां प्रीतिमन्वभवन् प्रकृतयः। सा तु मे श्वश्रूः तदहरेव परमप्रीता यथाविधि दुहितरं मह्यमदात्। आगतायाञ्च यामिन्यां सम्यगेव तद्विलमपूरयम्। सर्वे च मां देवांशं राजपुत्रञ्च देवीपुत्रं मन्यमाना मदाज्ञां नात्यवर्तन्त। कुमारञ्च विधिवदुपनाय्य पाठयन् नीतिशास्त्रं राजकार्य्यमन्वतिष्ठम्।

अथ क्रमेण मित्रवर्ममन्त्रिणमार्य्यकेतुं नाम कोशलाभिजनत्वात् कुमारमातृपत्रं मन्त्रिगुणोपेतं नालोजङ्घेन परीक्ष्य सहायं कृत्वा सत्यशौचयुक्तान् अमात्यान् विविधव्यञ्जनांश्च गूढपुरुषान् नियोजयन् स्व-परराष्ट्रेषु विविधेन कौशलेन उपायान् प्रयुञ्जन् अतिष्ठं, व्यचिन्तयञ्च—'सर्वोऽपि अतिशूरः सेवकवर्गो मयि तथाऽनुरक्तो यथा आज्ञया जीवितमपि तृणाय मन्यते। राज्यहितयसैन्यसामग्र्या च न अहमश्मकेन्द्रात् वसन्तभानोर्न्यूनो नीत्याविष्टश्च। अतस्तं पराजित्य विदर्भपतेरनन्तवर्मणस्तनयं भास्करवर्माणं पित्र्ये पदे स्थापयितुमलम् अस्मि। अयञ्च राजसूनुः 'भवान्याः पुत्रः अहञ्च तत्साहाय्ये नियुक्तः' इति सर्वत्र किंवदन्ती। इदञ्च मत्कपटं न केनापि विदितम्। अतस्त्वाश्च अस्मिन् भास्करवर्मणि 'अयमस्मत्स्वामिनोऽनन्तवर्मणः पुत्रो भवान्याः प्रसादात् एतद्राज्यमवाप्स्यति' इति बड़ाशा वर्त्तन्ते। अश्मकेन्द्रबलञ्च राजपुत्रस्य भवानीपुत्रत्वं विदित्वा 'दैवशक्तेः पुरो न बलवती मानवी शक्तिः' इति अस्माभिर्विग्रहे चलचित्तम् इवोपलक्ष्यते। मौलाः प्रकृतयश्च स्वत एव राजसुताभ्युदयकाङ्क्षिण्य', मया पुनर्दानमानादिना विश्वासिता विशेषेण राजपुत्रमेवाभिकामयन्ते। अश्मकेन्द्रान्तरङ्गाश्च भृत्याः मदीयैः पुरुषैः प्रभूतां प्रीतिमुत्पाद्य मदाज्ञया रहसि इत्थमुपजप्ताः 'युष्मत्स्वामिनो हिताय मित्राणाञ्च शुभोदर्कं वचो वाच्यमेव। ये भवानीवरपुत्रं त्यक्त्वा वसन्तभानोः पक्षीया योत्स्यन्ति तेषां नियतम् अन्तकभवन-

गमनम्। तत् यदि सपरिजनाः सुखेन स्थातुमिच्छथ तदा अनन्तवर्मतनयं भास्करवर्माणमनुसरथ।' इति आकर्ण्य बहवोऽश्मकेन्द्रभृत्या मद्वशे एवावर्त्तन्त।

अथाश्मकेन्द्रोऽपि अचिन्तयत्—'राजसूनोर्मौलाः प्रजाः सर्वा एव एनमेव प्रभुमभिलषन्ति, मदीयश्च आभ्यन्तरो भृत्यवर्गः भिन्नमना इव लक्ष्यते। यदि अहमुपेक्षमाणस्तिष्ठामि तत उत्पन्नोपजापं स्वराज्यमपि नालं रक्षितुम्। अतोऽविलम्बमेव अभिन्नमनोभिः कतिपयैर्बलैः समेतः विग्रहं रचयामि' इति कृतमतिः मृत्युमुखमिवास्मत्सैन्यमभ्ययात्। तमभ्यायान्तमालोक्य राजपुत्रेण सार्द्धं तुरगाधिरूढोऽभ्यसरम्। तावत् सर्वा एव तत्सेनाः 'यदयमेतावतोऽपरिमितस्य अस्मत्सैन्यस्य उपरि एक एव अभ्यागच्छति तदत्र भवानेवर एव असाधारणो हेतुः' इति निश्चित्य आलेख्यलिखिता इव अवस्थिताः।

ततो मयाऽभिगम्य सङ्गराय समाहूतो वसन्तभानुः समेत्य मामसिप्रहारेण दृढमभ्यहन्। अहञ्च शिक्षाबलेन विफलिततत्प्रहारः प्रतिप्रहारेण तं विनाश्य तच्छिरोऽवनौ विनिपात्य सैनिकान् सर्वान् अवदम्—'अतःपरमपि ये युयुत्सवः, ते समेत्य मया सह युध्यन्ताम्; नो चेत् राजतनयचरणशरणा भवन्तु।' मद्वचनमाकर्ण्य सर्वेऽपि अश्मकेन्द्रसेवकाः स्वस्ववाहनेभ्यः समवतीर्य्य राजसूनुमानम्य तद्वशवर्त्तिनोऽभवन्। ततोऽहम् अश्मकराज्यं राजसूनुसात् विधाय तद्रक्षणार्थं मौलान् स्थानधिकारिणो नियुज्य आत्मीभूतेन तत्सैन्येन सार्कं विदर्भान् अभ्येत्य राजधान्यां तं पित्र्ये पदे न्यवेशयम्।

अथ एकदा माता सहासस्थितं तं राजानं व्यजिज्ञपं—'मया एकस्य कार्य्यस्य आरम्भश्चिकीर्षितः, स यावन्न सिध्यति तावन्मया न कुत्रापि अवस्थातुं शक्यः; अत इयं मन्नार्य्या त्वद्भगिनी मञ्जुवादिनी कियन्त्यहानि त्वदन्तिकमेव तिष्ठतु; अहं यावदिष्टजनोपलम्भं भुवं विभ्रम्य तमासाद्य पुनरत्र समेष्यामि।' इत्याकर्ण्य मात्रऽनुमतेन राज्ञा अभिहितम्—'आर्य्य! अस्माकमेतद्राज्योपलम्भस्य असाधारणो हेतुर्भवान्, भवन्तं विना क्षणमपि मया राज्यधूरियं न निर्वाह्या, तत् किमेवं ब्रवीति भवान्?' इति। मया उक्तं—'त्वया न अत्र किमपि चिन्तनीयं, योऽयं ते सचिवरत्नम्

आर्य्यकेतुरस्ति, स ईदृशानां बहूनां राज्यानां धुरं बोढ़मलम्, अतस्तमत्र नियुज्य गमिष्यामि।' इत्येवमाश्वासितोऽपि समात्दकोऽसौ विविधे-राग्रहैः कियन्तं कालं मां प्रयाणोपक्रमात् न्यवर्त्तयत्, प्रादाच्च उत्कलाधिपतेः प्रचण्डवर्म्मणो राज्यं मह्यम्। अहञ्च तद्राज्यं स्वायत्तं कृत्वा राजानमामन्त्र्य यावत् भवदन्वेषणार्थं व्रजामि तावत् अङ्गनाथेन सिंहवर्म्मणा स्वसाहाय्याय आकारितोऽत्र समागतः पूर्व्वपुण्यपरिपाकात् स्वामिना सम्गंसि।"

इत्याकर्ण्य सम्प्रहृष्टाः सर्व्वे कुमाराः पाटल्यां यौवराज्यमुपभुञ्जानं पूर्न-सङ्केतितं सभार्य्यं सोमदत्तमानाय्य यावत् परस्परमानन्दमनुभवन्ति तावत् पुष्पपुराद्राज्ञः पत्रमादाय राजहंसस्य समागता राजपुरुषाः प्रणम्य राजवाहनं व्यजिज्ञपन्—"कुमार! देवस्य पितुस्ते आज्ञापत्रं गृह्यताम्!" इत्याकर्ण्य सादरं तत् गृहीत्वा राजवाहनः सर्व्वेषां शृण्वतां तदवाचयत्।—

"स्वस्ति श्रीराजहंसभूपतिः पुष्पपुरात् चम्पामधिवसतो राजवाहन-प्रमुखानाशास्य निगदति यथा, यूयमितो मामामन्त्र्य प्रस्थिताः पथि कस्मिंश्चित् वनोद्देशे उपशिवालयं स्कन्धावारं निधाय स्थिताः। तत्र राजवाहनं निशि शिवालये शिवपूजार्थं स्थितं प्रातरनुपलभ्य अवशिष्टाः सर्व्वेऽपि कुमाराः 'सह एव राजवाहनेन राजहंसं प्रणंस्यामो न चेत प्राणांस्त्यक्ष्यामः' इति प्रतिज्ञाय सैन्यं परावर्त्त्य राजवाहनमन्वेष्टुं पृथक् प्रस्थिताः। एवं भवद्वृत्तान्तमाकर्ण्य सैनि-केभ्यः असह्यशोकसागरे निमग्नोऽहं 'वामदेवाश्रमं गत्वा तद्विदितं कृत्वेतं वृत्तान्तं प्राणांस्त्यक्ष्यामि' इति निश्चित्य तदाश्रमगतस्तं मुनिं प्रणम्य यावत् तिष्ठामि, तावदसौ त्रिकालवेदी विदितास्मदभिप्रायः सादरमवादीत्—'राजन्! विदितं ते समीहितम्, एते हि त्वत्कुमाराः राजवाहननिमित्तं कियन्तं कालमापदमासाद्य भाग्योदयात् असाधारण-विक्रमकौशलाभ्यां विहितदिग्विजयाः प्रभूतानि राज्यानि उपार्ज्य, तव पादाभिवन्दनार्थमचिरेणागमिष्यन्ति, तदत्र मा साहसं कार्षीः।' इति। तदाकर्ण्य तत्प्रत्ययात् धैर्य्यमालम्ब्य स्थितं मामद्य असौ मुनिराज्ञापयत्—'राजन्! राजवाहनप्रमुखाः सर्व्वे कुमाराः साम्प्रतं समीहितसिद्धिलाभ-

श्रोभिनश्चम्पायां समेताः, तत् प्रेष्यतामाज्ञापत्रं सेवकैः' इति अस्माभिराज्ञापत्रमिदं भवतां प्रेषयम्; अतःपरञ्चेत् क्षणमपि विलम्बं विधास्यथ, ततो मां जननीञ्च वसुमतीं कथाऽवशेषावेव श्रोष्यथ इति।"

एवं पितुराज्ञापत्रं श्रुत्वैव सराजवाहनाः कुमाराः वशीकृत-राज्यरक्षणसमर्थान् आप्तान् पुरुषान् स्थाने स्थाने नियुज्य कियता सैन्येन मार्गरक्षां विधाय पूर्ववैरिणं मालवेन्द्रं मानसारं पराजित्य तद्राज्यं वशीकृत्य चण्डवर्मणा मन्त्रिणा पूर्वं कारागृहे निक्षिप्तं पुष्पोद्भवं कुमारं सभार्य्यं मोचयित्वा स्वस्वभार्य्यासहिताः पुष्पपुरं गत्वा राजवाहनम् अवन्तिसुन्दर्य्या समेतं पुरस्कृत्य तस्य राजहंसस्य मातुर्वसुमत्याश्च चरणान् ववन्दिरे। तौ च पुत्रसमागमेन परमानन्दमनुभवन्तौ वामदेवं समीक्ष्य सर्वान् कुमारानाज्ञापयत्—"भवन्तः सर्वेऽपि साम्प्रतं स्वानि स्वानि राज्यानि गत्वा न्यायेन परिपालयन्तु, यदा च इच्छा पुनर्भवति तदा पित्रोश्चरणाभिवन्दनाय आगन्तव्यम्।" ततस्ते सर्वेऽपि कुमारास्तन्मुनिवचनं शिरसि आदाय तं प्रणम्य पितरौ च दिग्विजयं पुनर्विधाय मुनिसन्निधौ स्थितं पितरं राजहंसमुपागमन्।

अथ राजा कुमाराणां स्वस्वचरितानि आकर्ण्य परमप्रीतो मुनिं सविनयं व्यजिज्ञपत्—"भगवन्! तव प्रसादादस्माभिर्मनुजमनोरथाधिकं सुखमधिगतम्। अतःपरं मम भवच्चरणसन्निधौ स्थित्वा आत्मसाधनमेव विधातुमुचितं, तत् पुष्पपुरराज्ये मालवराज्ये च राजवाहनमभिषिच्य अवशिष्टानि राज्यानि एभ्यः कुमारेभ्यो यथायथं सम्प्रदाय ते च कुमारा राजवाहनवशवर्त्तिनस्तदेकमत्या समग्रां भुवमकण्टकां यथा उपभुञ्जन्ति तथा विधेयं स्वामिना" इति। मुनिरवदत्—"कुमाराः! अयं वो जनकः वयःसमुचिते पथि वर्त्तमानः, अस्य मदाश्रये स्थित्वा वानप्रस्थाश्रमाश्रयणं सर्वथा भवद्भिर्न निवारणीयम्। भवन्तश्च पितृसन्निधौ न सुखमवाप्स्यन्ति" इति अभिधाय राज्यानि कुमारेभ्यो यथायथं विभज्य प्रादात्। ते च मुनेः पितुश्च आज्ञां शिरसा आधाय राजवाहनं पुष्पपुरे अवस्थाप्य तदनुज्ञया स्वानि स्वानि राज्यानि गत्वा न्यायेन प्रतिपालयन्तः स्वेच्छया पित्रोः

सङ्कागि गतागतमकुर्वन्। एवमत्रस्थितास्ते कुमाराः सर्वमपि भूमण्डलं परस्परम् ऐकमत्येन परिपालयन्तः परमसुखेन कालमत्यवाहयन्।

इति अष्टमोच्छ्वासः।

इति श्रीदण्डिकृतं दशकुमारचरितं गद्यकाव्यमवलम्ब्य
श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्येण विरचिता
सङ्क्षिप्तदशकुमारचरितकथा समाप्ता।

---



# दशकुमार-चरितम् ।

## पूर्वपीठिका ।

## प्रथमोच्छ्वासः ।

ब्रह्माण्डच्छत्रदण्डः शतधृतिभवनाम्भोरुहो नालदण्डः
क्षोणीनौकूपदण्डः क्षरदमरसरित्पट्टिकाकेतुदण्डः ।
ज्योतिश्चक्राक्षदण्डस्त्रिभुवनविजयस्तम्भदण्डोऽङ्घ्रिदण्डः
श्रेयस्त्रैविक्रमस्ते वितरतु विबुधद्वेषिणां कालदण्डः ॥ (१)

प्रणम्य परमात्मानं श्रीजीवानन्दशर्मणा ।
व्याख्या दशकुमारस्य क्रियते छात्रबोधिनी ॥

(१) ब्रह्माण्डेति।—तृतीयत्वद्योतनाय ब्रह्माण्डेत्यादि विशेषणानि। ब्रह्माण्डं विश्वं, तदेव छत्रं तस्य दण्डः आधारयष्टिरित्यर्थः, शतधृतिः ब्रह्मा, तस्य भवनस्य अध्यासितस्थलस्य, अम्भोरुहः पद्मस्य, नालदण्डः, तथा च, तावत्पर्य्यन्तव्यापित्वेन चरणस्यात्युच्चस्थायित्वं गम्यते; क्षोणी पृथ्वी एव, नौः तरणिः, तस्याः कूपदण्डः गुणवृक्षः, "मास्तुल्" इति यस्य भाषाप्रसिद्धिः; यद्वा—कूपदण्डः कर्णदण्डः, "हाइल्" इति यस्य भाषाप्रसिद्धिः, क्षरन्ती प्रवहन्ती, या अमरसरित् मन्दाकिनी, सैव पट्टिका पताका, तस्याः केतुदण्डः ध्वजयष्टिः, ज्योतिर्ग्रहमण्डली एव, चक्रं रथाङ्गं, तस्य अक्षदण्डः नाभिरूपकाष्ठविशेषः, विद्यमानसराजहंसेत्यादाविव चक्रशब्दः समूहवाचकरूपोभयार्थकत्वात् श्लिष्टः, त्रिभुवनानां विजयस्य ज्ञापकरूपस्य, स्तम्भदण्डः, तथा विबुधद्वेषिणाम् असुराणां, कालदण्डः यमदण्डस्वरूपः, (त्रिविक्रमस्य वामनस्येदमिदम्) त्रैविक्रमः अङ्घ्रिदण्डः चरणदण्डः, त्रिभुवनव्यापकत्वात् तृतीय इति भावः,

अस्ति समस्तनगरीनिकषायमाणा शश्वदगण्यपण्यविस्तारितमणिगणादिवस्तुजातव्याख्यातरत्नाकरमाहात्म्या (२) मगधदेशशेखरीभूता (३) पुष्पपुरी नाम नगरी। तत्र वीरभटपटलोत्तरङ्गतुरङ्गकुञ्जरमकरभीषणसकलरिपुगणकटकजलनिधिमथनमन्दरायमाणसमुद्दण्डभुजदण्डमण्डलः (४) पुरन्दर-पुराङ्गणवनविहरण-परायण-तरुणगणिकागण-गीयमानया(५) अतिमानया(६) शरदिन्दु-कुन्द-घनसार-नीहार-हार-मृणाल-मराल-सुरगज-नीर-क्षीर-गिरी-

---

ते तव, "त्रैविक्रमस्ते" इत्यत्र "त्रैविक्रमो वः" इति क्वचित् पाठः ; तथात्वे वः युष्माकं, श्रेयः कल्याणं, वितरतु ददातु। रूपकालङ्कारः। तदुक्तं दर्पणे—"रूपकं रूपितारोपात् विषये निरपह्नवे" इति। अत्र पद्ये दण्डशब्दस्य प्रायश एकार्थत्वात् अनवीकृतत्वं दोषः। स्रग्धरा वृत्तम्।—"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्" इति लक्षणात्।

(२) समस्तेति।—समस्तानां नगरीणां निकषः शाणपरीक्षास्थानम् आदर्शो वा, स इव आचरतीति तथोक्ता, (निकषशब्दादाचारार्थे क्यङ्)। शश्वदिति।—शश्वत् निरन्तरम्, अगण्यैः असङ्ख्यैः, पण्यैः विक्रेयैः, विस्तारितैः मणिगणादिवस्तुजातैः रत्नमिचयादिद्रव्यसङ्घैः, व्याख्यातं निवेदितं, रत्नाकरस्य समुद्रस्य, रत्नानाम् आकरस्य खनेर्वा, माहात्म्यं महिमा यया तथाभूता विविधानेकरत्नपूरितापणा इत्यर्थः।

(३) मगधेति।—मगधदेशस्य शेखरीभूता शिरोभूषणस्वरूपा।

(४) वीरेति।—वीराणां भटानां योधानां, पटलानि गणाः, उत्तरङ्गा उन्नताः, तुरङ्गा अश्वाः, कुञ्जराः हस्तिनश्च, मकरा जलजन्तुविशेषा इव, तैर्भीषणं भयङ्करं, सकलानां रिपुगणानां कटकं सैन्यं, जलनिधिरिव, तस्य मथने मन्दरायमाणं मन्दराद्रिरिवाचरत्, समुद्दण्डं समुन्नतं, भुजदण्डमण्डलं बाहुदण्डयुगलं यस्य तथाविधः।

(५) पुरन्दरेति।—पुरन्दरस्य इन्द्रस्य, पुरम् अमरावती, तस्य अङ्गणे चत्वरे, यद्वनं नन्दनमिति यावत्, तत्र विहरणे विहारे, परायणानां तत्पराणां, तरुणीनां युवतीनां, गणिकानाम् अप्सरसामित्यर्थः, गणैः वर्गैः, गीयमानया कीर्त्यमानया।

(६) अतिमानयेति।—अति अधिकं, मानं परिमाणं यस्यास्तथा महत्या इत्यर्थः।

(७) शरदिति।—शरदिन्दुः शरत्कालीनः चन्द्रः, कुन्दं माघ्यकुसुमविशेषः,

अट्टहासकैलासकाशनीकाशमूर्त्या (७) रचितदिगन्तरालपूर्त्या (८) कीर्त्या अभितः सुरभितः, स्वर्लोकशिखरोरुरुचिररत्नरत्नाकरवेला-मेखलावलयितधरणीरमणीसौभाग्यभोगभाग्यवान् (९) अनवरत-यागदक्षिणारक्षितशिष्टविशिष्टविद्यासम्भारभासुरभूसुरनिकरो (१०) विरचितारातिसन्तापेन प्रतापेन सतततुलितवियन्मध्यहंसो (११)

---

घनसारः चन्दनरसः कर्पूरं वा, नीहारः हिमं, हारः मौक्तिकस्रक्, मृणालं पद्ममूलस्थितसूक्ष्मावयवसुकोमलधवलतन्तुविशेषः, मरालः राजहंसः, सुरगजः ऐरावतः, नीरं जलं, क्षीरं दुग्धं, गिरीशस्य हरस्य, अट्टहासः हास्यविशेषः, कैलासः रजतगिरिः, काशः नदप्रान्ततृणविशेषकुसुमं, तैः नीकाशा सदृशी, मूर्त्तिर्यस्यास्तथाभूतया, अतिशुभ्रोज्ज्वलया इति भावः। (सदृशी इत्यर्थे नीकाशशब्देन नित्यसमासः)।

(८) रचितेति।—रचिता कृता, दिशाम् अन्तरालस्य पूर्त्तिः पूरणम्, आच्छादनमित्यर्थः, यया तथाभूतया सर्वदिग्व्यापिन्या इत्यर्थः।

(९) कीर्त्त्या यशसा, अभितः समन्तात्, सुरभितः आमोदितः, विख्यातश्च। स्वर्लोकेति।—स्वर्लोकानां स्वर्गवासिनां, शिखरेषु चूडासु मुकुटेषु वा, उरूणि महान्ति, महार्घाणीति भावः, रुचिराणि मनोज्ञानि, रत्नानि यस्य तादृशो यो रत्नाकरः समुद्रः, तस्य वेला तटं, ("वेला स्यात्तीरनीरयोः" इत्यमरः) सा एव मेखला काञ्ची, तया वलयिता मण्डलिता, वेष्टितेत्यर्थः, या धरणी पृथिवी एव, रमणी तस्याः सौभाग्येन सुभगत्वेन, वाल्लभ्येन इत्यर्थः, यो भोगः तस्य भाग्यं विद्यते यस्य तथाभूतः, प्रियतमाया इव ससागराया धरित्र्या भोगे निरत इति भावः।

(१०) अनवरतेति।—अनवरतं निरन्तरं, यो यागः यज्ञानुष्ठानं, तस्य दक्षिणाभिः वेतनपुरस्कारविशेषैः, रक्षितः प्रतिपालितः, शिष्टानां शान्तप्रकृतीनां, विशिष्टानां महतां, विद्यासम्भारेण विद्याविस्तारेण, भासुराणां दीप्तिमतां, लब्धप्रतिष्ठानामिति यावत्, भूसुराणां ब्राह्मणानां, निकरः समूहः येन तादृशः।

(११) विरचितः कृतः, जनित इत्यर्थः, अरातीनां शत्रूणां, सन्तापो येन तादृशेन प्रतापेन तेजोविशेषेण, ("स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजम्" इत्यमरः) सततं प्रतिदिनं, तुलितः समीकृतः, वियन्मध्यहंसः अन्तरीक्षमध्यचरः सूर्य्यो येन तथाविधः, तेजसा मध्याह्नसूर्य्यनिभ इत्यर्थः।

राजहंसो नाम घनदर्पकन्दर्पसौन्दर्य्यसोदर्य्यहृद्यनिरवद्यरूपो(१२) भूपो बभूव। तस्य वसुमती नाम सुमतिर्लीलावती कुलशेखरमणी(१३)रमणी बभूव। रोषरूक्षेण निटिलाक्षेण भस्मीकृतचेतने मकरकेतने तदा भयेनानवद्या वनितेति मत्वा तस्या रोलम्बावली केशजालं, प्रेमाकरो रजनीकरो विजितारविन्दं वदनं, जयध्वजायमानो मीनो जायायुतोऽक्षियुगलं, (१४) सकलसैनिकाङ्गवीरो मलयसमीरो निश्वासः, (१५) पथिकहृद्दलनकरवालः

---

(१२) घनेति।—घनः सान्द्रः, अत्यन्त इत्यर्थः, दर्पः रूपजनित इति भावः यस्य सः, रूपेणाप्रतिम इत्यर्थः, यः कन्दर्पः कामः, तस्य यत् सौन्दर्य्यं तस्य सोदर्य्यं सहोदरं, समानमित्यर्थः, हृद्यं मनोज्ञं, निरवद्यम् अनिन्द्यं, रूपं यस्य तथोक्तः, रूपेण कन्दर्पसम इत्यर्थः।

(१३) सुमतिः अतिबुद्धिमती। लीलावती विलासवती, बहुविलासपूर्णेत्यर्थः। कुलस्य वंशस्य, शेखरं शिरोभूषणं, तस्य मणिः रत्नभूतेत्यर्थः, राजकुलस्य विशेषेण आदरणीयेति भावः।

(१४) रोषरूक्षेण क्रोधनिष्ठुरेण, "रोषकेक्षणेन" इति क्वचित् पाठः; निटिलाक्षेण ललाटचक्षुषा, हरेणेत्यर्थः। (निटिले ललाटे अक्षि यस्य षच् समासान्तः)। भस्मीकृतेति।—भस्मीकृता नाशिता, चेतना यस्य तादृशे, दग्धे इति यावत्। तदा तस्मिन् काले, भयेन सहसा मदनभस्मजनितेन सम्भ्रमेणेति भावः। अनवद्या अनिन्द्या, सर्वाङ्गसुन्दरीति यावत्, वनिता रमणी, कामस्येति भावः, मत्वा इयं कामपत्नी रतिरिति मत्वेत्यर्थः। रोलम्बावली भ्रमरश्रेणी, कामस्य सहचरीति भावः, तस्याः वसुमत्याः, केशजालं केशकलापः, कार्ष्ण्येन समत्वं समभूदिति विभक्ति-विपरिणामेनान्वयः। एवं सर्वत्र। प्रेमाकरः परमप्रेमपात्रमित्यर्थः, रजनीकरः चन्द्रः, विजितम् अरविन्दं पद्मं येन तथाभूतं, वदनं समभूदित्यर्थः। जयध्वजायमानः विजयपताकाध्वजसदृशः, जायायुतः सस्त्रीक इत्यर्थः, मीनः, कामस्येति शेषः, अक्षियुगलं नेत्रे इत्यर्थः।

(१५) सकलेति।—सकलेषु सैनिकाख्येषु सैन्येषु मध्ये, वीरः प्रधानभटः, मलयसमीरः निःश्वासः, तस्या इत्यनेनान्वयः सर्वत्र।

प्रवालमधरबिम्बं, (१६) विजयशङ्खो बन्धुरा लावण्यधरा कन्धरा, पूर्णकुम्भौ चक्रवाकानुकारौ पयोधरौ, (१७) ज्यायमाने मार्दवासमाने बिसलते बाहू, (१८) ईषदुत्फुल्लावतंस-कह्लारकोरको गङ्गावर्त्तसनाभिः (१९) नाभिः, दूरीकृतयोगिमनोरथो चैत्ररथोऽतिघनं जघनं,(२०) जयस्तम्भभूते सौन्दर्य्यभूते विघ्नितयतिजनारम्भे रम्भे चोरुयुगम्,आतपत्रसहस्रपत्रं पादद्वयम् (२१)अस्त्रभूतानि

(१६) पथिकेति।—पथिकानां हृत् हृदयं, तस्य दलने करवालः असिस्वरूपः, प्रवालः नवपल्लवः, अधरबिम्बं बिम्बतुल्योष्ठम्।

(१७) विजयशङ्ख एव बन्धुरा उन्नतानता, लावण्यधरा लावण्यपूर्णेत्यर्थः, कन्धरा ग्रीवा, साम्यन्तु तयोस्तुल्यरूपत्वात्। चक्रवाकानुकारौ चक्रवाकसदृशौ, पयोधरौ स्तनौ।

(१८) ज्यायमाने ज्या धनुर्गुणः, सेवाचरतः (इति क्यङ्) मौर्वीसदृशे। मार्दवेन सौकुमार्य्येण, असमाने अतुल्ये, बिसलते मृणालतन्तू, तथा बाहू समभूतामिति विभक्तिविपरिणामेनान्वयः।

(१९) ईषदिति।—ईषत् अल्पम्, उत्फुल्लः विकस्वरः, अवतंसः कर्णभूषणीकृत इत्यर्थः, कह्लारकोरकः रक्तसन्ध्यककलिका, "रक्तकम्बल" इति भाषा, उत्फुल्लत्वात् तत्कोरकस्य नाभिसदृशाकारत्वम्, ("कलिका कोरकः पुमान्" इत्यमरः) गङ्गाया आवर्त्तः जलभ्रमः, ("स्यादावर्त्तोऽम्भसां भ्रमः" इत्यमरः) तस्य सनाभिः सोदरः, सदृश इत्यर्थः।

(२०) दूरीकृतेति।—दूरीकृतः निराकृतः, योगिनां मनोरथः योगाभिलाष इत्यर्थः येन तादृशः, योगिनां योगभङ्गकारक इत्यर्थः। चैत्ररथः नन्दनकाननमित्यर्थः, अतिघनम् अतिसान्द्रं, विशालमित्यर्थः, अतिमेघस्थानञ्च, एवञ्च जघनस्यातिघनत्वाच्चैत्ररथसादृश्यम्; चैत्ररथस्य योगिजनानां योगभङ्गसम्पादकत्वात् दूरीकृतयोगिमनोरथेत्यादिविशेषणं योज्यम्। जघनं कटिपुरोभागः, ("स्त्रीकट्याः जघनं पुरः" इत्यमरः)।

(२१) विघ्नितेति।—विघ्नितः विहतः, योगिजनानाम् आरम्भो योगाभ्यासरूपो याभ्यां तादृशे, एकस्याः कन्दर्पस्तम्भत्वेन अपरस्याः सौन्दर्य्यवत्त्वेन तथात्वम्; रम्भा कदली, अप्सरोभेदश्च। आतपत्रं छत्रं, तद्रूपं सहस्रपत्रं कमलम् एव पादद्वयम्।

प्रसूनानि(२२) तानि इतराणि अङ्गानि समभूवन्निव। विजितामरपुरे पुष्पपुरे निवसता सा वसुमती वसुमतीव मगधराजेन यथासुखमन्वभावि (२३)। तस्य राज्ञः परमविधेया (२४) धर्मपालपद्मोद्भवसितवर्मनामधेया धीरधीषणाऽवधीरितविबुधाचार्य्यविचार्य्यकार्य्यसाहित्याः (२५) कुलामात्यास्त्रयोऽभूवन्। तेषां सितवर्म्मणः सुमति-सत्यवर्म्माणौ, धर्म्मपालस्य सुमन्त्र-सुमित्र-कामपालाः, पद्मोद्भवस्य सुश्रुत-रत्नोद्भवाविति तनयाः समभूवन्। तेषु धर्म्मशीलः सत्यवर्म्मा संसारासारतां बुद्ध्वा तीर्थयात्राऽभिलाषी देशान्तरमगमत्। विटनटवारनारीपरायणो दुर्विनीतः कामपालो जनकाग्रजन्मनोः शासनमतिक्रम्य भुवं बभ्राम। रत्नोद्भवोऽपि वाणिज्यनिपुणतया पारावारतरणमकरोत्। इतरे मन्त्रिसूनवः पुरन्दरपुरातिथिषु पितृषु यथापूर्वम् (२६) अन्वतिष्ठन्। ततः कदाचिन्नानाविधमहदायुधनैपुण्य-रचितागण्यजन्य-राजन्यमौलिपालिनिहितनिशितसायकौ(२७) मगधनायको मालवेश्वरं(२८)

(२२) प्रसूनानि पुष्पाणि। कामं विनष्टं दृष्ट्वा तस्य अनुचरा रोलम्बादयो भ्रमेण वसुमतीं कामस्य पत्नीं रतिं मन्यमानाः तस्याः मदांशरूपेण परिणमन्ति स्मेवेति सर्वनिष्कर्षः।

(२३) वसुमती वसुन्धरेव। अन्वभावि भुक्ता।

(२४) परमविधेया अतिवशंवदाः।

(२५) धीरेति।—धीराभिः गम्भीराभिः, धीषणाभिः प्रज्ञाभिः, अवधीरितम् अवज्ञातं, विबुधाचार्य्यस्य बृहस्पतेः, विचार्य्यस्य कार्य्यस्य साहित्यं समूहः यैः तादृशाः, बृहस्पतेरपि प्राज्ञतमा इत्यर्थः।

(२६) पुरन्दरपुरातिथिषु स्वर्गस्थेषु सत्सु। पितृषु पितृपितृव्येषु इति यावत्। यथापूर्वं पूर्व्वानुक्रमेण, अमात्यकार्य्यमिति भावः।

(२७) नानाविधेति।—नानाविधानां विविधानां, महताम् आयुधानाम् अस्त्राणां, नैपुण्येन शिक्षाकौशलेन, रचितं कृतम्, अगण्यम् असङ्ख्यं, जन्यं युद्धं यैः तादृशानां, राजन्यानां क्षत्रियाणां, मौलिपालिषु मस्तकाग्रेषु, निहितः प्रवेशितः, निशितः तीक्ष्णः, सायकः शरो येन तथाभूतः, महावीरक्षत्रियविजेतेत्यर्थः।

(२८) मालवेश्वरं मालवाख्य-जनपदाधीश्वरम्।

प्रत्यग्रसङ्ग्रामघस्मरं समुत्कटमानसारं मानसारं प्रति (२९) सहेलं न्यक्कृतजलधिनिर्घोषाहङ्कारेण भेरीभाङ्कारेण छठिकाकर्णनाक्रान्त-भयचण्डिमानं (३०) दिग्दन्तावलवलयं विघूर्णयन् (३१) निज-भरनमन्मेदिनीभरेण आयस्तभुजगराजमस्तकबलेन चतुरङ्ग-बलेन (३२) संयुतः सङ्ग्रामाभिलाषेण रोषेण महता आविष्टो निर्ययौ। मालवनाथोऽपि अनेकानेकपयूथसनाथो विग्रहः सवि-ग्रह इव साग्रहोऽभिमुखीभूय भूयो निर्जगाम। तयोरथ रथ-तुरङ्गखुरक्षुण्णक्षोणीसमुद्भूते (३३) करिघटाकटस्रवन्मदधाराधौत-

(२९) प्रत्यग्रेति।—प्रत्यग्रः अभिनवः, यः सङ्ग्रामः रणः, तस्य घस्मरः जेता इत्यर्थः तं, कुत्रचित् नवे सङ्ग्रामे जयशालिनमित्यर्थः, अत एव समुत्कटः समुन्नतः, मानसारः अभिमानातिशयः यस्य तथाभूतम्, अतिदर्पमित्यर्थः। मानसारं तदाख्य-मित्यर्थः।

(३०) सहेलं सावज्ञम्। न्यक्कृतेति।—न्यक्कृतः तिरस्कृतः, जलधेः समुद्रस्य, निर्घोषाहङ्कारः कलरवजनिताहङ्कारः येन तादृशेन। छठिकेति।—छठिकस्य छठा-दागतस्य शब्दस्येति भावः, (छठ+ठन् छठिकः) आकर्णनेन श्रवणेन, आक्रान्तः आविष्कृत इत्यर्थः, भयेन चण्डिमा चञ्चलत्वं यस्य तादृशम्।

(३१) दिगिति।—दिशां ये दन्तावला हस्तिनः, ऐरावतादय इत्यर्थः, तेषां वलयं मण्डलं, विघूर्णयन् कम्पयन्नित्यर्थः।

(३२) निजेति।—निजस्य स्वस्य, भरेण नमन् अधोगच्छन्, मेदिन्या भरः यस्य तथोक्तेन। आयस्तेति।—आयस्तम् आयासेन क्लेशितं, भुजगराजस्य शेषाहेः, मस्तकानां सहस्रशिरसामिति यावत्, बलं येन तथाभूतेन। चतुरङ्गेति।—चत्वारि अङ्गानि यस्य तथोक्तं, यत् बलं सैन्यं तेन, हस्त्यश्वरथपादातमयेन चतुर्विधेन सैन्येन इत्यर्थः, ("हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम्" इत्यमरः)।

(३३) अनेकेति।—अनेकेषां बहूनाम्, अनेकपानां हस्तिनां, यूथेन सजातिसङ्घेन, सनाथः सहितः। विग्रहः सङ्ग्रामः। सविग्रहः मूर्त्तिमान्। साग्रहः साभिनिवेशः, सङ्ग्रामाय अत्यादरवानित्यर्थः। तयोः राजसमानसारयोः। अथ अनन्तरम्।

मूले (३४) नववल्लभवरणागतदिव्यकन्यका-जनजवनिकापट-मण्डले इव (३५) वियत्तलव्याकुले धूलीपटले दिविषदध्वनि धिक्कृतान्यध्वनिपटहध्वानबधिरिताशेषदिगन्तरालं (३६) शस्त्राशस्त्रि हस्ताहस्ति (३७) परस्पराभिहतसैन्यं जन्यमजनि (३८)। तत्र मगधनाथः प्रक्षीणसकलसैन्यमण्डलं मालवराजं जीवग्राह-मभिगृह्य (३९) कृपालुतया पुनरपि स्वराज्ये प्रतिष्ठापयामास (४०)। ततः स रत्नाकरमेखलाम् इलाम् अनन्यशासनां

रथेति।—रथतुरङ्गाणां रथाश्वानां, खुरैः क्षुण्णा दलिता, या मही तस्याः समुद्भूते समुत्थिते।

(३४) करीति।—करिघटानां दन्तिसङ्घानां, स्रवन्त्यः क्षरन्त्यः, या मदधाराः ताभिः धौतं क्षालितं, मूलं यस्य तथाभूते।

(३५) नवेति।—नवाः वल्लभाः प्रियाः, रणनिहता वीरा इति यावत्, रणनिहताः सद्य एव स्वर्गमाप्नुवन्तीति शास्त्रादिति भावः; तेषां वरणाय आगतानां दिव्यकन्यकाजनानाम् अप्सरसामित्यर्थः, जवनिका तिरस्करिणी एव, पटमण्डलं वस्त्रचयः तस्मिन्।

(३६) वियत्तलव्याकुले आकाशविस्तारिते इत्यर्थः। दिवीति।—दिवि स्वर्गे सीदन्तीति दिविषदः देवाः, तेषाम् अध्वनि पथि। धिक्कृतेति।—धिक्कृत अन्येषां ध्वनिः यैः तादृशैः, पटहानां वाद्यभेदानां, ध्वनिभिः बधिरीकृतं व्यापितम्, अशेषं समस्तं, दिशाम् अन्तरालं येन तथोक्तम्।

(३७) शस्त्राशस्त्रि—शस्त्रैश्च शस्त्रैश्च प्रहृत्य यत् वृत्तं तत्। हस्ताहस्ति—हस्तैश्च हस्तैश्च प्रहृत्य यत् वृत्तं तत्। (कर्मव्यतिहारे इच् समासान्तः, पूर्वपददीर्घश्च)।

(३८) परस्परेति।—परस्परेण अन्योऽन्येन, अभिहतानि सैन्यानि यस्मिन् तथोक्तम्। जन्यं युद्धम्।

(३९) प्रक्षीणेति।—प्रक्षीणं निःशेषितं, सकलं सैन्यमण्डलं यस्य तथोक्तम्। जीवग्राहं जीवस्य जीवनस्य, ग्राहो ग्रहणं यस्मिन् कर्मणि तत् यथा तथा, अभिगृह्य आक्रम्य, धृत्वा इत्यर्थः।

(४०) प्रतिष्ठापयामास प्रतिष्ठितमकरोत्।

आसत् अनपत्यतया (४१) नारायणं सकललोकैककारणं निरन्तरम् अर्चयामास। अथ कदाचित् तदग्रमहिषी देवी "देवेन कल्पवल्लीफलमाधेहि" (४२) इति विभातसमये सुस्वप्नम् अवलोकितवती, सा तदा (४३) दयितमनोरथपुष्पभूतं गर्भम् अधत्त। राजाऽपि सम्यक् न्यक्कृताखण्डलः (४४) सुहृन्नृपमण्डलं समाहूय निजसम्पन्मनोरथानुरूपं देव्याः सीमन्तमहोत्सवं (४५) व्यधत्त।

एकदा हितैः सुहृन्मित्रपुरोहितैः सभायां सिंहासनासीनो गुणैरहीनो भालस्थलन्यस्ताञ्जलिना (४६) द्वारपालेन व्यज्ञापि— "देव! देवसन्दर्शनलालसमानसः कोऽपि देवेन विरच्यार्चनार्हो (४७) यतिः द्वारि निवसति" इति। तदनुज्ञातेन तेन स संयमी नृपसमीपम् अनायि। भूपतिः आयान्तं तं विलोक्य सम्यग्ज्ञाततदीयगूढचारभावो निखिलम् अनुचरनिकरं विसृज्य मन्त्रिजनसमेतः प्रणतमेनं मन्दहासम् अभाषत—"ननु तापस! देशं साप-

(४१) आसत् पालयन्नित्यर्थः। अनपत्यतया अपुत्रतया। नास्ति अन्यस्य शासनं यस्यां ताम् अनन्यशासनाम्, इमां पृथिवीम्।

(४२) देवेन महाराजेन, (सहार्थे तृतीया) कल्पवल्लीफलं कल्पतरुफलम्, आधेहि लभस्व।

(४३) विभातसमये प्रत्यूषे। तदा यस्मिन् प्रभाते स्वप्नं दृष्टं तस्यैव दिवसस्य रात्रौ इत्यर्थः।

(४४) न्यक्कृताखण्डलः निर्जितदेवराजः।

(४५) सीमन्तमहोत्सवं केशान्तसंस्काररूपानन्दकर्म।

(४६) भालेति।—भालस्थले ललाटदेशे, न्यस्तः अञ्जलिर्येन तथोक्तेन, ललाटबद्धाञ्जलिनेत्यर्थः। "ललाटतलन्यस्ता—" इति क्वचित् पाठः।

(४७) विरच्येति।—विरच्या वरणीया, या अर्चना ताम् अर्हतीति तथाभूतः, देवस्यापि पूजनीय इत्यर्थः।

देशं भ्रमन् (४८) भवान् तत्र तत्र भवदभिज्ञातं कथयतु" इति। तेन अभाषि भूभ्रमणबलिना (४९) प्राञ्जलिना—"देव! शिरसि देवस्याज्ञामादायैनं निर्दोषवेशं स्वीकृत्य मालवेन्द्रनगरं प्रविश्य तत्र गूढतरं वर्त्तमानः तस्य राज्ञः समस्तम् उदन्तजातं विदित्वा प्रत्यागमम्। मानी मानसारः स्वसैनिकायुष्यान्तराये सम्पराये(५०) भवतः पराजयमनुभूय वैलक्ष्यलक्ष्यहृदयोऽपि (५१) इतदयो महाकालनिवासिनं कालीविलासिनम् अनश्वरं महेश्वरं (५२) समाराध्य तपःप्रभावसन्तुष्टात्स्मादेकवीरारातिघ्नीं भयदां गदां लब्ध्वा आत्मानमप्रतिभटं (५३) मन्यमानो महाऽभिमानो भवन्तमभियोक्तुम् उद्युक्तः। ततः परं देवः प्रमाणम्" इति। तदाऽऽलोच्य निश्चिततत्कृत्यैः अमात्यैः राजा विज्ञापितोऽभूत्—"देव! निरुपायेन (५४) देवसहायेन योद्धुमरातिरायाति, तस्मादस्माकं

---

(४८) सापदेशं सह अपदेशेन छलेन, कपटेन तापसवेशं कृत्वा, देशं देशात्, (आतावेक्षवचनम्)। भ्रमन् पर्य्यटन्नित्यर्थः।

(४९) भूभ्रमणेति।—भुवः भ्रमणे पर्य्यटने, यत् बलं सामर्थ्यं तदस्यास्तीति तथोक्तेन।

(५०) स्वसैनिकेति।—स्वसैनिकानाम् आयुष्यस्य जीवनस्य, अन्तराये विघ्नभूते। सम्पराये सङ्ग्रामे।

(५१) भवतः त्वत्तः, पराजयं पराभवम्। ("पराजेरसोढ़ः" इत्यपादानम्)। वैलक्ष्येति।—वैलक्ष्यस्य लज्जायाः, लक्ष्यं हृदयं यस्य तथाभूतः, लज्जितान्तःकरण इत्यर्थः।

(५२) इतदयः प्राप्तदयः, भवतः सकाशादिति शेषः। "अपोतदयः" इति पाठे—अपोता अपगता, देहं प्रतीत्यर्थात् दया यस्य, शरीरपातमनपेक्ष्यैव कृतपरिश्रम इत्यर्थः। महाकालः दाक्षिणात्यतीर्थविशेषः, तत्र निवासिनं, कालीविलासिनं पार्वतीरमणम्, अनश्वरं नित्यं, महेश्वरं शिवम्।

(५३) अप्रतिभटम् अप्रतियोद्धारम्।

(५४) निरुपायेन नास्ति उपायः प्रतिविधानं यस्य तादृशेन, प्रतिकर्त्तुमसमर्थेनेत्यर्थः।

युद्धं साम्प्रतम् असाम्प्रतम् (५५)। सहसा दुर्गः संश्रयः क्रियताम्” इति तैर्बहुधा विज्ञापितोऽपि अखर्वेण (५६) गर्वेण विराजमानो राजा तद्वाक्यमकृत्यमित्यनादृत्य प्रतियोद्धुमना बभूव। शितिकण्ठदत्तशक्तिसारो मानसारो योद्धुमनसामग्रीभूय (५७) सामग्रीसमेतः (५८) अक्लेशं मगधदेशं प्रविवेश। तदा तदाकर्ण्य मन्त्रिणो भूमहेन्द्रं मगधेन्द्रं कथञ्चिदनुनीय रिपुभिः अबाध्ये विन्ध्याटवीमध्येऽवरोधान् मूलबलरचितान् (५९)निवेशयामासुः। राजहंसस्तु प्रशस्तवीतदैन्यसैन्यसमेतः (६०) तीव्रगत्या निर्गत्य अधिकरुषं द्विषं रुरोध। परस्परबद्धवैरयोरेतयोः शूरयोस्तदालोकनकौतूहलागतगगनचराश्चर्यकारणे (६१) रणे वर्त्तमाने जयाकाङ्क्षी मालवदेशरत्नो विविधायुधस्थैर्य्यचर्य्याऽञ्चितसमरतुलितामरेश्वरस्य (६२) मगधेश्वरस्य तस्योपरि पुरारातिदत्तां गदां प्राहिणोत्। निशितशरशतेन शकलीकृताऽपि (६३) सा पशु-

(५५) असाम्प्रतम् अयुक्तम्।

(५६) अखर्वेण महता।

(५७) योद्धुमनसां युद्धार्थिनां भटानाम्, अग्रीभूय अग्रेसरो भूत्वा।

(५८) सामग्रीसमेतः उपायसमन्वितः।

(५९) अवरोधान् अन्तःपुरिकावर्गान्। मूलबलेति।—मूलबलैः कुलक्रमागतसैन्यैः, रचितान्।

(६०) प्रशस्तेति।—प्रशस्तैः उत्कृष्टैः, वीतदैन्यैः अकातरैः, सैन्यैः समेतः युक्तः।

(६१) शूरयोः वीरयोः। आलोकनेति।—आलोकनकौतूहलेन सङ्ग्रामदर्शनौत्सुक्येन, आगतानां गगनचराणां खेचराणाम्, आश्चर्य्यकारणे विस्मयजनके।

(६२) विविधेति।—विविधानाम् आयुधानाम् अस्त्राणां, स्थैर्य्यचर्य्यया प्रयोगपरम्परया, अञ्चितः यः समरः तेन तुलितः समीकृतः, अमरेश्वरो देवेन्द्रो येन तादृशस्य।

(६३) शकलीकृता खण्डितेत्यर्थः।

प्रतिशासनस्य अवन्ध्यतया सूतं निहत्य रथस्थं राजानं मूर्च्छित-मकार्षीत्। ततो वीतप्रग्रहा (६४) अक्षतविग्रहा वाहा रथ-मादाय दैवगत्या अन्तःपुरशरण्यं (६५) महाऽरण्यं प्राविशन्। मालवनाथो जयलक्ष्मीसनाथो मगधराज्यं प्राज्यं समाक्रम्य पुष्प-पुरमध्यतिष्ठत्। तत्र हेतिततिहतिश्रान्ताः (६६) अमात्या दैवगत्या अनुत्क्रान्तजीविता निशान्तवातलब्धसंज्ञाः (६७) कथ-ञ्चिदाश्वास्य राजानं समन्तादन्वीक्ष्य (६८) अनवलोकितवन्तो दैन्यवन्तो (६९) देवीमवापुः। वसुमती च तेभ्यो निखिलसैन्य-क्षतिं (७०) राज्ञोऽदृश्यत्वं चाकर्ण्योद्विग्ना शोकसागरमग्ना रम-णानुगमने मतिं व्यधत्त। "कल्याणि! भूरमणमरणमनिश्चितं, (७१) किञ्च दैवज्ञकथितं मथितोद्धताराति: (७२) सार्वभौमोऽभि-रामो भविता सुकुमारः कुमारस्त्वदुदरे वसति, तस्मादद्य तव

(६४) वीतेति।—वीतः विगतः, प्रग्रहः रश्मिः येषां तादृशाः, नियन्तुरभावा-दपसृतबन्धनरज्जव इति भावः।

(६५) अक्षतविग्रहाः अक्षतशरीराः। अन्तःपुरशरण्यम् अवरोधरक्षणस्थान-मित्यर्थः।

(६६) प्राज्यं विशालम्। हेतीति।—हेतिततीनाम् अस्त्रसङ्घातानां, हत्या प्रहारेण, श्रान्ताः।

(६७) अनुत्क्रान्तजीविताः अवहिर्गतप्राणाः। निशान्तेति।—निशान्तेन शान्तेन, मन्दं मन्दं वहतेत्यर्थः, ("निशान्तं गृहशान्तयोः" इत्यमरः) वातेन, अथवा निशान्तवातेन प्रत्यूषमातरिश्वना, लब्धसंज्ञाः प्राप्तचेतनाः।

(६८) अन्वीक्ष्य अन्विष्य।

(६९) दैन्यवन्तः सुदुःखिता इत्यर्थः।

(७०) निखिलेति।—निखिलानां सैन्यानां क्षतिं नाशम्।

(७१) भूरमणेति।—भूरमणस्य नृपतेः, राजहंसस्येति भावः, मरणम् अनि-श्चितम् अध्रुवं, सन्देहविषयमित्यर्थः; राजा अस्माकं मृत इत्यत्र सन्देह इति निष्कर्षः।

(७२) मथितेति।—मथिताः उन्मूलिताः, उद्धताः अरातयः उत्कटशत्रवः येन तथाविधः।

मरणमनुचितम्" इति भूषितभाषितैः (७३) अमात्यपुरोहितैः अनुनीयमानया तया क्षणं क्षणक्षीणया (७४) तु तूष्णीम् अस्थायि। अथार्द्धरात्रे निद्रालीढनेत्रे (७५) परिजने विजने शोकपारावारम् अपारमुत्तर्त्तुम् अशक्नुवती सेनानिवेशदेशं निःशब्दलेशं (७६) शनैः अतिक्रम्य यस्मिन् रथस्य संसक्ततया तदानयनपलायनपरिश्रान्ता (७७) गन्तुम् अक्षमाः क्षमापतिरथ्याः (७८) पथ्याकुलाः पूर्वमतिष्ठन्, तस्य निकटवटतरोः शाखायां मृतिरेखायामिव (७९) क्वचित् उत्तरीयार्द्धेन बन्धनं मृतिसाधनं विरच्य मर्त्तुकामाऽभिरामा वाङ्माधुरीदूरीकृतकलकण्ठाकण्ठा (८०) साश्रुकण्ठा व्यलपत्—"लावण्योपमितपुष्पसायक! (८१) भूनायक! भवा-

(७३) भूषितेति।—भूषितम् अलङ्कृतं, मधुरमिति यावत्, भाषितं येषां तादृशैः।

(७४) क्षणक्षीणया क्षणेन उत्सवेन, क्षीणा तया, निरुत्सवया इत्यर्थः।

(७५) निद्रेति।—निद्रया लीढे आक्रान्ते, नेत्रे यस्य तादृशे।

(७६) शोकपारावारं शोकसागरम्। अपारम् अशेषं, दुस्तरमिति यावत्। निःशब्देति।—नास्ति शब्दानां लेशः यत्र तथोक्तम्।

(७७) यस्मिन् वटतरौ, रथस्य संसक्ततया लग्नतया, सान्द्रश्लिष्टा इत्यर्थः; गन्तुमक्षमाः पथि आकुलाः सन्तः पूर्वमतिष्ठन्, तस्य निकटवटतरोः इति योजना। तदेति।—तस्य राज्ञः, आनयने यत् पलायनं तेन परिश्रान्ताः।

(७८) क्षमापतीति।—क्षमापतेः राज्ञः, रथ्याः रथवाहका वाहाः। "क्षमापतिस्था रथ्याः" इति पाठे—क्षमापतिस्तिष्ठत्यत्र आधारे क्विप्, राजाधारभूता इत्यर्थः।

(७९) मृतिरेखायामिव मृतेः मरणस्य, रेखायामिव चिह्नरूपायामिव, पाशरूपत्वात् तस्याः तच्चिह्नरूपत्वम्।

(८०) अभिरामा सुन्दरी। वागिति।—वाचां माधुर्य्या दूरीकृतः तिरस्कृतः, कलकण्ठायाः कोकिलायाः, कण्ठो यया तादृशी।

(८१) लावण्येति।—लावण्येन सौन्दर्य्येण, उपमितः पुष्पसायकः कामः येन तथोक्तः तत्सम्बुद्धौ।

नैव भाविन्यपि (८२) जन्मनि वल्लभो भवतु" इति। तदाकर्ण्य नीहारकर-किरणनिकरसम्पर्कलब्धावबोधो (८३) मागधोऽगाध-रुधिर-विस्रवण-नष्टचेष्टः (८४) स दैवीवाक्यमेव निश्चिन्वान-स्तन्वानः प्रियवचनानि शनकैः तामाह्वयत्। सा ससम्भ्रमम् (८५) आगत्यामन्दहृदयानन्दप्रफुल्लवदनारविन्दा तमुपोषिताभ्याम् इव अनिमेषिताभ्यां लोचनाभ्यां पिबन्ती विकस्वरेण (८६) स्वरेण पुरोहितामात्यजनमुख्यैः आहूय तेभ्यः तमदर्शयत्। राजा निटल-तले (८७) चुम्बितनिजचरणाम्बुजैः प्रशंसितदैवमाहात्म्यैः अमात्यैः अभाणि—"देव! रथ्यचयः (८८) सारथ्यपगमे रथं रभसात् (८९) अरण्यमनयत्" इति। "तत्र निहतसैनिकग्रामे सङ्ग्रामे मालवपतिना आराधितपुरारातिना प्रहितया गदया दयाहीनेन ताडितो मूर्च्छाम् आगत्यात्र वने निशीथपवनेन (९०) बोधितोऽभवम्" इति महीपतिः अमात्यान् अकथयत्। ततो विरचितमहेन (९१) मन्त्रिनिवहेन विरचितदैवाऽऽनुकूल्येन कालेन शिबिरमानीय

(८२) भूनायक! पृथिवीपते!। भाविन्यपि भविष्यत्यपि।

(८३) नीहारेति।—नीहारकरस्य शीतकिरणस्य, चन्द्रस्य इत्यर्थः, किरण-निकराणां मयूखचयानां, सम्पर्केण लब्धः प्राप्तः, अवबोधः चेतनं येन तथाभूतः।

(८४) अगाधेति।—अगाधम् अत्यन्तं, यत् रुधिराणां विस्रवणं तेन नष्टा चेष्टा यस्य तथोक्तः, बहुरक्तस्रावात् सञ्चालनाक्षम इत्यर्थः।

(८५) तन्वानः विस्तारयन्। ससम्भ्रमं सत्वरमित्यर्थः।

(८६) विकस्वरेण किञ्चिदुच्चेन।

(८७) निटलतले भाले।

(८८) रथ्यचयः रथ्यानाम् अश्वानां, चयः समूहः।

(८९) सारथेः अपगमे नाशे। रभसात् वेगात्।

(९०) निशीथपवनेन निशामातरिश्वना।

(९१) विरचितमहेन उत्सवमनुतिष्ठता इत्यर्थः।

अपनीताशेषशल्यो (९२) विकसितनिजाननारविन्दो राजा सहसा विरोपितव्रणोऽकारि। विरोधिदैवधिक्कृतपुरुषकारो (९३) दैन्यव्याप्ताकारो मगधाधिपतिः अधिकाधिः (९४) अमात्यसम्मत्या मृदुभाषितया तया वसुमत्या मत्याकलितया (९५) च समबोधि—"देव! सकलस्य भूपालकुलस्य मध्ये तेजोवरिष्ठो गरिष्ठो भवानद्य विन्ध्यवनमध्यं निवसतीति सलिलबुद्बुदसमाना (९६) विराजमाना सम्पत् तडिल्लतेव सहसा एव उदयति विनश्यति च, तन्निखिलं दैवायत्तमेवावधार्य्यं कार्य्यम्। किञ्च, पुरा हरिश्चन्द्ररामचन्द्रमुख्या महीन्द्रा ऐश्वर्य्योपमितमहेन्द्रा (९७) दैवतन्त्रं दुःखयन्त्रं (९८) सम्यगनुभूय पश्चादनेककालं निजराज्यम् अकुर्वन्। तद्देव भवान् भविष्यति, कञ्चन कालं विरचितदैवसमाधिः (९९) गलिताधिः (१००) तिष्ठतु तावत्" इति। ततः सकलसैन्यसम-

(९२) अपनीतेति।—अपनीतं गात्रात् अपसारितम्, अशेषं शल्यम् अस्त्रं यस्य तादृशः।

(९३) विरोपितव्रणः पूरितक्षतदेश इत्यर्थः। विरोधीति।—विरोधिना प्रतिकूलेन, दैवेन धिक्कृतः परास्तः, पुरुषकारः पराक्रमः यस्य तथोक्तः।

(९४) दैन्येति।—दैन्येन पराभवदुःखेन, व्याप्तः आकारो यस्य तथाविधः। अधिकः आधिः मनोव्यथा यस्य सः अधिकाधिः, अत्यन्तं व्यथितमना इत्यर्थः।

(९५) मत्याकलितया प्रज्ञाप्रेरितया।

(९६) सलिलेति।—सलिलस्य जलस्य, बुद्बुदः जलस्फोट इत्यर्थः, तत्समाना तत्सदृशी।

(९७) ऐश्वर्य्येति।—ऐश्वर्य्येण उपमितः महेन्द्रो यैः तथाविधाः।

(९८) दैवतन्त्रं भाग्यायत्तम्। दुःखयन्त्रं दुःखराशिम्।

(९९) विरचितेति।—विरचितः अनुष्ठितः, दैवः दैवोद्देश्यकः, समाधिः ध्यानं येन तादृशः, दैवमाराधयन्नित्यर्थः।

(१००) गलिताधिः गतमनःपीड इत्यर्थः।

न्वितो राजहंसस्तपोविभ्राजमानं (१) वामदेवनामानं तपोधनं निजाभिलाषावाप्तिसाधनं (२) जगाम। तं प्रणम्य तेन कृतातिथ्यस्तस्मै कथितकथ्यः (३) तदाश्रमे दूरीकृतश्रमे कञ्चन कालमुषित्वा निजराज्याभिलाषी मितभाषी सोमकुलावतंसो (४) राजहंसो मुनिम् अभाषत—"भगवन्! मानसारः प्रबलेन दैवबलेन मां निर्जित्य मद्भोग्यं राज्यं चानुभवति। तद्वदहमपि उग्रं तपो विरच्य तम् अरातिम् उन्मूलयिष्यामि लोकशरण्येन भवत्कारुण्येनेति नियमवन्तं भगवन्तं प्राप्नुवम्" इति। ततस्त्रिकालज्ञः तपोधनो राजानम् अवोचत्—"सखे! शरीरकार्श्यकारिणा तपसा अलम्। वसुमतीगर्भस्थः सकलरिपुकुलमर्दनो राजनन्दनो नूनं सम्भविष्यति। कञ्चन कालं तूष्णीमास्व" इति। गगनचारिण्या वाण्याऽपि "एतत्सत्यम्" इति तदैवाबोधि। राजाऽपि मुनिवाक्यमङ्गीकृत्यातिष्ठत्। ततः सम्पूर्णगर्भदिवसा वसुमती शुभमुहूर्ते सकललक्षणलक्षितं सुतमसूत। ब्रह्मवर्चसेन तुलितवेधसं (५) पुरोधसं पुरस्कृत्य कृत्यवित् महीपतिः कुमारं सुकुमारं जातसंस्कारेण बालालङ्कारेण च विराजमानं राजवाहननामानं व्यधत्त। तस्मिन्नेव काले सुमति-सुमन्त्र-सुमित्र-सुश्रुतानां मन्त्रिणां प्रमति-मित्रगुप्त-मन्त्रगुप्त-विश्रुताख्या

(१) तपोविभ्राजमानं तपसा दीप्यमानम्।

(२) निजेति।—निजस्य अभिलाषस्य वैरसाधनरूपमनोरथस्य, अवाप्तेः सिद्धेः, साधनम् उपायभूतमित्यर्थः; तदनुग्रहेणैव शत्रुजयी भवितेति भावः।

(३) कथितकथ्यः उक्ताभिलाष इत्यर्थः।

(४) सोमेति।—सोमकुलस्य चन्द्रवंशस्य, अवतंसः शिरोभूषणभूत इत्यर्थः।

(५) ब्रह्मवर्चसेन ब्रह्मतेजसा, वेदाध्ययनजनितप्रभावेण वा। तुलितेति।—तुलितः समीकृतः, वेधा येन तथोक्तम्।

महाऽभिख्याः (६) सूनवो नवोद्यदिन्दुरुचयः चिरायुषः (७) समजायन्त । राजवाहनो मन्त्रिपुत्रैरात्ममित्रैः सह बालकेलिम् (८) अनुभवन्नवर्द्धत ।

---

## उपहारवर्मोत्पत्तिकथा ।

अथ कदाचिदेकेन तापसेन रसेन (१) राजलक्षणविराजितं कञ्चित् नयनानन्दकरं सुकुमारं कुमारं राज्ञे समर्प्य अवोचि—"भूवल्लभ! कुशसमिदानयनाय वनं गतेन मया काचित् अशरण्या व्यक्तकार्पण्या (२) अश्रु मुञ्चती युवती विलोकिता। 'निर्जने वने किं निमित्तं रुद्यते त्वया?' इति पृष्टा सा करसरोरुहैः (३) अश्रूणि प्रमृज्य सगद्गदं मामवोचत्—'मुने! लावण्यजितपुष्पसायके मिथिलानायके कीर्त्तिव्याप्तसुधर्मणि (४) निजसुहृदो मगधराजस्य सीमन्तिनीसीमन्तमहोत्सवाय पुत्रदारसमन्विते पुष्पपुरमुपेत्य कञ्चन कालमधिवसति समाराधितगिरीशो मालवा-

(६) महाऽभिख्याः महती अभिख्या शोभा येषां तथोक्ताः, अतिसुन्दरावयवा इत्यर्थः ।

(७) नवेति ।—नवम् उद्यत् उदयं गच्छत्, य इन्दुः चन्द्रः, तस्य रुचिरिव रुचिर्येषां तथाभूताः, नवोदितचन्द्रनिभा इत्यर्थः । चिरायुषः दीर्घजीविनः ।

(८) बालकेलिं बाल्यक्रीड़ाम् ।

---

(१) रसेन रागानं प्रत्युपहेयेत्यर्थः ।

(२) अशरण्या निराश्रया । व्यक्तकार्पण्या प्रकटितदीनभावा ।

(३) करसरोरुहैः करकमलैः ।

(४) कीर्त्तीति ।—कीर्त्त्या व्याप्ता सुधर्मा तदाख्या देवसभा येन तस्मिन् ।

धौमौ मगधराजं योद्धुमभ्यगात्। तत्र प्रख्याततयोरितयोरसङ्ग्रे सङ्ग्रे (५) वर्त्तमाने सुहृत्साहाय्यकं कुर्वाणो निजबले सति विदेहे विदेहेश्वरः (६) प्रहारवर्मा जयवता रिपुणाऽभिगृह्य कारुण्येन पुण्येन (७) विसृष्टो हतावशेषेण शून्येन (८) सैन्येन सह स्वपुर-गमनम् अकरोत्। ततो वनमार्गेण दुर्गेण (९) गच्छन्नधिकबलेन शवरबलेन रभसात् अभिहन्यमानो मूलबलाभिरक्षितावरोधः सः (१०) पलायिष्ट। तदीयार्भकयोर्यमजयोः (११) धात्रीभावेन परिकल्पिताऽहं मद्दुहिताऽपि तीव्रगतिं भूपतिम् अनुगन्तुमक्षमे अभूव (१२)। तत्र विवृतवदनः कोऽपि रूपी कोप इव व्याघ्रः शीघ्रं माम् आघ्रातुम् (१३) आगतवान्। भीता अहम् उग्र-ग्राव्णि (१४) स्खलन्ती पर्यपतम्। मदीयपाणिभ्रष्टो बालकः

(५) असङ्ग्रे सङ्ग्रातुमशक्ये, अवर्णनीये इत्यर्थः। सङ्ग्रे युद्धे।

(६) निजबले स्वसैन्ये। विदेहे देहशून्ये, विनष्टे सति इत्यर्थः। विदेहेश्वरः मिथिलापतिः।

(७) जयवता विजयिना। रिपुणा मानसारेण इति यावत्। अभिगृह्य धृत्वा। कारुण्येन कृपया। पुण्येन शुभादृष्टवशेन।

(८) विसृष्टः मुक्तः। शून्येन पराभवदुःखात् विनष्टप्रायेणेति यावत्।

(९) दुर्गेण दुर्गमेण।

(१०) रभसात् वेगात्। मूलेति।—मूलबलेन कुलक्रमागतसैन्येन, अति-विश्वस्तेनेति भावः, अभिरक्षितः अवरोधः अन्तःपुरिकावर्गः यस्य तथाभूतः। सः प्रहारवर्मा।

(११) तदीयार्भकयोः तस्य प्रहारवर्मणः पुत्रयोः। यमजयोः युग्मजातयोः।

(१२) तीव्रगतिं त्वरितगतिमित्यर्थः। अभूव, आवामिति शेषः।

(१३) विवृतवदनः व्यात्तास्यः, विस्तारितमुख इत्यर्थः। रूपी मूर्त्तिमान्। आघ्रातुम् आक्रमितुम् इत्यर्थः।

(१४) उग्रग्राव्णि कठिने प्रस्तरे।

कस्यापि कपिलाशवस्य क्रोडम् अलीयत(१५)। तच्छवाऽऽकर्षिणो-ऽमर्षिणो व्याघ्रस्य प्राणान् बाणो बाणासनयन्त्रमुक्तः (१६) अपाहरत्। विलोलालको (१७) बालकोऽपि शबरैः (१८) आनीय कुत्रचिदुपानीयत। कुमारमपरमुद्वहन्ती मम नन्दिनी कुत्र गता न जाने। साऽहं मोहं गता केनापि कृपालुना गोपालेन स्वकुटीरमावेश्य विरोपितव्रणाऽभवम्। ततः स्वस्थीभूय भूयः स्वामिनः (१९) अन्तिकमुपतिष्ठासुः असहायतया दुहितुरनभिज्ञाततया च व्याकुलीभवामि' इत्यभिदधाना (२०) 'एकाकिन्यपि स्वामिनं गमिष्यामि' इति उक्त्वा सा तदैव निरगात्। अहमपि भवन्मित्रस्य विदेहनाथस्य विपन्निमित्तं विषादमनुभवन् तदन्वयाङ्कुरं (२१) कुमारमन्विष्यन् तदेकं चण्डिकामन्दिरं सुन्दरं प्रागाम्। तत्र सन्ततमेवंविधविजयसिद्धये कुमारं देवतोपहारं(२२) करिष्यन्तः किराताः 'महीरुहशाखावलम्बितम् एनम् असिलतया वा सैकततले खनननिक्षिप्तचरणं लक्ष्यीकृत्य शितशरनिकरेण वा अनेकचरणैः पलायमानं कुक्कुरबालकैर्वा दंशयित्वा (२३)

(१५) कपिलाशवस्य मृतगोशरीरस्य। अलीयत प्राविशत।

(१६) तच्छवाकर्षिणः तस्य शवस्य मृतदेहस्य, आकर्षिणः। अमर्षिणः कोपपरीतस्य। बाणासनयन्त्रमुक्तः धनुर्मुक्त इत्यर्थः।

(१७) विलोलेति।—विलोलाश्चपलाः, अलकाः चूर्णकुन्तलाः, क्षुद्रकेशा इत्यर्थः यस्य तथाभूतः।

(१८) शबरैः चाण्डालैः, व्याधैरित्यर्थः।

(१९) स्वामिनः राज्ञः मिथिलेश्वरस्य।

(२०) अभिदधाना कथयन्ती।

(२१) तदन्वयाङ्कुरं तद्वंशप्ररोहभूतम्।

(२२) देवतोपहारं देवतायाश्चण्डिकायाः, उपहारं बलिम्।

(२३) खननेति।—खनने निक्षिप्तौ चरणौ यस्य तथाभूतम्। अनेकचरणैः

संहनिष्यामः' इति भाषमाणा मया समभ्यभाषन्त (२४)—'ननु किराताः! सुघोरप्रचारे कान्तारे स्खलितपथः स्थविरभूसुरोऽहं (२५) मम पुत्रकं कुत्रचिच्छायायां निक्षिप्य (२६) मार्गान्वेषणाय कश्चिदन्तरमगच्छम्। स कुत्र गतः? केन वा गृहीतः? परीक्ष्यापि न वीक्ष्यते, तन्मुखावलोकनसुखेन विना अनेकानि दिनानि अतीतानि। किं करोमि? क्व गच्छामि? भवद्भिर्न किमदर्शि?' इति। 'द्विजोत्तम! कश्चिदत्र तिष्ठति, किमेष तव नन्दनः? सत्यमेव, तदेनं गृहाण' इत्युक्त्वा दैवानुकूल्येन मह्यं तं व्यतरन्। तेभ्यो दत्ताशीः अहं बालकम् अङ्गीकृत्य शिशिरोदकादिना उपचारेण (२७) आश्वास्य निःशङ्कं भवदङ्कं समानीतवानस्मि। एनम् आयुष्मन्तं पितृरूपी भवानभिरक्षतात्" इति। राजा सुहृदापन्निमित्तं शोकं तन्नन्दनवदनविलोकनसुखेन किञ्चित् सङ्कुचीकृत्य तमुपहारवर्मनाम्ना आहूय राजवाहनमिव पुपोष।

बहुभिः पदन्यासैः, द्रुतपदविक्षेपैरिति यावत्। पतेक्षचरणैः कुक्कुरबालकैः दंशयित्वा दंशनं कारयित्वा।

(२४) समभ्यभाषन्त अभ्यधीयन्त, उक्ता इत्यर्थः।

(२५) सुघोरः अतिभयानकः, प्रचारो यत्र तादृशे। कान्तारे दुर्गमे कानने इत्यर्थः। स्खलितपथः मार्गच्युत इत्यर्थः। स्थविरभूसुरः वृद्धब्राह्मणः।

(२६) निक्षिप्य रक्षित्वा।

(२७) अङ्गीकृत्य स्वीकृत्य, गृहीत्वा इत्यर्थः। उपचारेण शुश्रूषणामलोनिषयेन।

## अपहारवर्मोत्पत्तिकथा।

जनपतिः (१) एकस्मिन् पुण्यदिवसे तीर्थस्नानाय शबरालय-निकटमार्गेण गच्छन्नबलया कयाचित् उपलालितमनुपमशरीरं कुमारं कञ्चिदवलोक्य कौतूहलाकुलः तामपृच्छत्—"भामिनि! रुचिरमूर्त्तिः सराजगुणसम्पूर्त्तिः असौ अर्भको भवदन्वयसम्भवो (२) न भवति, कस्य नयनानन्दः? निमित्तेन केन दीनो भवदधीनो जातः? कथ्यतां याथातथ्येन त्वया" इति। प्रणतया च तया शबर्या सलीलमलापि—"राजन्! आत्मपल्लीसमीपे (३) पदव्यां वर्त्तमानस्य (४) आक्रममाणस्य मिथिलेश्वरस्य सर्वस्वमपहरति शबरसैन्ये मद्दयितेन (५) अपहृत्य कुमार एष मह्यमर्पितो व्यवर्द्धत"। तदवधार्य्य कार्य्यज्ञो राजा मुनिकथितं द्वितीयं राजकुमारमेनं निश्चित्य सामदानाभ्यां तामनुनीयापहारवर्म-त्याख्याय देव्यै "वर्द्धय" इति उक्त्वा समर्पितवान्।

(१) जनपतिः नृपतिः, मगधेश्वर इत्यर्थः।

(२) सराजेति।—राज्ञो गुणानां सम्पूर्त्या सम्यक् पूरणेन सह वर्त्तमानः, समस्तराजलक्षणाक्रान्त इत्यर्थः। अर्भकः शिशुः। भवदिति।—भवत्या अन्वय-सम्भवो वंशोत्पन्नः।

(३) आत्मपल्लीसमीपे शबरपल्लीसविधे।

(४) पदव्यां पथि। वर्त्तमानस्य गच्छत इत्यर्थः।

(५) मद्दयितेन मम स्वामिना।

---

# पुष्पोद्भवोत्पत्तिकथा ।

कदाचित् वामदेवशिष्यः सोमदेवशर्मा नाम कश्चिदेकं बालकं राज्ञः पुरतो निक्षिप्याभाषत—"देव ! रामतीर्थे स्नात्वा प्रत्यागच्छता मया काननावनौ (१) वनितया कयाऽपि धार्य्यमाणम् एनमुज्ज्वलाकारं कुमारमवलोक्य सादरमभाषि—'रुचिरे ! का त्वमेतस्मिन् अटवीमध्ये बालकमुद्वहन्ती ? किमर्थमायासेन भ्रमसि ?' इति । वनितया तयाऽप्यलापि—'मुनिवर ! कालयवननाम्नि द्वीपे कालगुप्तो नाम धनाढ्यो वैश्यवरः कश्चिदस्ति । तन्नन्दिनीं नयनानन्दकारिणीं सुवृत्तां नाम एतस्माद्द्वीपादागतः कश्चिन्मगधनाथमन्त्रिसम्भवो रत्नोद्भवो नाम रमणीयगुणालयो भ्रान्तभूवलयो मनोहारी व्यवहारी उपयम्य (२) सुवस्तुसम्पदा श्वशुरेण सम्मानितोऽभूत् । कालक्रमेण नताङ्गी गर्भिणी जाता । ततः सहोदरविलोकनकौतुकेन रत्नोद्भवः कथञ्चित् श्वशुरमनुनीय चपललोचनयाऽनया सह प्रवहणम् (३)आरुह्य पुष्पपुरम् अभिप्रतस्थे । कल्लोलमालिकाभिहतः(४)पोतः समुद्राम्भसि अमज्जत् । गर्भभरालसां तां ललनां धात्रीभावेन कल्पिताऽहं कराभ्यामुद्वहन्ती फलकम् (५)एकमधिरुह्य दैवगत्या तीरभूमिमगमम् । सुहृज्जनसहितो रत्नोद्भवस्तत्र निमग्नो वा केनोपायेन तीरदेश-

(१) काननावनौ वनभूमौ ।

(२) भ्रान्तभूवलयः पर्य्यटितपृथिवीमण्डलः । व्यवहारी वाणिज्यकार्य्यपरः । उपयम्य परिणीय ।

(३) चपललोचनया चञ्चलाक्ष्या । अनया पत्न्या इत्यर्थः । प्रवहणम् अर्णवयानम् ।

(४) कल्लोलेति ।—कल्लोलमालिकया तरङ्गनिचयेन, अभिहतः ताड़ितः ।

(५) फलकं काष्ठखण्डम् ।

मगमत् वा न जानामि। क्लेशस्य पराकाष्ठामधिगता सुवृत्ता अस्मिन् अटवीमध्ये सुतमसूत। प्रसववेदनया विचेतना सा प्रच्छायशीतले लतातले निवसति स्म। विजने वने स्थातुमशक्यतया जनपदगामिनं मार्गमन्वेष्टुम् उद्युक्तया मया विवशायास्तस्याः समीपे बालकं निक्षिप्य गन्तुम् अनुचितमिति कुमारोऽपि अनायि' इति। तस्मिन्नेव क्षणे वन्यो वारणः कश्चित् अदृश्यत। तमवलोक्य भीता सा बालकं निपात्य प्राद्रवत्। अहमपि समीपलतागुल्मं प्रविश्य परीक्षमाणः (६) अतिष्ठम्। निपतितं बालकं पल्लवकवलमिव(७)आददति गजपतौ कण्ठीरवो भीमरवो महाऽऽग्रहेण (८) न्यपतत्। भयाकुलेन दन्तावलेन झटिति वियति समुत्पाट्यमानो(९)बालको न्यपतत्। चिरायुष्यतया(१०) स चोन्नततरुशाखामासीनेन वानरेण केनचित् पक्वफलमनीषया (११) परिगृह्य फलेतरतया विततस्कन्धमूले (१२) निक्षिप्तोऽभूत्। सोऽपि मर्कटः कुत्रापि अगात्। बालकेन सत्त्वसम्पन्नतया (१३) सकलक्लेशसहेन अभावि। केशरिणा करिणं निहत्य कुत्रचिदगामि। लतागृहान्निर्गत्य अहमपि तेजःपुञ्जं बालं शनैः अवनीरुहात् (१४) अवतार्य वनान्तरे

(६) परीक्षमाणः प्रतीक्षमाणः इत्यर्थः।

(७) पल्लवकवलमिव किसलयग्रासमिव।

(८) कण्ठीरवः सिंहः। महाऽऽग्रहेण महता आग्रहेण यत्नेन।

(९) दन्तावलेन हस्तिना। समुत्पाट्यमानः समुत्क्षिप्यमाणः।

(१०) चिरायुष्यतया दीर्घजीवितया।

(११) पक्वफलमनीषया पक्वफलबोधेन।

(१२) विततेति।—विततस्य विस्तृतस्य, स्कन्धस्य काण्डस्य, मूले तले।

(१३) सत्त्वसम्पन्नतया महाबलत्वेन।

(१४) अवनीरुहात् वृक्षात्।

वनितामन्विष्याविलोक्य एनमानीय गुरवे निवेद्य तन्निदेशेन भवदन्तिकम् आनीतवानस्मि" इति। सर्वेषां सुहृदाम् एकदैवानुकूलदैवभावेन महदाश्चर्यं बिभ्राणो राजा "रत्नोद्भवः कथमभवत्?" इति चिन्तयन् तन्नन्दनं पुष्पोद्भवनामधेयं विधाय तद्वृत्तं व्याख्याय सुश्रुताय विषादसन्तोषौ अनुभवन् तदनुजतनयं समर्पितवान्।

—०—

## अर्थपालोत्पत्तिकथा।

अन्येद्युः कश्चन बालकमुरसि दधती वसुमती वल्लभमभिगता। तेन "कुतोऽसौ?" इति पृष्टा समभाषत—"राजन्! अतीतायां रात्रौ काचन दिव्यवनिता मत्पुरतः कुमारमेनं संस्थाप्य निद्रामुद्रितां मां विबोध्य विनीताऽब्रवीत्—'देवि! त्वन्मन्त्रिणो धर्मपालनन्दनस्य कामपालस्य वल्लभा यक्षकन्याऽहं तारावली नाम नन्दिनी मणिभद्रस्य। यक्षेश्वरानुमत्या मदात्मजमेनं तव तनूजस्याम्भोनिधिवलयवेष्टितक्षोणीमण्डलेश्वरस्य भाविनो विशुद्धयशोनिधेः राजवाहनस्य परिचर्याकरणाय आनीतवत्यस्मि। त्वमेनं मनोजसन्निभमभिवर्द्धय' इति। विस्मयविकसितनयनया मया सविनयं सत्कृता स्वक्षी (१) यक्षी साऽपि अदृश्यतामयासीत्" इति। कामपालस्य यक्षकन्यासङ्गमे विस्मयमानमानसो राजहंसो रञ्जितमित्रं सुमित्रं मन्त्रिणम् आहूय तदीयभ्रातृपुत्रम् अर्थपालं विधाय तस्मै सर्वं वार्त्ताजातं व्याख्याय अदात्।

(१) स्वक्षी सुन्दरनयना। सुष्ठु अक्षि यस्याः स्वक्षा ततः "सुः पूजायाम्" इति समासान्तनिषेधेऽपि "कृदिकारादक्तिनः" (ग० सू०) इति ङीष्।

## सोमदत्तोत्पत्तिकथा।

ततः परस्मिन् दिवसे वामदेवान्तेवासी तदाश्रमवासी समाराधितदेवकीर्त्तिं निर्भर्त्सितमारमूर्त्तिं (१)कुसुमसुकुमारं कुमारमेकम् अवगमय्य नरपतिम् अवादीत्—"देव! तीर्थयात्राऽभिलाषेण कावेरी-तीरमागतोऽहं विलोलालकं बालकं निजोत्सङ्गतले निधाय रुदतीं स्थविराम् एकां निरीक्ष्य अवोचं—'स्थविरे! का त्वम्? अयमर्भकः कस्य नयनानन्दकरः? कान्तारं किमर्थमागता? शोककारणं किम्?' इति। सा करयुगेन बाष्पजलम् उन्मृज्य निजशोकशङ्कूत्पाटनक्षममिव मामवेक्ष्य शोकहेतुमवोचत्—'द्विजोत्तम! राजहंससचिवस्य सितवर्मणः कनीयानात्मजः सत्यवर्मा तीर्थयात्राऽऽकाङ्क्षया(२)देशमेनमागच्छत्। स कस्मिंश्चित् अग्रहारे (३) कालीं नाम एकस्य भूसुरस्य नन्दिनीं विवाह्य तस्या अनपत्यतया गौरीं नाम तद्भगिनीं काञ्चनकान्तिं परिणीय तस्यामेकं तनयम् अलभत। काली सासूयम् एकदा धात्र्या मया सह बालमेनमेकेन मिषेण (४) आनीय तटिन्यामेतस्यामक्षिपत्। करेणैकेन बालम् उद्धृत्यापरेणाम्भसि (५) प्लवमाना नदीवेगाऽऽगतस्य कस्यचित्तरोः शाखाम् अवलम्ब्य तत्र शिशुं

(१) समाराधितेति।—समाराधिता देवानां कीर्त्तिर्येन तादृशं, देवतुल्यकीर्त्तिमित्यर्थः। निर्भर्त्सितेति।—निर्भर्त्सिता तिरस्कृता, मारस्य कामस्य, मूर्त्तिर्येन तथोक्तं, न्यक्कृतकाममित्यर्थः।

(२) "यात्राऽभिलाषेण" इति वा पाठः।

(३) अग्रहारे नृपतिप्रतिग्रहलब्धे ग्रामे।

(४) मिषेण छलेन।

(५) पुस्तकान्तरे "अम्भसि" इति पाठो नास्ति।

निधाय नदीवेगेन उह्यमाना केनचित् तरुलग्नेन कालभोगिना अहम् अदंशि। मदवलम्बीभूतो भूरुहः (६) अयम् अस्मिन् देशे तीरमगमत्। गरलस्योद्दीपनतया मयि मृतायामरण्ये कश्चन शरण्यो (७) नास्तीति मया शोच्यते' इति। ततो विषमविषो-ल्वणज्वालाऽवलीढावयवा सा धरणीतले न्यपतत्। दयाऽऽविष्ट-हृदयोऽहं मन्त्रबलेन विषव्यवस्थाम् (८) अपनेतुमक्षमः समीप-कुञ्जे औषधविशेषमन्विष्य प्रत्यागच्छन्नुत्क्रान्तजीवितां तां व्यलोकयम्। तदनु तस्याः पावकसंस्कारं विरच्य शोकाऽऽकुल-चेता बालमेनमगतिमादाय सत्यवर्मवृत्तान्तश्रवणवेलायां तन्नि-वासाग्रहारनामधेयस्य अश्रुततया (९) तदन्वेषणमशक्यम् इत्या-लोच्य भवदमात्यनन्दनस्य भवानेव अभिरक्षितेति भवन्तमेन-मनयम्" इति। तन्निशम्य सत्यवर्मस्थितेः सम्यगनिश्चिततया खिन्न-मना राजा सुमतये मन्त्रिणे सोमदत्तं नाम तदनुजतनयम् अर्पित-वान्। सोऽपि सोदरमागतमिव मन्यमानो विशेषेण पुपोष।

एवं मिलितेन कुमारमण्डलेन सह बालकेलिमनुभवन्नधि-रूढानेकवाहनो (१०) राजवाहनोऽनुक्रमेण चौडोपनयनादि-संस्कारजातम् अलभत। ततः सकललिपिज्ञानं, सकलदेशीय-भाषापाण्डित्यं, षडङ्गसहितवेदसमुदायकोविदत्वं, (११) काव्य-

---

(६) मदवलम्बीभूतः मदाश्रयभूतः। भूरुहः तरुः।

(७) उद्दीपनतया तीव्रतया। शरण्यः आश्रयः, अस्य बालकस्येति शेषः।

(८) विषव्यवस्था विषजनितविकलतावस्थाम इत्यर्थः।

(९) सत्येति।—सत्यवर्मणः वृत्तान्तश्रवणसमये इत्यर्थः, तन्निवासस्य अग्रहारस्य प्रतिग्रहलब्धग्रामस्य, यत् नामधेयम् आख्या तस्य, अश्रुततया अनाकर्णनेन।

(१०) अधीति।—अधि अधिकम्, आरूढानि अनेकानि वाहनानि अश्वादीनि येन तथाभूतः।

(११) षडङ्गेति।—षड्भिरङ्गैः शिक्षाकल्पव्याकरणच्छन्दोनिरुक्तज्योतिषैः, सहितः यः वेदानाम् ऋग्यजुःसामाथर्वाख्यानां, समुदायः तस्मिन् कोविदत्वं वैचक्षण्यम्।

नाटकाख्यानकाख्यायिकेतिहासचित्रकथासमन्वित(१२) पुराणगणनैपुण्यं, धर्मशब्दज्योतिस्तर्कमीमांसादिसमस्तशास्त्रनिकरचातुर्य्यं, कौटिल्य (१३) कामन्दकीयादि-नीतिपटलकौशलं, वीणाद्यशेषवाद्यदाक्ष्यं, सङ्गीतसाहित्यहारित्वं, मणिमन्त्रौषधादिमायाप्रपञ्चप्रावीण्य (१४) मातङ्गतुरङ्गादिवाहनारोहणपाटवं, विविधायुधप्रयोगचतुरत्वं, चौर्य्यदुरोदरादिकपटकलाप्रौढ़त्वञ्च तत्तदाचार्य्येभ्यः सम्यक् लब्ध्वा यौवनेन विलसन्तं कृत्येषु अनलसं तं कुमारनिकरं निरीक्ष्य महीवल्लभः "सोऽहं शत्रुजनदुर्लभः" (१५) इति परमानन्दममन्दमविन्दत। (१६)

इति श्रीदण्डिनः कृतौ दशकुमारचरिते कुमारोत्पत्तिर्नाम प्रथम उच्छ्वासः।

---

(१२) "समन्वित" इत्यत्र "सहित" इति वा पाठः।

(१३) कौटिल्यः चाणक्यः।

(१४) सङ्गीतेति।—सङ्गीतेषु नृत्य-गीत-वाद्यविकरूपेषु, गानादिविद्यासु इत्यर्थः, बहुविधानि खलु सङ्गीतशास्त्राणि, तत्र मूलग्रन्थकर्त्तारश्चत्वारः, भरत-हनूमत्-सोमेश्वर-कल्लिनाथाश्चेति; तेषु च साम्प्रतं हनूमद्ग्रन्थस्यैव लोके बहुलप्रचारः। तद्ग्रन्थस्य अध्यायाः सप्त—स्वराध्यायः, रागाध्यायः, तालाध्यायः नृत्याध्यायः, भावाध्यायः, कोकाध्यायः, हस्ताध्यायश्चेति; साहित्येषु च हारित्वं मनोरञ्जनकारित्वम्। मणीति।—मणिमन्त्रौषधादिषु मायाप्रपञ्चेषु कपटविस्तारेषु च, प्रावीण्यं कौशलम्। "प्रावीण्यम्" इत्यत्र "चुञ्चुत्वम्" इति पाठे—विख्यातत्वम्।

(१५) शत्रुजनदुर्लभः शत्रुजनदुर्द्धर्ष इत्यर्थः।

(१६) "अविन्दत" इत्यत्र "अवाप" इति वा पाठः।

# अथ द्वितीयोच्छ्वासः।

## द्विजोपकारः।

अथैकदा वामदेवः सकलकलाकुशलेन कुसुमसायकसंशयितसौन्दर्य्येण (१) कल्पितसौन्दर्य्येण साहसापहसितकुमारेण (२) सुकुमारेण जयध्वजाऽऽतपवारणकलशाङ्कितकरेण (३) कुमारनिकरेण परिवेष्टितं राजानमानतशिरसं निजचरणकमलयुगलमिलन्मधुकरायमाणकाकपक्षं (४) विदलिष्यमाणविपक्षं कुमारचयं गाढम् आलिङ्ग्य अमितसत्यवाक्येन विहिताशीः अभाषत (५)—"भूवल्लभ! भवदीयमनोरथफलमिव समृद्धलावण्यं तारुण्यं नुतमित्रो (६) भवत्पुत्रोऽनुभवति। सहचरसमेतस्य

---

(१) कुसुमेति।—कुसुमसायकः कामः, तेन संशयितं सन्दिग्धं, सौन्दर्य्यं यस्य तथाभूतेन, सौन्दर्य्येण कामोऽयं न वेति लोकानां हृदि संशयमादधानेनेत्यर्थः।

(२) कल्पितेति।—कल्पितं वेशरचनादिना विशेषितं, सौन्दर्य्यं यस्य तादृशेन। साहसेति।—साहसेन शौर्य्यजनितेन व्यापारेण इत्यर्थः, अपहसितः कुमारः कार्त्तिकेयो येन तथोक्तेन।

(३) जयेति।—जयैः जयसाधनैः, ध्वजातपवारणकलशैः पताकाच्छत्रकुम्भैः, अङ्कितः करो यस्य तेन।

(४) आनतशिरसमित्यनन्तरं "समभिगम्य तेन तां कृतां परिचर्य्यामङ्गीकृत्य" इत्यधिकः क्वचित् पाठः। निजेति।—निजं स्वं, यत् चरणकमलयुगलं पादपद्मयुग्मं, तस्मिन् मिलन्तः सङ्गच्छन्तः, मधुकरायमाणाः मधुकरा इवाचरन्तः, काकपक्षाः शिखाभूतकेशनिचया यस्य तादृशं, ("बालानान्तु शिखा प्रोक्ता काकपक्षः शिखण्डकः" इत्यमरः)।

(५) विहिताशीः कृताशीर्वादः। "अभाषत" इत्यत्र "अभ्यभाषत" इति वा पाठः।

(६) नुतमित्रः नुतानि स्तुतानि, सम्भोषितानीत्यर्थः, मित्राणि येन तथोक्तः।

नूनमेतस्य दिग्विजयारम्भसमय एषः। तदस्य सकलक्लेशसहस्य राजवाहनस्य दिग्विजयप्रयाणं क्रियताम्” इति। कुमारा माराभिरामा रामाद्यपौरुषा रुषा भस्मीकृतारयो रयोपहसित-समीरणा रणाभियानेन (७) यानेन तेन अभ्युदयाशंसं (८) राजानमकार्षुः। तत्साचिव्यम् इतरेषां (९) विधाय समुचितां बुद्धिम् उपदिश्य शुभे मुहूर्त्ते सपरिवारं कुमारं विजयाय विससर्ज।

राजवाहनो मङ्गलसूचकं शुभशकुनं (१०) विलोकयन् देशं कञ्चिदतिक्रम्य विन्ध्याटवीमध्यमविशत्। तत्र हेतिहतिकिणाङ्कं कालायसकर्कशकायं (११) यज्ञोपवीतेन अनुमेयविप्रभावं व्यक्त-किरातप्रभावं लोचनपरुषं कमपि पुरुषं ददर्श। तेन विहित-पूजनो (१२) राजवाहनोऽभ्यभाषत—“ननु मानव! जनसङ्ग-रहिते मृगसहिते घोरप्रचारे कान्तारे विन्ध्याटवीमध्ये भवान् एकाकी किमिति निवसति? भवदंसोपनीतं यज्ञोपवीतं

(७) माराभिरामाः कन्दर्पसुन्दराः। रामेति।—रामस्येव अस्त्रेषु पौरुषं सामर्थ्यमित्यर्थः येषां तथाभूताः। “रामाद्यपौरुषाः” इति पाठे—रामस्येव आद्यं समृद्धम्, उज्ज्वलमित्यर्थः, पौरुषं पुरुषकारो येषां तथोक्ताः। रयेति।—रयेण वेगेन, उपहसितः समीरणो वायुः यैः तथाभूताः। रणाभियानेन रणे युद्धे, अभियानं गमनं येन तादृशेन, साङ्ग्रामिकेणेत्यर्थः।

(८) अभ्युदयाशंसम् अभ्युदये आशंसा आशा यत्र तादृशम्।

(९) तत्साचिव्यं तस्य कुमारस्य, साचिव्यं साहाय्यम्। इतरेषां कुमाराणाम्, इतरान् कुमारान् तस्य राजवाहनस्य साचिव्यकर्मणि नियुज्येत्यर्थः।

(१०) शुभशकुनं सुनिमित्तं, सुलक्षणमित्यर्थः।

(११) हेतीति।—हेतीनाम् अस्त्राणां, हत्या आघातेन प्रहारेण वा, किणः अङ्कः चिह्नं यस्य तथोक्तम्। कालायसं कृष्णलौहः, तद्वत् कर्कशः कठिनः, कायो यस्य तथाभूतम्।

(१२) विहितेति।—विहितं पूजनं यस्य तथोक्तः, कृतसत्कार इत्यर्थः।

भूसुरभावं द्योतयति। हेतिहतिभिः किरातरीतिः अनुमीयते। कथय किमेतत्?" इति। "तेजोमयोऽयं मानुषमात्रपौरुषो (१३) नूनं न भवति" इति मत्वा स पुरुषः तद्वयस्यमुखान्नामजनने विज्ञाय तस्मै निजवृत्तान्तमकथयत्—"राजनन्दन! केचिदस्यामटव्यां वेदादिविद्याभ्यासम् अपहाय निजकुलाचारं दूरीकृत्य सत्यशौचादिधर्मव्रतं परिहृत्य किल्बिषमन्विष्यन्तः पुलिन्दपुरोगमाः तदन्नम् (१४) उपभुञ्जाना बहवो ब्राह्मणब्रुवा (१५) निवसन्ति। तेषु कस्यचित् पुत्रो निन्दापात्रचारित्रो मातङ्गो नामाहं सह किरातबलेन (१६) जनपदं प्रविश्य ग्रामेषु धनिनः स्त्रीबालसहितानानीय अटव्यां बन्धने निधाय तेषां सकलधनमपहरन् उद्धत्य वीतदयो (१७) व्यचरम्। कदाचिदेकस्मिन् कान्तारे मदीयसहचरगणेन जिघांस्यमानं भूसुरमेकमवलोक्य दयाऽऽयत्तचित्तोऽब्रवं—'ननु पापाः! न हन्तव्यो ब्राह्मणः' इति। ते रोषारुणनयना मां बहुधा निरभर्त्सयन्। तेषां भाषणपारुष्यमसहिष्णुरहमवनीसुररक्षणाय चिरं प्रयुध्य तैरभिहतो गतजीवितोऽभवम्। ततः प्रेतपुरीम् उपेत्य तत्र देहधारिभिः पुरुषैः परिवेष्टितं सभामध्ये रत्नखचितसिंहासनासीनं

---

(१३) मानुषेति।—मानुषमात्रस्य मानुषसाधारणस्येव, पौरुषं पुरुषकारो यस्य तथोक्तः, मनुष्याकृतिः अपि असाध्याचार्यः।

(१४) किल्बिषं पापम्। पुलिन्दपुरोगमाः पुलिन्दाः म्लेच्छजातिविशेषाः, पुरोगमाः अग्रगामिनो येषां तथोक्ताः। तदन्नं तेषां पुलिन्दानाम् अन्नम्।

(१५) ब्राह्मणब्रुवाः ब्राह्मणापसदाः।

(१६) "किरातबलेन" इत्यत्र "किरातपालेन" इति वा पाठः।

(१७) उद्धत्य उद्धतो भूत्वेत्यर्थः। "उद्धृत्य" इत्यपपाठः। वीतदयः निर्दयः।

गमनं विलोक्य तस्मै दण्डप्रणाममकरवम्। सोऽपि मामवेक्ष्य चित्रगुप्तं नाम निजामात्यमाहूय तमवोचत्—'सचिव! नैषोऽमुष्य मृत्युसमयः। निन्दितचरितोऽप्ययं महीसुरनिमित्तं (१८) गतजीवितोऽभूत्। इतः प्रभृति विगलितकल्मषस्यास्य पुण्यकर्मकरणे रुचिरुदेष्यति। पापिष्ठैरनुभूयमानमत्र यातनाविशेषं विलोक्य पुनरपि पूर्वशरीरमनेन गम्यताम्' इति। चित्रगुप्तोऽपि तत्र तत्र सन्तप्तेषु आयसस्तम्भेषु बध्यमानान् अत्युष्णीकृते विततशरावतैले निक्षिप्यमाणान् लगुडैर्जर्जरीकृतावयवान् निशिततङ्कैः परितक्ष्यमाणानपि (१९) दर्शयित्वा पुण्यबुद्धिम् उपदिश्य माममुञ्चत्। तदैव पूर्वशरीरमहं प्राप्तो महाऽटवीमध्ये शीतलोपचारं रचयित्वा (२०) महीसुरेण परीक्ष्यमाणः शिलायां शयितः क्षणमतिष्ठम्। तदनु विदितोदन्तो मदीयबन्धुगणः सहसा समागत्य मन्दिरमानीय माम् अपक्रान्तव्रणमकरोत्। द्विजन्मा कृतज्ञो(२१) मह्यमक्षरशिक्षां विधाय विविधाऽऽगमतन्त्रम् आख्याय कल्मषक्षयकारणं सदाचारमुपदिश्य ज्ञानेक्षणगम्यमानस्य शशिखण्डशेखरस्य (२२) पूजाविधानम् अभिधाय पूजां मत्कृतामङ्गीकृत्य (२३) निरगात्। तदारभ्याहं किरातकृतसंसर्गं बन्धुकुल-

(१८) महीसुरनिमित्तं ब्राह्मणरक्षार्थम्।

(१९) निशिततङ्कैः तीक्ष्णपाषाणदारणास्त्रविशेषैः, ("टङ्कः पाषाणदारणे" इत्यमरः)। परितक्ष्यमाणानपि ताड्यमानानपि।

(२०) शीतलोपचारं शिशिरोपचारमित्यर्थः। रचयित्वा अवलम्ब्य।

(२१) अपक्रान्तव्रणं शुष्कक्षतमित्यर्थः। कृतज्ञः स्मृतमत्कृतोपकार इत्यर्थः।

(२२) ज्ञानेति।—ज्ञानेक्षणेन ज्ञानदृष्ट्या, गम्यमानस्य ज्ञेयस्य। शशिखण्डशेखरस्य अर्धचन्द्रमौलेः।

(२३) अङ्गीकृत्य स्वीकृत्य, गृहीत्वेत्यर्थः।

मुत्सृज्य सकललोकैकगुरुम् इन्दुकलाऽवतंसं चेतसि स्मरन् अस्मिन् कानने दूरीकृतकलङ्को वसामि। देव! भवते विज्ञापनीयं रहस्यं किञ्चिदस्ति, आगम्यताम्” इति। स च वयस्यगणादपनीय (२४) रहसि पुनरेनमभाषत—“राजन्! अतीते निशान्ते (२५) गौरीपतिः स्वप्नसन्निहितो निद्रामुद्रितलोचनं विबोध्य प्रसन्नवदनकान्तिः प्रश्रयावनतं माम् अवोचत्—‘मातङ्ग! दण्डकारण्यान्तरालगामिन्यास्तटिन्यास्तीरभूमौ सिद्धसाध्याराध्यमानस्य (२६) स्फटिकलिङ्गस्य पश्चात् अद्रिपतिकन्या-पदपङ्क्तिचिह्नितस्य अश्मनः (२७) सविधे विधेः आननमिव किमपि बिलं विद्यते। तत् (२८) प्रविश्य तत्र निक्षिप्तं ताम्रशासनं शासनं विधातुरिव समादाय विधिं (२९) तदुपदिष्टं दिष्टविजयमिव(३०) विधाय पातालालोकाधीश्वरेण भवता भवितव्यं,भवत्साहाय्यकरो राजकुमारोऽद्य श्वो वा समागमिष्यति’ इति। तदादेशानुगुण-

(२४) अपनीय अपसार्य्य।

(२५) एनं राजवाहनमित्यर्थः। “एवम्” इति पाठे—एवं वक्ष्यमाणक्रमेणेत्यर्थः। निशान्ते प्रत्यूषे।

(२६) सिद्धेति।—सिद्धैः, साध्यैश्च देवयोनिविशेषैश्च, आराध्यमानस्य सेव्यमानस्य।

(२७) अद्रिपतीति।—अद्रिपतिः हिमवान्, तस्य कन्यायाः पार्वत्याः, पदपङ्क्तिभिः पादन्यासपरम्पराभिः, चिह्नितस्य। अश्मनः पाषाणस्य।

(२८) तत् बिलमित्यर्थः।

(२९) तत्र बिले। ताम्रशासनं ताम्रफलकलिखितः आज्ञाविशेष इत्यर्थः। विधिम् अनुष्ठानम्।

(३०) तदुपदिष्टं तस्मिन् ताम्रशासने, उपदिष्टम् उक्तम्। दिष्टविजयमिव दिष्टं दैवं, तेन विजयः तमिव।

मेव (२१) भवदागमनमभूत्। साधनाभिलाषिणो मम तोषिणो रचय (२२) साहाय्यम्" इति। "तथा" इति राजवाहनः साकं मातङ्गेन नमितोत्तमाङ्गेन विहाय अर्द्धरात्रे निद्रापरतन्त्रं मित्रगणं वनान्तरम् अवाप। तदनु तदनुचराः कल्ये साकल्येन (२३) राजकुमारमनवलोकयन्तो विषण्णहृदयास्तेषु तेषु वनेषु सम्यक् अन्विष्यानवेक्षमाणा एतदन्वेषणमनीषया देशान्तरं चरिष्णवोऽतिसहिष्णवो निश्चितपुनःसङ्गमसङ्केतस्थानाः परस्परं वियुज्य ययुः।

लोकैकवीरेण कुमारेण रक्ष्यमाणः सन्तुष्टान्तरङ्गो (२४) मातङ्गोऽपि बिलं शशिशेखरकथिताभिज्ञानपरिज्ञातं निःशङ्कं प्रविश्य गृहीतताम्रशासनो रसातलं पथा तेनैवोपेत्य तत्र कस्यचित् पत्तनस्य (२५) निकटे केलिकाननकासारस्य (२६) विगतसारसस्य समीपे नानाविधेन ईशशासनविधानोपपादितेन हविषा होमं विरच्य प्रत्यूहपरिहारिणि (२७) सविस्मयं विलोकयति राजवाहने समिदाज्यसमुज्ज्वलिते ज्वलने (२८) पुण्यगेहं

(२१) तदादेशानुगुणं तस्य स्वप्नकथितस्य शङ्करवाक्यस्य, आदेशानुगुणम् आज्ञानुकूलमेव।

(२२) साधनेति।—साधनम् उपायः, तस्य अभिलाषिणः उपायप्राप्तिलालसस्येत्यर्थः। तोषिणः त्वदागमनसन्तुष्टस्य इत्यर्थः। रचय कुरु।

(२३) कल्ये प्रत्यूषे, ("प्रत्यूषोऽहर्मुखं कल्यम्" इत्यमरः)। साकल्येन सर्वतोभावेन।

(२४) सन्तुष्टान्तरङ्गः प्रीतान्तःकरणः।

(२५) पत्तनस्य नगरस्य।

(२६) केलिकाननकासारस्य क्रीडोद्यानसरसः. ("कासारः सरसी सरः" इत्यमरः)।

(२७) प्रत्यूहेति।—प्रत्यूहो विघ्नः, तस्य परिहारिणि नाशिनि।

(२८) समिदिति।—समिद्भिः काष्ठैः, आज्यैः हविर्भिश्च, समुज्ज्वलिते सम्यक् उद्दीपिते। ज्वलने वह्नौ।

देहं मन्त्रपूर्वकमाहुतीकृत्य(३९) तडित्समानकान्तिं दिव्यां तनुमलभत। तदनु मणिमयमण्डनमण्डलमण्डिता सकललोकललनाकुल-ललामभूता(४०) कन्यका काचन विनीतानेकसखीजनानुगम्यमाना कलहंसगत्या शनैरागत्य अवनिसुरोत्तमाय मणिमेकमुज्ज्वलाकारम् उपायनीकृत्य(४१)तेन "का त्वम् ?" इति पृष्टा सोत्कण्ठा कलकण्ठस्वनेन मन्दं मन्दमुदञ्जलिरभाषत— "भूसुरोत्तम ! अहम् असुरोत्तमनन्दिनी कालिन्दी नाम, मम पिताऽस्य लोकस्य शासिता महानुभावो निजपराक्रमासहिष्णुना विष्णुना दूरीकृतामरे समरे यमनगरातिथिः अकारि। तद्वियोगशोकसागरमग्नां मामवेक्ष्य कोऽपि कारुणिकः सिद्धतापसोऽभाषत—'बाले ! कश्चिद्दिव्यदेहधारी मानवो नवो वल्लभस्तव भूत्वा सकलं रसातलं पालयिष्यति' इति। तदादेशं निशम्य घनशब्दोन्मुखी चातकी वर्षाऽऽगमनम् इव तवालोकनकाङ्क्षिणी चिरमतिष्ठम्। मन्मनोरथफलायमानं भवदागमनमवगम्य मद्राज्यावलम्बनभूतामात्यानुमत्या मदनकृतसारथ्येन मनसा भवन्तम् आगच्छम्। लोकस्य अस्य (४२) राज्यलक्ष्मीमङ्गीकृत्य मां तत्पत्नीं करोतु भवान्" इति। मातङ्गोऽपि राजवाहनानुमत्या तां तरुणीं परिणीय दिव्याङ्गनालाभेन हृष्टतरो रसातलराज्यमुररीकृत्य परमानन्दमाससाद।

वञ्चयित्वा वयस्यगणं समागतो राजवाहनस्तदवलोकनकौतू-

(३९) पुण्यगेहं पुण्यागारम्। आहुतीकृत्य हुत्वा, वह्नौ प्रक्षिप्येत्यर्थः।

(४०) मणीति।—मणिमयानां रत्नमयानां, मण्डनानां भूषणानां, मण्डलैः समूहैः, मण्डिता अलङ्कृता। सकलेति।—सकलेषु लोकेषु भुवनेषु, ("लोकस्तु भुवने जने" इत्यमरः) यत् ललनाकुलं नारीकुलं, तत्र ललामभूता रत्नभूता।

(४१) अवनिसुरोत्तमाय ब्राह्मणश्रेष्ठाय। उपायनीकृत्य उपहारीकृत्य।

(४२) लोकस्य अस्य पातालस्येत्यर्थः।

छलेन भुवं गमिष्णुः (४३) कालिन्दीदत्तं क्षुत्पिपासादिक्लेशनाशनं मणिं साहाय्यकरणसन्तुष्टात् मातङ्गादवाप्य कञ्चनाध्वानमनुवर्त्तमानं तं विसृज्य बिलपथेन तेन निर्ययौ। तत्र च मित्रगणमनवलोक्य भुवं बभ्राम। भ्रमंश्च विशालोपशल्ये कमप्याक्रीड़मासाद्य तत्र विशिश्रमिषुः आन्दोलिकारूढ़ं (४४) रमणीसहितमाप्तजनपरिवृतमुद्याने समागतमेकं पुरुषमपश्यत्। सोऽपि परमानन्देन पल्लवितचेताः (४५) विकसितवदनारविन्दः "मम स्वामी सोमकुलावतंसो विशुद्धयशोनिधिः राजवाहन एषः। महाभाग्यतया अकाण्डे (४६) एवास्य पादमूलं गतवानस्मि। सम्प्रति महान्नयनोत्सवो जातः" इति ससम्भ्रममान्दोलिकाया अवतीर्य सरभसपदविन्यासविलासिहर्षोत्कर्षचरितः (४७) त्रिचतुःपदानि उद्गतस्य चरणकमलयुगलं गलदुल्लसन्मल्लिकावलयेन (४८) मौलिना पस्पर्श। प्रमोदाश्रुपूर्णो राजा पुलकिताङ्गं तं गाढमालिङ्ग्य "अये सौम्य सोमदत्त !!" इति व्याजहार। ततः कस्यापि पुन्नागभूरुहस्य प्रच्छायशीतले तले संविष्टेन मनुजनाथेन

(४३) गमिष्णुरिति गमेर्बाहुलकादिष्णुच् कथञ्चित् समर्थनीयः।

(४४) विशालोपशल्ये विशालं महत्, उपशल्यं ग्रामान्तः ("ग्रामान्त उपशल्यं स्यात्" इत्यमरः) तस्मिन्। आक्रीड़ं साधारणविहारस्थानम् उद्यानं वा। आन्दोलिकारूढ़ं दोलारूढ़म्।

(४५) पल्लवितचेताः आप्यायितमनाः।

(४६) अकाण्डे सहसा।

(४७) सरभसेति।—सरभसेन ससम्भ्रमेण, पदविन्यासेन विलासि प्रकाशमानं, हर्षाणाम् उत्कर्षस्य चरितं भाव इत्यर्थः यस्य तथोक्तः।

(४८) उद्गतस्य व्युत्क्रम्य चलितस्य। गलदिति।—गलत् स्खलत्, उल्लसत् विकसत्, मल्लिकानां तदाख्यकुसुममालानां, वलयं वेष्टनं यस्य तादृशेन।

सप्रणयमभाणि—"सखे! कालमेतावन्तं देशे कस्मिन् प्रकारेण केनास्थायि? भवता सम्प्रति कुत्र गम्यते? तरुणी केयम्? एष परिजनः सम्पादितः कथम्? कथय" इति। सोऽपि मित्र-सन्दर्शनव्यतिकरापगतचिन्ताज्वरातिशयो मुकुलितकरकमलः सविनयमात्मीयप्रचारप्रकारमवोचत्।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते द्विजोपकृतिर्नाम
द्वितीय उच्छ्वासः।

---

## अथ तृतीयोच्छ्वासः।

## सोमदत्तचरितम्।

"देव! भवच्चरणकमलसेवाऽभिलाषीभूतोऽहं भ्रमन् एकस्यां वनावनौ पिपासाऽऽकुलो लतापरिवृतं शीतलं नदसलिलं पिबन् उज्ज्वलाकारं रत्नं तत्रैकमद्राक्षम्। तत् आदाय गत्वा कञ्चन अध्वानम् अम्बरमणेः अत्युष्णतया गन्तुमक्षमो वनेऽस्मिन् एव किम् अपि देवतायतनं प्रविष्टो दीनाननं बहुतनयसमेतं स्थविर-महीसुरमेकम् अवलोक्य कुशलम् उदितदयोऽहम् (१) अपृच्छम्। कार्पण्यविवर्णवदनो महदाशापूर्णमानसोऽवोचत् अग्रजन्मा (२) —'महाभाग! सुतान् एतान् मातृहीनान् अनेकैः उपायैः

(१) अम्बरमणेः सूर्यस्य। स्थविरमहीसुरं वृद्धब्राह्मणम्। उदितदयः सञ्जातदयः।

(२) महदिति।—महत्या प्रबलया, आशया पूर्णं व्याप्तं, मानसं यस्य तादृशः। अग्रजन्मा ब्राह्मणः।

रक्षन्, इदानीम् अस्मिन् कुदेशे भैक्ष्यं सम्पाद्य ददत् एतेभ्यो वसामि शिवालये अस्मिन्' इति । 'भूदेव ! एतत्कटकाधिपतिः राजा कस्य देशस्य ? किं नामधेयः ? किमत्र आगमनकारणम् अस्य ?' इति पृष्टो अभाषत महीसुरः,—'सौम्य ! मत्तकालो नाम लाटेश्वरो देशस्य अस्य पालयितुः वीरकेतोः तनयां वामलोचनां नाम तरुणीरत्नम् असमानलावण्यं श्रावं श्रावम् अवधूतदुहितृ-प्रार्थनस्य (३) तस्य पाटलीं नाम नगरीमरौत्सीत् । वीरकेतुः अपि भीतो महत् उपायनम् इव तनयां मत्तकालाय अदात् । तरुणीलाभहृष्टचेता लाटपतिः, 'परिणेया निजपुरे एव' इति निश्चित्य गच्छन् निजदेशं प्रति, सम्प्रति मृगयादरेण अत्र वने सैन्यावासम् अकारयत् । कन्याऽऽसारेण (४) नियुक्तो मानपालो नाम वीरकेतुमन्त्री मानधनः चतुरङ्गबलसमन्वितः अन्यत्र रचितशिबिरस्तं निजनाथावमानखिन्नमानसः अन्तर्बिभेद' इति (५) । विप्रोऽसौ बहुतनयो विद्वान् निर्धनः स्थविरश्च दानयोग्य इति तस्मै करुणापूर्णमना रत्नमदाम् । परमाह्लादविकसिता-ननोऽभिहितानेकाशीः क्वचित् अग्रजन्मा जगाम । अध्वश्रम-खिन्नेन मया तत्र निरवेशि (६) निद्रासुखम् । तदनु पश्चात्-निगड़ितबाहुयुगलः स भूसुरः कशाऽऽघातचिह्नितगात्रः अनेक-

(३) श्रावं श्रावं श्रुत्वा श्रुत्वा, (आभीक्ष्ण्यार्थे णमुल्)। अवधूतेति ।—अवधूता अवगणिता, दुहितुः प्रार्थना येन तस्य ।

(४) कन्यासारेण कन्यायाः आसारेण अपसारणार्थमित्यर्थः, लाटेश्वरादप-नयनार्थमिति यावत् ; अथवा—कन्यैव सारो धनं तेन । "कन्यासारणे" इति पाठो वा ।

(५) अन्यत्र लाटेश्वरशिबिरात् अन्यस्मिन् स्थाने इत्यर्थः । अन्तर्बिभेद अन्तर्भेदे तत्परो बभूवेत्यर्थः ।

(६) निरवेशि निर्विष्टं, लब्धमित्यर्थः ।

नैस्त्रिंशिकानुयातः (७) अभ्येत्य माम् 'असौ दस्युः' इति अदर्शयत्। परित्यक्तभूसुरा राजभटा रज्ज्वावाप्तिप्रकारं मदुक्तम् अनाकर्ण्य भयरहितं मां गाढं नियम्य (८) रज्जुभिः आनीय कारागारम्, 'एते तव सखायः' इति निगडितान् (९) कांश्चित् निर्दिष्टवन्तो मामपि निगडितचरणयुगलम् अकार्षुः। किं-कर्त्तव्यतामूढेन निराशक्लेशानुभवेन (१०) अवोचि मया—'ननु पुरुषाः! वीर्य्य-परुषाः! निमित्तेन केन निर्विशथ (११) कारावासदुःखं दुस्तरम्? यूयं वयस्या इति निर्दिष्टम् एतैः, किमिदम्?' इति (१२)। तथाविधं मामवेक्ष्य भूसुरात् मया श्रुतं लाटपतिवृत्तान्तं व्याख्याय चौरवीराः पुनरवोचन्—'महाभाग! वीरकेतुमन्त्रिणो मानपालस्य किङ्करा वयं तदाज्ञया लाटेश्वरमारणाय रात्रौ सुरङ्गद्वारेण तदागारं प्रविश्य तत्र राजाभावेन विषण्णा बहुधनम् अपहृत्य महाटवीं प्राविशाम।

अपरेद्युः च अन्वेषिणो राजानुचरा बहवोऽभ्येत्य धृतधन-चयान् अस्मान् परितः परिवृत्य दृढतरं बद्ध्वा निकटमानीय

---

(७) अनेकनैस्त्रिंशिकानुयातः अनेकैः बहुभिः, नैस्त्रिंशिकैः खड्गधारिभिः, अनुयातः परिवृतः।

(८) नियम्य बद्ध्वा।

(९) निगडितान् निगडः शृङ्खलं, तत्र बद्धानित्यर्थः।

(१०) निराशेति।—निराशः अप्रतीकार इत्यर्थः, क्लेशानुभवः यस्य तादृशेन, कारावासक्लेशात् प्रतीकारमपश्यता।

(११) वीर्य्येति।—वीर्य्येण परुषाः कठिनाः, तीक्ष्णवीर्य्यवन्त इत्यर्थः। निर्विशथ भुङ्ध्वे, ("निर्वेशो भृतिभोगयोः" इत्यमरः)।

(१२) निर्दिष्टं कथितम्। किमिदं किमभिप्रायकम् एतेषां वचनमिति निश्चा-श्चितमिति यावत्।

समस्तवस्तुशोधनवेलायाम् (१३) एकस्य अनर्घ्यरत्नस्य अभावेन अस्मद्वधाय माणिक्यादानाय अस्मान् किल अशृङ्खलयन्' इति (१४)। श्रुतरत्नरत्नालोकनस्थानः (१५) अहम् 'इदं तदेव माणिक्यम्' इति निश्चित्य भूदेवदाननिमित्तां दुरवस्थाम् आत्मनो जन्म नामधेयं युष्मदन्वेषणपर्य्यटनप्रकारं चाभाष्य समयोचितैः संलापैः मैत्रीमकार्षम्। ततोऽर्द्धरात्रे तेषां मम च शृङ्खलबन्धनं निर्भिद्य तैः अनुगम्यमानो निद्रितस्य द्वाःस्थगणस्य आयुधजालमादाय पुररक्षकान् पुरतोऽभिमुखागतान् पटुपराक्रमलीलया अभिद्राव्य मानपालशिबिरं प्राविशम्। मानपालो निजकिङ्करेभ्यः मम कुलाभिमानवृत्तान्तं तत्कालीनं विक्रमञ्च निशम्य मामार्चयत्।

परेद्युः मत्तकालेन प्रेषिताः केचन पुरुषा मानपालम् उपेत्य 'मन्त्रिन्! मदीयराजमन्दिरे सुरङ्गया बहुधनम् अपहृत्य चौरवीरा भवदीयकटकं प्राविशन्, तान् अर्पय, नो चेन्महाननर्थः सम्भविष्यति' इति क्रूरतरं वाक्यमब्रुवन्। तदाकर्ण्य रोषारुणितनेत्रो मन्त्री—'लाटपतिः कः? तेन मैत्री का? पुनरस्य वराकस्य सेवया किं लभ्यम्?' इति तान् निरभर्त्सयत्। ते च मानपालेनोक्तं विप्रलापं(१६) मत्तकालाय तथा एव अकथयन्। कुपितोऽपि लाटपतिर्दोर्वीर्य्यगर्वेण अल्पसैनिकसमेतो योद्धुम् अभ्यगात्। पूर्वमेव कृतरणनिश्चयो मानी मानपालः मन्त्रयोधो

(१२) समस्तेति।—समस्तानां वस्तूनां हृतद्रव्याणां, शोधनं प्रत्यर्पणमित्यर्थः, तस्य वेलायां समये।

(१४) माणिक्यादानाय माणिक्यस्य तन्नामक अनर्घ्यरत्नविशेषस्य, आदानाय ग्रहणार्थम्। अशृङ्खलयन् शृङ्खलबद्धानकुर्वन्नित्यर्थः।

(१५) श्रुतेति।—श्रुतं रत्नरत्नस्य श्रेष्ठरत्नस्येत्यर्थः, आलोकनस्थानं येन तथोक्तः।

(१६) विप्रलापं विरुद्धवचनमित्यर्थः।

योद्धुकामो भूत्वा निःशङ्कं निरगात्। अहमपि सबहुमानं मन्त्रिदत्तातिबहुलतुरङ्गमोपेतं चतुरसारथिं रथञ्च दृढतरं कवचं मदनुरूपं चापञ्च विविधबाणपूर्णं तूणीरद्वयं रणसमुचितानि आयुधानि गृहीत्वा युद्धसन्नद्धो मदीयबलविश्वासेन रिपूद्धरणोद्युक्तं मन्त्रिणमन्वगाम्। परस्परमत्सरेण तुमुलसङ्गरकरम् (१७) उभयसैन्यमतिक्रम्य समुल्लसद्भुजाटोपेन (१८) बाणवर्षं तदङ्गे विमुञ्चन् अरातीन् प्राहरम्। ततोऽतिरयतुरङ्गमं मद्रथं तन्निकटं नीत्वा शीघ्रलङ्घनोपेततदीयरथः (१९) अहम् अरातेः शिरःकर्त्तनम् अकार्षम्। तस्मिन् निपतिते तदाऽवशिष्टसैनिकेषु पलायितेषु नानाविधहयगजादिवस्तुजातम् आदाय परमानन्दसन्ततो (२०) मन्त्री मम अनेकसंविधां सम्भावनाम् (२१) अकार्षीत्। मानपालप्रेषितात् तदनुचरात् एतम् अखिलमुदन्तम् आकर्ण्य सन्तुष्टमना राजा अभ्युद्गतो मदीयपराक्रमे विस्मयमानः समहोत्सवम् अमात्यबान्धवानुमत्या शुभदिने निजतनयां मह्यम् अदात्। ततो यौवराज्याभिषिक्तोऽहमनुदिनम् आराधितमहीपालचित्तो वामलोचनया अनया सह नानाविधं सौख्यमनुभवन् भवद्विरह-

---

(१७) परस्परमत्सरेण अन्योऽन्यविद्वेषेण। तुमुलसङ्गरकरं महासङ्ग्रामकरम्।

(१८) समुल्लसदिति।—समुल्लसता वृद्धिं गच्छता, भुजाटोपेन बाहुबलेन।

(१९) अतिरयतुरङ्गमम् अतिजवनाश्वम्। शीघ्रेति।—शीघ्रं द्रुतं यत्, लङ्घनम् उल्लम्फनं, तेन उपेतः प्राप्तः, तदीयः तत्सम्बन्धी, रथो येन तथाभूतः, उल्लम्फनेन सहसा तद्रथस्थ इत्यर्थः।

(२०) परमेति।—परमेण महता, आनन्देन सन्ततः पूर्ण इत्यर्थः। "सन्ततः" इत्यत्र "सन्नतः" इति पाठे—विनत इत्यर्थः। "सम्भृतः" इति वा पाठः।

(२१) अनेकसंविधाम् अनेकप्रकाराम्। सम्भावनां सम्माननाम्।

वेदनाशल्यसुलभवैक्लव्यहृदयः(२२)सिद्धादेशेन सुहृज्जनावलोकनफलं प्रदेशं (२३) महाकालनिवासिनः परमेश्वरस्य आराधनाय अद्य पत्नीसमेतः समागतोऽस्मि। भक्तवत्सलस्य गौरीपतेः कारुण्येन भवत्पदारविन्दसन्दर्शनानन्दसन्दोहो मया लब्धः" इति।

तन्निशम्य अभिनन्दितपराक्रमो राजवाहनः तन्निरपराधदण्डे दैवमुपालभ्य(२४) तस्मै क्रमेण आत्मचरितं कथयामास। तस्मिन्नवसरे पुरतः पुष्पोद्भवं विलोक्य ससम्भ्रमं निजनिटलतटस्पृष्टचरणाङ्गुलिम् उदञ्जलिमम् गाढमालिङ्ग्य आनन्दवाष्पसङ्कुलसम्फुल्ललोचनः, (२५)—"सौम्य! सोमदत्त! अयं स पुष्पोद्भवः" इति तस्मै तं दर्शयामास। तौ च चिरविरहदुःखं विसृज्य अन्योऽन्यालिङ्गनसुखम् अन्वभूताम्। ततः तस्यैव महीरुहस्य छायायाम् उपविश्य राजा सादरहासम् अभाषत—"वयस्य! भूसुरकार्य्यं करिष्णुः(२६) अहं 'मित्रगणो विदितार्थः सर्वथा अन्तरायं (२७) करिष्यति' इति निद्रितान् भवतः परित्यज्य निरगाम्।

(२२) भवदिति।—भवतो विरहेण या वेदना व्यथा, सा एव शल्यं मर्मनिखातमस्त्रं, तेन सुलभं वैक्लव्यं कातर्य्यं यत्र तादृशं हृदयं यस्य तथाभूतः।

(२३) सिद्धादेशेन कस्यचित् सिद्धस्य तपःसिद्धिं गतस्य मुनेरित्यर्थः, आदेशेन आज्ञया। सुहृज्जनेति।—सुहृज्जनस्य तवेति भावः, आलोकनमेव फलं यस्य तथाभूतं, प्रदेशं स्थानम्।

(२४) तदिति।—तस्य निरपराधे यो दण्डः कारावासादिरूपः तत्र। उपालभ्य तिरस्कृत्य।

(२५) निजेति।—निजेन निटलतटेन स्पृष्टाः चरणाङ्गुलयः, राजपुत्रस्येति भावः येन तथाभूतं, पादतलनिपतितमित्यर्थः। उदञ्जलिं बद्धाञ्जलिम्। आनन्देति।—आनन्दवाष्पेण सङ्कुले पूर्णे, सम्फुल्ले लोचने यस्य तथाभूतः।

(२६) अलं निरापूर्वकादेव कृञ इष्णुचा विधानेऽपि बाहुलकादत्र इष्णुच् समर्थनीयः।

(२७) अन्तरायं विघ्नम्।

तदनु प्रबुद्धो वयस्यवर्गः किमिति निश्चित्य मदन्वेषणाय कुत्र गतवान्? भवान् एकाकी क्व गन्ता?" इति। सोऽपि ललाट-तटचुम्बदञ्जलिपुटः (२८) सविनयं समालपत्।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते सोमदत्तचरितं नाम तृतीय उच्छ्वासः।

---

## अथ चतुर्थोच्छ्वासः।

### पुष्पोद्भवचरितम्।

"देव! महीसुरोपकाराय एव देवो गतवानिति निश्चित्यापि देवेन गन्तव्यं देशं निर्णेतुम् अशक्नुवानो मित्रगणः परस्परं वियुज्य दिक्षु देवमन्वेष्टुम् अगच्छत्। अहमपि देवस्य अन्वेषणाय महीमटन् कदाचित् अम्बरमध्यगतस्य अम्बरमणेः किरण-मसहिष्णुः एकस्य गिरितटमहीरुहस्य प्रच्छायशीतले तले उपाविशम्। मम पुरोभागे दिनमध्यसमये सङ्कुचितसर्वावयवां कूर्माकृतिं (१) मानुषच्छायां निरीक्ष्य उन्मुखो गगनतलात्

---

(२८) इति इत्युक्तः। सः पुष्पोद्भवः। ललाटेति।—ललाटतटं चुम्बत् स्पृशत्, अञ्जलिपुटं यस्य तथोक्तः, शिरसि बद्धाञ्जलिरित्यर्थः।

---

(१) दिनमध्येति।—दिनस्य मध्यसमये मध्यभागे, सङ्कुचिताः सर्वे अवयवाः यस्याः तादृशीम्, अत एव कूर्माकृतिं कमठाकाराम्। "शूर्पाकृतिम्" इत्यपपाठः।

महारयेण पतन्तं पुरुषं कश्चिदन्तराले एव (२) दयोपनतहृदयो-ऽहम् अवलम्ब्य शनैः अवनीतले निक्षिप्य दूरापातवीतसंज्ञं (३) तं शिशिरोपचारेण विबोध्य शोकातिरेकेण उद्गतवाष्पलोचनं तं भृगु-पतनकारणम् (४) अपृच्छम्। सोऽपि करकृहैः अश्रुकणानपनयन् अभाषत—'सौम्य! मगधाधिनाथामात्यस्य पद्मोद्भवस्य आत्म-सम्भवो (५) रत्नोद्भवो नामाहं वाणिज्यरूपेण (६) कालयवन-द्वीपम् उपेत्य कामपि वणिक्कन्यकां परिणीय तया सह प्रत्या-गच्छन् अम्बुधौ तीरस्य अनतिदूरे एव प्रवहणस्य भग्नतया सर्वेषु निमग्नेषु कथं-कथमपि दैवानुकूल्येन तीरभूमिम् अभिगम्य निजाङ्गनावियोगदुःखार्णवे प्लवमानः कस्यापि सिद्धतापसस्य आदेशादरेण षोड़शहायनानि (७) कथञ्चित् नीत्वा दुरवस्थापार-मनवेक्षमाणो गिरिपतनम् (८) अकार्षम्' इति।

तस्मिन्नेव अवसरे किमपि नारीकूजितम् अश्रावि—'न खलु समुचितमिदं यत् सिद्धादिष्टे पतितनयमिलने विरहम-सहिष्णुः वैश्वानरं (९) विशसि' इति। तन्निशम्य मनोविदितजनक-

(२) महारयेण महावेगेन। अन्तराले एव मध्ये एव।

(३) दूरापातेति।—दूरात् आपातः आपतनं, तेन वीता विनष्टा, संज्ञा चेतना यस्य तादृशम्।

(४) शिशिरोपचारेण शीतलप्रक्रियया। भृगुपतनेति।—भृगौ प्रपाते, ("प्रपातस्तुतटो भृगुः" इत्यमरः) पतनस्य कारणं हेतुम्।

(५) आत्मसम्भवः पुत्रः।

(६) वाणिज्यरूपेण वाणिज्यव्यवसायेन।

(७) हायनानि वत्सरान्।

(८) गिरिपतनं गिरेः पर्वतात् पतनं, मरणेच्छयेति भावः।

(९) सिद्धादिष्टे सिद्धेन मुनिना, आदिष्टे कथिते, अवश्यम्भाविनीति भावः। वैश्वानरम् अग्निम्।

भावं (१०) तमवादिषं—'तात ! भवते विज्ञापनीयानि बहूनि सन्ति। भवतु, पश्चात् अखिलम् आख्यातव्यम्, अधुना नारी-कूजितमनुपेक्षणीयं मया, क्षणमात्रम् अत्र भवता स्थीयताम्' इति। तदनु सोऽहं त्वरया किञ्चित् अन्तरमगमम्। तत्र पुरतो भयङ्करज्वालाकुलहुतभुगवगाहमानसाहसिकां (११) मुकुलिताञ्जलिपुटां (१२) वनितां काञ्चित् अवलोक्य ससम्भ्रमम् अनलादपनीय कूजन्त्या (१३) वृद्धया सह मत्पितुरभ्यर्णम् अभिगमय्य स्थविराम् अवोचं—'वृद्धे ! भवत्यौ कुत्रत्ये ? (१४) कान्तारे निमित्तेन केन दुरवस्था अनुभूयते ? कथ्यताम्' इति। सा सगद्गदम् अवादीत्—'पुत्र ! कालयवनद्वीपे कालगुप्तनाम्नो वणिजः कस्यचित् एषा सुता सुवृत्ता नाम रत्नोद्भवेन निजकान्तेन आगच्छन्ती, जलधौ भग्ने प्रवहणे, निजधात्र्या मया सह फलकम् एकम् अवलम्ब्य दैवयोगेन कूलमुपेता आसन्नप्रसवसमया कस्याञ्चिदटव्याम् आत्मजमसूत। मम तु मन्दभाग्यतया बाले वनमातङ्गेन गृहीते, मद्‌द्वितीया परिभ्रमन्ती, 'षोडशवर्षानन्तरं भर्तृपुत्रसङ्गमो भविष्यति' इति सिद्धवाक्यविश्वासात् एकस्मिन् पुण्याश्रमे तावन्तं समयं नीत्वा शोकम् अपारं सोढुमक्षमा समुज्ज्वलिते वैश्वानरे शरीरम् आहुतीकर्तुम् उद्युक्ता आसीत्' इति। तदाकर्ण्य निजजननीं ज्ञात्वा तामहं दण्डवत् प्रणम्य,

---

(१०) मम इति।—मनसा अन्तःकरणेन, विदितः ज्ञातः, जनकभावः पितृभावो यस्य तं, तमेव पितरं मन्यमान इति भावः।

(११) भयङ्करेति।—भयङ्करः ज्वालाकुलः शिखापूर्णः, यः हुतभुक् अग्निः, तत्र अवगाहमाना प्रविशन्ती, अत एव साहसिका ताम्।

(१२) मुकुलितेति।—मुकुलितं बद्धमित्ति यावत्, अञ्जलिपुटं यया तथोक्ताम्।

(१३) कूजन्त्या विलपन्त्या।

(१४) कुत्रत्ये कुत्र जाते, कुत आगते वा।

तस्मै मदुदन्तम् अखिलम् आख्याय, धात्रीभाषणफुल्लवदनं विस्मयविकसिताक्षं जनकम् अदर्शयम्। पितरौ तौ साभिज्ञानम् अन्योऽन्यं ज्ञात्वा मुदितान्तरात्मानौ विनीतं माम् अमन्दाश्रुवर्षेण अभिषिच्य, गाढमाश्लिष्य, शिरसि उपाघ्राय, कस्याश्चित् महीरुहच्छायायाम् उपाविशताम्। 'कथं निवसति महीवल्लभो राजहंसः?' इति जनकेन पृष्टोऽहं तस्य राज्यच्युतिं, त्वदीयजननं, सकलकुमारावाप्तिं, तव दिग्विजयारम्भं, भवतो मातङ्गानुयानम्, अस्माकं युष्मदन्वेषणकारणं सकलमभ्यधाम्। ततः तौ कस्यचिदाश्रमे मुनेः अस्थापयम्। ततो देवस्य अन्वेषणपरायणोऽहम् अखिलकार्य्यनिमित्तं वित्तं (१५) निश्चित्य, भवदनुग्रहात् लब्धस्य साधकस्य (१६) साहाय्यकरणदक्षं शिष्यगणं निष्पाद्य, विन्ध्यवनमध्ये पुरातनपट्टनस्थानानि उपेत्य (१७) विविधनिधिसूचकानां महीरुहाणामधो निक्षिप्तान् वसुपूर्णान् (१८) कलसान् सिद्धाञ्जनेन ज्ञात्वा, रक्षिषु परितः (१९) स्थितेषु खननसाधनैः उत्पाद्य, दीनारान् असङ्ख्यान् राशीकृत्य, तत्कालागतम् (२०)

(१५) अखिलेति।—अखिलानि समस्तानि, कार्य्याणि तेषां निमित्तं साधनभूतमित्यर्थः। वित्तं धनम्।

(१६) भवदिति।—भवतः अनुग्रहात् लब्धस्य प्राप्तस्य, साधकस्य मुनेरित्यर्थः।

(१७) निष्पाद्य नियुज्य, शिष्योभारवाहकः इति भावः। पुरातनेति।—पुरातनानि प्राक्तनानि, पट्टनानि नगराणि। उपेत्य प्राप्य।

(१८) विविधेति।—विविधानां निधीनां मूलनिहितद्रव्यविशेषाणां, सूचकाः प्रकाशकाः तेषां, सिद्धाञ्जनप्रभावेण तद्वृक्षदर्शनेनैव निधिस्थितिरनुमीयते इति भावः। वसुपूर्णान् धनपूरितान्।

(१९) सिद्धाञ्जनेन नयनदत्तामोघकज्जलविशेषेण। परितः समन्तात्।

(२०) खननसाधनैः अस्त्रविशेषैः, खनित्रैरित्यर्थः। दीनारान् सुवर्णमुद्राविशेषान्। तत्कालागतं तत्कालोपस्थितम्।

अनतिदूरं निवेशितं वणिक्कटकं (२१) कञ्चिदभ्येत्य, तत्र बलिनो बलीवर्दान् गोणीश्च क्रीत्वा अन्यद्रव्यमिषेण वसु तद्गोणी (२२)-सञ्चितं तैः (२३) उह्यमानं शनैः कटकमनयम्। तदधिकारिणा चन्द्रपालेन केनचित् वणिक्पुत्रेण विरचितसौहृदोऽहममुना एव साकम् उज्जयिनीम् उपाविशम्। मत्पितरौ अपि तां पुरीम् अभिगमय्य (२४) सकलगुणनिलयेन बन्धुपालनाम्ना चन्द्रपाल-जनकेन नीयमानो मालवनाथदर्शनं विधाय तदनुमत्या गूढवसति-मकरवम्। ततः काननभूमिषु भवन्तम् अन्वेष्टुम् उद्युक्तं मां परममित्रं बन्धुपालो निशम्य अवदत्—'सकलं धरणीतलम् अपारमन्वेष्टुम् अक्षमो भवान् मनोग्लानिं विहाय तूष्णीं तिष्ठतु। भवन्नायकावलोकनकारणं(२५)शुभशकुनं निरीक्ष्य कथयिष्यामि' इति। तल्लपितामृताश्वासितहृदयोऽहम् अनुदिनं तदुपकण्ठ-वर्त्ती कदाचित् इन्दुमुखीं नवयौवनावलीढावयवां नयनचन्द्रिकां बालचन्द्रिकां नाम तरुणीरत्नं वणिङ्मन्दिरलक्ष्मीं मूर्त्तामिव अवलोक्य तदीयलावण्यावधूतधीरभावो लतान्तबाणबाणलक्ष्य-ताम्(२६) अयासिषम्। चकितबालकुरङ्गलोचना साऽपि कुसुम-सायकसायकायमानेन कटाक्षवीक्षणेन माम् असकृत् निरीक्ष्य

(२१) वणिक्कटकं वणिगावासम्।

(२२) गोणीः धान्यादिवहनोपयोगिरज्जुनिर्मितपात्रविशेषान्, "बले" इति यावत् बङ्गभाषया प्रसिद्धिः।

(२३) तैः बलीवर्दैः।

(२४) अभिगमय्य नीत्वा।

(२५) भवदिति।—भवतः तव, नायकस्य प्रभोः, राजवाहनस्येत्यर्थः, अवलोकने कारणं हेतुभूतम्।

(२६) लतान्तेति।—लतान्तः कुसुमं, बाणो यस्य सः कामः इत्यर्थः, तस्य बाणलक्ष्यतां शरव्यताम्।

मन्दमारुतान्दोलिता लता इव अकम्पत। मनसा अभिमुखैः समाकुञ्चितैः रागलज्जान्तरालवर्त्तिभिः साङ्गवर्त्तिभिः ईक्षणविशेषैः निजमनोवृत्तिम् अकथयत्। चतुरगूढ़चेष्टाभिः अस्या मनोऽनुरागं सम्यक् ज्ञात्वा सुव्रसङ्गमोपायम् अचिन्तयम्। अन्यदा बन्धुपालः शकुनैः भवद्गतिं प्रेक्षिष्यमाणः, पुरोपान्तविहारवनं मया सह उपेत्य, कस्मिंश्चित् महीरुहे शकुन्तवचनानि शृण्वन् अतिष्ठत। अहम् उत्कलिकाविनोदपरायणो (२७) वनान्ते परिभ्रमन् सरोवरतीरे चिन्ताक्रान्तचित्तां दीनवदनां मन्मनोरथैकभूमिं बालचन्द्रिकां व्यलोकयम्। तस्याः ससम्भ्रमप्रेमलज्जाकौतुकमनोरमं लीलाविलोकनसुखम् अनुभवन् सुदत्या वदनारविन्दे विषसभावं मदनकदनखेदानुभूतं ज्ञात्वा तन्निमित्तं ज्ञास्यन् लीलया तदुपकण्ठम् उपेत्य अवोचिषं—'सुमुखि! तव मुखारविन्दस्य दैन्यकारणं कथय' इति। सा रहस्यसञ्जातविस्रम्भतया विहाय लज्जाभयं शनैः अभाषत।—

'सौम्य! मानसारो मालवाधीशो वार्द्धकस्य प्रबलतया निजनन्दनं दर्पसारम् उज्जयिन्याम् अभ्यषिञ्चत्। स कुमारः सप्तसागरपर्य्यन्तं महीमण्डलं पालयिष्यन् निजपैतृष्वसेयौ उद्दण्डकर्माणौ (२८) चण्डवर्मदारुवर्माणौ धरणीभरणे नियुज्य तपश्चरणाय राजगिरिम् अभ्यगात्। राज्यं सर्वम् असपत्नं (२९) शासति चण्डवर्मणि दारुवर्मा मातुलाग्रजन्मनोः शासनम् अति-

---

(२७) उत्कलिकेति।—उत्कलिका उत्कण्ठा, तस्या विनोदः अपनयनं, परम् अयनम् आश्रयः यस्य तथाभूतः, कान्ताविरहोत्कण्ठानिवारणार्थी इत्यर्थः।

(२८) पैतृष्वसेयौ पितुः स्वसुः पुत्रौ। उद्दण्डकर्माणौ अतिप्रचण्डशीलौ इत्यर्थः।

(२९) असपत्नं शत्रुरहितम्, अकण्टकमित्यर्थः।

क्रम्य पारदार्य्यपरद्रव्यापहरणादि दुष्कर्म्म कुर्वाणो मन्मथसमानस्य भवतो लावण्यायत्तचित्तां माम् एकदा विलोक्य, कन्यादूषणदोषं दूरीकृत्य, बलात्कारेण रन्तुम् उद्युङ्क्ते, तच्चिन्तया दैन्यमगच्छम्' इति। तस्या मनोगतं मयि रागोद्रेकं मन्मनोरथसिद्धान्तरायञ्च निशम्य, बाष्पपूर्णलोचनाम् आश्वास्य, दारुवर्म्मणो मारणोपायञ्च विचार्य्य वल्लभाम् अवोचं—'तरुणि! भवदभिलाषिणं दुष्टहृदयमेनं निहन्तुं मृदुरुपायः कश्चित् मया चिन्त्यते। 'यक्षः कश्चित् अधिष्ठाय बालचन्द्रिकां निवसति। तदाकारसम्पदाशाशृङ्खलितहृदयो (३०) यः सम्बन्धयोग्यः साहसिको रतिमन्दिरे तं यक्षं निर्जित्य तया एकसखीसमेतया मृगाक्ष्या संलापामृतसुखम् अनुभूय कुशली निर्गमिष्यति, तेन चक्रवाकसंशयाकारपयोधरा (३१) विवाहनीया' इति सिद्धेन एकेन अवादि इति पुरजनस्य पुरतो भवदीयैः सत्यवाक्यैः जनैः असकृत् कथनीयम्। तदनु दारुवर्म्मा वाक्यानि इत्थंविधानि श्रावं श्रावं तूष्णीं यदि भिया स्थास्यति, तर्हि वरं, यदि वा दौर्जन्येन त्वया सङ्गम् अङ्गीकरिष्यति तदा स भवदीयैः इत्थं वाच्यः,—'सौम्य! दर्पसारवसुधाऽधिपामात्यस्य भवतः अस्मन्निवासे साहसकरणम् अनुचितम्। पौरजनसाक्षिकं भवन्मन्दिरम् आनीतया अनया तोयजाक्ष्या (३२) सह क्रीड़न् आयुष्मान् यदि भविष्यसि तदा परिणीय तरुणीं मनोरथान् निर्विश' इति।

---

(३०) तदिति।—तस्या आकार एव सम्पत् तस्यां, या आशा लोभाभिलाषः, तया शृङ्खलितं बद्धं, हृदयं यस्य तथाभूतः।

(३१) चक्रवाकेति।—चक्रवाके संशयो येन तादृश आकारो ययोस्तथाभूतौ पयोधरौ यस्याः तथोक्ता।

(३२) तोयजाक्ष्या पद्मनेत्रया।

सोऽपि एतत् अङ्गीकरिष्यति। त्वं सखीवेशधारिणा मया सह तस्य मन्दिरं गच्छ, अहम् एकान्तनिकेतने मुष्टिजानुपादाघातैः तं रभसा निहत्य पुनरपि वयस्यामिषेण भवतीमनु (१३)निःशङ्कं निर्गमिष्यामि इति; तदेनमुपायम् अङ्गीकृत्य विगतसाध्वसलज्जा त्वं जनकजननीसहोदराणां पुरत आवयोः प्रेमातिशयम् आख्याय सर्वथा अस्मत्परिणयकारणे तान् अनुनयेः। तेऽपि वंश-सम्पल्लावण्याढ्याय यूने मह्यं त्वां दास्यन्ति एव। दारुवर्मणो मारणोपायं तेभ्यः कथयित्वा तेषाम् उत्तरमाख्येयं मह्यम्' इति। साऽपि किञ्चिदुत्फुल्लसरसिजानना माम् अब्रवीत्—'सुभग! क्रूरकर्माणं दारुवर्माणं भवान् एव हन्तुमर्हति। तस्मिन् हते सर्वथा युष्मन्मनोरथः फलिष्यति। एवं क्रियताम्। भवदुक्तं सर्वम् अहमपि तथा करिष्ये' इति माम् असकृत् विवृत्तवदना विलोकयन्ती मन्दं मन्दम् अगारम् अगात्। अहमपि बन्धु-पालम् उपेत्य शकुनज्ञात् तस्मात् 'त्रिंशद्दिवसानन्तरम् एव भवत्सङ्गः सम्भविष्यति' इति अशृणवम्। तदनु मदनुगम्यमानो बन्धुपालो निजावासं प्रविश्य मामपि निलयाय विससर्ज। मन्मायोपाय-वागुरापाशलग्नेन दारुवर्मणा रतिमन्दिरे रन्तुं समाहूता बाल-चन्द्रिका तं गमिष्यतीति दूतिकां मन्निकटम् अभिप्रेषितवती। अहमपि मणिनूपुरमेखलाकङ्कणकटकताटङ्कहारक्षौमकज्जलं वनितायोग्यं मण्डनजातं निपुणतया तत्तत्स्थानेषु निक्षिप्य सम्यगङ्गीकृतमनोज्ञवेशो वल्लभया सह तदागारद्वारोपान्तम् अगच्छम्। द्वाःस्थकथितास्मदागमनेन सादरं विहिताभ्युद्-गतिना (१४) तेन द्वारोपान्तनिवारिताशेषपरिवारेण मदन्विता

(१३) वयस्यामिषेण सखीच्छलेन। अनु पश्चात्।

(१४) विहिताभ्युद्गतिना कृतप्रत्युद्गमेन।

बालचन्द्रिका सङ्केतागारमनीयत। नगरव्याकुलां यक्षकथां परीक्षन्(३५)नागरिकजनोऽपि कुतूहलेन दारुवर्मणः प्रतीहार-भूमिम् अगमत्। विवेकशून्यमतिरसौ रागातिरेकेण रत्नखचित-हेमपर्य्यङ्के हंसतूलगर्भशयनम् आनीय तरुणीं,तस्मै मह्यं तमिस्रा-सम्यगनवलोकितपुम्भावाय (३६) मनोरमस्त्रीवेशाय च चामी-कारमणिमयमण्डनानि सूक्ष्माणि चित्रवस्त्राणि,कस्तूरिकामिलितं हरिचन्दनं, कर्पूरसहितं ताम्बूलं, सुरभीणि कुसुमानि इत्यादि ललितं वस्तुजातं समर्प्य मुहूर्त्तद्वयमात्रं हासवचनैः संलपन् अतिष्ठत्। ततो रागान्धतया सुमुख्यालिङ्गने मतिं व्यधत्त। रोषा-रुणितोऽहमिनं पर्य्यङ्कतलात् निःशङ्को निपात्य मुष्टिजानुपादा-घातैः प्राहरम्(३७)। नियुद्धरभसविकलम् अलङ्कारं पूर्ववत् मेल-यित्वा, भयकम्पितां नताङ्गीम् उपलालयन् (३८) मन्दिराङ्गणम् उपेतः साध्वसकम्पित इव उच्चैः अकूजं—'हा! बालचन्द्रिका-ऽधिष्ठितेन घोराकारेण यक्षेण दारुवर्मा निहन्यते सहसा, समागच्छत, पश्यत इमम्' इति। तदाकर्ण्य मिलिताः जनाः समुद्यद्बाष्पाः हाहा-निनादेन दिशो बधिरयन्तः, (३९) 'बाल-

(३५) नगरेति।—नगरेषु व्याकुलां प्रचारितामिति यावत्। परीक्षन् परीक्षमाण इत्यर्थः, शतृप्रत्ययः प्रामादिकः प्रयोगः।

(३६) तमिस्रेति।—तमिस्रया तामस्या रात्र्या हेतुना, ("तमिस्रा तामसी रात्रिः" इत्यमरः) सम्यक् स्पष्टम्, अनवलोकितः अपरिचितः, पुम्भावः पुरुषत्वं यस्य तादृशाय।

(३७) प्राहरं व्यताडयम्।

(३८) नियुद्धेति।—नियुद्धे बाहुयुद्धे, यो रभसः वेगः, ("रभसो वेगहर्षयोः" इत्यमरः) तेन विकलं विपर्य्यस्तम्। मेलयित्वा यथास्थानं विन्यस्य इत्यर्थः। उपलालयन् सान्त्वयन्।

(३९) बधिरयन्तः बधिराः कुर्वन्तः, पूरयन्त इत्यर्थः।

चन्द्रिकाम् अधिष्ठितं यक्षं बलवन्तं शृण्वन् अपि दारुवर्मा मदान्धः तामेव अयाचत, तदसौ स्वकीयेन कर्मणा निहतः, किं तस्य विलापेन ?' इति मिथो लपन्तः प्राविशन्। कोलाहले तस्मिन् चटुललोचनया सह नैपुण्येन महसा निर्गतो निजावासमगाम्। ततो गतेषु कतिपयदिनेषु पौरजनसमक्षं सिद्धादेशप्रकारेण विवाह्य ताम् इन्दुमुखीं पूर्वमङ्कल्पितान् सुरतविशेषान् यथेष्टम् अन्वभवम्। बन्धुपालशकुननिर्दिष्टे दिवसेऽस्मिन् निर्गत्य पुरात् बहिर्वर्त्तमानो नेत्रोत्सवकारि भवदवलोकनसुखम् अनुभवामि" इति।

एवं मित्रवृत्तान्तं निशम्य अम्लानमानसो राजवाहनः स्वस्य च सोमदत्तस्य च वृत्तान्तमस्मै निवेद्य, सोमदत्तं "महाकालेश्वराराधनानन्तरं भवद्वल्लभां सपरिवारां निजकटकं प्रापय्य आगच्छ" इति नियुज्य, पुष्पोद्भवेन सेव्यमानो भूस्वर्गायमाणम् (४०) अवन्तिकापुरं विवेश। तत्र "अयं मम स्वामिकुमारः" इति बन्धुपालादये बन्धुजनाय कथयित्वा, तेन राजवाहनाय बहुविधां सपर्य्यां कारयन् "सकलकलाकुशलो महीसुरवरः" इति पुरि प्रकटयन् पुष्पोद्भवोऽमुष्य राज्ञो मज्जनभोजनादिकम् अनुदिनं (४१) स्वमन्दिरे कारयामास।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते पुष्पोद्भवचरितं नाम चतुर्थ उच्छ्वासः।

(४०) सपरिवारां सपरिजनाम्। निजकटकं स्वावासस्थानम्। भुवि स्वर्गं इव आचरत् तत्।

(४१) सपर्य्यां सत्कारम्। महीसुरवरः ब्राह्मणश्रेष्ठः। प्रकटयन् प्रथयन्। मज्जनं स्नानम्। अनुदिनं दिवसे दिवसे।

## अथ पञ्चमोच्छ्वासः ।



## राजवाहनचरितम् ।

अथ मीनकेतनसेनानायकेन, मलयगिरिमहीरुहनिरन्तरावासिभुजङ्गमभुक्तावशिष्टेन (१) इव सूक्ष्मतरेण, धृतहरिचन्दनपरिमलभरेण (२) इव मन्दगतिना दक्षिणानिलेन वियोगिहृदयस्थं मन्मथानलम् उज्ज्वलयन्, सहकारकिसलयमकरन्दास्वादनरक्तकण्ठानां मधुकरकलकण्ठानां (३) काकलीकलकलेन दिक्चक्रं वाचालयन्, मानिनीमानसोत्कलिकाम् उपनयन्, (४) माकन्दसिन्धुवाररक्ताशोककिंशुकतिलकेषु कलिकाम् उपपादयन्, (५) मदनमहोत्सवाय रसिकमनांसि समुल्लासयन् वसन्तसमयः

(१) मीनकेतनसेनानायकेन कन्दर्पसेनापतिना। मलयेति।—मलयगिरेः महीरुहेषु वृक्षेषु, निरन्तरावासिभिः भुजङ्गमैः भुक्तावशिष्टेन भक्षितशेषेण ; भुजङ्गमा वायुभोजिन इति प्रसिद्धिः। "भुक्त" इत्यत्र "मुक्त" "मुक्ति" इति पाठद्वयं दृश्यते।

(२) सूक्ष्मतरेण अत्यल्पेन। धृतेति।—धृतः गृहीतः, हरिचन्दनानां कल्पद्रुमकुसुमानां, चन्दनविशेषाणां वा, परिमलभरः सौरभातिशयो येन तथोक्तेन।

(३) सहकारेति।—सहकाराणां चूतानां, किसलयस्य नवपल्लवस्य, मकरन्दस्य पुष्परसस्य च, आस्वादनेन रक्तः मधुर इत्यर्थः, कण्ठो येषां तादृशानाम्। मधुकरकलकण्ठानां भ्रमरकोकिलानाम्।

(४) दिक्चक्रं दिङ्मण्डलम्। मानिनीति।—मानिनीनां मानसेषु उत्कलिकाम् उत्कण्ठाम्, उपनयन् जनयन्।

(५) माकन्दः सहकारः। कलिका कोरकम्। उपपादयन् उत्पादयन्।

समाजगाम । तस्मिन् अतिरमणीये काले अवन्तिसुन्दरी नाम मानसारनन्दिनी प्रियवयस्यया बालचन्द्रिकया सह नगरोपान्तरम्योद्याने विहारोत्कण्ठया पौरसुन्दरीसमवायसमन्विता कस्यचित् चूतपोतकस्य छायाशीतले सैकततले गन्धकुसुमहरिद्राऽक्षतचीनाम्बरादिना नानाविधेन परिमलद्रव्यनिकरेण (६) मनोभवम् अर्चयन्ती रेमे । तत्र रतिप्रतिकृतिम् अवन्तिसुन्दरीं द्रष्टुकामः काम इव वसन्तसहायः पुष्पोद्भवसमन्वितो राजवाहनः तदुपवनं प्रविश्य तत्र तत्र मलयमारुतान्दोलितशाखानिरन्तरसमुद्भिन्नकिसलयकुसुमफलसमुल्लासितेषु रसालतरुषु कोकिलकीरालिमधुकराणाम् आलापान् श्रावं श्रावं (७) किञ्चित् विकसदिन्दीवरकह्लारकैरवराजीवराजिकेलिलोल-कलहंस-सारस-कारण्डव-चक्रवाक-चक्रवाल-कलरव-व्याकुल-विमल-शीतलसलिल-ललितानि सरांसि दर्शं दर्शम् (८) अमन्दलीलया ललनासमीपम् अवाप । बालचन्द्रिकया "निःशङ्कमित आगम्यताम्" इति हस्तसंज्ञया समाहूतो निजतेजोजितपुरुहूतो (९) राजवाहनः शशिोदर्या अवन्तिसुन्दर्या अन्तिकं समाजगाम । या वसन्तसहायेन

(६) चूतपोतकस्य क्षुद्राम्रवृक्षस्य । गन्धेति ।—गन्धश्च कुसुमानि च, अथवा—गन्धप्रधानानि कुसुमानि गन्धकुसुमानि । परिमलद्रव्यनिकरेण मनोहरगन्धवत्सामग्रीसमूहेन ।

(७) कोकिलेति ।—कोकिलानां पिकानां, कीरालीनां शुकपङ्क्तीनां, मधुकराणां भ्रमराणाम् । श्रावं श्रावं श्रुत्वा श्रुत्वा ।

(८) दर्शं दर्शं दृष्ट्वा दृष्ट्वा ।

(९) निजेति ।—निजं तेजः तेन जितः पुरुहूतः पुरन्दरः येन सः ।

समुत्सुकतया रतः केलिशालभञ्जिकाविधित्सया काञ्चन नारीविशेषं विरच्य आत्मनः क्रीड़ाकासारसारारविन्दसौन्दर्य्येण (१०) पादद्वयम्, उद्यानवनदीर्घिकामत्तमरालिकागमनरीत्या (११) लीलालसगतिविलासं, तूणीरलावण्येन जङ्घे, लीलामन्दिर-द्वारकदलीलालित्येन (१२) मनोज्ञमूरुयुगं, जैत्ररथचातुर्य्येण घनं जघनं, किञ्चिद्विकसल्लीलावतंसकह्लारकोरककोटरानुवृत्त्या (१३) गङ्गावर्त्तसनाभिं नाभिं, सौधारोहणपरिपाट्या वलित्रयं, मौर्वीमधुकरपङ्क्तिनीलिमलीलया (१४) रोमावलिं, पूर्णसुवर्ण-

(१०) वसन्तसहायेन कामेन। समुत्सुकतया समुत्कण्ठिततया, रतिविहीन-तया क्षणमपि स्थातुमक्षमतयेत्यर्थः। केलीति।—केलिशालभञ्जिका क्रीडापुत्तलिका, तस्याः विधित्सया विधानेच्छया। क्रीडाकासारः केलिसरः, ("कासारः सरसी सरः" इत्यमरः) तस्मिन् साराणाम् उत्कृष्टानाम्, अरविन्दानां कमलानां, सौन्दर्य्येण। "सारारविन्द" इत्यत्र "शारदारविन्द" इति वा पाठः।

(११) उद्यानेति।—उद्यानवने उपवने, या दीर्घिका वापी, तस्यां या मत्ता मधुपानमन्थरा, मरालिका राजहंसी, तस्याः गमनरीत्या मन्दमन्दगतिक्रमेण।

(१२) लीलेति।—लीलामन्दिरं केलिगृहं, तस्य द्वारे या कदली रम्भा, तस्याः लालित्येन सौन्दर्य्येण।

(१३) जैत्रेति।—जैत्रो जयसाधनं, यो रथः,("रथचक्रम्" इति पाठान्तरं) तस्य चातुर्य्येण नैपुण्येन, विलासेनेत्यर्थः। किञ्चिदिति।—किञ्चित् ईषत्, विकसत् लीलाऽवतंसकह्लारं लीलाकर्णभूषणरक्तोत्पलं, तस्य कोरकः कलिका, तस्य कोटरं विलं, तस्य अनुवृत्त्या अनुक्रमेण।

(१४) गङ्गेति।—गङ्गाया यः आवर्त्तः तस्य सनाभिः सहोदरः, समान इत्यर्थः, तादृशम्। सौधेति।—सौधेषु हर्म्येषु, यत् आरोहणम् (आरुह्यते अनेनेति व्युत्पत्त्या) सोपानमित्यर्थः, तस्य परिपाट्या रचनाक्रमेण। मौर्वीति।—मौर्वी शिञ्जिनी, या मधुकराणां पङ्क्तिः तस्याः नीलिमा नीलत्वं, तस्य लीलया विलासेन।

कलसशोभया कुचद्वन्द्वं, लतामण्डपसौकुमार्य्येण बाहू, जयशङ्खाभिख्यया (१५) कण्ठं, कामिकर्णपूरसहकारपल्लवरागेण प्रतिबिम्बीकृतबिम्बं रदनच्छदं, बाणायमानपुष्पलावण्येन (१६) शुचिस्मितम्, अग्रदूतिकाकलकण्ठिकाकलालापमाधुर्य्येण (१७) वचनजातं, सकल-सैनिकनायक-मलयमारुत-सौरभ्येण निश्वास-पवनं, जयध्वजमीनदर्पेण (१८) लोचनयुगलं, चापयष्टिश्रिया भ्रूलते, प्रथमसुहृदः सुधाकरस्य अपनीतकलङ्कया कान्त्या वदनं, लीलामयूरबर्हभङ्ग्या केशपाशञ्च विधाय समस्तमकरन्दकस्तूरिका-सम्मितेन (१९) मलयजरसेन प्रक्षाल्य कर्पूरपरागेण संमृज्य निर्मिता इव रराज। सा मूर्त्तिमतीव लक्ष्मीः मालवेशकन्यका स्वेनैवाराध्यमानं सङ्कल्पितवरप्रदानाय (२०) आविर्भूतं मूर्त्तिमन्तं मन्मथमिव तम् आलोक्य मन्दमारुतान्दोलिता लता

(१५) जयेति।—जयशङ्खस्य अभिख्यया शोभया ("अभिख्या नाम-शोभयोः" इत्यमरः)।

(१६) प्रतिबिम्बीकृतेति।—प्रतिबिम्बीकृतम् अनुकृतं, बिम्बं तदाख्यं फलं येन तादृशं, रदनच्छदम् ओष्ठम्। बाणेति।—बाणायमानं बाणः शरः, कौसुम इति भावः, तद्वदाचरत् यत् पुष्पं तस्य लावण्येन।

(१७) अग्रेति।—अग्रदूतिका श्रेष्ठदूती, या कलकण्ठिका कोकिला, तस्याः कलः मधुरास्फुटः, यः आलापः तस्य माधुर्य्येण।

(१८) जयध्वजः जयचिह्नं ध्वजः केतुरेव, मीनः तस्य दर्पेण अहङ्कारेण, विलासेनेति भावः।

(१९) लीलामयूरस्य क्रीडाशिखिनः, बर्हः कलापः, तस्य भङ्ग्या लीलया। समस्तेति।—समस्ताभिः निखिलाभिः, मकरन्दाः पुष्परसाः, कस्तूरिकाश्च ताभिः सम्मितेन संवलितेन।

(२०) आराध्यमानं सेव्यमानम्, अर्च्यमानमित्यर्थः। सङ्कल्पितेति।—सङ्कल्पितः वाञ्छितः, यो वरः तस्य प्रदानाय।

इव मदनावेशवती चकम्पे। तदनु क्रीड़ाविश्रम्भात् निवृत्ता लज्जया कानि कानि अपि भावान्तराणि व्यधत्त (२१)। "ललनाजनं सृजता विधात्रा नूनमेषा घुणाक्षरन्यायेन(२२) निर्मिता; नो चेत् अजभूः (२३) एवंविधनिर्माणनिपुणो यदि स्यात्, तर्हि तत्समानलावण्याम् अन्यां तरुणीं किं न करोति ?" इति सविस्मयानुरागं विलोकयतः तस्य समक्षं स्थातुं लज्जिता सा किञ्चित् सखीजनान्तरितगात्रा तन्नयनाभिमुखैः किञ्चिदाकुञ्चितैः अञ्चितभ्रूलतैः अपाङ्गवीक्षितैः आत्मनः कुरङ्गस्य आनायमानलावण्यं (२४) राजवाहनं विलोकयन्ती अतिष्ठत्। सोऽपि तस्याः तदा उत्पादितभावरसानां सामग्र्या (२५) लब्धबलस्य इव विषमशरस्य शरव्यायमाणमानसो बभूव। सा मनसि इत्थम् अचिन्तयत्— "अनन्यसाधारणसौन्दर्य्येण अनेन कस्यां पुरि भाग्यवतीनां तरुणीनां लोचनोत्सवः क्रियते !! पुत्ररत्नेन अमुना पुरन्ध्रीणां पुत्र-

(२१) व्यधत्त आविष्कृतवती।

(२२) घुणाक्षरेति।—घुणो नाम काष्ठकीटविशेषः, तेन काष्ठं क्षयमाणं क्षयमाणं कदाचित् अक्षराकारमेकं काष्ठखण्डम् आविष्क्रियते, स एव घुणाक्षरन्याय उच्यते तेन, ललनाकुलस्य अनवरतनिर्माणेन दैवात् ईदृशी रमणी विधातुर्हस्तात् निर्गलितेति भावः।

(२३) अजभूः ब्रह्मा।

(२४) कुरङ्गस्य मृगविशेषस्य। आनायमानलावण्यम् आनायः जालं, स इव आचरतीति (क्यङ् शानच्) तादृशं लावण्यं सौन्दर्य्यं यस्य तादृशम्, ("आनायः पुंसि जालं स्यात्" इत्यमरः); यथा कुरङ्गो जालपतितो तत् नातिक्रमितुं शक्नोति तथा सोऽपि राजपुत्रमिति भावः।

(२५) तदा तस्मिन् समये, उत्पादितानां प्रकटितानां, भावानां विकारविशेषाणां, ("निर्विकारात्मके चित्ते भावः प्रथमविक्रिया" इत्यालङ्कारिकाः) रसानां शृङ्गाराभिलाषाणां, सामग्र्या समवायेन।

वतीनां सीमन्तिनीनां का नाम सीमन्तमौक्तिकीक्रियते!! का अस्य देवी? किमत्र आगमनकारणम् अस्य? मन्मथो माम् अपहसितनिजलावण्यम् एनं विलोकयन्तीम् असूयया इव अतिमात्रं मदनन् निजनाम सान्वयं (२६) करोति। किं करोमि? कथमयं ज्ञातव्यः?" इति। ततो बालचन्द्रिका तयोः इतरेतररागवृत्तिं भावविवेकैः (२७) ज्ञात्वा कान्तासमाजसन्निधौ राजनन्दनोदन्तस्य सम्यगाख्यानम् अनुचितमिति लोकसाधारणैः वाक्यैः अभाषत—"भर्तृदारिके! अयं सकलकलाप्रवीणो देवतासान्निध्यकरण आहवनिपुणो (२८) भूसुरकुमारो मणिमन्त्रौषधज्ञः परिचर्य्यार्हो भवत्या पूज्यताम्" इति। तदाकर्ण्य निजमनोरथम् अनुवदन्त्या बालचन्द्रिकया सन्तुष्टान्तरङ्गा तरङ्गावली मन्दानिलेन इव सङ्कल्पजेनाकुलीकृता राजकन्या जितमारं (२९) कुमारं समुचितासनासीनं विधाय, सखीहस्तेन शस्तेन गन्धकुसुमाक्षतघनसारताम्बूलादिना नानावस्तुनिचयेन पूजां तस्मै कारयामास।

राजवाहनोऽपि एवम् अचिन्तयत्—"नूनमेषा पूर्वजन्मनि मे जाया यज्ञवती, (३०) नो चेत् एतस्याम् एवंविधोऽनुरागो

(२६) निजनाम स्वं मन्मथेति नाम, सान्वयम् अन्वर्थम्।

(२७) इतरेतररागवृत्तिम् अन्योऽन्यानुरागप्रसरम्। भावविवेकैः अभिप्रायाभिनिवेशैः।

(२८) देवतेति।—देवतानां सान्निध्यं क्रियते अनेनेति तथोक्तः, मन्त्रप्रभावेण देवताऽऽविर्भावकारक इत्यर्थः। आहवनिपुणः सङ्ग्रामकुशलः।

(२९) सन्तुष्टान्तरङ्गा सन्तुष्टचित्ता। सङ्कल्पजेन कामेन। जितमारं सौन्दर्य्येण कामजयिनमित्यर्थः।

(३०) साम्बनामनृपतेर्भार्य्या यज्ञवती जन्मान्तरे आसीत्; तत्कथा अनुपदं स्वयं स्फुटयिष्यते।

मन्मनसि न जायेत। शापावसानसमये तपोनिधिदत्तं जातिस्मरत्वम् आवयोः समानमेव, तथाऽपि कालजनितविशेषसूचकवाक्यैः अस्या ज्ञानमुत्पादयिष्यामि"। तस्मिन् एव समये कोऽपि मनोरमो राजहंसः केलिविधित्सया तदुपकण्ठम् (३१) अगमत्। समुत्सुकया राजकन्यया मरालग्रहणे नियुक्तां बालचन्द्रिकां समवलोक्य "समुचितो वाक्यावसर एषः" इति सम्भाषणनिपुणो राजवाहनः सलीलमलपत्—"सखि! पुरा शाम्बो नाम कश्चित् महीवल्लभो मनोवल्लभा मनोवल्लभया सह विहारवाञ्छया कमलाकरम् अवाप्य तत्र कोकनदकदम्बसमीपे (३२) निद्राधीनमानसं राजहंसं शनैः गृहीत्वा बिसगुणेन तस्य चरणयुगलं निगडयित्वा, कान्तामुखं सानुरागं विलोकयन् मन्दस्मितविकसितकपोलमण्डलः ताम् अभाषत—'इन्दुमुखि! मया बद्धो मरालः शान्तो मुनिवदास्ते। स्वेच्छयाऽनेन गम्यताम्' इति। सोऽपि राजहंसः शाम्बम् अशपत्—'महीपाल! यत् अस्मिन् अम्बुजषण्डे अनुष्ठानपरायणतया परमानन्देन तिष्ठन्तं नैष्ठिकं (३३) माम् अकारणं राज्यगर्वेण अवमानितवानसि, तदेतत्पाप्मना रमणीविरहसन्तापम् अनुभव' इति। विषण्णवदनः शाम्बो जीवनेश्वरीविरहमसहिष्णुर्भूमौ दण्डवत् प्रणम्य सविनयमभाषत—'महाभाग! यदज्ञानेन अकरवं तत् क्षमस्व' इति। स तापसः करुणाकृष्टचेताः तम् अवदत्

(३१) तदुपकण्ठ तत्समीपम।

(३२) कोकनदेति।—कोकनदानां रक्तोत्पलानां, कदम्बः समूहः, तस्य समीपे।

(३३) अम्बुजेति।—अम्बुजानां पद्मानां, षण्डः कदम्बः तस्मिन्, पद्मसमूहसमीपे इत्यर्थः, ("अब्जादिकदम्बे षण्डमस्त्रियाम्" इत्यमरः)। अनुष्ठानपरायणतया परमात्मध्यानासक्ततयेत्यर्थः। नैष्ठिकं यावज्जीवब्रह्मचारिणम्। (निष्ठा मरणं, तत्कालपर्यन्तमिन्द्रियनिग्रहरूपं व्रतं चरतीति ठक् नैष्ठिकः)।

—'राजन्! इह जन्मनि भवतः शापफलाभावो भवतु, मद्वचनस्य अमोघतया भाविनि जनने शरीरान्तरं गतायाः अस्याः (३४) सरसिजाक्ष्या रसेन (३५) रमणो भूत्वा मुहूर्त्तद्वयं मच्चरणयुगलबन्धनकारितया मासद्वयं शृङ्खलानिगड़ितचरणो रमणीवियोगविषादम् अनुभूय पश्चादनेककालं वल्लभया सह राज्यसुखं लभस्व' इति। तदनु जातिस्मरत्वमपि तयोः अन्वगृह्णात्; तस्मात् मरालबन्धनं न करणीयं त्वया" इति। साऽपि राजदारिका तद्वचनाकर्णनाभिज्ञातस्वपुरातनजननवृत्तान्ता "नूनमयं मत्प्राणवल्लभः" इति मनसा जानती रागपल्लवितमानसा (३६) समन्दहासम् अवोचत्—"सौम्य! पुरा शाम्बो यज्ञवतीसन्देशपरिपालनाय (३७) तथाविधं हंसबन्धनम् अकार्षीत्। तथा हि, लोके पण्डिता अपि दाक्षिण्येन (३८) अकार्य्यं कुर्वन्ति" इति।

कन्याकुमारौ एवम् अन्योऽन्यपुरातनजननामधेये परस्परज्ञानाय साभिज्ञम् (३९) उक्त्वा मनोजरागपूर्णमानसौ बभूवतुः। तस्मिन् अवसरे मालवेन्द्रमहिषी परिजनपरिवृता दुहितृकेलिविलोकनाय तं देशम् अवाप। बालचन्द्रिका तु तां दूरतो विलोक्य ससम्भ्रमं रहस्यनिर्भेदभिया हस्तसंज्ञया पुष्पोद्भवसेव्यमानं राजवाहनं वृक्षवाटिकाऽन्तरितगात्रम् अकरोत्। सा

(३४) शरीरान्तरं देहान्तरं, गतायाः अस्याः मत्प्रेयस्याः।

(३५) रसेन अनुरागेण।

(३६) रागपल्लवितमानसा अनुरागपूर्णमानसा।

(३७) यज्ञवतीति।—यज्ञवती शाम्बस्य राज्ञः महिषी, तस्याः सन्देशः वचनं, तस्य परिपालनाय परिरक्षणाय।

(३८) दाक्षिण्येन स्त्रीणां प्रीणनहेतुना इत्यर्थः।

(३९) साभिज्ञं साभिज्ञानमित्यर्थः।

मानसारमहिषी सखीसमेताया दुहितुः नानाविधां विहारलीला-मनुभवन्ती क्षणं स्थित्वा दुहित्रा समन्विता निजागारगमनाय उद्युक्ता बभूव। मातरम् अनुगच्छन्ती अवन्तिसुन्दरी—"राज-हंसकुलतिलक! विहारवाञ्छया केलिवने मदन्तिकमागतं भवन्तम् अकाण्डे एव विसृज्य मया अनुचितमपि जनन्यनुगमनं क्रियते, तदनेन भवन्मनोऽनुरागोऽन्यथा मा भूत्" इति मरालमिव कुमारमुद्दिश्य समुचितालापकलापं वदन्ती, पुनः पुनः परिवृत्य दीननयना वदनं विलोकयन्ती निजमन्दिरम् अगात्। तत्र हृदयवल्लभकथाप्रसङ्गे बालचन्द्रिकाकथिततदन्वयनामधेया,(४०) मन्मथबाणपतनव्याकुलमानसा, विरहवेदनया दिने दिने बहुल-पक्षशशिकला इव क्षामक्षामा (४१) आहारादिसकलव्यापारं परिहृत्य रहस्यमन्दिरे मलयजरसक्षालितपल्लवकुसुमकल्पित-तल्पतलायत्ततनुलता बभूव। तत्र तथाविधाम् अवस्थाम् अनु-भवन्तीं मन्मथानलसन्तप्तां सुकुमारीं कुमारीं निरीक्ष्य खिन्नो वयस्यागणः काञ्चनकलशसञ्चितानि हरिचन्दनोशीरघनसार-मिलितानि तदभिषेककल्पितानि सलिलानि, विसतन्तुमयानि वासांसि च, नलिनीदलमयानि तालवृन्तानि च सन्तापहरणानि बहूनि सम्पाद्य तस्याः शरीरम् अशिशिरयत् (४२)। तदपि शीतलोपचरणं सलिलमिव तप्ततैले, तदङ्गे दहनमिव समन्ता-दाविश्चकार। किंकर्त्तव्यतामूढां विषण्णां बालचन्द्रिकाम् ईषदुन्मीलितेन कटाक्षवीक्षितेन वाष्पकणाकुलेन विलोक्य, विर-

(४०) बालचन्द्रिकेति।—बालचन्द्रिकया कथिते तस्य राजकुमारस्य, अन्वय-नामधेये कुलनामनी यस्या इति तथोक्ता।

(४१) बहुलेति।—बहुलपक्षे कृष्णपक्षे, या शशिकला सेव। क्षामक्षामा अतिक्षीणा।

(४२) अशिशिरयत् शीतलीचकार।

हानलोष्मनिःश्वासग्लपिताधरया नताङ्ग्या शनैः सगद्गदं व्यलापि —"प्रियसखि! कामः कुसुमायुधः पञ्चबाण इति नूनमसत्यम् उच्यते। इयमहम् अयोमयैः असङ्ख्यैः इषुभिः अनेन हन्ये। सखि! चन्द्रमसं बाडवानलात् अतितापकरं मन्ये; यदस्मिन् अन्तः-प्रविशति शुष्यति पारावारः, सति निर्गते (४३)तदा एव वर्द्धते। दोषाकरस्य दुष्कर्म किं वर्ण्यते मया? यदनेन निजसोदर्य्याः पद्मालयायाः गेहभूतमपि(४४)कमलं हन्यते। विरहानलसन्तप्त-हृदयस्पर्शेन नूनम् उष्णीकृतः स्वल्पीभवति मलयानिलः। नव-पल्लवकल्पितं तल्पम् (४५) इदम् अनङ्गाग्निशिखापटलम् इव सन्तापं तनोः तनोति। हरिचन्दनमपि पुरा निजयष्टिसंश्लेष-वदुरगरदनलिप्तोल्वणगरलसङ्कलितम् इव (४६) तापयति शरी-रम्; तस्मादलमलम् आयासेन शीतलोपचारे। लावण्य-जितमन्मथो राजकुमार एव अगदङ्कारो(४७)मन्मथज्वरापहरणे, सोऽपि लब्धुमशक्यो मया, किं करोमि?" इति। बालचन्द्रिका मनोजज्वरावस्थापरमकाष्ठां गतां कोमलाङ्गीं तां राजवाहन-लावण्याधीनमानसाम् अनन्यशरणाम् अवेक्ष्य आत्मनि अचिन्त-यत्—"कुमारः सत्वरमानेतव्यो मया,नो चेदेनां स्मरणीयां गतिं

(४३) अस्मिन् चन्द्रमसि, अन्तः जलमध्ये, प्रविशति सति। पारावारः समुद्रः। निर्गते जलमध्यात् बहिर्गते, उदिते सति इत्यर्थः, चन्द्रमसीति शेषः।

(४४) दोषाकरस्य चन्द्रमसः। दुष्कर्म दुष्कार्य्यम्। पद्मालयायाः लक्ष्म्याः; ("लक्ष्मीः पद्मालया पद्मा" इत्यमरः)। गेहभूतमपि निवासस्थानमपि।

(४५) तल्पं शय्या, ("तल्पं शय्याऽट्टदारेषु" इत्यमरः)।

(४६) निर्जितेति।—निजयष्टेः निजाश्रयस्य तरुकाण्डस्य, संश्लेषवन्तः संसर्गिणः, ये उरगाः पन्नगाः, तेषां रदनेषु दन्तेषु, लिप्तं स्थितं, यत् उल्वणम् उत्कटं, गरलं हलाहलं, तेन सङ्कलितमिव सम्मिश्रितमिवेत्यर्थः।

(४७) अगदङ्कारः रोगप्रतिकारकः, चिकित्सक इति यावत्।

नेष्यति मीनकेतनः। तत्र उद्याने कुमारयोः अन्योऽन्यावलोकनवेलायाम् असमसायकः (४८) समं मुक्तसायकोऽभूत्; तस्मात् कुमारानयनं सुकरम्"। ततोऽवन्तिसुन्दरीरक्षणाय समयोचितकरणीयचतुरं सखीगणं नियुज्य राजकुमारमन्दिरम् अवाप। पुष्पबाणबाणतूणीरायमाणमानसोऽनङ्गतप्तावयवसम्पर्कपरिम्लानपल्लवशयनम् अधिष्ठितो राजवाहनः प्राणेश्वरीम् उद्दिश्य सह पुष्पोद्भवेन संलपन्, आगतां प्रियवयस्याम् आलोक्य पादमूलम् अन्वेषणीया (४९) लता इव बालचन्द्रिका आगतेति सन्तुष्टमनाः, निटलतटमण्डनीभवदम्बुजकोरकाकृतिलसदञ्जलिपुटाम् (५०) "इतो निषीद"(५१) इति निर्दिष्टसमुचितासनासीनाम् अवन्तिसुन्दरीप्रेषितं सकर्पूरं ताम्बूलं विनयेन ददतीं तां कान्तावृत्तान्तम् अपृच्छत्। तया सविनयम् अभाणि—"देव! क्रीडाभवने भवदवलोकनकालम् आरभ्य मन्मथमथ्यमाना पुष्पतल्पादिषु तापशमनम् अलब्धवती, वामना इव (५२) उन्नततरुफलम् अलभ्यं त्वदुरःस्थलालिङ्गनसौख्यं आशान्धतया लिप्सुः सा स्वयमेव पत्रिकाम् आलिख्य 'वल्लभाय एनाम् अर्पय' इति मां नियुक्तवती"। राजकुमारः पत्रिकां ताम् आदाय पपाठ—

(४८) असमसायकः विषमशरः, कामः इत्यर्थः, पञ्चशर इति यावत्।

(४९) अन्वेषणीया अन्वेष्टव्या, या अन्विष्यते सैवेत्यर्थः।

(५०) निटलेति।—निटलतटस्य ललाटदेशस्य, मण्डनीभवत् अलङ्कारीभवत्, यत् अम्बुजकोरकं पद्मकलिका, तस्य आकृतिरिव लसत् शोभमानम्, अञ्जलिपुटं यस्याः तां, शिरसि कृताञ्जलिपुटामित्यर्थः।

(५१) निषीद उपविश।

(५२) वामना इव खर्वाकृतिमनुष्या इव।

"सुभग! कुसुमसुकुमारं जगदनवद्यं निरीक्ष्य ते रूपम्।
मम मानसमभिलषति त्वं चित्तं कुरु तथा मृदुलम्॥"(५३)

इति पठित्वा सादरम् अभाषत—"सखि! छायावत् माम् अनुवर्त्तमानस्य पुष्पोद्भवस्य वल्लभा त्वमेव तस्या मृगीदृशो बहिश्चराः प्राणा इव वर्त्तसे। त्वच्चातुर्य्यम् अस्यां क्रियालतायाम् आलवालम् अभूत्। यत्तवाभीष्टं, येन क्रियामनोरथः (५४) फलिष्यति, तदखिलं करिष्यामि। मताङ्ग्या मन्मनःकाठिन्यम् आख्यातम्; यदा केलिवने कुरङ्गनयनालोचनपथम् अवर्त्ति, (५५) तदैव अपहृतमदीयमानसा सा स्वं मन्दिरम् अगात्। सा स्वचेतसो माधुर्य्यकाठिन्ये स्वयमेव जानाति। दुष्करः कन्याऽन्तःपुरप्रवेशः, तदनुरूपम् उपायम् उपपाद्य श्वः परश्वो वा नताङ्गीं सङ्गमिष्यामि। (५६) मद्वृत्तान्तम् एवम् आख्याय शिरीषकुसुमसुकुमाराया यथा शरीरबाधा न जायेत, तथाविधम् उपायम् आचर" इति। बालचन्द्रिकाऽपि तस्य प्रेमगर्भितं वचनम् आकर्ण्य सन्तुष्टा कन्यापुरम् अगच्छत्।

(५३) सुभगेति।—सुभग! हे वल्लभ! कुसुमसुकुमारं जगति अनवद्यम् अनिन्द्यं, सर्वजनमनोहरमिति यावत्, ते तव, रूपं निरीक्ष्य मम मानसम् अभिलषति, तव रूपं त्वां वेति शेषः; अत एव त्वं, यथा तव रूपं मृदुलं कोमलं, तथा तादृक्, तव चित्तमपि मृदुलं कुरु, मां प्रति सदयमानसो भव इत्यर्थः। अत्र वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, प्रथमपादे च लुप्तोपमा, अनयोरङ्गाङ्गिभावेन सङ्करः।

(५४) क्रियेति।—क्रियासु तत्तत्कामव्यापारेषु, मनोरथः मनोऽभिलाषः; यद्वा—क्रियया आलिङ्गनादिदैहिकव्यापारेण युक्तः, मनोरथः कामः।

(५५) ऋतेः लृदित्त्वेनाङ्-विधानेन अङ्गस्य परस्मैपदमात्रविषयत्वात् लुङि परस्मैपदमिति द्रष्टव्यम्।

(५६) संपूर्वकस्य गमेरिह सकर्मकत्वेन नात्मनेपदम्।

राजवाहनोऽपि यत्र हृदयवल्लभाऽवलोकनसुखम् अलभत तत् उद्यानं विरहवेदनाविनोदाय पुष्पोद्भवसमन्वितो जगाम। तत्र चकोरलोचनाऽवचितपल्लवकुसुमनिकुरम्बं (५७) महीरुहसमूहं, शरदिन्दुमुख्या मन्मथसमाराधनस्थानञ्च, नताङ्गीपदपङ्क्तिचिह्नितं शीतलसैकततलञ्च, सुदतीभुक्तमुक्तं (५८)माधवीलतामण्डपान्तरपल्लवतल्पञ्च विलोकयन्, ललनातिलकविलोकनवेलाजनितशेषाणि स्मारं स्मारं, (५९) मन्दमारुताकम्पितानि नवचूतपल्लवानि मदनाग्निशिखा इव चकितचकितो दर्शं दर्शं, मनोजकर्णजपानाम् इव (६०) कोकिलकीरमधुकराणां क्वणितानि श्रावं श्रावं, मारविकारेण (६१) क्वचिदपि अवस्थातुम् असहिष्णुः परिबभ्राम। तस्मिन् अवसरे धरणीसुर एकः सूक्ष्मचित्रनिवसनः (६२) स्फुरन्मणिकुण्डलमण्डितो मुण्डितमस्तकमानवसमेतः चतुरवेशमनोरमो यदृच्छया समागतः समन्ततोऽभ्युल्लसत्तेजोमण्डलं राजवाहनम् आशीर्वादपूर्वकं ददर्श। राजा सादरं "को भवान्? कस्यां विद्यायां निपुणः?" इति तं पप्रच्छ।

(५७) चकोरलोचनया चकोराक्ष्या प्रियया, अवचितानि पल्लवकुसुमनिकुरम्बाणि पत्रपुष्पसमूहानि यस्य तथाविधम्।

(५८) महीरुहसमूहं वृक्षसङ्घातम्। सुदतीति।—सु शोभना दन्ता यस्याः सा (दन्तशब्दस्य ददादेशः) तया आदौ भुक्तं पश्चात् मुक्तं, (स्नातानुलिप्तवत्समासः)।

(५९) ललनेति।—ललनातिलकम् अवन्तीसुन्दरी, तस्या विलोकनवेलायां दर्शनावसरे, जनितशेषाणि प्रकटितावशिष्टानि। स्मारं स्मारं स्मृत्वा स्मृत्वा।

(६०) मनोजेति।—मनोजस्य कामस्य, कर्णजपाः कर्णे जपन्तीति तथोक्ताः तेषामिव, कामस्य दुर्मन्त्रिणामिवेत्यर्थः।

(६१) मारविकारेण कामविकारेण।

(६२) धरणीसुरः ब्राह्मणः। सूक्ष्मेति।—सूक्ष्मं चित्रं निवसनं वस्त्रं यस्य तथाभूतः।

स च "विद्येश्वरनामधेयोऽहम् ऐन्द्रजालिकविद्याकोविदो विविधदेशेषु राजमनोरञ्जनाय भ्रमन् उज्जयिनीम् अद्य आगतोऽस्मि" इति शशंस। पुनरपि राजवाहनं सम्यक् आलोक्य "अस्यां लीलाऽवनौ पाण्डुरतानिमित्तं किम् ?" इति साभिप्रायं विहस्य अपृच्छत्। पुष्पोद्भवश्च ऐन्द्रजालिकचातुर्य्यं निजकार्य्यकरणं तर्कयन् एनम् आदरेण बभाषे—"ननु सतां सख्यस्य आभाषणपूर्वतया चिरं रुचिरभाषणो (६३) भवान् अस्माकं प्रियवयस्यो जातः, सुहृदाम् अकथ्यञ्च किमस्ति ? केलिवने अस्मिन् वसन्तमहोत्सवागतायाः मालवेन्द्रसुतायाः राजनन्दनस्य अस्य चाकस्मिकसन्दर्शनेन अन्योऽन्यानुरागातिरेकः समजायत। सततसम्भोगसिद्ध्युपायाभावेन असौ ईदृशीमवस्थाम् अनुभवति" इति। विद्येश्वरो लज्जाऽभिरामं राजकुमारमुखम् अभिवीक्ष्य विरचितमन्दहासो व्याजहार—"देव ! भवदनुचरे मयि तिष्ठति, तव कार्य्यम् असाध्यं किमस्ति ? अहम् इन्द्रजालविद्यया मालवेन्द्रं मोहयन् पौरजनसमक्षमेव तत्तनयापरिणयं रचयित्वा कन्याऽन्तःपुरप्रवेशं कारयिष्यामीति, वृत्तान्त एष राजकन्यायै सखीमुखेन पूर्वमेव कथयितव्यः" इति। सन्तुष्टमना महीपतिः अनिमित्तं मित्रं प्रकटीकृतकृत्रिमक्रियापाटवं विप्रलम्भकृत्रिमप्रेमसहजसौहार्दवेदिनं (६४) तं विद्येश्वरं सबहुमानं विससर्ज।

अथ राजवाहनो विद्येश्वरस्य क्रियापाटवेन फलितम् इव मनोरथं मन्यमानः पुष्पोद्भवेन सह स्वमन्दिरम् उपेत्य सादरं

(६३) सख्यस्येति।—"सम्बन्धमाभाषणपूर्वमाहुः" इति रघुवंशीयश्लोकोऽत्रानुसन्धातव्यः। रुचिरेति।—रुचिरं मनोज्ञं, भाषणं वचनं यस्य स तादृशः।

(६४) विप्रलम्भेति।—विप्रलम्भः प्रतारणा, कृत्रिमं कपटं, प्रेम सहजं स्वाभाविकम्, अकृत्रिममित्यर्थः, सौहार्दञ्च वेत्तीति तथाविधम्।

बालचन्द्रिकामुखेन निजवल्लभायै महीसुराश्रयमाणं सङ्गमोपायं वेदयित्वा, कौतुकाकृष्टहृदयः "कथामिमां क्षपां क्षपयामि?" इति चिन्तयन् अतिष्ठत्। परेद्युः प्रभाते विद्येश्वरो रसभावरीतिगतिचतुरः तादृशेन महता निजपरिजनेन सह राजभवनद्वारान्तिकम् उपेत्य, दौवारिकनिवेदितनिजवृत्तान्तः सहसा उपगम्य सप्रणामम् "ऐन्द्रजालिकः समागतः" इति द्वाःस्थैर्विज्ञापितेन तद्दर्शनकुतूहलाविष्टेन समुत्सुकावरोधसहितेन मालवेन्द्रेण समाहूयमानः कक्षान्तरं प्रविश्य सविनयमाशिषं दत्त्वा, तदनुज्ञातः परिजनताड्यमानेषु वाद्येषु नदत्सु, गायकीषु मदकलकोकिलामञ्जुलध्वनिषु समधिकरागरञ्जितसामाजिकमनोवृत्तिषु, पिच्छिकाभ्रमणेषु सपरिवारं परिवृढं भ्रामयन् मुकुलितनयनः (६५) क्षणम् अतिष्ठत्। तदनु विषमं विषम् उल्वणं वमन्तः फणालङ्करणा रत्नराजिनीराजितराजमन्दिराभोगा भोगिनो भयं जनयन्तो निश्चेरुः (६६)। गृध्राश्च बहवः तुण्डैः अहिपतीन् आदाय दिवि समचरन्। ततोऽग्रजन्मा नरसिंहस्य हिरण्यकशिपोः दैत्येश्वरस्य विदारणमभिनीय महदाश्चर्यान्वितं राजानम् अभाषत—"राजन्! अवसानसमये भवता शुभसूचकं द्रष्टुमुचितम्। ततः कल्याणपरम्परावाप्तये भवदात्मजाकारायाः तरुण्याः निखिललक्षणोपेतस्य राजनन्दनस्य विवाहः कार्यः" इति। तदवलोकनकुतूहलेन महीपालेन अनुज्ञातः स सङ्कल्पितार्थसिद्धिसम्भावनसम्फुल्लवदनः सकलमोहजनकम् अञ्जनं लोचन-

(६५) पिच्छिकेति।—पिच्छिका मयूरपिच्छनिर्मितः ऐन्द्रजालिकसाधनविशेषः, तस्या भ्रमणेषु घूर्णनेषु, सञ्चलनेष्विति भावः। परिवृढं स्वामिनं, राजानमित्यर्थः; यद्वा—परिवृढं दृढम्, अतिशयितमित्यर्थः। (भ्रामणक्रियाविशेषणम्) भ्रामयन् भ्रान्तं कुर्वन्नित्यर्थः। मुकुलितनयनः मुद्रितनेत्रः।

(६६) निश्चेरुः निर्गत्य भ्रमन्ति स्मेत्यर्थः।

योर्निक्षिप्य परितो व्यलोकयत्। सर्वेषु तत् "ऐन्द्रजालिकमेव कर्म" इति साद्भुतं पश्यत्सु, रागपल्लवितहृदयेन राजवाहनेन पूर्वसङ्केतसमागताम् अनेकभूषणभूषिताङ्गीम् अवन्तिसुन्दरीं वैवाहिकमन्त्रतन्त्रनैपुण्येन अग्निं साक्षीकृत्य संयोजयामास। क्रियाऽवसाने सति "इन्द्रजालपुरुषाः! सर्वे गच्छन्तु भवन्तः" इति द्विजन्मना उच्चैः उच्यमाने सर्वे मायामानवा यथायथम् अन्तर्भावं गताः। राजवाहनोऽपि पूर्वसङ्कल्पितेन गूढोपायचातुर्य्येण ऐन्द्रजालिकपुरुषवत् कन्याऽन्तःपुरं प्रविवेश। मालवेन्द्रोऽपि तत् अद्भुतं मन्यमानस्तस्मै वाडवाय (६७) प्रचुरतरं धनं दत्त्वा "विद्येश्वर! त्वम् इदानीं साधय" (६८) इति तं विसृज्य स्वयमन्तर्मन्दिरं जगाम। ततोऽवन्तिसुन्दरी प्रियसहचरीसमेता वल्लभोपेता मन्दिरं ययौ। एवं दैवमानुषबलेन मनोरथसाफल्यमुपेतो राजवाहनः सरसमधुरचेष्टाभिः शनैः शनैः हरिणलोचनाया लज्जाम् अपनयन्, सुरतरागम् उपचयन्, रहो विश्रम्भम् उपजनयन्, संलापे तदनुलापपीयूषपानलोलुभः चित्रचित्रं चित्रहारिणं चतुर्दशभुवनवृत्तान्तं श्रावयामास।

इति श्रीदण्डिनः कृतौ राजवाहनचरिते अवन्तिसुन्दरीपरिणयो नाम पञ्चम उच्छ्वासः।

पूर्वपीठिकेयं समाप्ता।

---

(६७) वाडवाय ब्राह्मणाय।

(६८) साधय गच्छेत्यर्थः, नाटके साधेर्गत्यर्थतादर्शनेन इहापि अभिनयार्थमुद्युक्तमैन्द्रजालिकं प्रति तथोक्तिर्नायुक्ता।

# उत्तरपीठिका।

## अथ प्रथमोच्छ्वासः।

### अन्त्यं राजवाहनचरितम्।

श्रुत्वा तु भुवनवृत्तान्तम् उत्तमाङ्गना विस्मयविकसिताक्षी सस्मितम् इदम् अभाषत—"दयित! त्वत्प्रसादात् अद्य मे चरितार्था श्रोत्रवृत्तिः। अद्य मे मनसि तमोऽपहः त्वया दत्तो ज्ञानप्रदीपः। (१) पक्वमिदानीं त्वत्पादपद्मपरिचर्याफलम्। अस्य च त्वत्प्रसादस्य किमुपकृत्य प्रत्युपकृतवती भवेयम्? अभवदीयं हि नैव किञ्चित् मत्सम्बद्धम्। अथवा अस्त्येव अस्यापि जनस्य क्वचित् प्रभुत्वम्, अशक्यं हि मदिच्छया विना सरस्वतीमुखग्रहणोच्छिष्टीकृतो दशनच्छद एष चुम्बयितुम्, अम्बुजासनास्तनतटोपभुक्तम् उरःस्थलञ्चैतदालिङ्गयितुम्" इति (२)। ततः

(१) श्रोत्रवृत्तिः श्रवणेन्द्रियव्यापारः। तमोऽपहः अज्ञानान्धकारध्वंसी। ज्ञानमेव प्रदीपः स ज्ञानप्रदीपः। अत्र श्लिष्टपरम्परितरूपकमलङ्कारः।

(२) सरस्वतीति।—सरस्वत्या वाण्याः यत् मुखस्य वदनस्य, तवेति भावः, ग्रहणं चुम्बनमित्यर्थः, तेन उच्छिष्टीकृतः उच्छिष्टीकृतः, एष दशनच्छदः अधरः, तवेति शेषः, मदिच्छया विना मया चुम्बयितुम् अशक्यं त्वया न पारणीयम्। अम्बुजासनेति।—अम्बुजं पद्मम्, आसनं यस्याः तस्याः लक्ष्म्याः, स्तनतटेन पयोधरप्रदेशेन, उपभुक्तम् आलिङ्गनेन सम्भुक्तम्, एतत् उरःस्थलं वक्षःस्थलं, तवेति शेषः, (एतेन त्वं सरस्वतीपतिर्लक्ष्मीपतिश्चेति ध्वन्यते) मदिच्छया विना मया आलिङ्गयितुमशक्यमित्यन्वयः। सरस्वत्युच्छिष्टस्य तव दशनच्छदस्य चुम्बने लक्ष्मीभुक्तस्य उरःस्थलस्य च आलिङ्गने मम प्रभुत्वं, यद्यहमिच्छामि, तदैव त्वया

प्रियोरसि प्रावृडिव नभसि उपास्तीर्णगुरुपयोधरमण्डला, प्रौढ़कन्दलीमुकुलम् इव (३) रूढ़रागरूषितं चक्षुरुन्नामयन्ती, बर्हिबर्हावलीविडम्बिना (४) कुसुमचन्द्रकशारेण मधुकरकुलव्याकुलेन केशकलापेन स्फुरदरुणकिरणकेशरकरालं कदम्बमुकुलमिव कान्तस्य अधरमणिम् अधीरम् (५) आचुचुम्ब । तदारम्भस्फुरितया च रागवृत्त्या (६) भूयोऽप्यावर्त्तत अतिमात्रचित्रोपचारशोभी रतिप्रबन्धः (७) ।

चुम्बयितुमालिङ्गयितुञ्च शक्नोति, नान्यथेति भावः । यद्वा—सरस्वत्याः वाण्याः, मुखेन गद्यपद्यस्वरूपं, तज्जन्यश्च इत्यर्थः, तस्य उच्छ्वसनोत्कण्ठः निवारणमाधनीकृतः, अशक्यमित्यस्य विपरीतामः । अम्बुजेति ।—अम्बुजासना कमलस्था लक्ष्मीः, तस्याः स्तनतटेनोपभुक्तम् ; स्तनयुक्तस्य उरःस्थलस्य लक्ष्मीस्तनाक्रान्तत्वेन चेदोत्प्रेक्षा ।

( ३ ) उपास्तीर्णेति ।—उपास्तीर्णं समर्पितं, गुरु विशालं, पयोधरमण्डलं यया तादृशी ; यद्वा—पयोधरः मेघः स्तनश्च, मण्डलं समूहः मण्डलाकारश्च । प्रौढ़ेति ।—प्रौढा विकसिता, या कन्दली तस्या मुकुलमिव ।

( ४ ) रूढेति ।—रूढेन सञ्जातेन, रागेण अनुरागेण लौहित्येन च, रूषितं रञ्जितं, रागाविष्टस्वरमित्यर्थः । बर्हीति ।—बर्हिणां मयूराणां, या बर्हावली पिच्छावलिः, तस्या विडम्बिना अनुकारिणा, तत्सदृशेनेत्यर्थः । अत्र आर्थी उपमा ।

( ५ ) कुसुमेति ।—कुसुमं चन्द्रकं मयूरमेचकमिव यत्र तेन, अत एव शारेण कर्बूरेण, कृष्णशुभ्रवर्णमिश्रणात चित्रितेन इत्यर्थः, ( अत्र श्रौती लुप्तोपमा ) अत एव मधुकरकुलैः भ्रमरसङ्घैः, व्याकुलेन परितः सञ्चारितेनेति यावत, ( उपलक्षणे तृतीया ) । स्फुरदिति ।—स्फुरन्तः विकसन्तः, अरुणकिरणाः केशराः किञ्जल्का इव, तैः करालं व्याप्तम्, ( अत्रापि श्रौती लुप्तोपमा ) । अधरमणिम् अधरः मणिरिव तम् अधररत्नम् । अधीरम् अत्यर्थं धैर्य्यहीनं यथा तथा, ( इति क्रियाविशेषणम् ) ।

( ६ ) तदारम्भेति ।—तस्य चुम्बनस्य, आरम्भेण स्फुरितया उद्दीपितया, रागवृत्त्या अनुरागावेशेन ।

( ७ ) आवर्त्तत पुनः अभूत् । अतिमात्रेति ।—अतिमात्रेण अत्यधिकेन, चित्रेण

सुरतखेदसुप्तयोस्तु तयोः स्वप्ने बिसगुणनिगडितपादौ (८) अरठः कश्चित् जालपादः प्रत्यदृश्यत, प्रत्यबुध्येताञ्च (९) उभौ। अथ तस्य राजकुमारस्य कमलमूढशशिकिरणरज्जुदामनिगृहीतमिव रजतशृङ्खलोपगूढं (१०) चरणयुगलम् आसीत्। उपलभ्यैव (११) च "किमेतत्!!" इत्यतिपरित्रासविह्वला मुक्तकण्ठम् (१२) आचक्रन्द राजकन्या। येन च तत्सकलमेव कन्याऽन्तःपुरम् अग्निपरीतमिव, पिशाचोपहतम् इव वेपमानम्,(१३) अनिरूप्यमाणतदात्वायतिविभागम्,(१४) अगण्यमानरहस्यरक्षासमयम्, अवनि-

विविधेन उपचारेण सुरतोपकरणविशेषेण सुरताङ्गव्यापारविशेषेण वा, स्फारः स्फीतः रम्यो वा। रतिप्रबन्धः सुरतचर्या।

(८) बिसेति।—बिसस्य मृणालस्य, गुणेन तन्तुना, निगडितौ संयमितौ, पादौ यस्य तथाभूतः।

(९) अरठः स्थविरः जालपादः हंसः। प्रत्यबुध्येतां जागरितवन्तौ।

(१०) अथ प्रबोधानन्तरम्। कमलेति।—कमलमूढेन कमलमिति मूढेन भ्रान्तिमता, शशिना चन्द्रेण, किरणाः रज्जुदामानीव तैः निगृहीतमिव संयमितमिव; ऊढानि धृतानि गृहीता अपि शशिनश्चन्द्रस्य, किरणा रज्जुदामानीव तैः निगृहीतमिव संयमितमिव, कमलमिति वा। श्लोके धृते हि दुर्लभाय पारणामिति ध्वनिः। रजतेति।—रजतशृङ्खलया रौप्यशृङ्खलदाम्ना, उपगूढम् आलिङ्गितं, संयमितमिति यावत्।

(११) उपलभ्यैव दृष्ट्वैव।

(१२) मुक्तकण्ठम् उच्चैरित्यर्थः।

(१३) येन आक्रन्देनेत्यर्थः। अग्निपरीतमिव वह्निव्याप्तमिव। पिशाचोपहतमिव पिशाचैरपसदैर्योनिविशेषैः उपहतमिव आक्रान्तमिव। वेपमानं कम्पमानम्।

(१४) अनिरूप्यमाणेति।—तदात्वं तत्कालः, आयतिरुत्तरकालः, ("तत्कालस्तु तदात्वं स्यादुत्तरः काल आयतिः" इत्यमरः)। अनिरूप्यमाणः अनिर्णीयमानः, तदात्वायत्योः विभागो यत्र तथाभूतं, तत्काले किं कर्तव्यमुत्तरस्मिन् काले वा किं कर्तव्यमिति विमूढमित्यर्थः।

तलविप्रविध्यमानगात्रम्,(१५)आक्रन्दविदीर्य्यमाणकण्ठम्, अश्रु-स्रोतोऽवगुण्ठितकपोलतलम् (१६) आकुलीबभूव। तुमुले च अस्मिन् समये अनियन्त्रितप्रवेशाः(१७)"किं किम्!!"इति सहसोपसृत्य विविशुः अन्तर्वंशिकपुरुषाः, (१८) ददृशुश्च तदवस्थं राजकुमारम्। तदनुभावनिरुद्धनिग्रहेच्छास्तु (१९) सद्य एव ते तमर्थं चण्डवर्मणे निवेदयामासुः। सोऽपि कोपादागत्य निर्दहन् इव दहनगर्भया दृशा निशाम्य उत्पन्नप्रत्यभिज्ञः (२०) "कथम्!! स एवैषः मदनुजमरणनिमित्तभूतायाः(२१)पापायाः बालचन्द्रिकायाः पत्युः अत्यभिनिविष्टचित्तदर्पस्य (२२)वैदेशिक-

(१५) अवगम्यमानेति।—अवगम्यमानः अवगम्यमानः, वञ्चनस्य गूढ़ निर्व्यूढ़स्य राजकन्यायाः कान्तसङ्करूपस्य,रक्षायाः गोपनस्य, समयः यत्र तादृशम्। अवनीति।—अवनितले भूतले, विप्रविध्यमानम् आहन्यमानं, गात्रं यस्मिन् तथोक्तम्।

(१६) आक्रन्देति।—आक्रन्देन विदीर्य्यमाणः कण्ठो यस्मिन् तथाभूतम्। अश्रुस्रोत इति।—अश्रूणां नयनवारीणां,स्रोतोभिः अवगुण्ठितम् आच्छादितं, कपोल-तलं गण्डदेशो यस्मिन् तथोक्तम्।

(१७) अनियन्त्रितप्रवेशाः अनिषिद्धप्रवेशाः।

(१८) विविशुः प्रविष्टवन्तः। अन्तर्वंशिकपुरुषाः अन्तःपुराधिकृतरक्षिपुरुषाः, अन्तःपुररक्षणार्थे नियुक्ताः कुलक्रमागतभृत्याः इत्यर्थः, ("अन्तःपुरे त्वधिकृतः स्यादन्त-र्वंशिको जनः" इत्यमरः)।

(१९) तदनुभावेति।—तस्य राजकुमारस्य, अनुभावेन प्रभावेण, तेजसेत्यर्थः, निरुद्धा प्रतिबद्धा, निग्रहस्य पीडनस्य, राजकुमारस्येति भावः, इच्छा येषां तथाभूताः; तत्तेजसा निग्रहीतुमसमर्था इत्यर्थः।

(२०) निर्दहन्निव भस्मीकुर्व्वन्निव। दहनगर्भया अग्निपूर्णया, अग्निस्फुलिङ्ग-मुद्गिरन्त्या इति यावत्, दृशा चक्षुषा। निशाम्य दृष्ट्वा, राजकुमारमिति शेषः। उत्पन्नेति।—उत्पन्ना जाता, प्रत्यभिज्ञा ज्ञातज्ञानं यस्य तथाभूतः।

(२१) मदनुजेति।—मम अनुजस्य दारुवर्मण इति भावः, मरणस्य निधनस्य, निमित्तभूतायाः कारणभूतायाः।

(२२) अत्यभिनिविष्टेति।—अत्यभिनिविष्टः अतिशयेन जातः, चित्तदर्पः मनोगर्वः, अहं महाजन इत्यहङ्कार इत्यर्थः यस्य तादृशस्य।

वणिक्पुत्रस्य पुष्पोद्भवस्य मित्रं,रूपमत्तः, कलाऽभिमानी, (२३) नैकविधविप्रलम्भोपाय-पाटवावर्जितमूढपौरजनाध्यारोपितवितथ-दैवताऽनुभावः, कपटधर्मकञ्चुकः,निगूढपापशीलः, (२४)चपलो ब्राह्मणब्रुवः !!(२५)। कथमिव एनमनुरक्ता मादृशेषु अपि पुरुष-सिंहेषु सावमाना (२६) पापेयम् अवन्तिसुन्दरी !! पश्यतु पति-मद्यैव शूलावतंसितमियमनार्य्यशीला कुलपांसनी" (२७) इति निर्भर्त्सयन् भीषणभ्रूकुटिदूषितललाटः काल इव काललोहदण्ड-कर्कशेन(२८)बाहुदण्डेन अवलम्ब्य हस्ताम्बुजे रेखाऽम्बुजरथाङ्ग-लाञ्छने (२९) राजपुत्रं सरभसम्(३०) आचकर्ष। स तु स्वभाव-

(२३) रूपमत्तः सौन्दर्य्येण गर्वित इत्यर्थः। कलाऽभिमानी अहं चतुःषष्टि-प्रकाराः कलाः कामविद्याः जानामीति अभिमानवान्।

(२४) नैकविधेति।—नैकविधाः बहुप्रकाराः, ये विप्रलम्भस्य प्रतारणायाः, उपायाः तेषु पाटवेन नैपुण्येन, आवर्जितैः वशीकृतैः, मूढैः अज्ञैः, पौरजनैः पुर-वासिभिः, अध्यारोपितः वितथः अलीकः, दैवताऽनुभावः देवप्रभावः यस्य तादृशः, प्रतारणाकुशलतया पौरैः कश्चिद्देवोऽयं मानवाकारेण भूतले चरतीति मन्यमान इत्यर्थः। कपटधर्मेति।—कपटः कृत्रिमः, लोकच्छलनाकर इति यावत्, धर्मः कञ्चुको वारबाणः, गात्राच्छादनविशेषः इत्यर्थः यस्य तथाभूतः, अहं धार्मिकः इति बहिः प्रकटयन् इत्यर्थः। निगूढेति।—निगूढं निभृतं, पापं शीलं स्वभावो यस्य तादृशः।

(२५) ब्राह्मणब्रुव. आत्मानं ब्राह्मणं ब्रूते इति ब्राह्मणब्रुवः द्विजापसद इत्यर्थः।

(२६) सावमाना सावज्ञा।

(२७) शूलावतंसितं शूलभूषितं, पायुदत्तशूलमिति यावत्। अनार्य्यशीला दुःशीला। कुलपांसनी कुलदूषिका।

(२८) भीषणेति।—भीषणया भयङ्कर्य्या, भ्रुकुट्या भ्रूभङ्गेन, दूषितं भयावह-मिति यावत्,ललाटं यस्य तथोक्तः। काल इव यम इव। कालेति।—कालः कृष्णवर्णः, यः लोहदण्डः तद्वत् कर्कशेन कठिनेन।

(२९) रेखेति।—रेखा अम्बुजं पद्मं, रथाङ्गं चक्रं, लाञ्छनं चिह्नं यत्र तथाभूते। हस्ताम्बुजे करकमले ( अवच्छेदे सप्तमी )।

(३०) सरभसं सवेगम्।

धीरः सर्वपौरुषातिभूमिः(३१)सहिष्णुतैकप्रतिक्रिया देवीमिव ताम् आपदम् अवधार्य "स्मर तस्या हंसगामिनि! हंसकथायाः। सहस्व वासु! मामद्यम्" इति प्राणपरित्यागरागिणीं (३२) प्राणसमां समाख्याय रिपुवश्यतामयासीत्।

अथ विदितवार्त्तावार्त्तौ (३३) महादेवीमालवेन्द्रौ जामातरम् आकारपक्षपातिनौ आत्मत्यागोपन्यासेन अरिणा जिघांस्यमानं (३४) ररक्षतुः। न शेकतुः तम् अप्रभुत्वात् उत्तारयितुम् (३५) आपदः।

स किल चण्डशीलः चण्डवर्मा सर्वमिदम उदन्तजातं राजराजगिरौ (३६) तपस्यते (३७) दर्पसाराय सन्दिश्य सर्वम् एव

(३१) सर्वेति।—सर्वेषां पौरुषाणां पुरुषकाराणाम्, अतिभूमिः एकमात्रनिलय इत्यर्थः।

(३२) वासु! बाले। प्राणेति।—प्राणानां परित्यागे रागिणीम् अनुरागवतीं, प्राणत्यागोद्यतामिति यावत्।

(३३) विदितेति।—विदिता वार्त्ता वृत्तान्तः याभ्यां तादृशौ, अत एव आर्त्तौ कातरौ, दुहितुः स्नेहादिति भावः; यद्वा—विदितौ वार्त्ता वृत्तान्तः, अवार्त्तः आमयवत्ता वेदनाऽधिगमश्च याभ्यां तादृशौ।

(३४) आकारेति।—आकारेण आकारदर्शनेनेति यावत्, आकारस्थितलक्षणविशेषदर्शनेनेति भावः, पक्षपातिनौ स्नेहवन्तौ। आत्मत्यागेति।—आत्मनः जीवनस्य, त्यागः तस्य उपन्यासेन कथनेन, "यदीमं कुमारं यूयं नाशयेत, तदाऽऽवां प्राणान् त्यक्ष्याव:" इति कथनेनेति यावत्। अरिणा चण्डवर्मणा। जिघांस्यमानं हन्तुं नीयमानमित्यर्थः।

(३५) शेकतुः शक्तवन्तौ। अप्रभुत्वात् अस्वाधीनत्वात्, पुत्रे राज्यभारप्रदानात् स्वस्य अप्रभुत्वमिति भावः। उत्तारयितुं मोचयितुम्।

(३६) उदन्तजातं वृत्तान्तसमूहम्। राजराजगिरौ राज्ञां राजा राजराजः कुबेरः, ("राजराजो धनाधिपः" इत्यमरः) तस्य गिरौ पर्वते, कैलासे इत्यर्थः।

(३७) तपस्यते तपश्चरते।

पुष्पोद्भवकुटुम्बकं सर्वस्वहरणपूर्वकं सद्य एव बन्धने क्षिप्त्वा, ज्ञात्वा च देवं राजवाहनं राजकेशरिकिशोरकम् इव (३८) दारुपञ्जर-निबद्धं, मूर्द्धजजाललीनचूड़ामणिप्रभावविच्छिन्नक्षुत्पिपासादिखेदञ्च (३९) तम्, अवधूतदुहितृप्रार्थनस्य अङ्गराजस्य उद्धरणाय अङ्गान् अभियास्यन् अनन्यविश्वासान्निनाय, रुरोध च बलभरदत्तकम्पः चम्पाम् (४०)। चम्पेश्वरोऽपि सिंहवर्मा सिंह इव असह्य-विक्रमः प्राकारं भेदयित्वा, महता बलसमुदायेन निर्गत्य स्व-प्रहितदूतव्राताहूतानां साहाय्यदानाय अतिसत्वरमापततां (४१) धरापतीनाम् अचिरकालभाविन्यपि सन्निधावदत्तापेक्षः साक्षा-दिवावलेपो वपुष्मान् अमर्षपरीतः प्रतिबलं प्रतिजग्राह (४२)।

(३८) राजेति।—केशरिणां राजा राजकेशरी, सिंहप्रवर इत्यर्थः, तस्य किशोरकः शावकः तमिव।

(३९) मूर्द्धजेति।—मूर्द्धजानां केशानां, जालेषु लीनः स्थितः, यश्चूड़ामणिः शिरोरत्नं, तस्य प्रभावेण सामर्थ्येन, विच्छिन्नः निराकृतः, क्षुत्पिपासादिखेदः क्षुधा-तृष्णादिजनितः क्लेशः यस्य तादृशम्।

(४०) अवधूतेति।—अवधूता निराकृता, दुहितुः प्रार्थना याच्ञा येन तथोक्तस्य, चण्डवर्मा अङ्गराजदुहितरं कामयमानः तदर्थं ययाचे, स तु याच्ञां न अगणयदिति तं प्रति याचेति भावः। उद्धरणाय उन्मूलनाय। अङ्गान् तदाख्यदेशान्। अनन्यविश्वासात् अन्यस्मिन् जने राजवाहनरक्षणभारदाने अविश्वासादित्यर्थः। बलेति।—बलानां सैनिकानां, भरेण आतिरेकेण, दत्तः जनित इत्यर्थः, कम्पो येन तथाभूतः। चम्पां तदाख्याम् अङ्गदेशराजधानीमित्यर्थः।

(४१) स्वप्रहितेति।—स्वेन प्रहितैः दूतव्रातैः दूतसङ्घैः, आहूतानां ज्ञाताह्वा-नानाम्। आपतताम् आगच्छताम्।

(४२) अचिरकालभाविनि अविलम्बेन भविष्यति। सन्निधौ उपस्थितौ। अदत्तापेक्षः निरपेक्ष इत्यर्थः। अवलेपः गर्वः। वपुष्मान् मूर्त्तिमान्। अमर्ष-परीतः क्रोधाभिभूतः। प्रतिबलं विपक्षसैन्यम्। प्रतिजग्राह आचक्राम।

जगृहे (४३) च महति सम्पराये प्रक्षीणसकलसैन्यमण्डलः प्रचण्डप्रहरणशतभिन्नमर्मा (४४) सिंहवर्मा करिणा करीव अवप्लुत्य अतिमानुषप्राणबलेन (४५) चण्डवर्मणा। स च तद्दुहितरि अम्बालिकायाम् अबलारत्नसमाख्यातायाम् (४६) अतिमात्राभिलाषः प्राणैरेनं न व्ययूयुजत् (४७), अपि तु अनीनयत् अपनीताशेषशल्यम् अकल्यसन्धो (४८) बन्धनगृहम्। अजीगणच्च गणकसङ्घैः अद्य एव क्षपाऽवसाने (४९) विवाहनीया राजदुहिता इति।

कृतकौतुकमङ्गले च तस्मिन्, एकपिङ्गाचलात् (५०) प्रतिनिवृत्य पुण्यजङ्घो नाम जङ्घाकरिकः प्रभवतो (५१) दर्पसारस्य

(४३) जगृहे गृहीतः, धृत इत्यर्थः।

(४४) सम्पराये सङ्ग्रामे। प्रचण्डेति।—प्रचण्डैः दारुणैः, प्रहरणशतैः अस्त्रसमूहैः, भिन्नं विद्धं, मर्म यस्य तथाभूतः।

(४५) अतीति।—अतिमानुषं मानुषमतिक्रान्तं, प्राणानां बलं यस्य तथाभूतेन, अलौकिकसत्त्वशालिनेत्यर्थः।

(४६) तद्दुहितरि तस्य सिंहवर्मणः, दुहितरि कन्यायाम्। अबलारत्नेति।—अबलासु नारीषु, रत्नमिति समाख्यातायां प्रसिद्धायाम्।

(४७) व्ययूयुजत् वियोजितवान्, मारितवानित्यर्थः।

(४८) अपि तु किन्तु। अनीनयत् प्रापयामास। अपनीतेति।—अपनीतानि अङ्गेभ्यः व्यावर्तितानि, अशेषाणि शल्यानि अस्त्रखण्डानि यस्य तथाभूतम्। अकल्यसन्धः दृढ़प्रतिज्ञः।

(४९) अजीगणत् गणयामास, शुभक्षणं कारयामासेति यावत्। गणकसङ्घैः ज्योतिर्विद्वर्गैः। क्षपाऽवसाने निशाऽवसाने।

(५०) कृतेति।—कृतं कौतुकस्य विवाहस्य, मङ्गलम आभ्युदयिकं कर्म येन तथाभूते। एकपिङ्गाचलात् एकपिङ्गस्य कुबेरस्य, अचलात् पर्वतात्, कैलासादित्यर्थः।

(५१) जङ्घाकरिकः जङ्घायां करीव इस्तीवेति जङ्घाकरिकः अतिद्रुतपदसञ्चारीति यावत्। प्रभवतः प्रभोः।

प्रतिसन्देशमावेदयत्—"अयि मूढ़! किम् अस्ति कन्याऽन्तःपुरदूषकेऽपि कश्चित् कृपावसरः? स्थविरः स राजा जराऽवलुप्तमानावमानचित्तो (५२) दुर्वारितदुहितृपक्षपातो यदेव किञ्चित् प्रलपति, त्वयाऽपि किं तदनुमत्या स्थातव्यम्? अविलम्बितम् एव तस्य कामोन्मत्तस्य चित्रवधवार्त्ताप्रेषणेन अवणोत्सवोऽस्माकं विधेयः। सा च दुष्टकन्या मदनुजेन कीर्त्तिसारेण निगड़ितचरणा चारके (५३) निरोद्धव्या" इति। तच्च आकर्ण्य "प्रातरेव राजभवनद्वारे स दुरात्मा कन्याऽन्तःपुरदूषकः सन्निधापयितव्यः, चण्डपोतश्च मातङ्गपतिः (५४) उपरचितकल्पनोपपन्नः (५५) तत्रैव समुपस्थापनीयः। कृतविवाहकृत्यश्चोत्थाय अहमेव तम् अनार्य्यं तस्य हस्तिनः कृत्वा क्रीड़नकं, तदधिरूढ़ एव गत्वा शत्रुमाहाय्याय प्रत्यासीदतो (५६) राजन्यकस्य सकोषवाहनस्य अवग्रहणं (५७) करिष्यामि" इति पार्श्वचरान् अवेक्षाञ्चक्रे (५८)।

निन्ये च असौ अहनि अन्यस्मिन् उष्मिपति एव उषोरागी(५९)

(५२) स्थविरः वृद्धः, स राजा पितेति भावः। जरेति।—जरया वार्द्धक्येन, अवलुप्तं विनष्टं, मानावमानयोः चित्तं यस्य तथाभूतः, मानावमानबोधरहित इत्यर्थः।

(५३) चारके कारायाम्।

(५४) सन्निधापयितव्यः उपस्थापयितव्यः। चण्डपोतः तदाख्य इत्यर्थः। मातङ्गपतिर्हस्तीन्द्रः।

(५५) उपरचितेति।—उपरचितया अनुष्ठितया, कल्पनया वेशरचनया, उपपन्नः युक्तः, सुसज्जित इत्यर्थः।

(५६) शत्रुसाहाय्याय शत्रोः सिंहवर्मणः, साहाय्यार्थं, प्रत्यासीदतः आपततः।

(५७) सकोषवाहनस्य सधनयानस्य। अवग्रहणम् आक्रमणम्।

(५८) पार्श्वचरान् अनुचरान्, भृत्यानित्यर्थः। अवेक्षाञ्चक्रे अवलोकयामास।

(५९) निन्ये च नीतश्च, [द्विकर्मकोऽयं धातुः]। असौ राजवाहनः। अहनि

राजपुत्रो राजाङ्गनं रश्मिभिः, उपतस्थे च भरितगण्डः (६०) चण्डपोतः ।

क्षणे च तस्मिन् मुमुचे तदङ्घ्रियुगलं (६१) रजतशृङ्खलया । सा चैनं चन्द्रलेखाच्छविः काचित् अप्सरोरूपिणी भूत्वा, प्रदक्षिणीकृत्य प्राञ्जलिः व्यजिज्ञपत् (६२)—"देव! दीयताम् अनुग्रहार्द्रं(६३) चित्तम् । अहमस्मि सोमरश्मिसम्भवा सुरतमञ्जरी नाम सुरसुन्दरी, तस्या मे नभसि नलिनलुब्धमुग्धकलहंसानुबद्धवक्त्रायाः तन्निवारणक्षोभविच्छिन्नाविगलिता (६४) हारयष्टिर्यदृच्छया जातु हैमवते सरसि मन्दोदके मग्नोन्मग्नस्य (६५)

अन्यस्मिन्—परेद्युरित्यर्थः । उन्मिषति प्रकाशमाने । उषोरागे उषसः रागे लौहित्ये, अरुणोदये इत्यर्थः ।

(६०) राजाङ्गनं राजभवनस्याजिरम् । उपतस्थे प्रापेत्यर्थः । [स्था गतिनिवृत्तौ, "उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम्" (वा०) "वा लिप्सायामिति वक्तव्यम्" (वा०) इति चेति अन्यतरेण आत्मनेपदम्] । भरितेति ।—भरितः मदस्रावीत्यर्थः, गण्डो यस्य तथाभूतः ।

(६१) मुमुचे त्यक्तम् । तदङ्घ्रियुगलं तस्य राजपुत्रस्य, चरणयुगलम् ।

(६२) सा रजतशृङ्खला । चन्द्रेति ।—चन्द्रस्य लेखाया इव छविः कान्तिर्यस्याः, मनोहारिणीत्यर्थः । अप्सरोरूपिणी अप्सरसो रूपधारिणी । व्यजिज्ञपत् विज्ञापयामास ।

(६३) अनुग्रहार्द्रं प्रसादकोमलमित्यर्थः । दीयतां क्रियतामित्यर्थः, मदपराधक्षमापुरःसरं मयि कृपां कुरु इत्यर्थः ।

(६४) नभसि आकाशे । नलिनेति ।—नलिने कमले, लुब्धः मुग्धः भ्रान्तश्च, यः कलहंसः तेन अनुबद्धम् अनुसृतं, वक्त्रं वदनं यस्यास्तथाभूतायाः । तन्निवारणेति ।—तस्य निवारणे निराकरणे, ताडने इति यावत्, यः क्षोभः सम्भ्रमः, तेन विच्छिन्ना त्रुटिता, अत एव विगलिता पतिता ।

(६५) यदृच्छया स्वेच्छया । जातु कदाचित् । हैमवते हिमवत इदं हैमवतं तस्मिन् । मन्दोदके स्वल्पसलिले । मग्नोन्मग्नस्य अवगाढोद्गाढस्य ।

महर्षेः मार्कण्डेयस्य मस्तके मणिकिरणद्विगुणितपलितम् (६६) अपतत्। पातितश्च कोपितेन कोऽपि तेन मयि शापः 'पापे! भजस्व लोहजातिम् अजातचैतन्या सती' इति। स पुनः प्रसाद्यमानः (६७) त्वत्पादपद्मद्वयस्य मासद्वयमात्रं सन्दानतामेत्य निस्तरणीयाम् इमाम् आपदम्, अपरिक्षीणशक्तित्वं पञ्चेन्द्रियाणामकल्पयत् (६८)। अनल्पेन च पाप्मना कृष्यशृङ्खलीभूतां मामैक्ष्वाकस्य राज्ञो वेगवतः पौत्रः पुत्रो मानसवेगस्य वीरशेखरो नाम विद्याधरः शङ्करगिरौ समभ्यगमत्, आत्मसात्कृता (६९) च तेनाहमासम्। अथासौ पितृप्रयुक्ते (७०) वैरे वर्त्तमाने विद्याधरचक्रवर्त्तिनि वत्सराजवंशवर्द्धने नरवाहनदत्ते विरसाशयः (७१) तदपकारक्षमोऽयम् इति तपस्यता दर्पसारेण सह समसृज्यत। प्रतिश्रुतञ्च तेन अस्मै स्वसुः (७२) अवन्तिसुन्दर्याः प्रदानम्। अन्यदा तु वियति व्यवदायमानचन्द्रिके (७३) मनो-

(६६) मणीति।—मणीनां मौक्तिकानां, स्वच्छानामिति भावः, किरणेन प्रभया, द्विगुणितं द्विरावृत्तं, वर्द्धितमिति यावत्, पलितं जराजनितकेशशौक्ल्यं यस्मिन् तत् यथा तथा।

(६७) प्रसाद्यमानः अनुनीयमानः।

(६८) सन्दानतां बन्धनरज्जुताम्। निस्तरणीयां मोचनीयाम्। आपदं आपदम्। अपरिक्षीणेति।—लौहत्वेऽपि मम इन्द्रियजन्यं ज्ञानमासीदिति भावः।

(६९) अनल्पेन बहुना। पाप्मना पापेन, मुनिशापेन इत्यपि अकारणपातनरूपेणेति यावत्। समभ्यगमत् समभ्यापत्। आत्मसात्कृता गृहीता।

(७०) पितृप्रयुक्ते पित्रा कृते।

(७१) विरसाशयः निराशः, कलुषितचित्त इति वा, तस्यापकारं चिकीर्षुरिति भावः। समसृज्यत संसृष्टः, मिलित इत्यर्थः।

(७२) तेन दर्पसारेण। अस्मै वीरशेखराय। स्वसुः भगिन्याः।

(७३) अन्यदा अन्यस्मिन् समये, एकदेत्यर्थः। वियति आकाशे। व्यवदाय-

रथप्रियतमाम् अवन्तिसुन्दरीं दिदृक्षुः अवशेन्द्रियः (७४) तदिन्द्र-मन्दिरद्युति कुमारीपुरमुपासरत्। अन्तरितश्च तिरस्कारिण्या (७५) विद्यया तां तदा त्वदङ्गोपाश्रयां (७६) सुरतखेदसुप्तगात्रीं त्रिभुवनसर्गयात्रासंहारसंश्रिताभिः कथाभिः अमृतस्यन्दिनीभिः प्रत्यानीयमानरागपूरां न्यरूपयत् (७७)। स तु प्रकुपितोऽपि त्वदनुभावप्रतिबद्धनिग्रहान्तराध्यवसायः (७८) समालिङ्ग्य इतरेतरम् (७९) अत्यन्तसुखप्रसुप्तयोर्युवयोः दैवदत्तोत्साहः (८०) पाण्डुलोहशृङ्खलात्मना मया पादपद्मयोर्युगलं तव निगडयित्वा सरोषरभसम् (८१) अपासरत्। अवसितश्च ममाद्य शापः, तच्च मासद्वयं तव पारतन्त्र्यम् (८२)। प्रसीद, इदानीं किं तव

मानेति।—व्यवदायमाना दीप्यमाना, चन्द्रिका यस्मिन् तथोक्ते, [ व्यवपूर्वकात् दैप् शोधने इत्यस्मात् कर्त्तरि शानच् प्रत्ययः ]।

(७४) अवशेन्द्रियः अधीरचित्तः।

(७५) अन्तरितः तिरोहितः। तिरस्कारिण्या आत्मसञ्छादयित्र्या।

(७६) त्वदङ्गोपाश्रयां तवोत्सङ्गस्थिताम्।

(७७) अमृतस्यन्दिनीभिः पीयूषवर्षिणीभिः। प्रत्यानीयमानेति।—प्रत्यानीयमानः पुनरानीयमानः, रागस्य अनुरागस्य, सुरतावेगस्य इत्यर्थः, पूरः प्रवाहो यस्याः ताहशीम्। न्यरूपयत् अपश्यत्।

(७८) त्वदनुभावेति।—तव अनुभावेन प्रभावेण, तेजसेत्यर्थः, प्रतिबद्धः बाधितः, निग्रहान्तरस्य पीडनविशेषस्य, अध्यवसायः उद्योगः यस्य तथाभूतः।

(७९) इतरेतरं परस्परम्।

(८०) दैवेति।—दैवेन तव दुर्भाग्यसूचकेन दुरदृष्टेनेत्यर्थः, दत्तः उत्साहः तव निग्रहे अभ्युद्योगः यस्मै तथाभूतः।

(८१) निगडयित्वा संयम्य। सरोषरभसं सक्रोधवेगम्।

(८२) अवसितः अवसानं गतः, समाप्त इत्यर्थः। पारतन्त्र्यं पराधीनता।

करणीयम् ?" इति प्रणिपतन्तौ "वार्त्तया अनया मत्प्राणसमां समाश्वासय" इति व्यादिश्य (८३) विससर्ज ।

तस्मिन् एव क्षणान्तरे "हतो हतश्चण्डवर्मा सिंहवर्मदुहितुरम्बालिकायाः पाणिस्पर्शरागप्रसारिते (८४) बाहुदण्ड एव बलवदवलम्ब्य सरभसमाकृष्य केनापि दुष्करकर्मकारिणा तस्करेणैकेनैव नखरप्रहारेण, राजमन्दिरोद्देशश्च शवशतमयम् (८५) आपादयन् अचकितगतिरसौ विहरति" (८६) इति वाचः समभवन्। श्रुत्वा चैतत् तमेव मत्तहस्तिनम् उदस्ताधोरणो राजपुत्रोऽधिरुह्य रंहसोत्तमेन (८७) राजभवनम् अभ्यवर्त्तत । स्तम्बेरमरयावधूतपत्तिदत्तवर्त्मा (८८) च प्रविश्य वेश्माभ्यन्तरम् अदभ्राभ्रनिर्घोषगम्भीरेण (८९) स्वरेण अभ्यधात (९०)— "कः स महापुरुषः, येनैतन्मानुषमात्रदुष्करं महत् कर्मानुष्ठितम् ? आगच्छतु स मया सह इमं मत्तहस्तिनम् आरोहतु । अभयमेव

(८३) व्यादिश्य आज्ञाप्य ।

(८४) पाणीति ।—पाणिस्पर्शः पाणिग्रहणं, तस्मै यो रागः अनुरागः, तेन प्रसारिते विस्तारिते ।

(८५) शवेति ।—शवानां मृतदेहानां, शतमयं बहुनरशवपूर्णमिति यावत् ।

(८६) आपादयन् कुर्वन् । अचकितगतिः निर्भयप्रचारः, ("चकितं भयसम्भ्रमे" इति कोषः)। असौ तस्करः। विहरति सञ्चरति ।

(८७) उदस्तेति ।—उदस्तः ताडितः, आधोरणः हस्तिपकः, हस्तिपालक इत्यर्थः येन तथोक्तः ("आधोरणा हस्तिपकाः" इत्यमरः)। उत्तमेन अतिशयेन, रंहसा वेगेन ।

(८८) स्तम्बेरमेति ।—स्तम्बेरमस्य हस्तिनः, रयेण वेगेन, अवधूतैः निराकृतैः, पत्तिभिः पदातिकसैन्यैः, दत्तं वर्त्म यस्मै तथाविधः।

(८९) अदभ्रेति ।—("अदभ्रं बहुलं बहु" इत्यमरः) अदभ्रं यदभ्रं मेघः, तस्य निर्घोषः गर्जनं, तद्वत् गम्भीरेण ।

(९०) अभ्यधात् अवोचत् ।

मदुपकण्ठवर्त्तिनो दैवदानवैरपि विग्रह्णानस्य" (८१) इति अवदत्। निशम्य एवं स पुमान् उपोढ़हर्षो (८२) निर्गत्य कृताञ्जलिराक्रम्य संज्ञाकुञ्चितं कुञ्जरगात्रमसक्तम् (८३) अध्य-रुक्षत्। आरोहन्तमेव एनं निर्वर्ण्य हर्षोत्फुल्लदृष्टिः "अये! प्रिय-सखोऽयमपहारवर्म्मैव!!" इति पश्चान्निषीदतः (८४) अस्य बाहुदण्ड-युगलमुभयभुजमूलप्रवेशितम् अग्रेऽवलम्ब्य स्वमङ्गमालिङ्गयामास, स्वयञ्च पृष्ठतो वलिताभ्यां भुजाभ्यां पर्य्यवेष्टयत् (८५)। तत्-क्षणोपसंहृतालिङ्गनव्यतिकरः (८६) च अपहारवर्म्मा चापचक्र-कणपकर्पणप्रासपट्टिशमुषलतोमरादिप्रहरणजालम् (८७) उप-युञ्जानो बलावलिप्तान् (८८) प्रतिबलवीरान् बहुप्रकारयोधिनः परिक्षिपतः क्षितौ विचिक्षेप (८९)। क्षणेन च अद्राक्षीत् तदपि

(८१) मदुपकण्ठेति।—मम उपकण्ठे समीपे, वर्त्तते इति तथोक्तस्य। विग्रह्णानस्य युध्यमानस्य।

(८२) उपोढहर्षः सञ्जातप्रीतिः।

(८३) संज्ञेति।—संज्ञया सङ्केतेन, ("संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थ-सूचना" इत्यमरः) कुञ्चितः कुण्ठितः, अवनतदेह इति यावत्, तम्। असक्तम् असंसक्तं, राजपुत्रदेहस्पर्शं विनेति भावः।

(८४) निषीदतः उपविष्टस्य।

(८५) वलिताभ्यां चालिताभ्याम्। पर्य्यवेष्टयत आलिलिङ्ग।

(८६) तत्क्षणेति।—तत्क्षणम् उपसंहृतः समापितः, आलिङ्गनव्यतिकरः परस्परम् आश्लेषव्यापारो येन तथोक्तः।

(८७) चापेति।—चापं धनुः, चक्रं चक्राकारास्त्रविशेषः, कणपः लौहदण्ड-विशेषः, कर्पणः कुटिलास्त्रविशेषः, प्रासः कुन्तः, पट्टिशः अस्त्रविशेषः, मुषलं तोमरः अस्त्रविशेषश्च, आदयो यस्य तथाविधं प्रहरणजालम् अस्त्रजातम्।

(८८) उपयुञ्जानः प्रयुञ्जानः। बलावलिप्तान् बलगर्वितान्।

(८९) परिक्षिपतः समन्तात् अवरोधं कुर्वत इत्यर्थः। विचिक्षेप पातयामास।

सैन्यमन्येन समन्ततोऽभिमुखम् अभिधावता बलनिकायेन (१००) परिक्षिप्तम् (१)।

अनन्तरञ्च कश्चित् कर्णिकारगौरः, कुरुविन्दसवर्णकुन्तलः, (२) कमलकोमलपाणिपादः, कर्णचुम्बिदुग्धधवलस्निग्धनीललोचनः, (३) कटितटनिविष्टरत्ननखरः, पट्टनिवसनः, कृशाकृशोदरोरःस्थलः, (४) कृतहस्ततया (५) रिपुकुलमिषुवर्षेण अभिवर्षन् पादाङ्गुष्ठ-निष्ठुरावघट्टकर्णमूलेन प्रजविना गजेन सन्निकृष्य (६) पूर्वोपदेश-प्रत्ययात् "अयमेव स देवो राजवाहनः" इति प्राञ्जलिः प्रणम्य अपहारवर्मणि निविष्टदृष्टिः आचष्ट (७)—"त्वदादिष्टेन मार्गेण सन्निपातितम् (८) एतत् अङ्गराजसाहाय्यदानाय उपस्थितं

(१००) बलनिकायेन सैन्यनिचयेन।

(१) परिक्षिप्तं वितांडितम्, अवरुद्धं वा।

(२) कर्णिकारगौरः कर्णिकारकुसुममिव गौरः पीतदेहः। कुरुविन्देति।—कुरुविन्देन नीलगुच्छेन, समानः वर्णो यस्य तादृशः कुन्तलः केशः यस्य सः, नीलकुन्तल इत्यर्थः।

(३) कर्णेति।—कर्णचुम्बिनी आकर्णविस्तृते इत्यर्थः, दुग्धधवले स्निग्धे नीले च लोचने यस्य तथाभूतः।

(४) कटितटेति।—कटितटे निविष्टं रत्नं रत्नखचितमिति यावत्, नखरं नखाकृतिः अस्त्रविशेषः यस्य तथाभूतः। पट्टनिवसनः पट्टवसनपरिधायी। कृशेति।—कृशं क्षीणम्, अकृशं विशालञ्च, उदरम् उरःस्थलञ्च यस्य तथाभूतः, क्षीणोदरः विशालोरःस्थलश्च इत्यर्थः।

(५) कृतहस्ततया क्षिप्रहस्ततया।

(६) पादाङ्गुष्ठेति।—पादाङ्गुष्ठेन निष्ठुरं निर्दयं यथा तथा, अवघट्टं ताडितं, कर्णमूलं यस्य तादृशेन, अत एव प्रजविना प्रकृष्टवेगवता। सन्निकृष्य समीपमागत्य।

(७) पूर्वोपदेशेति।—पूर्वः उपदेशः परिचयदानं, तस्य प्रत्ययात् विश्वासात्। आचष्ट अब्रवीत्।

(८) मार्गेण पथा प्रणाल्या वा। सन्निपातितम् उपस्थापितम्।

राजन्यकम्। अखिलञ्च विहतविध्वस्तं स्त्रीबालहार्य्यशस्त्रं (९) वर्त्तते, किमन्यत् कृत्यम् ?" इति। हृष्टस्तु व्याजहार अपहारवर्म्मा —"देव ! दृष्टिदानेन अनुगृह्यतामयम् आज्ञाकरः। सोऽयमपि अहमेव अमुना रूपेण धनमित्राख्यया च अन्तरितो(१०)मन्तव्यः। स एव अद्य निर्गमय्य बन्धनादङ्गराजम्, अपवर्जितं कोषवाहनम् एकीकृत्य अस्मद्गृह्येण (११) च अमुना सह राजन्यकेन एकान्ते सुखोपविष्टमिह देवम् उपतिष्ठतु, यदि न दोषः" इति। देवोऽपि "यथा ते रोचते" इति तमाभाष्य गत्वा च तन्निर्दिष्टेन मार्गेण नगरात् वहिरतिमहतो रोहिणद्रुमस्य कस्यचिन्मूले क्षौमावदातसैकते (१२) गङ्गातरङ्गपवनपातशीतले तले द्विरदात् (१३) अवततार। प्रथमसमवतीर्णेन अपहारवर्म्मणा च स्वहस्तसत्वरसमीकृते (१४) मातङ्गे इव स्फटिकमये इव भागीरथीपुलिनमण्डले सुखं निषसाद। तथा निषसञ्च तम् उपहारवर्म्माऽर्थ-

(९) विहतेति।—विहतं विशेषेण हतं नाशितं, विध्वस्तं विशेषेण क्षयं गतम्, अत एव स्त्रीभिः बालैः शिशुभिश्च, हार्य्याणि ग्राह्याणि शस्त्राणि यस्य तथाभूतम्।

(१०) अन्तरितः तिरोहितः।

(११) स एव धनमित्र एव। निर्गमय्य निःसार्य्य। अपवर्जितं विलुण्ठितं विध्वंसितं वा। कोषवाहनं धनं यानञ्च। एकीकृत्य नानास्थानेभ्यः एकस्थानस्थं कृत्वा। अस्मद्गृह्येण अस्मत्पक्ष्येण। [ "गृह्य विनीय—"इत्यादिना यहेः पक्ष्यार्थे निपातनम् इति वोपदेवः। कौमुद्यान्तु "पदास्वैरिबाह्यापक्ष्येषु च" (३।१।११९ पा०) इति ग्रहेः क्यप्]।

(१२) क्षौमेति।—क्षौमं श्वेतपट्टवसनं, तद्वत् अवदातं शुभ्रं, सैकतं यस्मिन् तथाभूते।

(१३) द्विरदात् हस्तिनः।

(१४) स्वहस्तेति।—स्वहस्ताभ्यां सत्वरं समीकृते उन्नतानतभावमपनीय समभूमीकृते।

पाल-प्रमति-मित्रगुप्त-मन्त्रगुप्त-विश्रुतैः, मैथिलेन च प्रहारवर्मणा, काशीभर्त्रा च कामपालेन, चम्पेश्वरेण सिंहवर्मणा सह उपागत्य धनमित्रः प्रणिपपात। देवोऽपि हर्षाविष्टम् (१५) अभ्युत्थितः "कथं, समस्त एव मित्रगणः समागतः !! को नाम अयमभ्युदयः !!" इति कृतयथोचितोपचारान् (१६) उत्पीड़िततरं परिरेभे (१७)। काशीपतिमैथिलाङ्गराजांश्च सुहृन्निवेदितान् पितृवत् अपश्यत्। तैश्च हर्षकम्पितपलितं सरभसोपगूढः (१८) परम् अभिननन्द। ततः प्रवृत्तासु (१९) प्रीतिसङ्कथासु प्रियवयस्यगणानुयुक्तः (२०) स्वस्य च सोमदत्तपुष्पोद्भवयोश्चरितम् अनुवर्ण्य, सुहृदामपि वृत्तान्तं क्रमेण श्रोतुं कृतप्रस्तावः तांश्च तदुक्तावन्वयुङ्क्त। (२१) तेषु प्रथमं प्राह स्म किल अपहारवर्मा।

इति दशकुमारचरिते उत्तरपीठिकायाम् अन्त्यं राजवाहनचरितं नाम प्रथम उच्छ्वासः।

(१५) हर्षाविष्टं हर्षेण आविष्टं युक्तं, सहर्षं यथा तथा इत्यर्थः।

(१६) कृतेति।—कृतः यथोचितः उपचारः सत्कारो येषां तान्।

(१७) उत्पीड़िततरम् अतिगाढ़म्। परिरेभे आलिलिङ्ग।

(१८) हर्षेति।—हर्षेण कम्पितं पलितं जराजनितशुक्लकेशचयः यस्मिन् तत् यथा तथा। सरभसोपगूढः सवेगमालिङ्गितः।

(१९) प्रवृत्तासु प्रारब्धासु।

(२०) प्रियेति।—प्रियवयस्यगणैः अनुयुक्तः पृष्टः।

(२१) तदुक्तौ तेषां वृत्तान्तकथने। अन्वयुङ्क्त पृष्टवान्, नियुक्तवान् इत्यर्थः।

# अथ द्वितीयोच्छ्वासः।

## अपहारवर्मचरितम्।

"देव! त्वयि तदाऽवतीर्णे द्विजोपकाराय असुरविवरं त्वदन्वेषणप्रसृते(१)च मित्रगणे अहम् अपि महीमटन्(२)'अङ्गेषु गङ्गातटे वहिश्चम्पायाः कश्चित् अस्ति तपःप्रभावोत्पन्नदिव्यचक्षुः मरीचिर्नाम महर्षिः' इति कुतश्चित् संलपतो जनसमाजात् उपलभ्य अमुतो बुभुत्सुस्त्वद्गतिं (३) तम् उद्देशम् अगमम्। न्यशामयञ्च (४) तस्मिन् आश्रमे कस्यचित् चूतपोतकस्य छायायां कमपि उद्विग्नवर्णं (५) तापसम्। अमुना च अतिथिवत् उपचरितः(६)क्षणं विश्रान्तः 'क्वासौ भगवान् मरीचिः?तस्मात् अहम् उपलिप्सुः प्रसङ्गप्रोषितस्य (७) सुहृदो गतिम्, आश्चर्यज्ञानविभवो हि स महर्षिः मह्यां विश्रुतः' (८) इति अवादिषम्।

(१) अवतीर्णे प्रविष्टे। असुरविवरं पातालम्। त्वदन्वेषणेति।—तव अन्वेषणाय प्रसृते इतस्ततः प्रचलिते।

(२) अटन् भ्रमन्।

(३) संलपतः परस्परमालपतः, ("संलापो भाषणं मिथः" इत्यमरः)। उपलभ्य ज्ञात्वा। अमुतः अमुष्मात् महर्षेरित्यर्थः। बुभुत्सुः बोद्धुमिच्छुः, जिज्ञासुरित्यर्थः। त्वद्गतिं तवोद्देशम्।

(४) न्यशामयम् अपश्यम्। [निपूर्वकाच्छामयते रूपम्]।

(५) उद्विग्नवर्णं मलिनकान्तिं, विषण्णमित्यर्थः।

(६) उपचरितः सत्कृतः।

(७) उपलिप्सुः जिज्ञासुः। प्रसङ्गप्रोषितस्य केनचित् कार्य्यानुरोधेन प्रोषितस्य देशान्तरं गतस्य।

अथ असौ उष्णमायतञ्च निश्वस्य अशंसत्—'आसीत् तादृशो मुनिः अस्मिन्नाश्रमे। तमेकदा काममञ्जरी नाम अङ्गपुर्य्यवतंसस्थानीया (९) वारयुवतिः अश्रुबिन्दुतारकितपयोधरा सनिर्वेदमभ्येत्य कीर्णशिखण्डास्तीर्णभूमिः अभ्यवन्दिष्ट (१०)। तस्मिन्नेव च क्षणे मातृप्रमुखः तदाप्तवर्गः सानुक्रोशम् अनुप्रधावितस्तत्रैव अविच्छिन्नपातम् अपतत् (११)। स किल कृपालुस्तं जनमार्द्रया गिरा आश्वास्य आर्त्तिकारणं (१२) तां गणिकाम् अपृच्छत्। सा तु सव्रीडेव सविषादेव सगौरवेव (१३) च अब्रवीत्—'भगवन्! ऐहिकस्य (१४) सुखस्य अभाजनं जनो-

---

(८) आश्चर्य्येति।—आश्चर्य्यः विस्मयकरः, अलौकिक इति यावत्, ज्ञानस्य विभवः सामर्थ्यं यस्य तथाभूतः। विश्रुतः प्रसिद्धः।

(९) अङ्गपुर्य्यवतंसस्थानीया। अङ्गानां देशभेदानां, पुरी नगरी, तस्या अवतंसस्थानीया शिरोभूषणभूता।

(१०) अश्रुबिन्द्विति।—अश्रूणां बिन्दुभिः तारकितौ [तारका जाता अनयोरिति तथोक्तौ, अत्र जाते इतच्-प्रत्ययः] मौक्तिकहारालङ्कृतौ इति यावत्, पयोधरौ स्तनौ यस्याः तादृशी। सनिर्वेदं सविरागम्। अभ्येत्य आगत्य। कीर्णेति।—कीर्णेन विक्षिप्तेन, इतस्ततः पातितेनेति यावत्, शिखण्डेन कुन्तलेन, आस्तीर्णा आच्छादिता, भूमिर्यया तथाभूता, भूमिपतितेत्यर्थः। अभ्यवन्दिष्ट प्रणनाम।

(११) मातृप्रमुखः मात्रादिः। तदाप्तेति।—तस्या आप्तवर्गः परिजनगणः। सानुक्रोशं सदयम्। अनुप्रधावितः पश्चादागतः। तत्रैव मुनिसमीपे एव। अविच्छिन्नपातम् अविरतसम्पातम्, एकादिक्रमेणेति भावः। अपतत् उपतस्थे।

(१२) सः महर्षिरित्यर्थः। तं जनं तदाप्तवर्गमित्यर्थः। आर्द्रया स्निग्धया। गिरा वाचा। आर्त्तिकारणं वैराग्यकारणम्।

(१३) सव्रीडेव लज्जितेव, लज्जामभिनयन्तीत्यर्थः, न तु वास्तवी लज्जेति भावः। सविषादेव विषादम् अभिनयन्तीव, न तु वास्तवो विषाद इति भावः। सगौरवेव गौरवं सम्मानं प्रदर्शयन्तीव, न तु वास्तवं गौरवमिति भावः।

(१४) ऐहिकस्य इहलोकभोग्यस्य।

ऽयम्, आमुष्मिकाय श्वोवसीयाय (१५) आर्त्ताभ्युपपत्तिवित्तयोः भगवत्पादयोर्मूलं शरणमभिप्रपन्नः' (१६) इति। तस्यास्तु जननी बद्धाञ्जलिः पलितशारशिखण्डबन्धस्पृष्टमुक्तभूमिः (१७) अभाषत—'भगवन्! अस्या मे दोषम् एषा वो दासी विज्ञापयति, दोषश्च मम स्वाधिकारानुष्ठापनम् (१८)। एष हि गणिकामातुरधिकारः यत्, दुहितुर्जन्मनः प्रभृत्येवाङ्गक्रिया, तेजोबलवर्णमेधासंवर्द्धनेन दोषाग्निधातुसाम्यकृता मितेनाहारेण (१९) शरीरपोषणम्, आ-पञ्चमाद्वर्षात् पितुरप्यनतिदर्शनं, (२०) जन्मदिने पुण्यदिनेषु च उत्सवोत्तरो (२१) मङ्गलविधिः,

(१५) अभाजनम् अपात्रम्, अनर्हं इत्यर्थः। आमुष्मिकाय पारलौकिकाय। श्वोवसीयाय निःश्रेयसाय।

(१६) आर्त्तेति।—आर्त्तानां विपन्नानां, शरणागतानामिति यावत्, अभ्युपपत्तिरनुग्रहः, तत्र वित्तयोः ख्यातयोः। अभिप्रपन्नः प्राप्तः।

(१७) बद्धाञ्जलिः बद्धाञ्जलिः। पलितेति।—पलितेन जरसा केशशौक्ल्येन, शारः शबलः, यः शिखण्डबन्धः केशकलापबन्धनं, तेन आदौ स्पृष्टा पश्चात् मुक्ता त्यक्ता, भूमिर्यया तथाभूता, शिरःस्पृष्टभूतलतया प्रणतेति भावः।

(१८) स्वाधिकारानुष्ठापनं स्वस्य आत्मनः, गणिकाया इत्यर्थः, यः अधिकारः व्यवहारः, तस्य अनुष्ठापनम् अनुष्ठानकरणम्; स्वस्य आत्मनः, गणिकामातुरित्यर्थः, यः अधिकारः कन्यायाः गणिकाव्यवहारशिक्षणं, तस्य अनुष्ठापनं तदुचिताचरणकारणम् इति वा।

(१९) अङ्गक्रिया शरीरसंस्कारः, देहपरिष्कार इत्यर्थः। तेज इति।—तेजः प्रभावः, बलं सामर्थ्यं, वर्णः गौरत्वादिः, मेधा स्मृतिशक्तिः, प्रज्ञा वा, तासां संवर्द्धनेन वृद्धिकरणेन। दोषेति।—दोषाणां वातपित्तकफानाम्, अग्नेः जाठरस्येति भावः, धातूनां रसरक्तादीनां, साम्यकृता समभावेन स्थापयतेत्यर्थः। मितेन परिमितेन, मात्रयेन नातिविस्तरेणेति भावः।

(२०) आ-पञ्चमादिति।—पञ्चमादारभ्य प्रायेण पितृदर्शनाभावात् लज्जाभयाद्यभावसूचनार्थमिति भावः।

अध्यापनम् अनङ्गविद्यानां साङ्गानां, नृत्यगीतवाद्यनाट्यचित्रास्वाद्यगन्धपुष्पकलासु लिपिज्ञानवचनकौशलादिषु च सम्यक् विनयनं, (२२) शब्दहेतुसमयविद्यासु वार्त्तामात्रावबोधनम्, (२३) आजीवज्ञाने, क्रीड़ाकौशले, सजीवनिर्जीवासु च द्यूतकलासु अभ्यन्तरीकरणम्,(२४)अभ्यन्तरकलासु वैश्वासिकजनात् प्रयत्नेन प्रयोगग्रहणं, यात्रोत्सवादिषु आदरप्रसाधितायाः (२५)

(२१) उत्सवोत्तरः उत्सवप्रधानः, नृत्यगीतवाद्याद्यानन्दजननव्यापार इति यावत्, प्रायशस्तदनुष्ठानात् अस्यास्तदासक्तिर्भाविनीति सूच्यते।

(२२) अध्यापनं पाठनं, शिक्षणमित्यर्थः। अनङ्गविद्यानां कामशास्त्राणाम्। साङ्गानाम् अङ्गसहितानां, येन शास्त्रेण कामशास्त्रं परिपुष्यते, तत् कामशास्त्राणामङ्गशास्त्रं तस्यापि पाठनमिति तात्पर्य्यम्। नृत्येति।—नृत्यं नर्त्तनं, गीतं सङ्गीतं, वाद्यं, नाट्यम् अभिनयः, चित्रम् आलेख्यविधानम्, आस्वाद्यानि आस्वादनीयानि वस्तूनि मिष्टान्नादीनि, गन्धाः पुष्पाणि तेषां कलासु विद्यासु, तत्तद्विरचनघटितासु इति यावत्। सम्यक् साकल्येन, विनयनं शिक्षणम्।

(२३) शब्देति।—शब्दविद्यासु व्याकरणादिषु, हेतुविद्यासु तर्कशास्त्रेषु, समयविद्यासु कालज्ञानोपयोगिनीष्वित्यर्थः, वार्त्तामात्रावबोधनं वृत्तान्तमात्रज्ञापनं, व्याकरणादिपाठे एतत् ज्ञानं लभ्यते, तर्कशास्त्रपाठे एतत्, समयविद्यापाठे एतदित्थं विवरणमात्रबोधनमिति यावत्। शब्दहेतुसमयः शब्दज्ञानहेतुसङ्केतः, तद्विद्यासु वार्त्ता आजीविका, तन्मात्रस्यावबोधनमिति वा।

(२४) आजीवज्ञाने जीविका समेर्ष्यामिति ज्ञाने, क्रीड़ाकौशले विहारनैपुण्ये, सजीवनिर्जीवासु जीवैः प्राणिभिः सहितासु, मेषादीनां द्वन्द्वयुद्धरूपासु इत्यर्थः, तथा नास्ति जीवः प्राणी यासु तादृशीषु अक्षक्रीड़ादिरूपासु इत्यर्थः,द्यूतकलासु देवनविद्यासु, अभ्यन्तरीकरणम् अन्तःप्रवेशनं, सम्यग्बोधनमिति यावत्।

(२५) अभ्यन्तरकलासु प्रच्छन्नरतलीलासु। वैश्वासिकजनात् विश्वस्तमानवात्, प्रयत्नेन आदरातिशयेन, प्रयोगग्रहणं रतिकार्य्यशिक्षणमिति यावत्। अत्र किमपि अत्याहितं मा भूदिति वैश्वासिकजनादित्युक्तम्। आदरप्रसाधितायाः सादरमलङ्कृतायाः।

स्फीतपरिवर्हायाः प्रकाशनं, प्रसङ्गवत्यां(२६)सङ्गीतादिक्रियायां पूर्वसङ्कृतैर्ग्राह्यवाग्भिः सिद्धिलम्भनं, दिङ्मुखेषु तत्तच्छिल्प-वित्तकैः (२७) यशःप्रख्यापनं, कार्त्तान्तिकादिभिः कल्याण-लक्षणोद्घोषणं, (२८) पीठमर्दविटविदूषकैः भिक्षुक्यादिभिश्च (२९) नागरिकपुरुषसमवायेषु (३०) रूपशीलशिल्पसौन्दर्य-माधुर्यप्रस्तावना, (३१)युवजनमनोरथलक्ष्यभूतायाः प्रभूततमेन

---

(२६) स्फीतेति।—स्फीताः प्रवृद्धाः, समुज्ज्वला इति यावत्, परिवर्हाः परिच्छदाः यस्यास्तथोक्तायाः। प्रसङ्गेति।—प्रसङ्गः कोऽपि कार्य्यविशेषः तद्वत्यां कार्य्यविशेषप्रयोजनायाम्।

(२७) पूर्वेति।—पूर्वं सङ्कृतैः आयत्तीकृतैः। ग्राह्यवाग्भिः ग्राह्या ग्राह्या, वाक् येषां तैः, येषां वचनं लोकैः गृह्यते तैरिति यावत्। सिद्धिलम्भनं कार्य्यसिद्धि-साधनम्। दिङ्मुखेषु दिगन्तरालेषु। तत्तच्छिल्पवित्तकैः तत्तच्छिल्पविद्याविख्यातैः।

(२८) यशःप्रख्यापनं कीर्त्तिप्रकटनम्। कार्त्तान्तिकादिभिः कृतान्तो यम-सिद्धान्तः, तं विदन्तीति कार्त्तान्तिकाः सामुद्रिकाः, तदादिभिः तत्प्रभृतिभिः, कल्याणं शुभं यत् लक्षणं चिह्नं,तस्य उद्घोषणम्; अत्र नगर्य्यां या असौ वाराङ्गना निवसति, सा अतीव सुलक्षणा, तस्या ग्रहणे महानभ्युदयः स्यादित्येवं प्रकाशनमिति भावः।

(२९) पीठमर्देति।—पीठमर्दः नायकस्य प्रधानसहायः नायकसदृशगुणः, तदुक्तं दर्पणे—"दूरानुवर्त्तिनि स्यात्तस्य प्रासङ्गिकेतिवृत्ते तु। किञ्चित्तद्गुणहीनः सहाय एवास्य पीठमर्दाख्यः॥" इति, विटः नायकस्य शृङ्गारसहायविशेषः, विदूषकः तथैव सहायविशेषः, तदुक्तं दर्पणे—"शृङ्गारस्य सहाया विटचेटविदूषकाद्याः स्युः। भक्ता नर्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः॥ सम्भोगहीनसम्पत् विटस्तु धूर्त्तः कलैकदेशज्ञः। वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम्॥ कुसुमवसन्ताद्यभिधः कर्म्मवपुर्वेशभाषाद्यैः। हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्म्मज्ञः॥" इति तैः। भिक्षुक्यादिभिः प्रव्राजिकादिभिः।

(३०) नागरिकेति।—नागरिका नगरवासिनः, पुरुषा युवकाः, तेषां समवायेषु समाजेषु।

(३१) रूपेति।—रूपं वर्णः, शीलं सुशीलता, शिल्पं चारुत्वं, सौन्दर्य्यं श्रीः, माधुर्य्यं मनोहारित्वं, तेषां प्रस्तावना प्रसङ्गः।

शुल्केन अवस्थापनं, (३२) स्वतो रागान्धाय तद्भावदर्शनोन्मादिताय वा जातिरूपवयोऽर्थशक्तिशौचत्याग-दाक्ष्यदाक्षिण्यशिल्पशीलमाधुर्य्योपपन्नाय (३३) स्वतन्त्राय प्रदानम्, अधिकगुणाय अस्वतन्त्राय प्राज्ञतमाय अल्पेनापि (३४) बहुव्यपदेशेन (३५) अर्पणम्, अस्वतन्त्रेण वा गान्धर्वसमागमेन तद्गुरुभ्यः शुल्कापहरणम्, अलाभे (३६) अर्थस्य कामम् अस्वीकृते स्वामिन्यधिकरणे वा साधनं, रक्ततरस्य दुहितैकचारिणीव्रतानुष्ठापनं, (३७) नित्यनैमित्तिकप्रीतिदायकतया हृतशिष्टानां गम्यधनानां चित्रैः उपायैः

---

(३२) प्रभूततमेन प्रचुरेण। शुल्केन पणेन। अवस्थापनं युवकस्येति भावः।

(३३) स्वतो रागान्धाय स्वयम् अनुरागपरतन्त्राय। तद्भावेति।—तस्याः गणिकायाः, भावस्य विलासस्य, दर्शनेन उन्मादिताय उन्मत्तीकृताय। जातीति।—जातिः ब्राह्मणत्वादिः, रूपं सौन्दर्य्यं, वयः यौवनम्, अर्थशक्तिः धनसामर्थ्यम्, अर्थः धनं, शक्तिः सामर्थ्यं, प्रताप इति वा, शौचं विशुद्धता, अङ्गसंस्कार इति यावत्, त्यागः दानं, दाक्ष्यं चतुरता, दाक्षिण्यं सारल्यं, शिल्पं कारवं, शीलं सच्चरित्रं, माधुर्य्यं मनोरञ्जनकारित्वं, तैः उपपन्नाय समन्विताय।

(३४) स्वतन्त्राय स्वाधीनाय, न तु पित्रादिपरतन्त्राय। प्रदानम् अर्पणं, गणिकाया इति शेषः। अधिकगुणाय अतिगुणवते। अस्वतन्त्राय पराधीनाय। प्राज्ञतमाय अतिबुद्धिमते, विज्ञतमाय वा। अल्पेन अल्पधनेन।

(३५) बहुव्यपदेशेन प्रभूतं लब्धमिति छलेन।

(३६) गान्धर्वसमागमेन गान्धर्वविवाहेन, तद्गुरुभ्यः तस्य यूनः पित्रादिभ्यः। शुल्कापहरणं पणग्रहणम्। अलाभे अप्राप्तौ।

(३७) स्वामिनीति।—स्वामिनि नायकस्य प्रभौ, अधिकरणे धर्माधिकरणे, विचारालये इत्यर्थः, साधनं धनार्थमभियोगकरणम्। रक्ततरस्य अत्यनुरागिणः नायकस्य, दुहितुः स्वकन्यायाः, गणिकाया इत्यर्थः, एकचारिणीव्रतस्य एकनायकासक्तिरूपनियमस्य, अनुष्ठापनम् अनुष्ठानकारणम्।

अपहरणम्, (३८) अददता लुब्धप्रायेण (३९) च विगृह्यासनं, प्रतिहस्तिप्रोत्साहनेन लुब्धस्य रागिणः त्यागशक्तिसन्धुक्षणम्, असारस्य वाक्सन्तक्षणैः (४०) लोकोपक्रोशनैः दुहितृनिरोधनैः व्रीडोत्पादनैः अन्याभियोगैः अवमानैश्च अपवाहनम्, अर्थदैः अनर्थप्रतिघातिभिः (४१) च अनिन्द्यैः (४२) अन्यैः अनुबद्धार्थान् अर्थसंशयान् विचार्य्य भूयः संयोजनमिति (४३)। गणिकायाश्च गम्यं प्रति सज्जतैव, न सङ्गः, सत्यामपि प्रीतौ न मातु-

---

(३८) नित्येति।—नित्या नियमिता, मासिकादिरूपेण व्यवस्थापिता इत्यर्थः, नैमित्तिकी उत्सवादिकारणमुद्दिश्य कल्पिता, या प्रीतिः सन्तोषकरद्रव्यदानरूपा, तस्या दायकतया दातृत्वेन, हृतशिष्टानां हृतेभ्यः शिष्टानाम् अवशिष्टानाम्। गम्यस्य भुजङ्गस्य, लम्पटपुरुषस्येत्यर्थः, धनानाम्। चित्रैः विविधैः, सुकौशलसमन्वितैः इति यावत्। अपहरणं, शिष्टधनस्येति शेषः।

(३९) अददता, अर्थमिति शेषः। लुब्धप्रायेण प्रायशो कृपणेनेत्यर्थः।

(४०) विगृह्य विरोध्य, आसनम् अवस्थानं, पुनस्तदन्तिके न गमनमिति भावः। प्रतिहस्तीति।—प्रतिहस्तिनः प्रतिद्वन्द्विनः इत्यर्थः, प्रतिकामिनो वा, तेषां प्रोत्साहनेन उद्दीपनेन। लुब्धस्य अर्थलोलुपस्य, कृपणस्येत्यर्थः। रागिणः अनुरागवतः। त्यागेति।—त्यागशक्तेः दानशक्तेः, सन्धुक्षणं समुत्तेजनम्। असारस्य निर्धनस्य। वाक्सन्तक्षणैः वाक्पीडनैः, कटुवचोभिरिति भावः।

(४१) लोकेति।—लोकेषु जनसमाजेषु, उपक्रोशनैः निन्दनैः। दुहितृनिरोधनैः गणिकायास्तत्समीपे गमननिवारणैः। व्रीडोत्पादनैः लज्जाप्रदानैः। अन्याभियोगैः अन्यविधैः अभियोगैः, धर्माधिकारणनिवेदनादिरूपैरिति भावः। अवमानैः निर्भर्त्सनादिभिरित्यर्थः, अपवाहनं बहिष्करणम्। अर्थदैः धनप्रदानक्षमैरिति यावत्। अनर्थप्रतिघातिभिः विसंवादनिवर्त्तकैः।

(४२) अनिन्द्यैः भद्रत्वेन गणितैरिति भावः।

(४३) अनुबद्धार्थान् अनुबद्धः मिश्रितः, अर्थो येषु तान्, अतिप्रयोजनीया-नित्यर्थः। अर्थसंशयान् शुल्कप्राप्तौ संशयोऽस्ति न वेति तानित्यर्थः। विचार्य्य विविच्य। संयोजनं सम्मेलनं, गणिकाया इति शेषः।

मातृकाया वा शासनातिवृत्तिः (४४)। एवं स्थिते, (४५) अनया प्रजापतिविहितं स्वधर्ममुल्लङ्घ्य, क्वचित् आगन्तुके रूपमात्रधने (४६) विप्रयूनि स्वेनैव धनव्ययेन रममाणया मासमात्रमत्यवाहि (४७)। गम्यजनश्च भूयानर्थयोग्यः प्रत्याचक्षमाणया (४८) अनया प्रकोपितः स्वकुटुम्बकञ्च अवसादितम् (४९)। एषा कुमतिर्न कल्याणी (५०) इति निवारयन्त्यां मयि वनवासाय कोपात् प्रस्थिता। सा चेत् इयम् अहार्य्यनिश्चया, सर्व एष जनोऽत्रैव अनन्यगतिः अनशनेन संस्थास्यते'(५१)इति अरोदीत्।

अथ सा वारयुवतिः तेन तापसेन—'भद्रे ! ननु दुःखाकरोऽयं वनवासः, तस्य फलम् अपवर्गः (५२) स्वर्गो वा। प्रथमस्तु तयोः

(४४) सज्जतैव सुवरिच्छदादिप्रदर्शनमेव। किन्तु न रूढ़ः सहवासः, सुरतविलास इत्यर्थः। प्रीतौ अनुरागे। मातुर्जनन्याः। मातृकाया मातेव मातृका [ इवार्थे कन्-प्रत्ययः] तस्या उपमातृकायाः, धात्र्या इत्यर्थः, यद्वा—मातामह्याः, ("मातुर्माता तु मातृका" इति वैजयन्ती ) शासनातिवृत्तिः आदेशातिक्रमः, मातुर्धात्र्या वा शासने वर्त्तितव्यमिति भावः।

(४५) स्थिते, अधिकारे इति शेषः।

(४६) स्वधर्मं वेश्योचितकर्त्तव्यमित्यर्थः, उल्लङ्घ्य अतिक्रम्य। आगन्तुके उदासीने। रूपेति।—रूपमात्रं सौन्दर्य्यमात्रं, धनं यस्य तादृशे।

(४७) विप्रयूनि ब्राह्मणयुवके। रममाणया विहरन्त्या। अत्यवाहि अतिवाहितम्।

(४८) गम्यजनः, अपर इति शेषः, भूयान् बहुसङ्ख्यकः। अर्थयोग्यः धनदानक्षमः। प्रत्याचक्षमाणया निराकुर्वत्या।

(४९) स्वकुटुम्बकं निजपरिजनः, अल्पार्थे कादिरित्यर्थः, अवसादितम् अवसन्नतां नीतं, धनाभावेन जीविकाया अनिर्वाहादिति भावः।

(५०) कल्याणी शुभकरी।

(५१) अहार्य्यनिश्चया अहार्य्यः हर्त्तुमशक्यः, अनिवार्य्य इत्यर्थः, निश्चयः प्रतिज्ञा यस्यास्तथाभूता। अनशनेन अनाहारेण। संस्थास्यते मरिष्यति इत्यर्थः।

(५२) अपवर्गः मोक्षः।

प्रकृष्टज्ञानसाध्यः (५३) प्रायो दुःसम्पाद एव। द्वितीयस्तु (५४) सर्वस्यैव सुलभः कुलधर्मानुष्ठायिनः, तदशक्यारम्भादुपरम्य (५५) मातुर्मते वर्त्तस्व' इति सानुकम्पम् अभिहिता'यदीह भगवत्पाद-मूलं न शरणं, शरणमस्तु मम कृपणाया हिरण्यरेता देवः एव' इति उदमनायत(५६)। स तु मुनिः अनुविमृश्य(५७)गणिका-मातरम् अवदत्—'सम्प्रति गच्छ गृहान्, प्रतीक्षस्व कानिचि-द्दिनानि, यावदियं सुकुमारी सुखोपभोगसमुचिता मती अरण्य-वासव्यसनेन (५८) उद्वेजिता भूयो भूयश्च अस्माभिर्विबोध्यमाना प्रकृतावेव स्थास्यति' इति। 'तथा' इति तस्याः प्रतियाते स्वजने सा गणिका तमृषिम् अलघुभक्तिः धौतोद्गमनीयवासिनी(५९)न अत्याहृतशरीरसंस्कारा वनतरुपोतकालवालपूरणैः(६०) देवता-

(५३) प्रथमः आद्यः, अपवर्ग इत्यर्थः। तयोः स्वर्गापवर्गयोः। प्रकृष्टेति।—प्रकृष्टेन प्रकर्षं गतेन, ज्ञानेन ब्रह्मज्ञानेनेति यावत्, साध्यः सम्पाद्यः।

(५४) प्रायः बाहुल्येन। दुःसम्पादः दुःखेन सम्पाद्यते इति तथोक्तः, सम्पाद-यितुमशक्य इत्यर्थः। द्वितीयस्तु स्वर्ग इत्यर्थः।

(५५) कुलेति।—कुलधर्मस्य कुलक्रमागतकर्त्तव्यस्य, अनुष्ठायिनः अनुष्ठान-परस्य। अशक्यारम्भात् असाध्याध्यवसायात्। उपरम्य निवृत्य।

(५६) हिरण्यरेता अग्निः, देवः मम शरणम् आश्रयोऽस्तु, अग्नौ प्रवेक्ष्यामीति भावः। उदमनायत उन्मना इवाचरत्।

(५७) अनुविमृश्य अनु पश्चात् विविच्य।

(५८) अरण्यवासव्यसनेन वनवासदुःखेन।

(५९) अलघुभक्तिः अतिभक्तिमतीत्यर्थः। धौतेति।—धौतं विशुद्धम्, उद्गमनीयम् उपस्थानयोग्य परिधेयोत्तरीयरूपं वसनयुगलं, तत् वस्ते आच्छादयति, परिधत्ते इति तथोक्ता, ("तत् स्यादुद्गमनीयं यत् धौतयोर्वस्त्रयोर्युगम्" इत्यमरः)।

(६०) वनेति।—वनस्य तरुपोतकानां लतानभूतानां क्षुद्रवृक्षाणाम्, आलवालस्य तत्स्थितजलाधारवेष्टनविशेषस्य, पूरणैः जलसेचनैः।

ऽर्चनकुसुमोच्चयावचयप्रयासैः नैकविकल्पोपहारकर्मभिः (६१) कामशासनार्थं (६२) च गन्धमाल्यधूपदीपनृत्यगीतवाद्यादिभिः क्रियाभिः, एकान्ते च त्रिवर्गसम्बन्धिनीभिः (६३) कथाभिः अध्यात्मवादैश्च अनुरूपैः अल्पीयसैव कालेन अन्वरञ्जयत्(६४)।

एकदा च रहसि रक्तं तम् उपलक्ष्य (६५)'मूढः खलु लोको यत् सह धर्मेण अर्थकामावपि गणयति' इति किञ्चित् अस्मयत (६६)। 'कथय वासु ! केनांशेन अर्थकामातिशायी धर्मस्तवाभिप्रेतः ?' इति प्रेरिता मरीचिना लज्जामन्थरम् (६७)आरभताभिधातुम्—'इतः (६८) किल जनाद्भगवतः त्रिवर्गबलाबलज्ञानम् (६९), अथ वा एतदपि प्रकारान्तरं दासजनानुग्रहस्य। भवतु, श्रूयताम्। ननु धर्मादृतेऽर्थकामयोः अनुत्पत्तिरेव। तदन-

---

(६१) देवतेति।—देवतानाम् अर्चनाय कुसुमानाम् उच्चयस्य सङ्ग्रहस्य, अवचयः सञ्चयः, तस्मिन् प्रयासाः प्रयत्नाः तैः। नैकेति।—नैके बहवः, विकल्पोपहाराः विविधोपहाराः, तेषां कर्मभिः बलिकर्मानुष्ठानैः इत्यर्थः।

(६२) कामशासनार्थं कामस्य शासनः शिवः, तदर्थं तत्पूजार्थमित्यर्थः।

(६३) एकान्ते रहसि। त्रिवर्गेति।—त्रयाणां धर्मार्थकामानां, वर्गः गणः, तत्सम्बन्धिनीभिः तत्सङ्क्रान्ताभिः।

(६४) अध्यात्मवादैः आत्मानं जीवं परमात्मानं वा अधिकृत्य, वादाः प्रवचनाः तैः। अनुरूपैः सुयोग्यैरित्यर्थः। अन्वरञ्जयत् अनुरक्तमकरोत्।

(६५) उपलक्ष्य लक्षयित्वा।

(६६) किञ्चित् ईषत्, अस्मयत स्मितमकरोत्।

(६७) अर्थेति।—अर्थकामौ अतिशेते श्रेष्ठत्वेन अतिक्रम्य वर्तते इति तथोक्तः। लज्जामन्थरं लज्जया मन्थरं मन्दं यथा स्यात् तथा।

(६८) इतः अस्मात्।

(६९) भगवतः सर्वैश्वर्यवतः सर्वज्ञानवतो वा। त्रिवर्गेति।—त्रयाणां वर्गः तेषां बलाबलयोः बलं सामर्थ्यम्, अबलम् असामर्थ्यञ्च तयोः ज्ञानम्।

पेक्ष एव स धर्मो निवृत्तिसुखप्रसूतिहेतुः आत्मनः समाधानमात्रसाध्यश्च (७०)। सोऽर्थकामवत् बाह्यसाधनेषु नात्यायतते (७१)। तत्त्वदर्शनोपबृंहितश्च (७२) यथाकथञ्चिदपि अनुष्ठीयमानाभ्यां नार्थकामाभ्यां बाध्यते। बाधितोऽपि च अल्पायासप्रतिसमाहितस्तमपि दोषं निर्हृत्य(७३)श्रेयसेऽपि अनल्पाय कल्पते। तथा हि,पितामहस्य तिलोत्तमाऽभिलाषः,(७४)भवानीपतेर्मुनिपत्नीसहस्रसन्दूषणं,पद्मनाभस्य(७५)षोड़शसहस्रान्तःपुरविहारः, प्रजापतेः स्वदुहितर्य्यपि (७६) प्रणयप्रवृत्तिः, शचीपतेः अहल्याजारता, शशाङ्कस्य गुरुतल्पगमनम्, (७७) अंशुमालिनो वड़वालङ्घनम्,अनिलस्य केशरिकलत्रसमागमः,(७८)बृहस्पतेः उतथ्यस्य

(७०) तदनपेक्षः अर्थकामनिरपेक्षः। निवृत्तीति।—निवृत्त्या, सांसारिकव्यापारादिति भावः, यत् सुखं तस्य प्रसूतेः उत्पत्तेः, हेतुः। आत्मनः स्वस्य, समाधानं समाधिः, तन्मात्रेण साध्यः सम्पादनीयः।

(७१) बाह्यसाधनेषु बाह्योपायेषु, वैषयिकव्यापाररूपोपायेषु इत्यर्थः। अत्यायतते अत्यन्तमधीनो भवतीत्यर्थः।

(७२) तत्त्वेति।—तत्त्वदर्शनेन तत्त्वज्ञानेन, उपबृंहितः वर्द्धितः।

(७३) अल्पेति।—अल्पेन आयासेन यत्नेन, प्रतिसमाहितः प्रतिकृतः, तमपि दोषम् अर्थकामसंबाधजनितमिति भावः। निर्हृत्य निरस्य।

(७४) पितामहस्य ब्रह्मणः, तिलोत्तमाऽभिलाषः तिलोत्तमा नाम काचित् सुरसुन्दरी, तस्याम् अभिलाषः कामावेशः।

(७५) भवानीपतेः हरस्य। मुनिपत्नीनां सहस्रस्य सन्दूषणं गमनम्। पद्मनाभस्य श्रीकृष्णस्य।

(७६) प्रजापतेः विधातुः। स्वदुहितरि निजकन्यायां, सरस्वत्यामित्यर्थः।

(७७) शचीपतेः इन्द्रस्य। अहल्याजारता अहल्या गौतमपत्नी, तस्यां जारता उपपतित्वम्। शशाङ्कस्य चन्द्रस्य। गुरुतल्पेति।—गुरोर्बृहस्पतेः, तल्पे दारासु, पत्न्यामित्यर्थः, ("तल्पं शय्याऽट्टदारेषु" इत्यमरः) गमनं तत्सहवास इत्यर्थः।

(७८) अंशुमालिनः सूर्य्यस्य, वड़वालङ्घनम् अश्वीरूपायां संज्ञायां गमनम्।

(७९) भार्य्याऽभिसरणं, पराशरस्य दासकन्यादूषणं, पाराशर्य्यस्य भ्रातृदारसङ्गतिः, अत्रेः मृगीसमागम (८०) इति। अमराणाञ्च तेषु तेषु कार्य्येषु (८१) असुरविप्रलम्भनानि (८२) ज्ञानबलात् न धर्मपीड़ाम् आवहन्ति। धर्मपूते च मनसि नभसीव न जातु रजोऽनुषज्यते (८३)। तन्मन्ये न अर्थकामौ धर्मस्य शततमीमपि कलां (८४) स्पृशतः' इति।

श्रुत्वा एतदृषिः उदीर्णरागवृत्तिः (८५) अभ्यधात्—'अयि विलासिनि! साधु पश्यसि, न धर्मस्तत्त्वदर्शिनां विषयोपभोगेन उपरुध्यते' (८६) इति। किन्तु जन्मनः प्रभृति अर्थकामवार्त्ताऽनभिज्ञा वयम्। ज्ञेयौ च इमौ किं-रूपौ? किं-परिवारौ? किं-फलौ च?' इति। सा त्ववादीत्—'अर्थस्तावदर्जनवर्द्धनरक्षणात्मकः, कृषिपाशुपाल्यवाणिज्यसन्धिविग्रहादिपरिवारः, तीर्थप्रतिपादन-

---

अनिलस्य वायोः। केशरीति।—केशरिणः तदाख्यस्य हनुमत्पितुः वानरविशेषस्य, कलत्रेण पत्न्या, अञ्जनयेति यावत्, समागमः सहवासः।

(७९) उतथ्यस्य तन्नाम्नः ज्येष्ठभ्रातुः।

(८०) दासकन्येति।—दासस्य धीवरस्य, कन्यायाः सत्यवत्या इत्यर्थः, दूषणं कुमारीधर्मनाशः। पाराशर्य्यस्य पराशरस्य अपत्यं पुमान् पाराशर्य्यः द्वैपायनः तस्य, भ्रातृदारेषु भ्रातुः विचित्रवीर्य्यस्य दारेषु, सङ्गतिः गमनं, येन धृतराष्ट्रपाण्डू जातौ इति बोध्यम्। अत्रेः तन्नामकस्य देवर्षेः, मृग्या समागमः गमनम्।

(८१) तेषु तेषु कार्य्येषु समुद्रमन्थनादिव्यापारेषु।

(८२) असुरेति।—असुराणां विप्रलम्भनानि प्रतारणानि।

(८३) रजः पापं धूलिश्च। अनुषज्यते अनुषक्तं भवति [कर्त्तरि लट्]।

(८४) कलाम् अंशम्।

(८५) उदीर्णरागवृत्तिः उद्दीपितानुरागव्यापारः।

(८६) उपरुध्यते बाध्यते।

फलञ्च (८७)। कामस्तु विषयातिसक्तचेतसोः (८८) स्त्रीपुंसयोः निरतिशयसुखस्पर्शविशेषः। परिवारस्त्वस्य यावत् इह (८९) रम्यमुज्ज्वलञ्च वस्तु, फलं पुनः परमाह्लादनं परस्परविमर्दजन्म स्मर्य्यमाणमधुरम् उदीरिताभिमानम् अनुत्तमं सुखम् अपरोक्षं स्वसंवेद्यमेव (९०)। तस्यैव कृते विशिष्टस्थानवर्त्तिनः (९१) कष्टानि तपांसि, महान्ति दानानि, दारुणानि युद्धानि, भीमानि समुद्रलङ्घनादीनि च मानवाः समाचरन्ति' इति। निशम्य एतत् नियतिबलात् (९२) नु, तत्पाटवात् नु, स्वबुद्धिमान्द्यात् नु स्वनियमम् अनादृत्य तस्याम् असौ प्रासजत (९३)।

सा सुदूरं मूढात्मानञ्च तं प्रवहणेन नीत्वा पुरम्, उदार-शोभया राजवीथ्या (९४) स्वभवनम् अनैषीत्। अभूच्च घोषणा

(८७) तीर्थेति।—तीर्थेषु सत्पात्रेषु, प्रतिपादनं दानं, फलं यस्य तथाभूतः।

(८८) विषयेति।—विषयाः स्रक्चन्दनवनितादयः, तेषु अतिसक्तं चेतः चित्तं ययोः तथाभूतयोः।

(८९) इह जगति।

(९०) उदीरितेति।—उदीरितः उद्दीपितः, अभिमानः अहङ्कारः यस्मिन् तथोक्तम्। अनुत्तमं नास्ति उत्तमं यस्मात् तादृशम्। अपरोक्षं प्रत्यक्षम्। स्वसंवेद्यं स्वेनैव अनुभूयमानमित्यर्थः।

(९१) तस्यैव कामजनितसुखस्यैव, कृते निमित्तं, भोगार्थमित्यर्थः। विशिष्टेति।—विशिष्टे विशुद्धे इति यावत्, स्थाने तीर्थादौ इति भावः, वर्त्तन्ते तिष्ठन्तीति तथाभूताः।

(९२) नियतिबलात् दैवबलात्।

(९३) तत्पाटवात् तस्याः गणिकायाः, पाटवात् वचनचातुर्य्यादित्यर्थः। स्वेति।—स्वस्य आत्मनः, बुद्धेः प्रज्ञायाः, मान्द्यात् दौर्बल्यात्। स्वनियमं निजव्रतं, सायंप्रातः-स्नानादिकमित्यर्थः। अनादृत्य अगणयित्वा, तिरस्कृत्येत्यर्थः। प्रासजत् प्रसक्तोऽभवत्।

(९४) सुदूरम् अत्यर्थं यथा तथा। मूढात्मानं विमुग्धचेतसम्। प्रवहणेन कर्णीरथेन, उपरिवस्त्राच्छादितयानविशेषेण, ("कर्णीरथः प्रवहणम्" इत्यमरः)।

'श्वः (९५) कामोत्सवः' इति । उत्तरेद्युः स्नातानुलिप्तम् आरचितमञ्जुमालम् (९६) आरब्धकामिजनवृत्तं, निवृत्तस्ववृत्ताभिलाषं (९७) क्षणमात्रे गतेऽपि तया विना दूयमानचित्तं तमृषिम् ऋद्धिमता राजमार्गेण उत्सवसमाजं नीत्वा, क्वचित् उपवनोद्देशे युवतिजनशतपरिवृतस्य राज्ञः सन्निधौ समागमत । (९८) तत्र स्मितमुखेन तेन (९९) 'भद्रे ! भगवता सह निषीद' (१००) इत्यादिष्टा सविभ्रमकृतप्रणामा सस्मितं न्यषीदत् ।

तत्र काचित् उत्थाय बद्धाञ्जलिः उत्तमाङ्गना—'देव ! जिताऽनया अहं, तत् दास्यम् अद्य प्रभृति अभ्युपेतं मया' इति प्रभुं प्राणंसीत् (१) । विस्मयहर्षमूलश्च कोलाहलो लोकस्य उद-

---

उदारशोभया उदारा महती, शोभा सौन्दर्यश्रीः यस्यास्तथाभूतया । राजवीथ्या राजमार्गेण ।

(९५) घोषणा प्रचारः । श्वः परदिने ।

(९६) स्नातेति ।—स्नातश्चासौ अनुलिप्तः गन्धद्रव्येण चर्चितेति तथोक्तः तम् । आरचितेति ।—आरचिता कल्पिता, मञ्जुः मनोहरा, माला यस्य तादृशम् । "आरचितमुण्डमञ्जुमालम्" इति पाठे—आरचिता मुण्डे शिरसि, मञ्जुमाला यस्य तथाभूतं, शिरोविहितमनोरमस्रजमित्यर्थः ।

(९७) आरब्धेति ।—आरब्धं प्रक्रान्तं, कामिजनस्य वृत्तम् आचारः येन तथोक्तं, कामिजनवत् व्यवहरन्तमित्यर्थः । निवृत्तेति ।—निवृत्तः स्ववृत्तात् निजाचारात्, तपोनियमात् इत्यर्थः, अभिलाषः यस्य तादृशम् ।

(९८) तया काममञ्जर्या । दूयमानेति ।—दूयमानं व्यथमानं, चित्तं यस्य तथाभूतं, तद्दर्शनं विना आत्मसमक्षमवर्त्तमानमिति भावः । ऋद्धिमता समृद्धेन, समुत्सवशालिनेत्यर्थः । समागमत् आजगाम ।

(९९) तेन राज्ञा ।

(१००) निषीद उपविश ।

(१) अभ्युपेतम् अङ्गीकृतम् । प्राणंसीत् प्रणनाम ।

जिहीत (२)। हृष्टेन च राज्ञा महार्हैः अलङ्कारैः महता च परिवर्हेण (३) अनुगृह्य विसृष्टा सा वारमुख्याभिः पौरमुख्यैश्च गणशः(४)प्रशस्यमाना स्वभवनम् अगत्वैव तमृषिम् अभाषत—'भगवन्! अयमञ्जलिः, चिरम् अनुगृहीतोऽयं दासजनः, स्वार्थं (५) इदानीम् अनुष्ठेयः' इति। स तु रागात् अशनिनिहत इव उद्भ्राम्य अब्रवीत्—(६) 'प्रिये! किम् एतत्? कुत इदम् औदासीन्यम्? (७) क्व गतस्तव मयि असाधारणोऽनुरागः?' अथ सा सस्मितम् अवादीत् महर्षिं—'भगवन्! यया अद्य राजकुले मत्तः पराजयोऽभ्युपेतः, तस्याश्च मम च कस्मिंश्चित् सङ्घर्षे 'मरीचिम् आवर्जितवतीव श्लाघसे' इति तया अहम् अधिक्षिप्ता (८)दास्यपणबन्धेन च अस्मिन्नर्थे प्रावर्त्तिषि, सिद्धार्था(९) च अस्मि त्वत्प्रसादात्' इति। स तया तथाऽवधूतो दुर्मतिः

---

(२) उदजिहीत उदगच्छत्. (उत्पूर्वकात् ओहाङ्गतौ इति रूपम्)।

(३) परिवर्हेण राजार्हाश्वहस्त्यादिपरिच्छदेन।

(४) विसृष्टा विसर्जिता। वारमुख्याभिः वाराङ्गनाश्रेष्ठाभिः। पौरमुख्यैः पुरवासिश्रेष्ठैः। गणशः सङ्घशः।

(५) स्वार्थः स्वप्रयोजनं, तप इत्यर्थः।

(६) अशनिनिहत इव वज्राहत इव। उद्भ्राम्य उद्भ्रान्तो भूत्वा।

(७) औदासीन्यं विरागः।

(८) सङ्घर्षे अन्योऽन्यस्पर्द्धायाम्। आवर्जितवतीव आगमितवतीव, वशीकृतवतीवेत्यर्थः। श्लाघसे स्पर्द्धसे, आत्मगौरवं प्रकटयसीत्यर्थः। अधिक्षिप्ता आक्रुष्टा।

(९) दास्यपणेति।—यद्यहं मरीचिमावर्जयितुं शक्नोमि तदा कः पणः? इति मयोक्ते साऽब्रवीत्, तदा तेऽहं दासी भविष्यामि, अन्यथा त्वं मम दासीति कृतः पणः दास्यपणः, तस्य बन्धेन दृढनियमेनेत्यर्थः। अर्थे विषये, तदावर्जनरूपे इत्यर्थः, प्रावर्त्तिषि प्रवृत्ता अभूवम्। सिद्धार्था कृतकार्या।

कृतानुशयः शून्यवत् (१०) न्यवर्त्तिष्ट। यः तया एवं कृतस्तपस्वी, तमेव (११)मां महाभाग! मन्यस्व। स्वनिषिक्तं रागम् उद्धृत्य तया एव बन्धक्या(१२)महद्वैराग्यम् अर्पितम्। अचिरात् एव शक्य आत्मा त्वदर्थसाधनक्षमः (१३) कर्त्तुम्। अस्यामेव तावत् वस अङ्गपुर्य्यां चम्पायाम्' इति।

अथ तन्मनश्च्युततमःस्पर्शभिया इव अस्तं रविरगात्। ऋषिमुक्तश्च रागः सन्ध्यात्वेन अस्फुरत्। तत्कथादत्तवैराग्याणि इव कमलवनानि समकुचन् (१४)। अनुमतमुनिशासनस्त्वहम् अमुनैव (१५) सहोपास्य सन्ध्याम्, अनुरूपाभिः कथाभिः तम्

---

(१०) तथा तेन प्रकारेण, अवधूतः निराकृत इत्यर्थः। कृतानुशयः कथमहमेतस्याः प्रलोभनेन व्यामुग्ध इति कृतपश्चात्ताप इत्यर्थः। शून्यवत् विषण्ण इति भावः।

(११) एवम् इत्थं, कृतः प्रतारित इति यावत्। तपस्वी वराकः। तमेव मरीचिमेव।

(१२) स्वनिषिक्तं स्वस्मिन् निषिक्तं समासक्तम्। रागम् अनुरागं, प्रेमेति यावत्। बन्धक्या कुलटया।

(१३) त्वदर्थेति।—तव अर्थः कार्य्यं, सुहृदः गन्तव्यस्थाननिर्णयरूपमिति भावः, तस्य साधने सम्पादने, क्षमः समर्थः।

(१४) तन्मन इति।—तस्य मुनेः, मनसः च्युतं निःसृतं, यत् तमः मोहरूपमिति भावः, तस्य स्पर्शात् या भीः भयं, तयैव तत्स्पर्शजनितपापभयादिवेत्यर्थः। ऋषिमुक्तः ऋषिणा मुक्तः परित्यक्तः, रागः वेश्यानुराग इत्यर्थः, रक्तता च, सन्ध्यात्वेन सन्ध्यारागरूपेणेति यावत्, अस्फुरत् प्रासरत्। तत्कथेति।—तस्य मुनेः, कथया वृत्तान्तकथनेन, दत्तं जनितं, वैराग्यं वीतरागत्वं येषां तानि। समकुचन् सङ्कोचमगमन्, मुकुलितानीत्यर्थः।

(१५) अनुमतेति।—अनुमतम् अङ्गीकृतं, मुनेः शासनम् आदेशः येन तथाभूतः, मुनिशासनमनुमोदमान इत्यर्थः। अमुनैव मुनिनैव।

अनुगम्य (१६) नीतरात्रिः, प्रत्युन्मिषति उदयप्रस्थदावकल्पे कल्पद्रुमकिसलयावधीरिणि (१७) अरुणार्चिषि तं नमस्कृत्य नगराय उदचलम् (१८)। अटंश्च मार्गाभ्यासवर्त्तिनः कस्यापि क्षपणकविहारस्य(१९)बहिः विविक्ते (२०) रक्ताशोकषण्डे निषण्णम्, अस्पृष्टसमाधिम्, आधिक्षीणम्,(२१)अग्रगण्यम् अनभिरूपाणां, क्षपणवर्णं कमपि क्षपणकम् (२२)। उरसि च अस्य शिथिलितमलनिचयान् (२३) मुखान्निपततोऽश्रुबिन्दून् अलक्ष-

(१६) अनुगम्य पश्चात् गत्वा।

(१७) प्रत्युन्मिषति प्रकाशमाने। उदयेति।—उदयस्य उदयाचलस्य, यः प्रस्थः तटः, तस्मिन् यो दावः वनानलः, ("दवदावौ वनानले" इत्यमरः) तत्कल्पः तस्मादीषदूनः तस्मिन्, तत्सदृशे इत्यर्थः। कल्पेति।—कल्पद्रुमस्य सुरतरुविशेषस्य, यः किसलयः नवपल्लवः, तम् अवधीरयति अवजानाति इति तथाभूते।

(१८) अरुणार्चिषि अनूरुतेजसि सूर्यकिरणे वा। तं मुनिम्। उदचलं प्रातिष्ठे।

(१९) मार्गाभ्यासवर्त्तिनः मार्गस्य पथः, अभ्यासे अन्तिके, वर्त्तते इति तथोक्तस्य। क्षपणकेति।—क्षपणकाः सौगताः, नग्नबौद्धसन्न्यासिन इत्यर्थः, तेषां विहारः विहरन्ति अस्मिन्निति विहारः आवसथः तस्य।

(२०) विविक्ते निर्जने विशुद्धे वा ("विविक्तौ पूतविजनौ" इत्यमरः)।

(२१) रक्तेति।—रक्तानां रक्तपुष्पाणामित्यर्थः, अशोकतरूणां षण्डे कदम्बे, ("कदम्बे षण्डमस्त्रियाम्" इत्यमरः) वने इत्यर्थः, निषण्णम् आसीनम्। अस्पृष्टेति।—अस्पृष्टः अलब्धः, समाधिः योगः येन तादृशम्। आधिक्षीणम् आधिभिः मनोव्यथाभिः, क्षीणः तं, ("पुंस्याधिर्मानसी व्यथा" इत्यमरः)।

(२२) अनभिरूपाणां कुरूपाणामित्यर्थः। क्षपणवर्णं दीनवर्णं, विषादक्षुण्णमिति यावत्। क्षपणकं नग्नबौद्धसन्न्यासिनम्।

(२३) उरसि वक्षसि। शिथिलितेति।—शिथिलिताः श्लथीकृताः, द्राविता इत्यर्थः, मलानां गात्ररजसां, निचयाः यैः तथोक्तान्।

यम्; अप्राक्षञ्च (२४) अन्तिकोपविष्टः,—'क्व तपः? क्व च वदितम्? न चेत् रहस्यमिच्छामि श्रोतुं श्रोकहेतुम्' इति। सोऽब्रवीत्—'सौम्य! श्रूयताम्, अहम् अस्यामेव चम्पायां निधिपालितनाम्नः श्रेष्ठिनो ज्येष्ठसूनुः वसुपालितो नाम। वैरूप्यात्तु मम 'विरूपकः' (२५) इति प्रसिद्धिः आसीत्। अन्यश्च अत्र 'सुन्दरकः' इति यथार्थनामा कलागुणैः समृद्धः, वसुना नातिपुष्टः (२६)अभवत्। तस्य च मम च वपुः वसूनि च निमित्तीकृत्य वैरं वैरोपजीविभिः(२७)पौरधूर्तैः उदपाद्यत। ते एव कदाचिदावयोः उत्सवसमाजे स्वयमुत्पादितम्(२८) अन्योऽन्यावमानमूलम् अधिक्षेपवचनव्यतिकरम् उपश्रमय्य, (२९) 'न वपुः वसु वा पुंस्त्वमूलम्, अपि तु प्रकृष्टगणिकाप्रार्थ्ययौवनो(३०) हि यः, स पुमान्; अतो युवतिललामभूता (३१) काममञ्जरी यं वा

(२४) अप्राक्षञ्च पृष्टवांश्चास्मि।

(२५) वैरूप्यात् कुरूपत्वात्। विरूपकः विकृतं रूपं यस्य तथोक्तः, ततः स्वार्थे क-प्रत्ययः।

(२६) कलागुणैः कलानां विद्याविशेषाणां, गुणैः प्रभावैः; कलाश्च गुणाः दयादाक्षिण्यादयश्च तैरिति वा। समृद्धः सम्पन्नः, युक्त इत्यर्थः। वसुना धनेन। नातिपुष्टः नात्युपचितः, अल्पधन इत्यर्थः।

(२७) वपुः शरीरं, सौन्दर्य्यमिति भावः। वसूनि धनानि। वैरोपजीविभिः वैरस्य विद्वेषोत्पादनेन, उपजीवन्तीति तथाभूतैः।

(२८) ते एव पौरधूर्त्ता एव। स्वयमात्मना. उत्पादितं जनितम्।

(२९) अधिक्षेपेति।—अधिक्षेपः भर्त्सनं, तस्य वचनव्यतिकरं परस्परप्रयुक्तवाक्यावलीमित्यर्थः, मन्निकटे तस्य दुर्वचनं, तन्निकटे मम दुर्वचनं स्वकल्पितमिति भावः। उपशमय्य श्रावयित्वा।

(३०) पुंस्त्वमूलं पुरुषत्वनिदानम्। प्रकृष्टेति।—प्रकृष्टया सर्वश्रेष्ठया, गणिकया प्रार्थ्यम् आकाङ्क्ष्यं, यौवनं यस्य तथाभूतः।

(३१) युवतीति।—युवतिषु तरुणीषु, ललामभूता रत्नभूता, प्रधानेत्यर्थः।

कामयते, स हरतु सुभगपताकाम्' इति व्यवाख्यापयन् (३२)। अभ्युपेत्य चावां प्राहिणुव (३३) तस्यै दूतान्। अहम् एव किलामुष्याः स्मरोन्मादहेतुरासम्। आसीनयोश्च आवयोः माम् एव उपगम्य सा नीलोत्पलमयम् इव अपाङ्गदामाङ्गे मम मुञ्चन्ती (३४) तं जनमपत्रपयाऽधोमुखं व्यधत्त (३५)। सुभगेन च मया स्वधनस्य, स्वगृहस्य, स्वगणस्य, स्वदेहस्य, स्वजीवितस्य च सैवेश्वरी(३६) कृता। कृतश्च अहम् अनया मलमल्लकशेषः, (३७)हृतसर्वस्वतया च अपवाहितः प्रपद्य लोकोपहासलक्ष्यताम् (३८) अक्षमश्च सोढुं धिक्कृतानि पौरवृद्धानाम् इह जैनायतने मुनिना एकेन उपदिष्टमोक्षवर्त्मा (३९) 'सुकर एष वेशो

---

(३२) हरतु प्राप्नोतु। सुभगपताकां सुभगः कामिनीवल्लभः, तस्य पताका चिह्नविशेषः ताम्। व्यवाख्यापयन् निरधारयन्।

(३३) अभ्युपेत्य स्वीकृत्य, तथाऽस्त्विति तेषां मतमनुमन्येत्यर्थः। प्राहिणुव प्रेरितवन्तौ।

(३४) अपाङ्गदाम नयनप्रान्तावलोकनपरम्परारूपां मालामिति यावत्। मुञ्चन्ती निक्षिपन्ती।

(३५) अपत्रपया बहुजनसन्निधौ सञ्जातलज्जया, ("लज्जा साऽपत्रपाऽन्यतः" इत्यमरः)। व्यधत्त कृतवती।

(३६) सुभगेन तद्वल्लभेन। स्वगणस्य स्वजनस्य। ईश्वरी स्वामिनी।

(३७) मलेति।—मलमल्लकं कौपीनम्, ("आच्छादनं संविधानं कौपीनं मलमल्लकम्" इति वैजयन्ती) शेषः यस्य तथाभूतः।

(३८) अपवाहितः गृहात् निष्कासितः। प्रपद्य प्राप्य। लोकोपहासेति।—लोकानाम् उपहासः तस्य लक्ष्यताम्, लोकोपहासविषयीभूततामिति यावत्।

(३९) जैनेति।—जैनानां सौगतानाम्, आयतने आवासे। एकेन मुनिना सौगतेनेति यावत्। उपदिष्टेति।—उपदिष्टम् अनुशिष्टं, मोक्षस्य अपवर्गस्य, वर्त्म यस्मै तथोक्तः, शिक्षितमुक्तिमार्ग इत्यर्थः।

वेशाविनिर्गतानाम्' इति उदीर्णवैराग्यः तदपि कौपीनम् अजहाम्(४०)। अथ पुनः प्रकीर्णमलपङ्कः(४१) प्रबलकेशलुञ्चन-व्यथः, प्रकृष्टतमक्षुत्पिपासादिदुःखः, (४२)स्थानासनशयनभोजनेषु अपि द्विप इव नवग्रहः बलवतीभिः यन्त्रणाभिः उद्वेजितः प्रत्यवामृशम्—(४३) 'अहमस्मि द्विजातिः, अस्वधर्मो (४४) मम एषः पाषण्डपथावतारः, (४५) श्रुतिस्मृतिविहितेन एव वर्त्मना मम पूर्वजाः प्रावर्त्तन्त। मम तु मन्दभाग्यस्य निन्द्यवेशम् अमन्ददुःखायतनं हरिहरहिरण्यगर्भादिदेवतापवादश्रवण-नैरन्तर्यात् (४६) प्रेत्यापि निरयफलम् (४७) अफलं विप्रलम्भ-

(४०) सुकरः सुसाध्यः। एष वेशः नग्नतयाऽवस्थानरूप इति भावः। वेश-विनिर्गतानां वेश्यागृहनिष्क्रामितानां। ("वेशो वेश्याजनाश्रयः" इत्यमरः)। उदीर्णेति।—उदीर्णं प्रवृद्धं, वैराग्यं यस्य तथाभूतः। अजहाम् अत्यजम्।

(४१) प्रकीर्णेति।—प्रकीर्णः प्रसृतः, सर्वशरीरव्याप्त इति यावत्, बौद्धानां गात्रपरिष्कारकरणनिषेधादिति भावः, मलपङ्कः घनीभूतकर्दमनिचयो यस्य तथाभूतः।

(४२) प्रबलेति।—प्रबला केशानां लुञ्चनेन छेदनेन, व्यथा यस्य तथाभूतः, बौद्धानां सर्वकेशमुण्डनविधानादिति भावः। प्रकृष्टेति।—प्रकृष्टतमम् अतिप्रबलं, क्षुत्पिपासादिभिर्दुःखं यस्य तथाभूतः, भक्ष्याद्यभावादिति भावः।

(४३) द्विपः हस्ती। नवग्रहः नवः नूतनः, ग्रहः ग्रहणं यस्य तादृशः, अचिरगृहीत इत्यर्थः। प्रत्यवामृशम् अचिन्तयम्।

(४४) द्विजातिः वैश्य इत्यर्थः। स्वधर्मः स्वधर्मो वैदिकाचारः, न स्वधर्मः अस्वधर्मः।

(४५) पाषण्डेति।—पाषण्डानां वैदिकाचारवर्जितानां, पन्थाः पाषण्डपथः तस्मिन् अवतारः अवतरणं, बौद्धमार्गानुसरणमित्यर्थः।

(४६) अमन्देति।—अमन्दानां महतां, दुःखानाम् आयतनं स्थानम्। हरिहरेति।—हरिहरहिरण्यगर्भादिदेवतानां विष्णुशिवब्रह्मादीनाम्, अपवादः निन्दा, तस्य श्रवणनैरन्तर्यात् अनवरतश्रवणादित्यर्थः।

प्रायम् ईदृशम् इदम् अधर्मवर्त्म धर्मवत् समाचरणीयमासीत्' इति प्रत्याकलितस्वदुर्नयः (४८) पिण्डीषण्डं विविक्तम् एतदासाद्य अपर्य्याप्तम् (४९) अश्रु मुञ्चामि' इति।

श्रुत्वा च एतदनुकम्पमानोऽब्रवं—'भद्र! क्षमस्व (५०) कञ्चित् कालम्, अत्र एव निवस, निजेन द्युम्नेन असौ एव वेश्या (५१) यथा त्वां योजयिष्यति तथा यतिष्ये, सन्ति उपायाः तादृशाः' इति आश्वास्य तम् अभ्युत्थितोऽहं नगरम् आविशन्नेव च उपलभ्य (५२) लोकवादात् लुब्धसमृद्धपूर्णं पुरमिति अर्थानां नश्वरत्वञ्च प्रदर्श्य, प्रकृतिस्थान् अमून् विधास्यन् कर्णीसुतप्रहिते पथि (५३) मतिम् अकरवम्। अनुप्रविश्य च द्यूतसभाम् अक्षधूर्त्तैः

---

(४७) प्रेत्यापि अमुत्रापि, परलोकेऽपीत्यर्थः, ("प्रेत्यामुत्र भवान्तरे" इत्यमरः)। निरयफलं नरकफलम्। ("स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्" इत्यमरः)।

(४८) अफलं निष्फलम्। विप्रलम्भप्रायं प्रायशः प्रतारणात्मकम्। ("विप्रलम्भो विसंवादो विरहो वञ्चना तथा" इति विश्वः)। प्रत्याकलितेति।—प्रत्याकलितः चिन्तितः, स्वस्य आत्मनः, दुर्नयः दुर्व्यवहारः येन तथाभूतः। (दुर्नय इत्यत्र क्षुभ्नादित्वात् णत्वाभावः)।

(४९) पिण्डीति।—पिण्डीनाम अशोकानां, षण्डं समूहः, वनमित्यर्थः तत्, ("अशोकः पिण्डिका पिण्डी" इति वैजयन्ती)। नास्ति पर्य्याप्तं यस्मात् तत् अपर्य्याप्तं यथेष्टम्।

(५०) क्षमस्व सहस्व।

(५१) द्युम्नेन धनेन, ("हिरण्यं द्रविणं द्युम्नम्" इत्यमरः)। असावेव वेश्या काममञ्जरीत्यर्थः।

(५२) उपलभ्य ज्ञात्वा।

(५३) लुब्धेति।—लुब्धैः धूर्त्तैः, समृद्धैः ऐश्वर्य्यशालिभिरित्यर्थः, पूर्णं व्याप्तम्। अर्थानां नश्वरत्वञ्च प्रदर्श्य "अर्थमनर्थं भावय नित्यम्" तथा "मा कुरु धनजनयौवनगर्वं, हरति निमेषात् कालः सर्वम्" इत्यादिभिः ज्ञापयित्वेति यावत्। प्रकृतिस्थान् स्वभावस्थान्, सत्पथवर्त्तिन इति यावत्। अमून् पुरवासिन इति यावत्। विधास्यन् करिष्यन्। कर्णीसुतेति।—कर्णीसुतः स्तेयशास्त्रप्रवर्त्तकः

समगंसि (५४)। तेषां च (५५) पञ्चविंशतिप्रकारासु सर्वासु द्यूताश्रयासु कलासु कौशलम्, अक्षभूमिहस्तादिषु च अत्यन्त-दुरुपलक्ष्याणि (५६) कूटकर्माणि, तन्मूलानि सावलेपानि अधि-क्षेपवचनानि, (५७) जीवितनिरपेक्षाणि संरम्भविचेष्टितानि, सभिकप्रत्ययव्यवहारान् न्यायबलप्रतापप्रायान् प्रयोजितार्थ-साधनक्षमान्, (५८) बलिषु सान्त्वनानि, दुर्बलेषु भर्त्सितानि, पक्षरचनानैपुण्यम्, उच्चावचानि उपप्रलोभनानि, (५९) ग्लह-

पुरुषविशेषः, ("कर्णीसुतः करटकः स्तेयशास्त्रस्य कारकः" इति वैजयन्ती) तेन प्रहिते मार्गे, पथि चौरवर्त्मनीत्यर्थः।

(५४) द्यूतसभां पाशकक्रीडास्थानम्। अक्षधूर्तैः पाशकक्रीडाचतुरैः। समगंसि मिलितोऽभवम्।

(५५) तेषाम् अक्षधूर्तानाम्।

(५६) कलासु विद्यासु, चातुरीष्विति भावः। कौशलं नैपुण्यम्। अक्ष-भूमिहस्तादिषु अक्षस्य पाशकविशेषस्य, भूमिषु चूर्णेषु, ये हस्तादयः हस्तकौशलादय इति यावत् तेषु। "अक्षभूमिहस्तादिषु" इति पाठे—अक्षाणां पाशकानां, भूमिः पातनपट्टं, तस्मिन् हस्तादयः हस्तप्रक्षेपचातुर्यादय इति भावः तेषु। अत्यन्तेति।—अत्यन्तं दुःखेन उपलक्ष्यन्ते इति तथोक्तानि, दुर्ज्ञेयानीत्यर्थः।

(५७) कूटकर्माणि कपटव्यवहारान्। तन्मूलानि तत् कूटकर्म, मूलं येषां तानि तन्निबन्धनानीत्यर्थः। सावलेपानि सगर्वाणि। अधिक्षेपवचनानि निन्दा-सूचकदुर्वाक्यानि।

(५८) संरम्भविचेष्टितानि संरम्भः कोपः, ("संरम्भः सम्भ्रमे कोपे" इत्यमरः) तेन विचेष्टितानि क्रोधविजृम्भितानीत्यर्थः। सभिकः द्यूतकारकः, द्यूतसभाध्यापकः इत्यर्थः, तदध्यक्ष इति यावत्, ("सभिको द्यूतकारकः" इत्यमरः) तस्य प्रत्ययः विश्वासः, तद्योग्यव्यवहारान् तदुचितानि अनुष्ठानानीत्यर्थः। न्यायेति।—न्यायः युक्तिः, बलं सामर्थ्यं, तयोः प्रतापः प्रभावः, प्रायो बहुलो येषु तथाविधान्। प्रयोजितेति।—प्रयोजितानां दैवनार्थं पणीकृतानामिति यावत्, अर्थानां साधने सम्पादने, क्षमान् योग्यानिति सभिकप्रत्ययव्यवहारान् इत्यस्य विशेषणद्वयं बोध्यम्।

(५९) पक्षेति।—पक्षरचनायां स्वपक्षीयकरणे, नैपुण्यं पाटवम्। उच्चा-

प्रभेदवर्णनानि, द्रव्यसंविभागौदार्य्यम्, अन्तराऽन्तरा(६०)अश्लील-प्रायान् कलकलानित्येतानि च अन्यानि च अनुभवन् न तृप्तिम् अध्यगच्छम् (६१)। असहमानश्च किञ्चित् प्रमाददत्तशारिके (६२)क्वचित् कितवे(६३)। प्रतिकितवस्तु निर्दहन् इव क्रोध-ताम्रया दृशा माम् अभिवीक्ष्य 'शिक्षयसि रे! द्यूतवर्त्म हास-व्याजेन? आस्ताम् (६४) अयम् अशिक्षितो वराकः, त्वया एव तावत् विचक्षणेन देविष्यामि' इति द्यूताध्यक्षानुमत्या व्यत्यषजत्। (६५) मया जितश्चासौ षोड़शसहस्राणि दीनाराणाम् (६६)।

---

अर्थानि नैकविधानि, ("उच्चावचं नैकविधम्" इत्यमरः)। उपहासोत्पादनानि क्षोभ-प्रदर्शनानि।

(६०) ग्लहेति।—ग्लहः द्यूतार्थे पणः, ("पणोऽक्षेषु ग्लहो मतः" इत्यमरः) तस्य प्रभेदः विशेषः, तस्य वर्णनानि प्रकटनानि, अनेनाद्य इयान् पणः स्थापितः, मया तु अस्मादपि अधिकः पणः स्थाप्यते इत्येवंरूपेणेति भावः। द्रव्येति।—द्रव्याणां पणीकृतानामिति भावः, संविभागे संवण्टने, औदार्य्यं महत्त्वं, स्वांशत्यागादिनेति भावः, अथवा—औदार्य्यं दाक्ष्यं, दुतदक्षतेति यावत्। अन्तराऽन्तरा मध्ये मध्ये।

(६१) अश्लीलप्रायान् ("अश्लीलं ग्राम्यभाषणम्" इति वैजयन्ती)। तच्च जुगुप्साव्रीडामङ्गलव्यञ्जकत्वेन त्रिविधं, तत्प्रायान् प्रायेण तद्रूपानित्यर्थः। तृप्तिं सन्तोषम्। अध्यगच्छं प्राप्तम्।

(६२) किञ्चित् ईषत्। प्रमादेति।—प्रमादेन अनवधानतया, दत्ता निवेशिता, शारिका अक्षगुटिका येन तथाभूते, ("शारः शारिश्च खेलनी" इति मेदिनी)। "प्रमादलग्नशारे" इति पाठे—स एवार्थः।

(६३) कितवे धूर्ते, द्यूतकरे इत्यर्थः।

(६४) आस्तां तिष्ठतु।

(६५) देविष्यामि क्रीड़िष्यामि। व्यत्यषजत् व्यतिषक्तोऽभूत्, मया सह दीव्यितुमुपाविशदित्यर्थः।

(६६) दीनाराणां सुवर्णमुद्राविशेषाणाम्।

तदहं सभिकाय (६७)सभ्येभ्यश्च दत्त्वा अर्धं स्वीकृत्य उदतिष्ठम्। उदतिष्ठंश्च तत्र गतानां हर्षगर्भाः प्रशंसालापाः। प्रार्थयमानसभिकानुरोधाच्च तदगारेऽत्युदारम् अभ्यवहारविधिम्(६८)अकरवम्। यन्मूलश्च मे दुरोदरावतारः, (६९) स मे विमर्दको नाम विश्वास्यतरं द्वितीयं हृदयम् आसीत्। तन्मुखेन च सारतः कर्मतः शीलतश्च सकलमेव नगरम् अवधार्य, धूर्जटिकण्ठकल्माषकालतमसि तमसि नीलनिवसनार्धोरुकपरिहितो (७०) बद्धतीक्ष्णकौक्षेयकः फणिमुखकाकलीसन्दंशकपुरुषशीर्षकयोगचूर्णयोगवर्त्तिकामानसूत्रकर्कटकरज्जुदीपभाजनभ्रमरकरण्डकप्रभृत्यनेकोपकरणयुक्तो(७१)गत्वा कस्यचित् लुब्धेश्वरस्य गृहे सन्धिं छित्त्वा,

(६७) सभिकाय द्यूताध्यक्षाय।

(६८) अभ्यवहारविधिं भोजनम्।

(६९) दुरोदरेति।—दुष्टम् उदरं यस्य तत्, (पृषोदरादि, निपातनात् साधु) द्यूतमित्यर्थः ("दुरोदरं द्यूतकारे पणे द्यूतेऽपि पाशके" इति महीपः)। तस्मिन् अवतारः प्रवेशः, तदनुष्ठानमिति यावत्।

(७०) धूर्जटीति।—धूर्जटिः शिवः, ("धूर्जटिर्नीललोहितः" इत्यमरः) तस्य कण्ठे यत् कल्माषं कालिमा, ("सितेतरः स्यात् कल्माषम्" इति शाश्वतः) तद्वत् कालतमसि अतिकृष्णवर्णे इत्यर्थः। तमसि अन्धकारे। नीलेति।—नीलं निवसनं वस्त्रं, तच्च अर्धोरुकम् अर्धोरुपर्यन्त व्याप्नोति तत्, अवगुण्ठनवस्त्रं, परिहितं येन सः, (निष्ठान्तस्य परनिपातः) नीलवस्त्रेणाच्छादितशरीर इत्यर्थः।

(७१) बद्धेति।—कुक्षौ बद्धः इति ढक् कौक्षेयकः करवालः, ("कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्" इत्यमरः)। बद्धः कुक्षौ निवेशितः, तीक्ष्णः कौक्षेयकः येन तथाभूतः। फणिमुखेति।—फणिनः मुखमिव मुखमस्य तत् फणिमुखं सुरङ्गाखननसाधनमस्त्रविशेष इत्यर्थः, काकली: काकचञ्चुवत् लीयते, काकचञ्च्वाकारः यन्त्रभेदः, "कतंरी", सन्दंशकः दृढनिखातकीलाद्युद्धारार्थः यन्त्रविशेषः, "सँड़ासी" इति यस्य प्रसिद्धिः, पुरुषशीर्षकं पुरुषस्य शीर्षकं शिरःप्रतिरूपं काष्ठमयं शिरः, सन्धिं छित्त्वा प्रथमतस्तत्प्रवेशनेन विघ्नशङ्कां तस्करैः क्रियते इत्यभिप्रायकं, योगचूर्णं

पटहाक्षसूक्ष्मच्छिद्रालक्षितान्तर्गृहप्रवृत्तिः (७२) अव्यथो (७३) निजगृहमिव अनुप्रविश्य नीवीं सारमहतीम् आदाय निरगाम् (७४)। नीलनीरदनिकरपीवरतिमिरनिबिड़पीड़ितायां राजवीथ्यां झटिति शतह्रदासम्पातमिव (७५) क्षणमालोकम् अलक्षयम्। अथ असौ नगरदेवता इव (७६) नगरमोषरोषिता निःसम्बाध-

---

योगेन समाधिविशेषेण, तेन शास्त्रप्रदर्शितेन इति भावः, प्रक्षिप्यमाणं चूर्णं, येन गृहस्थानां निद्रावेशातिरेकः साध्यते इति भावः, योगवर्त्तिका विनाऽग्निमालोकसाधनवस्तु-विशेषः, मानसूत्रं परिमाणार्थं रज्जुः, येन खलु आकारपरिमाणेन सन्धिः क्रियते इति भावः, कर्कटकः कुलीराकारो यन्त्रभेदः, "कम्पास" इति लोके, रज्जुः उपरि-तलारोहणसाधनं, दीपभाजनं प्रदीपाधारः, भ्रमरः वेधनयन्त्रभेदः, "तुर्पीन" इति लोके, करण्डकः दीपनिर्वापणार्थं भ्रमरभाण्डं, तत्प्रभृतिभिः अनेकैः बहुभिः, उपकरणैः चौर्य्यसाधनद्रव्यैः, युक्तः।

(७२) लुब्धानाम् अर्थलोलुपानाम्, अदातॄणामिति यावत्, ईश्वरस्य श्रेष्ठस्य लुब्धेश्वरस्य कृपणस्येत्यर्थः। पटहाक्षेति।—पटहस्य वाद्यभेदस्य, अक्षि पटहाक्षं, ("अच् समासान्तः") तद्वत् सूक्ष्मं यत् छिद्रम्; "पटभास" इति पाठे— पटभासः प्रेक्षणकं, जालान्तरमिति यावत्, ("पटभासः प्रेक्षणकम्" इति वैजयन्ती) तेन आलक्षिता उपलब्धा, अन्तर्गृहे गृहमध्ये, प्रवृत्तिः वृत्तान्तः येन तथाभूतः।

(७३) अव्यथः अक्लिष्टः, अश्रान्त इत्यर्थः।

(७४) नीवीं वणिजां मूलधनं, ("मूलद्रव्यं परिपणो नीवी" इति हेमचन्द्रः)। सारमहतीं सारेण उत्कृष्टवस्तुबाहुल्येन, महतीं महामूल्यवतीमिति यावत्। निरगां बहिरगच्छम्।

(७५) नीलेति।—नीलानां नीरदानां मेघानां, निकरः समूहः, तद्वत् पीवरं सान्द्रमित्यर्थः, यत् तिमिरम् अन्धकारं, तेन निबिड़म् अतिमात्रं, पीड़ितायाम् आच्छन्नायाम्। राजवीथ्यां राजमार्गे। शतह्रदा विद्युत्, तस्याः सम्पात-मिव आपतनमिव।

(७६) नगरदेवतेव नगराधिष्ठात्री देवीव।

वेलायां निःसृता संनिकृष्टा(७७)काचिदुन्मिषद्भूषणा(७८)युवतिः आविरासीत्। 'काऽसि वासु!? क यासि?' इति सदयमुक्ता सासगद्गदम् अवादीत्—'आर्य्य! पुर्य्यामस्याम् अर्य्यवर्य्यः (७९) कुबेरदत्तनामा वसति, अस्मि अहं तस्य कन्या। मां जातमात्रां धनमित्रनाम्ने अत्रत्याय एव कस्मैचित् इभ्यकुमाराय अन्वजानात् (८०) भार्य्यां मे पिता। स पुनः अमुष्मिन् अत्युदारतया (८१) पित्रोः अन्ते वित्तैः निजैः कौलेवार्थिवर्गात् (८२) दारिद्र्यं दरिद्रति सति, अथ 'उदारकः' इति च प्रीतलोकाधिरोपितापरश्लाघ्यनामनि (८३) वरयति एव (८४) तस्मिन् मां तरुणीभूताम्, अधन इति अदत्त्वा अर्थपतिनाम्ने कस्मैचित् इतरस्मै

---

(७७) नगरेति।—नगरस्य नागरिकजनसमूहस्येत्यर्थः, मोषेण चौर्य्येण, रोषिता क्रोधिता। निःसम्पातवेलायां निभृतसमये इत्यर्थः। सन्निकृष्टा समीपवर्त्तिनी।

(७८) उन्मिषदिति।—उन्मिषन्ति प्रस्फुरन्ति, भूषणानि यस्यास्तथोक्ता उज्ज्वलालङ्कारेत्यर्थः।

(७९) वासु! बाले! ("अथ बाला स्यात् वासूः" इत्यमरः)। अर्य्यवर्य्यः वैश्यश्रेष्ठः। ("ऊरव्या ऊरुजा अर्य्या वैश्या भूमिस्पृशो विशः" इत्यमरः)। [अर्य्यः स्वामी वैश्यो वेति वैयाकरणाः]।

(८०) अत्रत्याय एतन्नगरवासिने इत्यर्थः। इभ्यकुमाराय धनिपुत्राय। अन्वजानात् भार्य्यात्वेन प्रतिज्ञातवानित्यर्थः।

(८१) स पिता। अमुष्मिन् धनमित्रे। अत्युदारतया अतिवदान्यतया।

(८२) पित्रोः जननीजनकयोः। अन्ते अवसाने। कौलेवार्थिवर्गादित्यादि।—अर्थिभ्यः अशेषं धनं दत्त्वा निर्धने सतीत्यर्थः।

(८३) उदारकः उदारः दाता एव उदारकः [स्वार्थे कन्-प्रत्ययः]। प्रीतेति।—प्रीतैः तस्य दानशीलतया सन्तुष्टैः, लोकैः अधिरोपितं दत्तम्, अपरं धनमित्रादन्यत्, श्लाघ्यं प्रशस्तं, नाम यस्य तादृशे।

(८४) वरयति प्रार्थयमाने।

यथार्थनाम्ने सार्थवाहाय (८५) दित्सति (८६) मे पिता। तत् अमङ्गलम् श्वः किल प्रभाते भावीति ज्ञात्वा, प्रागेव प्रियतम-दत्तसङ्केता वञ्चितस्वजना (८७) निर्गत्य, बाल्याभ्यस्तेन वर्त्मना मन्मथैकाभिसरा तदगारम् अभिसरामि; (८८) तन्मां मुञ्च, गृहाण एतद्भाण्डम्' इति उन्मुच्य (८९) मह्यम् अर्पितवती। दयमानश्च अहमब्रवम्—'एहि साध्वि ! त्वां नयेयं त्वत्प्रियतमम्' इति त्रिचतुराणि पदानि अचलम्। आपतच्च दीपिकाऽऽलोक-परिलुप्यमानतिमिरभारं (९०) यष्टिकृपाणपाणि नागरिकबलम् अनल्पम् (९१)। दृष्ट्वा एव प्रवेपमानां (९२) कन्यकाम् अवदं—'भद्रे ! मा भैषीः, अस्त्ययम् असिद्वितीयो मे बाहुः। अपि तु,

---

(८५) अधनः दरिद्रः, इति इति कृत्वा, अदत्त्वा, धनमित्राय मामिति शेषः। यथार्थनाम्ने महाधनत्वादर्थपतिरिति सार्थकनाम्ने। सार्थवाहाय वणिजे।

(८६) दित्सति दातुमिच्छति।

(८७) प्रियतमेति।—प्रियतमाय धनमित्राय, दत्तः प्रहितः, सङ्केतः अभिसरणार्थमिङ्गितः यया, प्रियतमेन दत्तः सङ्केतो यस्यै इति वा तथाभूता। वञ्चितस्वजना वञ्चिताः प्रतारिताः, अगणिता इत्यर्थः, स्वजनाः पित्रादयः यया तादृशी।

(८८) बाल्याभ्यस्तेन बाल्ये शैशवे, अभ्यस्तं परिचितं तेन। वर्त्मना पथा। मन्मथेति।—मन्मथः कामः, एकः अद्वितीयः, अभिसरः सहायः, यस्याः तथोक्ता, मदनप्रेरितेति यावत्। तदगारं तस्य प्रियतमस्य, अगारं गृहम्। अभिसरामि अभिसारिकारीत्या गच्छामि।

(८९) भाण्डं भूषणं, ("भाण्डं भूषाऽश्वभूषयोः" इत्यमरः)। उन्मुच्य अङ्गादुत्तार्य।

(९०) आपतत् आगच्छत्। दीपिकेति।—दीपिकानाम् आलोकेन परिलुप्यमानः निराक्रियमाणः, तिमिरभारः तमःसङ्घातः येन तथाभूतम्।

(९१) यष्टीति।—यष्टयः दण्डाः, कृपाणाः तरवारयश्च, पाणौ यस्य तथोक्तं, यष्टितरवारिधारीत्यर्थः। नागरिकबलं प्रहरिकसङ्घः। अनल्पं बहुलम्।

(९२) प्रवेपमानां कम्पमानां, भयेनेति भावः।

मृदुः अयमुपायः त्वदपेक्षया (९३) चिन्तितः, शयेऽहं भावितविषवेगविक्रियः (९४)। त्वयाऽपि अमी (९५) वाच्याः,—'निशि वयमिमां पुरीं प्रविष्टाः, दष्टश्च मम एष नायको दर्वीकरेण अमुष्मिन् सभागृहकोणे,(९६)यदि वः कश्चित् मन्त्रवित्,कृपालुः स एनम् उज्जीवयन् मम प्राणान् आहरेत् (९७) अनाथायाः' इति। साऽपि बाला, गत्यन्तराभावात् भयगद्गदस्वरा बाष्पदुर्दिनाक्षी (९८) बहुवेपथुः कथंकथमपि गत्वा (९९) मदुक्तम् अन्वतिष्ठत्, अशयिषि च अहं भावितविषवेगविक्रियः। तेषु कश्चित् नरेन्द्राभिमानी (१००) मां निर्वर्ण्य मुद्रातन्त्रमन्त्र-

---

(९३) मृदुः अदारुणः, खड्गादिहिंसाकर्मराहित्यादिति भावः। त्वदपेक्षया तव हितानुरोधेन।

(९४) शये शयनं करोमि। भावितेति।—भाविता उद्भाविता, प्रकटितेत्यर्थः, विषस्य सर्पदंशनेन शरीरप्रविष्टस्य गरलस्य, वेगेन विक्रिया विकारो येन तथाभूतः, विषमूर्च्छित इव तिष्ठामीति भावः।

(९५) अमी पुरुषाः।

(९६) दर्वीकरेण दन्दशूकेन, सर्पेणेत्यर्थः। ("दर्वीकरो दीर्घपृष्ठो दन्दशूको विलेशयः" इत्यमरः)। सभागृहकोणे सभागृहैकांशे।

(९७) वः युष्माकं मध्ये। एनं मम नायकम्। उज्जीवयन् निर्विषीकृत्य प्राणयन्। आहरेत् दद्यात्।

(९८) गत्यन्तराभावात् उपायान्तराभावात्। बाष्पेति।—बाष्पेण अश्रुणा, दुर्दिने मेघाच्छन्नदिवसवत् आच्छन्ने इत्यर्थः, अक्षिणी यस्याः तथोक्ता।

(९९) बहुवेपथुः अनवरतं कम्पमाना। कथंकथमपि अतिकष्टेन। गत्वा, तेषां पुरुषाणां समीपमिति शेषः।

(१००) तेषु नागरिकजनेषु। नरेन्द्राभिमानी नरेन्द्रः विषवैद्यः, ("नरेन्द्रो वार्त्तिके राज्ञि विषवैद्ये च कथ्यते" इति विश्वः) तम् आत्मानम् अभिमन्यते इति तथाविधः।

ध्यानादिभिश्च उपक्रम्य अकृतार्थः (१) 'गत एवायं कालदष्टः; तथा हि, स्तब्धश्यावमङ्गं,(२) रुद्धा दृष्टिः, शान्त एवोष्मा। शुचा अलं वामु! श्वोऽग्निसात् करिष्यामः (३)। कोऽतिवर्त्तते दैवम्?' इति सहेतरैः (४)प्रायात्। उत्थितश्च अहम् उदारकाय तां नीत्वा (५) अब्रवम्—'अहमस्मि कोऽपि तस्करः, त्वद्गतेन एव चेतसा सहायभूतेन त्वाम् अभिसरन्तीम् इमाम् अन्तरोपलभ्य(६) कृपया त्वत्समीपमनैषम्; भूषणम् इदमस्याः' इत्यंशुपटलपाटितध्वान्तजालं तत् अर्पितवान् (७)।

उदारकस्तु तदादाय सलज्जश्च सहर्षश्च ससम्भ्रमश्च माम्

---

(१) निर्वर्ण्य दृष्ट्वा। मुद्रेति।—मुद्रा कराङ्गुलीसञ्चालनविशेषः, तन्त्रम् उपायः, अरिष्टाबन्धनादि विषवेगप्रशमनार्थमुपायविशेष इत्यर्थः, मन्त्रध्याने प्रसिद्धे, तदादिभिः। उपक्रम्य चिकित्सित्वा, ("उपक्रमस्तूपधायां ज्ञात्वाऽऽरम्भे च विक्रमे। चिकित्सायाम्" इति मेदिनी) अकृतार्थः अकृतकार्य्यः, किमपि कर्त्तुमशक्नुवन्नित्यर्थः।

(२) गत एव पञ्चत्वं प्राप्त एव। कालेन अन्तकेन, यमोपमेन सर्पेणेत्यर्थः, दष्टः। तथा हि तमेवार्थं ज्ञापयतीति भावः। स्तब्धेति।—स्तब्धं निश्चेष्टं, श्यावं कपिशं, कृष्णपीतमिश्रवर्णमित्यर्थः, श्यामवर्णमिति लोके।

(३) रुद्धा निर्व्यापारा। शान्त एव उपशमं गत एव। शुचा शोकेन अलं, शोकं मा कुरु इत्यर्थः। श्वः परदिने। अग्निसात् करिष्यामः दहाम इत्यर्थः।

(४) अतिवर्त्तते अतिक्रामति, न कोऽपीत्यर्थः। इति, उक्त्वेति शेषः। इतरैः अन्यैः, सहचरैरित्यर्थः।

(५) उदारकाय धनमित्रापरनाम्ने। नीत्वा समर्प्य।

(६) अभिसरन्तीम् अभिसारिकारीत्या त्वत्सकाशमागच्छन्तीमित्यर्थः; ("कान्तार्थिनी तु या याति सङ्केतं साऽभिसारिका" इत्यमरः)। अन्तरा पथिमध्ये। उपलभ्य प्राप्य विदित्वा वा।

(७) अंशुपटलेति।—अंशूनां प्रभाणां, पटलैः समूहैः, पाटितं खण्डितं, ध्वान्तजालम् अन्धकारसमूहः येन तथाभूतम्। तत् पथि नायिकया मयैव दत्तं भूषणमित्यर्थः।

अभाषत—'आर्य्य ! त्वया एव इयमस्यां निशि प्रिया मे दत्ता, वाक् पुनः मम अपहृता। तथा हि, न जाने वक्तुं, त्वत्कर्म एतदद्भुतमिति ; ननु ते सुशीलम् अद्भुतवत् प्रतिभाति।(८)नैव-मन्येन अपि कृतपूर्वमिति ; प्रतिनियतैव वस्तुशक्तिः। (९)न हि त्वयि अन्यदीया लोभादयः, त्वया अद्य साधुतोन्मीलितेति ; तत् प्रायस्त्वत्पूर्वावदानेभ्यो न रोचते।(१०)दृष्टम् इदानीम् औदार्य्यस्य स्वरूपमिति ; त्वदाशयम् अननुमान्य न युक्तो निश्चयः। (११) त्वया अमुना सुकृतेन क्रीतोऽयं दासजन इति ; असारम्

---

(८) त्वदिति।—एतत् तव कर्म एतस्यां रात्रौ मह्यम् एतदवस्थायाः प्रियायाः समर्पणमित्यर्थः। अद्भुतं विस्मयजनकमित्यर्थः, इति न वक्तुं जाने शक्नोमीति यावत् इति अन्वयः। यतः ते तव, सुशीलं सरलस्वभावः, अद्भुतवत् चमत्कारकारीव, प्रतिभाति प्रकाशते, तस्मात् नैतत् कर्म केवलं नाद्भुतं, चरित्रमपि अद्भुतमिति भावः।

(९) अन्येन केनापीत्यर्थः, एवं कर्म न कृतपूर्वं पूर्वं न कृतमित्यर्थः, इत्यपि तथा न वक्तुं जाने इति पूर्वेणान्वयः। यतः वस्तुनः शक्तिः सामर्थ्यं, प्रतिनियतैव प्रत्येकशक्तिरेवेत्यर्थः। एकस्य वस्तुनः या शक्तिः सा तस्यैव, अपरस्य सा शक्तिर्न सम्भवति, तस्मात् नैवमन्येन कृतपूर्वमिति वचनस्यापि अवसरो नास्तीति भावः।

(१०) न हीति।—त्वयि अन्यदीयाः अन्यपुरुषसम्बन्धिनः, लोभादयः न हि, तिष्ठन्तीति शेषः। त्वया अद्य साधुता सज्जनता, उन्मीलिता प्रकटिता, इति न जाने वक्तुमित्यनेनान्वयः। यतः तत् वचनं, प्रायः बाहुल्येन, तव पूर्वावदानेभ्यः पूर्वकृतेभ्यः परोपकारादिरूपमहत्सु कर्मभ्यः, ("अवदानं कर्म वृत्तम्" इत्यमरः) न रोचते न स्वदते ; तव पूर्वं कृतानि यानि महान्ति कार्य्याणि सन्ति, अद्य साधुतोन्मीलितेति वचने तेषामवमानना अप्रतीतिश्च भवतीति भावः।

(११) दृष्टमित्यादि।—इति एतदपि, वक्तुं न जाने इत्यनेन सम्बन्धः। यतः तव आशयम् अभिप्रायम्, अननुमान्य अनुमतमकारयित्वेत्यर्थः, तवैव सौख्या अभ्यस्येति यावत्, निश्चयः निर्धारणं, न युक्तः नोचितः, तदाशये एतस्मादपि महत औदार्य्यस्य सम्भवात् इदृश्या अयमीतस्मिन्नेव कर्मणि तव औदार्य्यस्य स्वरूपनिश्चयः ? इति भावः।

अतिगरीयसा क्रीणासीति ; स ते प्रज्ञाऽधिक्षेपः ।(१२)प्रियादानस्य प्रतिदानम् इदं शरीरम् इति ; तदलाभे निधनोन्मुखम् इदमपि त्वया एव दत्तम् । (१३) अथ वा एतावदत्र प्राप्तरूपम्, (१४) अद्य प्रभृति भर्त्तव्योऽयं दासजनः' इति मम पादयोः अपतत् ।

उत्थाप्य च एनम् उरसोपश्लिष्य अभाषिषि—'भद्र ! काऽद्य ते प्रतिपत्तिः ?'(१५)इति । सोऽभ्यधत्त—'न शक्नोमि च एनाम् अत्र पित्रोः अनभ्यनुज्ञया उपयम्य (१६) जीवितुम्, अतोऽस्याम् एव यामिन्यां देशमिमं जिहासामि ; को वा अहम् ?(१७)यथा त्वम् आज्ञापयसि' इति । अथ मया उक्तम्—'अस्तु एतत्, स्वदेशो देशान्तरमिति नेयं गणना विदग्धस्य (१८) पुरुषस्य, किन्तु बालेयम् अनल्पसौकुमार्य्या, कष्टाः प्रत्यवायभूयिष्ठाश्च

---

(१२) सुकृतेन सत्कार्य्येण । क्रीतोऽयं दासजन इति, एतदपि वक्तुं न जाने इति पूर्ववत्, यतः असारम् अकिञ्चित्करमित्यर्थः, मामिति शेषः, अतिगरीयसा कृतेनैतेनातिमहता, कर्म्मणा इति शेषः । क्रीणासीति हेतोः, सः त्वत्समीपे तथाविध आलाप इत्यर्थः, ते तव, प्रज्ञायाः बुद्धेः, अधिक्षेपः निन्दा ; तथा कथने तव बुद्धिनिन्दा कृता स्यादिति भावः ।

(१३) प्रतिदानं प्रतिरूपं दानम् । शरीरमिति एतदपि, न जाने वक्तुमिति सम्बन्धः, यतः तदलाभे तस्याः प्रियायाः, अलाभे अप्राप्तौ, निधनोन्मुखं मरणोद्यत-मित्यर्थः, इदं शरीरं, त्वयैव दत्तं, मह्यमिति शेषः, अतः कथं तत् शरीरं प्रतिदानं स्यादिति भावः ।

(१४) एतावत्, वचनमिति शेषः । प्राप्तरूपं रम्यं, युक्तियुक्तमेतद्वचनं वक्तुमुचित-मित्यर्थः । ("प्राप्तरूपो बुधरम्ययोः" इति मेदिनी ) ।

(१५) उरसा वक्षसा । उपश्लिष्य आलिङ्ग्य । प्रतिपत्तिः कर्त्तव्यबुद्धिः ।

(१६) उपयम्य परिणीय ।

(१७) जिहासामि त्यक्तुमिच्छामि । को वा अहम् ? एतदुपायचिन्तने इति शेषः ।

(१८) विदग्धस्य विज्ञस्य चतुरस्य वा ।

कान्तारपथाः(१९)। शैथिल्यमिव किञ्चित् प्रज्ञासत्त्वयोः अनर्थेन ईदृशेन देशत्यागेन सम्भाव्यते(२०)। तत् सह अनया सुखमिहैव वस्तव्यम्(२१)। एहि, नयावैनां स्वमेव आवासम्' इति। अविचारानुमतेन(२२) तेन सह एवैनां तद्गृहम् उपनीय, तयैव अपसर्पभूतया तत्र मुद्राङ्कावशेषम् अचोरयाव(२३)। ततो निष्पत्य क्वचित् मुषितकं(२४) निधाय समुच्चलन्तौ नागरिकपुरुषसम्पाते मार्गपार्श्वशायिनं कञ्चित् मत्तवारणम् उपरि पुच्छम् आक्रम्य अध्यारोहाव(२५)। ग्रैवेयप्रोतपादयुगलेन च

---

(१९) अनल्पसौकुमार्या अतिकोमलाङ्गीत्यर्थः। क्लिष्टाः क्लेशप्रदाः। प्रत्यवायेति।—प्रत्यवायो बाधकं, विघ्नः इत्यर्थः, ("बाधकं प्रत्यवायः स्यात्" इत्यजयः) भूयिष्ठः बहुलो यत्र तादृशाः। कान्तारपथाः वनमार्गाः दुर्गममार्गा वा, ("कान्तारोऽस्त्री महारण्ये बिले दुर्गमवर्त्मनि" इति मेदिनी)।

(२०) शैथिल्यमिति।—ईदृशेन पूर्वोक्तरूपेण, अनर्थेन निरर्थकेन विपदाकीर्णेन वा, देशत्यागेन देशं त्यक्त्वा रजन्यामेवान्यत्र गमनेनेति यावत्। प्रज्ञा बुद्धिः, सत्त्वं बलं तयोः, किञ्चित् ईषत्, शैथिल्यमिव ह्रास इव, सम्भाव्यते विवेच्यते; अज्ञा दुर्बलाश्च ईदृशमाचरन्तीति भावः।

(२१) अनया कान्तया। इहैव नगरे। वस्तव्यं वासः कर्त्तव्यः, त्वयेति शेषः।

(२२) अविचारानुमतेन निर्विचारप्रतिपन्नेन।

(२३) तद्गृहं कुबेरदत्तगृहम्। तयैव कान्तया एव। अपसर्पभूतया चरभूतया, ("अपसर्पश्चरः स्पशः" इत्यमरः)। मुद्राङ्केति।—मुद्राङ्कम् अवशेषो यस्मिन् तत् यथा तथा। तत्र तत्पितृगृहे। अचोरयाव चोरितवन्तौ, आवामिति शेषः।

(२४) निष्पत्य निर्गत्य। मुषितकम् अपहृतद्रव्यम्।

(२५) निधाय प्रोथयित्वा। समुच्चलन्तौ द्रुतं प्रचलन्तौ इत्यर्थः। नागरिकेति।—नागरिकाणां पुरुषाणां प्रहरिणामित्यर्थः, सम्पाते सहसा सम्मुखापतने सतीति यावत्। मार्गपार्श्वशायिनं पथिप्रान्तशायिनम्। मत्तवारणं मत्तगजम्। पुच्छं लाङ्गूलम्। आक्रम्य आश्रित्य। "उपरिपुरुषम्" इति पाठे—उपरिस्थितम् आधोरणमित्यर्थः, आक्रम्य आकर्षणेन निपात्य। अध्यारोहाव अधिरूढवन्तौ।

मया उत्थाप्यमान एव पातिताधोरणपृथुलोरःस्थलपरिणतः (२६) पुरीतल्लतापरीतदन्तकाण्डः स रथिकबलम् अपिषत् (२७)। अध्वंसयाव च अमुनैव अर्थपतिभवनम् (२८)। अपवाह्य च क्वचन जीर्णोद्याने शाखाग्राहिकया च अवातराव (२९)। स्वगृहगतौ च स्नातौ शयनम् अध्यशिश्रियाव (३०)।

तावदेव उदगात् उदधेः उदयाचलेन्द्रपद्मरागशृङ्गकल्पं कल्पद्रुमहेमपल्लवापीड़पाटलं पतङ्गमण्डलम् (३१)। उत्थाय च

---

(२६) ग्रैवेयेति।—ग्रैवेयं कण्ठरज्जुः, ("ग्रीवाविभूषणे रज्जौ ग्रैवं ग्रैवेयमित्यपि" इति वैजयन्ती) तस्मिन् प्रोतं निवेशितं, पादयुगलं येन तथाभूतेन। पातितेति।—पातितस्य आधोरणस्य हस्तिपकस्य, पृथुले विशाले, उरःस्थले वक्षसि, परिणतः तिर्यग्दन्तप्रहारः, तद्वानित्यर्थः, ("तिर्यग्दन्तप्रहारस्तु गजः परिणतो मतः" इति हलायुधः। "पतितः" इति पाठे—पतेरकर्मकत्वात् अधिकरणे क्तः, पतितं पतनाधिकरणम्, आधोरणस्य हस्तिपकस्य, पृथुलमुरःस्थलं यत्र तथाभूतः, अत एव परिणतः परिपक्वः इति।

(२७) पुरीतल्लतेति।—पुरीतल्लता अन्त्रवल्ली, हस्तिपकस्येति शेषः, ("अन्त्रं पुरीतत्" इत्यमरः); तया परीतं वेष्टितं, दन्तकाण्डं दन्तदण्डः यस्य तथाभूतः। स गजः। रथिकबलं नागरिकसैन्यम्। अपिषत् अचूर्णयत्।

(२८) अध्वंसयाव ध्वंसितवन्तौ। अमुनैव मत्तवारणेनैव। अर्थपतेः तदाख्यस्य पूर्वोक्तस्य वणिक्पुत्रस्य, भवनं गृहम्।

(२९) अपवाह्य निष्क्रम्य। क्वचन कुत्रचित्। जीर्णोद्याने प्राचीनोपवने। शाखाग्राहिकया शाखाग्रहणेन इत्यर्थः, पर्यायेण ग्रहणं ग्राहिका। (ग्रहधातोर्भावे ण्वुल्-प्रत्ययः स्त्रीलिङ्गता च)। अवातराव अवतीर्णवन्तौ, प्रथमम् अहं पश्चात् धनमित्रः इत्येवं शाखां गृहीत्वा अवातराव इत्यर्थः।

(३०) शयनं शय्याम्। अध्यशिश्रियाव अधिश्रितवन्तौ।

(३१) तावदेव तत्क्षणमेव। उदगात् उदियाय। उदधेः समुद्रात्। उदयाचलेन्द्रस्य उदयाख्यपर्वतराजस्य, यत् पद्मरागशृङ्गं पद्मरागो लोहितमणिविशेषः तन्मयं शिखरमित्यर्थः, तत्कल्पं तस्मादीषदूनं, प्रायस्तत्सममित्यर्थः। कल्पद्रुमस्य देव-

धौतवक्त्रौ (२२) प्रगेतनानि मङ्गलानि अनुष्ठाय अस्मत्कर्मतुमुलं (२३) पुरम् अनुविचरन्तावशृणुव वरवधूगृहेषु कोलाहलम्। अथ अर्थैः अर्थपतिः कुबेरदत्तम् आश्वास्य कुलपालिकाविवाहं मासावधिकम् अकल्पयत् (२४)। उपह्वरे पुनरित्यशिक्षयं धनमित्रम्, 'उपतिष्ठ (२५) सखे! एकान्ते एव चर्मरत्नभस्त्रिकाम् इमां पुरस्कृत्य अङ्गराजम्, (२६) आचक्ष्व च, 'जानात्येव देवो नैककोटिसारस्य (२७) वसुमित्रस्य मां धनमित्रं

---

तरुविशेषस्य, हेमपल्लव एव स्वर्णमयकिसलय एव, आपीडः शेखरः, शिरोभूषणमित्यर्थः, ("आपीडः शेखरे माले" इति वैजयन्ती) तस्य पाटलं श्वेतरक्तं, ("श्वेतरक्तस्तु पाटलः" इत्यमरः)। पतङ्गमण्डलं सूर्यमण्डलं, ("पतङ्गौ पक्षिसूर्यौ च" इत्यमरः)।

(२२) उत्थाय, शयनादिति शेषः। धौतवक्त्रौ प्रक्षालितमुखौ।

(२३) प्रगेतनानि प्रातःकालीनानि, प्रातःकर्त्तव्यानीत्यर्थः। (प्रगे इति एदन्तमव्ययं, ततः ट्युल् तुट् च। "प्रगे प्रातः प्रभाते च" इत्यमरः)। अस्मदिति।—अस्माकं कर्मभिः चौर्यवृत्तिभिरित्यर्थः, तुमुलं व्याकुलं, भयसङ्कुलमित्यर्थः, ("तुमुलं व्याकुले रणे" इति विश्वप्रकाशः)।

(२४) आश्वास्य सान्त्वयित्वा। मासावधिकं मासः अवधिर्यस्य तथोक्तम्, अद्यारभ्य मासमध्ये यस्मिन् कस्मिन्नपि दिने करणीयमित्यर्थः। अकल्पयत् निर्द्धारयामास।

(२५) उपह्वरे रहसि, ("रहोऽन्तिकमुपह्वरे" इत्यमरः)। उपतिष्ठ भजस्व।

(२६) एकान्ते एव निर्जने एव। चर्मरत्नेति।—चर्मरत्नस्य उत्कृष्टचर्मणः, भस्त्रिका पेटिकाविशेषः ताम्; यद्वा—चर्मणः रत्नभस्त्रिकां चर्मनिर्मितरत्नाधारपेटिकाम्। पुरस्कृत्य अग्रे धृत्वा। अङ्गराजम् अङ्गदेशाधिपतिं, विहारान्तर्गतभागलपुरप्रदेशादीनाम् अधीश्वरम्।

(२७) आचक्ष्व ब्रूहि। नैककोटिसारस्य नैककोटयः बहुकोटिसङ्ख्यकानि, साराणि धनानि यस्य तादृशस्य, ("सारो बले स्थिरांशे च मज्ज्ञि पुंसि जले धने। न्याय्ये क्लीबं त्रिषु वरे" इति मेदिनी)।

नाम्नैकपुत्रम्। सोऽहं मूलहरत्वमेत्य अर्थिवर्गात् अस्मि अवसन्नः (३८)। मदर्थमेव संवर्धितायां कुलपालिकायां (३९) महादरिद्र-टीयात् पुनः कुबेरदत्तेन दुहितरि अर्थपतये दित्सितायाम् (४०) उद्वेगात् उज्झितुम् असून् उपपौरिकं जरद्वनम् अवगाह्य (४१) कण्ठन्यस्तशस्त्रिकः केनापि जटाधरेण निवार्य एवमुक्तः, 'किं ते साहसस्य (४२) मूलम्?' इति। मयोक्तम्—'अवज्ञासोदर्यं (४३) दारिद्र्यम्' इति। स पुनरेवं कृपालुः अन्वग्रहीत्—'तात! मूढोऽसि, न अन्यत् पापिष्ठतमम् आत्मत्यागात्। आत्मानम् आत्मनाऽनवसाद्यैव उद्धरन्ति (४४) सन्तः। सन्ति

---

(३८) मूलहरत्वं विलुप्तमूलधनत्वमित्यर्थः, ("मूलं शिफाद्ययोः। मूलवित्तेऽन्तिके वा ना भे" इति मेदिनी)। एत्य प्राप्य। अर्थिवर्गात् याचककुलात्, अर्थिभ्यः सर्वं धनं दत्त्वेत्यर्थः। अवसन्नः दुःखितः, निःस्वतयेति भावः।

(३९) मदर्थमेव मह्यं दानायैवेत्यर्थः; एव-कारोऽन्यव्यवच्छेदकः। संवर्धितायां पालितायाम्। कुलपालिकायां कुलस्त्रियां, सुचरितायां कन्यायामित्यर्थः, ("कुलस्त्री कुलपालिका" इत्यमरः)।

(४०) दित्सितायां दातुमिष्टायाम्।

(४१) उद्वेगात् तद्विरहदुःखात्। उज्झितुं त्यक्तुम्। असून् प्राणान्। पुरस्य समीपे इत्युपपुरं, (समीपार्थेऽव्ययीभावः) उपपुरे भवम् उपपौरिकं,(भवार्थे ठक्-प्रत्ययः)। "उपनगरभवम्" इति पाठान्तरम्। जरद्वनं जीर्णोद्यानं, लोकसञ्चार-रहितमिति भावः। अवगाह्य प्रविश्य।

(४२) कण्ठेति।—कण्ठे न्यस्ता अर्पिता, शस्त्रिका छुरिका येन तथाभूतः। केनापि अविदितनाम्नेत्यर्थः। साहसस्य ईदृशकुकर्मणः।

(४३) अवज्ञेति।—अवज्ञा, लोकानामिति शेषः, सोदर्या सहोदरा, तत्सदृशीत्यर्थः; यस्य तादृशम्, अवज्ञासहचरमित्यर्थः।

(४४) तात! वत्स!। मूढः मूर्खः, निर्बोध इत्यर्थः। आत्मत्यागात् प्राणत्यागात्, अन्यत् अपरं, पापिष्ठतमम् अतिपातकं, न, अस्तीति शेषः। अनवसाद्य अपीडयित्वा। उद्धरन्ति विपद्भ्यः मोचयन्ति इत्यर्थः।

उपाया धनार्जनस्य बहवः, नैकोऽपि छिन्नकण्ठप्रतिसन्धानपूर्वस्य प्राणलाभस्य। किमनेन? (४५) सोऽस्मि अहं मन्त्रसिद्धः; साधिता इयं लक्षग्राहिणी चर्मरत्नभस्त्रिका, चिरम् अहमस्याः प्रसादात् (४६) कामरूपेषु कामप्रदः प्रजानामवात्सं, मत्सरिण्यां जरसि (४७) भूमिस्वर्गम् अत्रोद्देशे प्रवेक्ष्यन् आगतः। ताम् इमां (४८) प्रतिगृहाण, मदन्यत्र च इयं वणिग्भ्यो वारमुख्याभ्यो वा दुग्धे, इति हि तद्गता प्रतीतिः (४९)। किन्तु यत्सकाशात् अन्यायापहृतं, तत् तस्मै प्रत्यर्पणीयं, न्यायार्जितन्तु देवब्राह्मणेभ्यः त्याज्यम् (५०)। अथ (५१) इयं देवता इव शुचौ देशे

---

(४५) नैकोऽपि, उपाय इति शेषः। छिन्नेति।—छिन्नः यः कण्ठः तस्य प्रतिसन्धानं योजनं, पूर्वं यस्य तादृशस्य। प्राणलाभस्य जीवनप्राप्तेः। अनेन प्राणत्यागेन।

(४६) साधिता निर्मिता निष्पादिता वा, मन्त्रबलेनेति शेषः। लक्षग्राहिणी प्रतिदिनं लक्षमुद्राप्रसविनीत्यर्थः। चिरं दीर्घकालम्। अस्याः चर्मरत्नभस्त्रिकायाः। प्रसादात् अनुग्रहात्।

(४७) कामरूपेषु जनपदभेदेषु, रङ्गपुरसन्निहितेषु आसामदेशान्तर्गतप्रदेशविशेषेषु। कामप्रदः वाञ्छितप्रदायी। मत्सरिण्यां विद्वेषिण्यां, भोगविघ्नकारिण्यामिति यावत्। जरसि वार्द्धके इत्यर्थः।

(४८) अत्र उद्देशे प्रदेशे, जीर्णवने इत्यर्थः। भूमिस्वर्गे भूमौ पृथिवीगर्भे, स्वर्गं इव तम्। इमां चर्मरत्नभस्त्रिकाम्।

(४९) मदन्यत्र मत्तः अन्यत्र, मत्तः अन्येषु जनेषु मध्ये इत्यर्थः। इयं चर्मरत्नभस्त्रिका। दुग्धे स्वयं लक्षमुद्राः प्रसूते इत्यर्थः। इति हि इत्येव, हि शब्दोऽवधारणार्थः। तद्गता तन्निष्ठा, चर्मरत्नभस्त्रिकासम्बन्धिनीत्यर्थः। प्रतीतिः ख्यातिः नियमो वा।

(५०) "किन्तु" इत्यादि "त्याज्यम्" इत्यन्तवाक्ये—यदन्तिके इयं तिष्ठति तेनेति भावः।

(५१) अथ अनन्तरम्, अन्यायार्जितप्रत्यर्पणात् न्यायार्जितस्य च त्यागप्रतिपादनादनन्तरमित्यर्थः।

निवेश्य अर्च्यमाना प्रातः प्रातः सुवर्णपूर्णैव दृश्यते, स एव कल्पः’ इति बद्धाञ्जलये मह्यम् एनां दत्त्वा किमपि ग्रावच्छिद्रं (५२) प्राविशत्। इयञ्च रत्नभूता चर्मभस्त्रिका देवाय अनिवेद्य न उपजीव्या (५३) इत्यानीता, परन्तु देवः प्रमाणम्’ (५४) इति। राजा च नियतम् (५५) एवं वक्ष्यति, ‘भद्र ! प्रीतोऽस्मि, गच्छ, यथेष्टम् एनाम् उपभुङ्क्ष्व’ इति। भूयश्च ब्रूहि, ‘यथा न कश्चित् एनां मुष्णाति, तथा अनुष्ठीयताम्’ इति। तदपि अवश्यम् असौ अभ्युपेष्यति। (५६) ततः स्वगृहमेत्य यथोक्तम् अर्थत्यागं कृत्वा दिने दिने वरिवस्यमानां स्तेयलब्धैः अर्थैः नक्तमापूर्य्य प्राह्णे(५७)लोकाय दर्शयिष्यसि ; ततः कुबेरदत्तस्तृणाय मत्वाऽर्थ-पतिम् अर्थलुब्धः कन्यकया स्वयमेव त्वाम् उपस्थास्यते। (५८)

---

(५२) कल्पः कथं कार्य्यमित्यपेक्षापूरकेतिकर्त्तव्यताभेदः, नियमः इत्यर्थः। इति, उक्तेति शेषः। ग्रावच्छिद्रं पर्वतविवरम्, ("अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः" इत्यमरः)।

(५३) रत्नभूता "जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते" इति तत्स्वरूपा, परमोत्कृष्टं वस्तु इत्यर्थः। देवाय महाराजाय। अनिवेद्य अनावेद्य। उपजीव्या भोक्तव्या।

(५४) प्रमाणं निर्णयकर्त्ता, व्यवस्थापयितेति यावत्, ("प्रमाणं हेतुमर्य्यादा-शास्त्रेयत्ताप्रमातृषु" इत्यमरः)।

(५५) नियतं निश्चितम्, अवश्यमित्यर्थः।

(५६) मुष्णाति अपहरति। अभ्युपेष्यति अङ्गीकरिष्यति।

(५७) अर्थत्यागम् अर्थानां त्यागं दानम्। वरिवस्यमानां शुश्रूष्यमाणां, पूज्यमानाम् इत्यर्थः, एनामिति शेषः, ("वरिवस्या तु शुश्रूषा" इत्यमरः)। स्तेयेति।—स्तेयेन चौर्य्येण, लब्धैः उपार्जितैः। अर्थैः धनैः। नक्तं रात्रौ। आपूर्य्य पूरयित्वा। प्राह्णे प्रातः।

(५८) उपस्थास्यते आराधयिष्यति। ("मैत्राध्वसङ्गाराधे" इति सूत्रेणोप-पूर्वकात् तिष्ठतेरात्मनेपदम्)।

अथ कुपितोऽर्थपतिः व्यवहर्तुम् अर्थगर्वात् अभियोक्ष्यते, तत्र भूयश्चित्रैः (५९) उपायैः कौपीनावशेषं करिष्यावः। स्वकञ्च चौर्य्यम् अनेनैव अभ्युपायेन सुप्रच्छन्नं (६०) भविष्यति' इति।

हृष्टश्च धनमित्रो यथोक्तम् अन्वतिष्ठत्। तदहरेव मद्वियोगाद्विमर्दकोऽर्थपतिसेवाऽभियुक्तः तस्योदारके वैरम्(६१)अभ्यवर्धयत्। अर्थलुब्धश्च कुबेरदत्तो निवृत्य अर्थपतेः, धनमित्राय एव तनयां सानुनयं प्रादित्सत्, प्रत्यबध्नाच्च अर्थपतिः। (६२)

एषु एव दिवसेषु 'काममञ्जर्य्याः स्वसा यवीयसी(६३) रागमञ्जरी नाम पञ्चवीरगोष्ठे सङ्गीतकम् अनुष्ठास्यति' इति सान्द्राऽऽदरः समागमत् नागरजनः। (६४)स च अहं सह सख्या धनमित्रेण तत्र समध्यधिषि। प्रवृत्तनृत्यायाश्च तस्यां द्वितीयं रङ्ग-

---

(५९) व्यवहर्तुं विवादं कर्तुं, ("विवादो व्यवहारः स्यात्" इत्यमरः)। अर्थगर्वात् धनमदात्। अभियोक्ष्यते उद्योक्ष्यते, राज्ञे विज्ञापयिष्यतीत्यर्थो वा। चित्रैः विविधैः।

(६०) स्वकं निजम्। सुप्रच्छन्नं सुगुप्तम्।

(६१) हृष्टः प्रीतः। विमर्दकः पूर्वोक्तः द्यूतसुहृदित्यर्थः। अर्थपतीति।— अर्थपतेः सेवायां शुश्रूषणे, दासत्वे इत्यर्थः, अभियुक्तः सयत्नः, नियुक्त इत्यर्थः। तस्य अर्थपतेः। उदारके धनमित्रे। वैरं विद्वेषम्।

(६२) निवृत्य अर्थपतेः अर्थपतये कन्यादानेच्छां परित्यज्येत्यर्थः। प्रादित्सत् प्रदातुमैच्छत्। प्रत्यबध्नात् प्रतिबन्धं चकार।

(६३) स्वसा भगिनी। यवीयसी कनिष्ठा।

(६४) पञ्चवीरगोष्ठे नगरस्थसाधारणसभानिवेशे इत्यर्थः, ("तत् पञ्चवीरगोष्ठम् स्यात् आनन्दे सदः" इति कोषकारः)। सङ्गीतकं गीतवाद्यनृत्यादिकम्। तथा च सङ्गीतपारिजाते—"गीतवादित्रनृत्यानां त्रयं सङ्गीतमुच्यते। गानस्यात्र प्रधानत्वात् तत् सङ्गीतमुच्यते॥" सान्द्रादरः निविडानन्दः, उत्साहपूर्वं इति यावत्। नागरजनः नागरिकलोकः।

वीक्ष्य, सापदेशञ्च किञ्चिदाविष्कृतदशनचन्द्रिकं (७०) स्मित्वा लोकलोचनमानसानुयाता (७१) प्रातिष्ठत ।

सोऽहं स्वगृहमेत्य दुर्निवारयोत्कण्ठया दूरीकृताऽऽहारस्पृहः (७२) शिरःशूलस्पर्शम् अपदिशन् विविक्ते तल्पे मुक्तैः अवयवैः (७३) अशयिषि । अतिनिष्णातश्च मदनतन्त्रे (७४) माम् अभ्युपेत्य धनमित्रो रहसि अकथयत्—'सखे ! सैव धन्या गणिकादारिका, (७५) यामेवं भवन्मनोऽभिनिविशते । तस्याश्च मया सुलक्षिता भावप्रवृत्तिः, (७६)तामपि अचिरात् अयुग्मशरः शरशयने शाययिष्यति ; स्थानाभिनिवेशिनोश्च वाम् (७७)अयत्न-

(७०) सापदेशं सव्याजं, ("व्याजोऽपदेशः" इत्यमरः)। किञ्चिदिति ।—किञ्चित् ईषत्, आविष्कृता प्रकटिता, दशनचन्द्रिका दन्तज्योत्स्ना, दन्तप्रभेत्यर्थः यत्र तत् यथा तथा ।

(७१) लोकेति ।—लोकानां लोचनैः नेत्रैः, मानसैश्चित्तैश्च, अनुयाता अनुगम्यमाना इत्यर्थः ।

(७२) दुर्निवारया निवारयितुमशक्यया, उत्कण्ठयेति यावत् । दूरीकृतेति ।—दूरीकृता विवर्जिता, आहारस्य स्पृहा अभिलाषः यस्य तथाभूतः, आहारविरत इत्यर्थः ।

(७३) शिर इति ।—शिरसः शूलं वेदनाविशेषः, तस्य स्पर्शम् आविर्भावम् । अपदिशन् व्याजीकुर्वन्, ख्यापयन्नित्यर्थः । विविक्ते विजने । तल्पे शय्यायाम् । मुक्तैः पातितैः । अवयवैः अङ्गैः ।

(७४) अतिनिष्णातः अतिनिपुणः, तद्व्यापारेषु विशेषाभिज्ञ इत्यर्थः, ("निष्णातो निपुणोऽभिज्ञः" इति वैजयन्ती)। मदनतन्त्रे कामशास्त्रे, ("तन्त्रं कुटुम्बकृत्ये स्यात् कारणे च परिच्छदे । शास्त्रे प्रधाने सिद्धान्ते" इति विश्वः)।

(७५) गणिकादारिका वेश्याकन्या ।

(७६) भावप्रवृत्तिः अनुरागावेशः, कामजचित्तविकारोदय इति भावः, "निर्विकारात्मके चित्ते भावः प्रथमविक्रिया" इति दर्पणोक्तेः ।

(७७) अयुग्मशरः पञ्चशरः । स्थानाभिनिवेशिनोः अनुरूपप्रणयिनोः । वां युवयोः ।

साध्यः समागमः। किन्तु सा किल वारकन्यका गणिका-स्वधर्मप्रतीपगामिना भद्रोदारेण आशयेन समगिरत, (७८) 'गुणशुल्काऽहं, न धनशुल्का, न च पाणिग्रहणादृते (७९) अन्य-भोग्य यौवनम्' इति। तच्च मुहुः प्रतिषिध्याकृतार्थौ तद्भगिनी काममञ्जरी माता च माधवसेना राजानम् अश्रुकण्ठौ व्यजि-ज्ञपतां—'देव! युष्मद्दासी रागमञ्जरी रूपानुरूपशीलशिल्प-कौशला पूरयिष्यति मनोरथानित्यासीत् अस्माकमतिमहत्याशा, साऽद्य मूलच्छिन्ना, (८०) यत् इयमतिक्रम्य स्वकुलधर्मम् अर्थ-निरपेक्षा गुणेभ्य एव स्वं यौवनं विचिक्रीषते, (८१) कुलस्त्रीवृत्त-मेव अनुतिष्ठासति, सा चेत् इयं देवपादाऽऽज्ञयाऽपि तावत् प्रकृतिम् आपद्येत, तदा पेशलं (८२) भवेत्' इति। राज्ञा च तदनुरोधात् तथाऽनुशिष्टा सत्यपि अनाश्रवैव (८३) सा यदाऽऽसीत्, तदाऽस्याः स्वसा माता च रुदितनिर्बन्धेन राज्ञे समगिरेतां (८४)—'यदि

---

(७८) गणिकेति।—गणिकानां स्वधर्मः येन केनापि प्रकारेण विटप्रतारण-रूपः, तस्य प्रतीपगामिना प्रतिकूलेनेत्यर्थः। भद्रोदारेण भद्रेण साधुना, उदारेण महता च। आशयेन अभिप्रायेण। समगिरत प्रतिजज्ञे।

(७९) अहं गुणशुल्का गुणः शुल्कः पणः यस्याःसाऽदृशी, गुणवन्तमेवाहं वृणोमि, न केवलं धनवन्तमिति भावः। पाणिग्रहणात् परिणयात्, ऋते विना।

(८०) मूलच्छिन्ना मूले मूलदेशे, छिन्ना भग्ना, सम्पूर्णतया विनष्टेत्यर्थः।

(८१) अर्थनिरपेक्षा धननिस्पृहा। विचिक्रीषते विक्रेतुमिच्छति।

(८२) कुलस्त्रीवृत्तं कुलनारीचरितम्। अनुतिष्ठासति अनुष्ठातुमिच्छति। पेशलं कोमलं, भद्रमित्यर्थः, मनोज्ञमिति यावत्।

(८३) तदनुरोधात् तयोः काममञ्जरीमाधवसेनयोरनुरोधात्। अनुशिष्टा उप-दिष्टा। अनाश्रवा अश्रुतवचना, ("वचने स्थित आश्रवः" इत्यमरः)।

(८४) रुदितनिर्बन्धेन रोदनातिशयेन, अतिरोदनपूर्वकमित्यर्थः। राज्ञे सम-गिरेतां राजसमीपे प्रतिज्ञातवत्यौ विज्ञापितवत्यौ वा।

कश्चित् भुजङ्गोऽस्मदिच्छया विना एनां बालां विप्रलभ्य नाशयिष्यति,(८५)स तस्करवत् बध्यः' इति। तदेवं स्थिते धनादृते न तत्स्वजनोऽनुमन्यते, न तु धनदाय असौ अभ्युपगच्छतीति (८६) विचिन्त्योऽत्राभ्युपायः' इति।

अथ मया उक्तं—'किमत्र चिन्त्यम्? गुणैः ताम् आवर्ज्य (८७) गूढमर्थैः तत्स्वजनं (८८) तोषयिष्यामि' इति। ततश्च काञ्चित् काममञ्जर्याः प्रधानदूतीं धर्मरक्षितां नाम शाक्यभिक्षुकीं चीवरपिण्डदानादिना उपगृह्य (८९) तन्मुखेन तया बन्धक्या पणबन्धम् (९०) अकरवम्—'अजिनरत्नम् उदारकात् मुषित्वा मया तुभ्यं देयं, यदि प्रतिदानं(९१)रागमञ्जरी' इति। सोऽहं 'तथा' इति प्रतिपन्नायाश्च तस्यां, तथा तमर्थं सम्पाद्य (९२)मद्गुणोन्मादिताया रागमञ्जर्याः करकिसलयम् अग्रहीषम्।

---

(८५) भुजङ्गः विटः, ("भुजङ्गः विटसर्पयोः" इति विश्वः)। विप्रलभ्य प्रतार्य। नाशयिष्यति कुलधर्मं त्याजयिष्यति, चोरयित्वा अदर्शनं प्रापयिष्यति वा।

(८६) धनदाय धनदायिने। न अभ्युपगच्छति नायकत्वेन न स्वीकरोति, धनदस्याग्रं नागमिष्यतीत्यर्थः।

(८७) आवर्ज्य वशीकृत्य।

(८८) तत्स्वजनं तस्याः रागमञ्जर्याः, स्वजनः भगिन्यादिः तम्।

(८९) शाक्यभिक्षुकीं बौद्धसन्न्यासिनीम्। चीवरपिण्डदानादिना वस्त्रखण्डान्नपानादिदानेनेत्यर्थः। उपगृह्य आयत्तीकृत्येत्यर्थः।

(९०) बन्धक्या गणिकया काममञ्जर्या, (सहार्थे तृतीया)। पणबन्धं शुल्कव्यवस्थाम्।

(९१) अजिनरत्नं चर्मरत्नभस्त्रिकामित्यर्थः। उदारकात् धनमित्रात्। मुषित्वा चोरयित्वा। प्रतिदानं प्रतिरूपदानम्; यदि रागमञ्जरी मह्यं दीयते, तदा तुभ्यम् अजिनरत्नं चोरयित्वा दास्यामीति भावः।

(९२) प्रतिपन्नायाम् अङ्गीकृतवत्याम्। तस्यां काममञ्जर्याम्। तथा तेन प्रकारेण। तमर्थं सम्पाद्य उदारकात् गृहीतमजिनरत्नं काममञ्जर्यै दत्त्वेत्यर्थः।

यस्याञ्च निशि चर्मरत्नस्तेयवादः,तस्याः प्रारम्भे कार्य्यान्तरापदेशेन (९३) समाहूतेषु सुखस्थ एव नागरमुख्येषु मत्प्रणिधिः विमर्दको-ऽर्थपतिगृह्यो नाम भूत्वा धनमित्रम् उल्लङ्घ्य (९४) बह्वतर्जयत्। उक्तश्च धनमित्रेण—'भद्र! कस्तवार्थः, यत् परस्य(९५)हेतोर्माम् आक्रोशसि? न स्मरामि स्वल्पमपि तव अपकारं मत्कृतम्'इति। स भूयोऽपि तर्जयन्निव अब्रवीत्—'स एष धनगर्वो नाम, यत् परस्य भार्य्यां शुल्कक्रीतां पुनस्तत्पितरौ (९६) द्रव्येण विलोभ्य स्वीचिकीर्षसि,(९७) ब्रवीषि च'कस्तवापकारो मत्कृतः?'इति। ननु प्रतीतमेव एतत्, सार्थवाहस्य अर्थपतेर्विमर्दको बहिश्चराः (९८) प्राणा इति; सोऽहं तत्कृते प्राणान् अपि परित्यजामि, ब्रह्महत्यामपि न परिहरामि, (९९) मम एकरात्रजागरप्रती-कारः तवैष चर्मरत्नाहङ्कारदाहज्वरः' (१००)इति। तथा ब्रुवा-

---

(९३) चर्मरत्नस्तेयवादः चर्मरत्नस्य चौर्य्यप्रवादः। तस्याः निशायाः। प्रारम्भे प्रारम्भकाले, निशामुखे इत्यर्थः। कार्य्यान्तरापदेशेन अन्यकार्य्यमिषेण।

(९४) मत्प्रणिधिः मम गूढचरः। अर्थपतिगृह्यः अर्थपतेर्वश्यः। नामेत्यलीके, वस्तुतोऽसौ नार्थपतिगृह्य इति भावः। उल्लङ्घ्य अतिक्रम्य, अवमत्येत्यर्थः।

(९५) अर्थः प्रयोजनम्। परस्य स्वेतरस्य, अर्थपतेरिति यावत्।

(९६) परस्य अर्थपतेः। भार्य्यां पत्नीं, कुबेरदत्तात्मजामित्यर्थ। शुल्कक्रीतां शुल्केन पणेन, धनदानेनेत्यर्थः, क्रीताम्। तत्पितरौ तस्याः कन्यायाः, पितरौ मातापितरौ।

(९७) द्रव्येण धनेन। स्वीचिकीर्षसि स्वीकर्तुमिच्छसि।

(९८) प्रतीतं ख्यातम्। सार्थवाहस्य श्रेष्ठिनः। बहिश्चराः बाह्याः।

(९९) परिहरामि परित्यजामि।

(१००) एकरात्रेति।—एकरात्रं जागरः जागरणं, प्रतीकारो यस्य तादृशः। चर्मरत्नेति।—चर्मरत्नस्य यः अहङ्कारः, स एव दाहज्वरः उष्णज्वरः; एकरात्रं जागरित्वा तव चर्मरत्नं हरिष्यामि, तथात्वे तव धनगर्वो नश्येदिति भावः।

यत्र (१) पौरमुख्यैः सामर्षं निषिध्य अपवाहितः(२)गतोऽभूत्।

इयञ्च वार्त्ता कृत्रिमार्त्तिना धनमित्रेण धर्मरक्षनाग्रम् आदौ एव उपक्षिप्य (३) पार्थिवाय निवेदिता। स च अर्थपतिम् आहूय उपह्वरे(४) पृष्टवान्—'अङ्ग! किमस्ति कश्चित् विमर्दको नाम अत्रभवतः?' (५) इति। तेन च मूढात्मना (६)—'अस्ति देव! परं मित्रं, कश्च तेनार्थः?' इति कथिते राज्ञोक्तम्—'अपि(७) शक्नोषि तमाह्वातुम्?' इति। 'वाढमस्मि शक्तः' इति निर्गत्य स्वगृहे वेशवाटे (८) द्यूतसभायाम् आपणे च निपुणम् अन्विष्यन् न उपलब्धवान्। कथं वा उपलभ्येत स वराकः? स खलु विमर्दको मद्वाञ्छितत्वदभिज्ञानचिह्नः (९) मन्नियोगात् त्वदन्वेषणाय उज्जयिनीं तदहरेव प्रातिष्ठत। अर्थपतिस्तु भ्रमन् तम् अदृष्ट्वा तत्कृतमपराधम् आत्मसम्बन्धीति मत्वा मोहात् भयाद्वा प्रत्याख्याय (१०) पुनः धनमित्रेण विभावितेन कुपितेन राज्ञा निगृह्य निगडबन्धनम्(११) अनीयत।

---

(१) ब्रुवाणः वदन्।

(२) सामर्षं सक्रोधम्। अपवाहितः त्याजितः।

(३) इयं वार्त्ता विमर्दकेन सह कलहवृत्तान्तः। कृत्रिमार्त्तिना कपटव्यथेन। उपक्षिप्य प्रस्ताव्य, उल्लिख्येति यावत्, ("प्रस्तावः स्यादुपक्षेपः" इति वैजयन्ती)।

(४) उपह्वरे रहसि।

(५) अङ्गेति आमन्त्रणे। अत्रभवतः मान्यवरस्य, तवेति शेषः।

(६) मूढात्मना निर्बोधेन।

(७) तेन विमर्दकेन। अर्थः प्रयोजनम्। अपि प्रश्ने।

(८) वाढमिति स्वीकारार्थकमव्ययम्, अत्यन्तमित्यर्थः। वेशवाटे वेश्यागृहे।

(९) वराकः अनुकम्पार्हः। मद्वेति।—मया वाञ्छितं तव अभिज्ञानचिह्नं येन तथाभूतः।

(१०) प्रत्याख्याय निराकृत्य, अस्वीकृत्येत्यर्थः, विपरीतमुक्त्वा वा, ("प्रत्याख्यानं निरसने विपरीतविज्ञप्तौ" इत्यमरः)।

(११) विभावितेन निवेदितेन। "विभाविते" इति पाठान्तरे—विभाविते

तेषु एव दिवसेषु विधिना कल्पोक्तेन चर्मरत्नं दोग्धुकामा (१२) काममञ्जरी पूर्वदुग्धं क्षपणीभूतं विरूपकं (१३) रहसि उपसृत्य, ततोऽपहृतं सर्वम् अर्थजातं तस्मै प्रत्यर्प्य, सप्रत्ययञ्च (१४) बह्वनुनीय प्रत्यागमत्। सोऽपि कथञ्चित् निर्ग्रन्थिका-ग्रहमोचितात्मा मदनुशिष्टः (१५) हृष्टतमः स्वधर्ममेव (१६) प्रत्यपद्यत। काममञ्जर्य्यपि कतिपयैरेव अहोभिः अश्मन्तक-शेषम् अजिनरत्नदोहाऽऽशया स्वमभ्युदयम् (१७) अकरोत्। अथ मत्प्रयुक्तो धनमित्रः पार्थिवं मिथो (१८) व्यज्ञापयत्—'देव!

---

तस्मिन् विषये प्रमाणीकृते इत्यर्थः। निगृह्य बलात् धृत्वेत्यर्थः। निगडबन्धनं शृङ्खलबन्धनं, पादयोरिति शेषः।

(१२) विधिना अनुष्ठानेन। कल्पोक्तेन धर्मरत्नस्य नियमोक्तेन। चर्मरत्नं दोग्धुकामा चर्मरत्नात् धनप्रसवाभिलाषिणीत्यर्थः।

(१३) पूर्वदुग्धं पूर्वम् अपहृतसर्वस्वमिति यावत्। क्षपणीभूतं बौद्धसन्न्यास-धर्माश्रितमित्यर्थः। विरूपकं तदाख्यं पूर्वोक्तपुरुषम्।

(१४) सप्रत्ययं सविश्वासं, येन विश्वासो जायते तत् यथा तथेत्यर्थः, सशपथं वा, ("प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" इत्यमरः)। "सप्रश्रयम्" इति पाठे—सविनयमित्यर्थः।

(१५) सोऽपि विरूपक इत्यर्थः। निर्ग्रन्थिकेति।—निर्ग्रन्थः क्षपणकः, ("निर्ग्रन्थोऽर्हन् क्षपणकः श्रमणो जिन इत्यपि" इति वैजयन्ती। तस्य धर्ममिति ठक्) निर्ग्रन्थिकः स चासौ ग्रहश्चेति निर्ग्रन्थिकग्रहः क्षपणकाचारः, तस्मात् मोचितः आत्मा येन तादृशः; अथवा, निर्ग्रन्थिकः क्षपणकाचारः, स एव ग्रहः उत्पातविशेषः पिशाच-विशेषो वा तस्मादित्यादि। मदनुशिष्टः मयोपदिष्टः।

(१६) स्वधर्मं कुलधर्मं, वैदिकाचाररूपम् इति यावत्।

(१७) अश्मन्तकशेषम् अश्मन्तकं चुल्लिः वृक्षविशेषो वा, ("अश्मन्तमुद्धानमधि-श्रयणी चुल्लिरन्तिका" इत्यमरः। "मुञ्जालाभे तु कर्त्तव्याः कुशाश्मन्तकबल्वजैः" इति मनुः) शेषो यस्य तथाभूतम्। स्वं स्वकीयम्। अभ्युदयं सम्पदम्।

(१८) मिथः रहसि।

येयं गणिका काममञ्जरी लोभोत्कर्षात् लोभमञ्जरीति लोकोपक्रोशपात्रम् (१९) आसीत्, साऽद्य मुसलोलूखलानि अपि निरपेक्षं (२०) त्यजति; तत्रान्यो मच्चर्मरत्नलाभो हेतुः, तच्च खलु कल्पस्तादृशः, 'वणिग्भ्यो वारमुख्याभ्यश्च वा दुग्धे, न अन्येभ्यः' इति हि तद्गता प्रतीतिः। अतोऽमुष्याम् अस्ति मे आशा' इति।

सा सद्य एव राज्ञा सह जनन्या समाहूयत। व्यथितवर्णेन इव मया उपह्वरे कथितं (२१)—'नूनमार्ये! सर्वस्वत्यागात् अतिप्रकाशात् आशङ्कनीयचर्मरत्नलाभा तदनुयोगाय अङ्गराजेन (२२) समाहूयसे, भूयोभूयश्च निर्बन्धया त्वया नियतमस्मि तदागतित्वेन अपदेश्यः, ततश्च मे भावी चित्रवधः। (२३) मृते च मयि न जीविष्यति एव ते भगिनी, त्वञ्च निःस्वीभूता, (२४)

---

(१९) लोभोत्कर्षात् लोभातिशयात्। लोकोपक्रोशपात्रं लोकानाम् उपक्रोशस्य निन्दायाः, पात्रम्।

(२०) अथ त्यजति। निरपेक्षं नास्ति अपेक्षा यस्मिन् तत् यथा तथा, अविचारितमित्यर्थः।

(२१) व्यथितवर्णेनेव व्यथिताकारेणेव। कथितं, काममञ्जर्यास्तस्याश्च समीपे इति शेषः।

(२२) नूनं तर्कयामीत्यर्थः। आर्ये! मान्ये काममञ्जरि!। आशङ्कनीयचर्मरत्नलाभा आशङ्कनीयः सम्भावनीयः, चर्मरत्नलाभः यस्याः तादृशी, त्वमिति शेषः। तदनुयोगाय तदर्थाप्रश्नाय, ("प्रश्नोऽनुयोगः पृच्छा च" इत्यमरः)।

(२३) भूयोभूयश्च पुनः पुनश्च। निर्बन्धया आग्रहेण पृष्टया। नियतं निश्चितम्। तदागतित्वेन तस्य चर्मरत्नस्य, आगतित्वेन आगमत्वेन, प्राप्तिहेतुत्वेनेत्यर्थः। अपदेश्यः कीर्तनीयः। भावी भवितेत्यर्थः। चित्रवधः चित्रः अद्भुतः, कुक्कुरादिना भक्षणद्वारा अतिदारुणरूप इति भावः, वधः हत्या, नासाकर्णादिच्छेदन-कुक्कुरगर्दभ-भक्षणादिरूपविविधेन प्रकारेण मम विचित्रहत्या भविष्यतीत्यर्थः।

(२४) निःस्वीभूता निर्धनीभूता।

चर्मरत्नस्य धनमित्रमेव प्रतिभर्जिष्यति, तत् इयम् आपत् समन्ततोऽनर्थानुबन्धिनी ; (२५) तत् किमत्र प्रतिविधेयम् ?' इति । तया तज्जनन्या च अश्रूणि विसृज्य उक्तम्—'अस्त्वेवैतत्, अस्मद्बालिश्यात् निर्भिन्नप्रायं रहस्यम् ।(२६)राज्ञश्च निर्बन्धात् द्वित्रिचतुरम् अतिनिह्नुत्यापि नियतम् आगतिः अपदेश्यैव (२७) चोरितस्य त्वयि । त्वयि च व्यपदिष्टे सर्वम् अस्मत्कुटुम्बम् अवसीदेत् ।(२८) अर्थपतौ च तदयशो रूढम्, (२९) अङ्कपुरप्रसिद्धस्य तस्य कीनाशस्य अस्माभिः सङ्कृतम्, अमुनैव तत् अस्मभ्यं दत्तमिति अपदिश्य वरमात्मा गोपयितुम्' इति माम् अभ्युपगमय्य (३०) राजकुलम् अगमताम् ।

राज्ञाऽनुयुक्ते च 'नैष न्यायो वेशकुलस्य यत्, दातुः अपदेशः । (३१) न हि अर्थैः न्यायार्जितैः एव पुरुषा वेशमुपतिष्ठन्ति' इति

---

(२५) प्रतिभर्जिष्यति आश्रयिष्यति । "प्रतिभत्स्यति" इति पाठान्तरम् । समन्ततः सर्वतोभावेन । अनर्थानुबन्धिनी अनिष्टोत्पादिनी ।

(२६) अस्मद्बालिश्यात् अस्माकं मौर्ख्यात् । ("मूर्खवैधेयबालिशाः" इत्यमरः) । निर्भिन्नप्रायं प्रायेण निर्भिन्नं प्रकाशितम् । रहस्यं गोपनीयविषयः ।

(२७) निर्बन्धात् आग्रहातिशयात् । अतिनिह्नुत्य अतिशयेन गोपायित्वेत्यर्थः । आगतिः प्राप्तिहेतुरित्यर्थः । अपदेश्या वक्तव्या ।

(२८) व्यपदिष्टे कीर्तिते । अस्मत्कुटुम्बम् अस्माकं परिजनः । अवसीदेत नश्येत् ।

(२९) तदयशः तत् चर्मरत्नहरणजनितम्, अयशः दुर्नाम, अपवाद इत्यर्थः । रूढं प्रसिद्धम् ।

(३०) तस्य अर्थपतेः । कीनाशस्य धूर्तस्य । अमुनैव अर्थपतिनैव । तत् चर्मरत्नम् । अपदिश्य कीर्तयित्वा । वरं श्लाघ्यम्, उचितमित्यर्थः । गोपयितुं रक्षितुम् । अभ्युपगमय्य बोधयित्वा ।

(३१) न्यायः नियमः, रीतिरित्यर्थः । वेशकुलस्य वेश्याजनस्य । अपदेशः नामकथनम् ।

असकृत् अतिप्रणुद्य कर्णनासाच्छेदोपक्षेपभीषिताभ्यां दग्धबन्धकीभ्यां(२२)स एव तपस्वी तस्करत्वेन अर्थपतिः अग्राह्यत।(२३) कुपितेन च राज्ञा तस्य प्राणेषु उद्यतः(२४) दण्डः। प्राञ्जलिना धनमित्रेण एव प्रत्यषिध्यत(२५)—'आर्य्य! मौर्य्यदत्त एष वरो वणिजाम्, ईदृशेषु अपराधेषु नास्ति असुभिः अभियोगः, (२६) यदि कुपितोऽसि, हृतसर्वस्वो निर्वासनीयः पाप एषः' इति। तन्मूला च धनमित्रस्य कीर्त्तिः अप्रथत, अप्रीयत च भर्त्ता। पटच्चरच्छेदशेषः अर्थपतिः अर्थमत्तः सर्वपौरजनसमक्षं निरवास्यत। (२७)तद्व्यापात्तु केनचित् अवयवेन (२८)

(२२) असकृत् पुनः पुनः। अतिप्रणुद्य निष्कृष्य। "प्रहृत्य" इति पाठान्तरम्। कर्णेति।—कर्णयोर्नासायाश्च छेदोपक्षेपेण कर्त्तनप्रस्तावेन; यदि पुनः पुनः मिथ्या वदिष्यथः, तदा युवयोः नासां कर्णौ च छेत्स्यामीति कीर्त्तनेनेति भावः; भीषिताभ्यां प्रदर्शितभयाभ्याम्। दग्धबन्धकीभ्यां हतभाग्यवेश्याभ्यां, काममञ्जरी-तन्मातृभ्यामित्यर्थः।

(२३) तपस्वी वराकः, निर्दोष इत्यर्थः। अग्राह्यत ग्राहितः।

(२४) उद्यतः उद्गूर्णः, आसन्न इत्यर्थः।

(२५) प्रत्यषिध्यत न्यवार्य्यत।

(२६) आर्य्य! मान्य! राजन्नित्यर्थः। मौर्य्यदत्तः मौर्य्येण मुरायाः तदाख्याया अपत्यं पुमानिति मौर्य्यश्चन्द्रगुप्तः, तेन दत्तः, मौर्य्यदत्त इति नामान्तरेण ख्यात इति वा। ईदृशेषु अपराधेषु वेश्यासक्तिनिबन्धनेषु चौर्य्येषु इति भावः। असुभिः प्राणैः, अभियोगः दण्डः, प्राणदण्ड इति यावत्। "ईदृशेषु अपराधेषु प्राणैरवियोगः" इति पाठान्तरे—अवियोगः वियोगाभावः।

(२७) पटच्चरेति।—पटच्चरस्य जीर्णवस्त्रस्य, ("पटच्चरं जीर्णवस्त्रम्" इत्यमरः) छेदः खण्डः, शेषो यस्य तादृशः, कौपीनावशेष इत्यर्थः। निरवास्यत देशात् निर्वासितः।

(२८) तद्व्यापा तस्यार्थपतेर्धनानाम्। अवयवेन अंशेन।

सा वराकी काममञ्जरी चर्मरत्नमृगतृष्णिकाऽपविद्धसर्वस्वा सानुकम्पं (३९) धनमित्राभिनोदितेन भूपेन अन्वगृह्यत । (४०) धनमित्रश्च अह्नि गुणिनि कुलपालिकाम् उपायंस्त । (४१)

तदेवं सिद्धसङ्कल्पः(४२)रागमञ्जरीगृहं हेमरत्नपूर्णम् अकरवम् । अस्मिंश्च पुरे लुब्धसमृद्धवर्गः तथा मुषितः, यथा कपालपाणिः स्वैरेव धनैः महिम्राणितैः समृद्धीकृतस्य(४३) अर्थिवर्गस्य गृहेषु भिक्षार्थम् अभ्रमत् ।

न हि अलमतिनिपुणोऽपि पुरुषो नियतिलिखितां (४४) लेखाम् अतिक्रमितुं, यतोऽहमेकदा रागमञ्जर्याः प्रणयकोपप्रशमनाय सानुनयं पायितायाः पुनः पुनः प्रणयसमर्पितमुखमधुगण्डूषम् आस्वादम् आस्वादं मदेनास्पृश्ये । (४५) शीलं हि

(३९) वराकी अनुकम्पार्हा, अस्मत्कृते सर्वस्वनाशादिति भावः । चर्मरत्नेति ।—चर्मरत्नमेव चर्मरत्नम् इति वा मृगतृष्णिका दुराकाङ्क्षा, तया अपविद्धं नाशितं, सर्वस्वं समस्तधनं यया तादृशी । सानुकम्पं सदयम् ।

(४०) धनमित्राभिनोदितेन धनमित्रनिवेदितेन । अन्वगृह्यत अनुगृहीता ।

(४१) अहनि दिने । गुणिनि शुभे । उपायंस्त परिणीतवान् ।

(४२) सिद्धसङ्कल्पः सम्पन्नमनोरथः ।

(४३) लुब्धेति ।—लुब्धानां लोभपरतन्त्राणाम्, अत एव कृपणानामिति भावः, समृद्धानां धनिनां, वर्गः गणः । मुषितः चोरितः, हृतसर्वस्वः कृत इत्यर्थः । कपालपाणिः कपालं खर्परं, भिक्षापात्रमित्यर्थः, पाणौ यस्य तथाभूतः । स्वैरेव आत्मीयैरेव । महिम्राणितैः महद्भिः । समृद्धीकृतस्य धनीकृतस्य ।

(४४) अलं समर्थः । नियतिलिखितां भाग्यनिर्दिष्टाम् । "दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः" इत्यमरः ।

(४५) पायितायाः, सुरामिति शेषः । आस्वादमास्वादं पुनः पुनरास्वाद्य । मदेनास्पृश्ये मत्तोऽभवम् ।

मदोन्मादयोः(४६)अमार्गेण अपि उचितकर्मस्येव प्रवर्त्तनम्;(४७) यदहम् उपोढ़मदः 'नगरमिदमनयैकयैव शर्व्वर्य्या (४८) निर्धनीकृत्य त्वद्भवनं पूरयेयम्' इति प्रव्यथितप्रियतमाप्रणामाञ्जलिप्रपथप्रतातिवर्त्ती मत्तवारण इव रभसच्छिन्नशृङ्खलः कयाऽपि धात्र्या(४९)शृगालिकाऽऽख्ययाऽनुगम्यमानो नातिपरिकरोऽसिद्वितीयो रंहसा परेण (५०) उदचलम्। अभिपततोऽपि (५१) नागरिकपुरुषान् अशङ्कमेव अवगाह्य तस्कर इति तैः अभिहन्यमानो (५२) नातिकुपितः क्रीड़न्निव मदावसन्नहस्तपातितेन निस्त्रिंशेन (५३) छिन्नान् एव हत्वा अवघूर्णमानताम्रदृष्टिः(५४) अपतम्। अनन्तरमार्त्तरवान् विसृजन्ती शृगालिका मम

---

(४६) शील स्वभावः। मदः सुरापानजा मत्तता, उन्मादः चित्तभ्रमः तयोः।

(४७) अमार्गेण विरुद्धमार्गेण। उचितकर्मसु अभ्यस्तव्यापारेषु, "अभ्यस्तेऽप्युचितं न्याय्यं" इति वैजयन्ती। प्रवर्त्तनं प्रचालनं, नियोजनमित्यर्थः।

(४८) उपोढ़मदः प्रवृद्धमदः। शर्व्वर्य्या रात्र्या।

(४९) प्रव्यथितेति।—प्रकर्षेण व्यथितायाः भीतायाः, मदनिष्टमयादिति भावः, प्रियतमायाः रागमञ्जर्य्याः, प्रणामाञ्जलिः अनुनयार्थं करयुगलसंयोगः, प्रपदञ्च तयोः प्रतम् अतिवर्त्तते अतिक्रामतीति तथाभूतः, प्रियतमावाक्यमग्राह्यमित्यर्थः। मत्तवारण इव मत्तहस्तीव। रभसेति।—रभसेन वेगेन, छिन्ना शृङ्खला निगड़ः येन तथाभूतः। धात्र्या उपमातुः, रागमञ्जर्य्या इति भावः, "धात्री स्यादुपमाताऽपि क्षितिरप्यामलक्यपि" इत्यमरः।

(५०) नातिपरिकरः अनङ्गीकृतसर्व्वोपकरण इति यावत्। रंहसा वेगेन। परेण महता।

(५१) अभिपततोऽपि आगच्छतोऽपि।

(५२) अवगाह्य प्रविश्य, तेषां मध्ये पतित्वेति भावः। अभिहन्यमानः ताड्यमानः।

(५३) मदावसन्नेति।—मदेन मत्ततया, अवसन्नः अवशः, यः हस्तः तेन पातितेन प्रक्षिप्तेन। निस्त्रिंशेन असिना।

(५४) अवघूर्णमानेति।—अवघूर्णमाना भ्रमन्ती, ताम्रा रक्ता, दृष्टिर्यस्य तथोक्तः।

अभ्यासम् अगमत्, अवध्ये च अहम् अरिभिः। (५५) आपदा तु महापहारिण्या (५६) सद्य एव बोधितस्तत्क्षणोपजातया प्रतिभया व्यचीचरम्—'अहो! मम इयं मोहमूला महती आपत् आपतिता। (५७) प्रख्याततरश्च सख्यं मया सह धनमित्रस्य, मत्परिग्रहत्वञ्च (५८) रागमञ्जर्याः; महैनसा च तौ प्रोर्णुतौ श्वो नियतं निग्राहयिष्येते। (५९) तत् इयमिह प्रतिपत्तिः, (६०) यया अनुष्ठीयमानया मन्नियोगतस्तौ परित्रास्येते, माञ्च कदाचित् अनर्थादितः (६१) तारयिष्यति' इति कमपि उपायमात्मनैव निर्णीय शृगालिकाम् अगादिषम्—'अपेहि जरतिके! या ताम् अर्थलुब्धां दग्धगणिकां (६२) रागमञ्जरिका-

(५५) आर्त्तरवान् कातरध्वनीन्, विसृजन्तौ मुञ्चन्तौ, वदन्तावित्यर्थः। अभ्यासम् अन्तिकम्। अवध्ये बद्धः। अरिभिः प्रभुभिः, नागरिकपुरुषैरिति यावत्।

(५६) आपदा विपदा। महापहारिण्या मत्ततानाशिन्या, दृश्यते च लोके यत्, विपदि उपस्थितायां मत्तानां मत्तता दूरीभवति, अतः आपदः महापहारकत्वमिति भावः।

(५७) प्रतिभया प्रज्ञया, "प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता" इति भरतः। व्यचीचरं विचारितवान्। मोहमूला मत्ततारूपनिदानमूला (?)। आपतिता उपस्थिता।

(५८) प्रख्याततरम् अतिशयेन विख्यातम्। मत्परिग्रहत्वं मत्पत्नीत्वम्। "परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः" इति मेदिनी।

(५९) महैनसा महापापेन। प्रोर्णुतौ आच्छादितौ, संवृतौ इत्यर्थः। श्वः परदिने। निग्राहयिष्येते निग्राहयितव्यौ। "निगृह्येते" इति पाठे—निगृहीतौ भविष्यत इत्यर्थः।

(६०) प्रतिपत्तिः इतिकर्त्तव्यता, प्रतिविधानमित्यर्थः।

(६१) मन्नियोगतः मम आदेशात्। परित्रास्येते परिरक्षितौ भविष्यतः। अनर्थात् विपदः। इतः अस्मात्।

(६२) अपेहि अपगच्छ, दूरीभवेत्यर्थः। जरतिके! वृद्धे!। या त्वम्। अर्थलुब्धां धनलालसायुक्ताम्। दग्धगणिकां दुष्टवाराङ्गनाम्।

अजिनरत्नमत्तेन मत्कुणा मे मित्रच्छद्मना धनमित्रेण सङ्क्रमितवती, सा हताऽसि। (६३) तस्य पापस्य चर्मरत्नमोषात् (६४) दुहितुश्च ते साराऽऽभरणापहारात् अहमस्य निःशल्यमुत्सृजेयं(६५) जीवितम्' इति। सा पुनः उद्घटितज्ञा (६६) परमधूर्ता साश्रुगद्गदम् उदञ्जलिस्तान् पुरुषान् सप्रणामम् आसादितवती सामपूर्वं (६७) मम पुरस्तात् अयाचत—'भद्रकाः! प्रतीक्ष्यतां कञ्चित् कालं, यावत् अस्मात् (६८) अस्मदीयं सर्वं मुषितमर्थजातम् अवगच्छेयम्' इति। 'तथा' इति तैः प्रतिपन्ने(६९) पुनः मत्समीपम् आसाद्य 'सौम्य! क्षमस्वास्य दासीजनस्य एकम् अपराधम्, अस्तु स कामं त्वत्कलत्राभिमर्शी वैरास्पदं धनमित्रः, अहं तु चिरज्ञातां ते परिचर्य्याम् अनुग्रहीतुम् अर्हसि दासीं राग-

---

(६३) अजिनेति।—अजिनरत्नेन अजिनरत्नं ममास्तीत्यभिमानेन इत्यर्थः, मत्तः गर्वितः तेन। मित्रच्छद्मना कपटमित्रेण। सङ्क्रमितवती सम्भोगं कारितवती। सा त्वं हताऽसि स्वपापेन स्वयमेव विनष्टाऽसीत्यर्थः।

(६४) पापस्य दुरात्मनः धनमित्रस्य। चर्मरत्नमोषात् चर्मरत्नस्य अपहरणात्।

(६५) दुहितुः कन्यायाः, रागमञ्जर्या इत्यर्थः। साराणां धनानां, "सारो बले स्थिरांशे च मज्जनि न्याय्ये च नीरे च धने च सारम्। वरेऽन्यवत् सारमुदाहरन्ति" इति विश्वः, आभरणानाम् अलङ्काराणाञ्च, साराभरणानाम् उत्कृष्टभूषणानामिति वा। अपहरणात् स्तेयात्। निःशल्यं निष्कण्टकमित्यर्थः, विगतदुःखं यथा तथेति यावत्। उत्सृजेयं त्यजेयं, राजदण्डादिति भावः।

(६६) उद्घटितज्ञा उद्घटिता प्रबोधिता, ज्ञा बुद्धिर्यस्याः तथोक्ता; यद्वा—उद्घटितं प्रत्युत्पन्नमतित्वेन उद्भावितं, सूचितं वस्त्वित्यर्थः, जानाति बुध्यते इति तथोक्ता। "उद्घट्टितज्ञा" इति पाठे—स एवार्थः, "सूचनमुद्घट्टनं बोधिः" इत्यजयः।

(६७) आसादितवती प्राप्तवती सती। सामपूर्वं सान्त्वपुरःसरं, सविनयमित्यर्थः।

(६८) अस्मात् चौरात्।

(६९) प्रतिपन्ने स्वीकृते।

मञ्जरीम्, आकल्पसारो हि रूपाऽऽजीवो (७०) जनः, तद्ब्रूहि, क्व निहितम् (७१) अस्या भूषणम्?' इति पादयोः अपतत्। ततो दयमान इव अहमब्रवं—'भवतु (७२) मृत्युहस्तवर्तिनः किं मम अमुष्यां वैरानुबन्धेन?' (७३) इति तत् सर्वमिव कर्णे एवैनाम् अशिक्षयम्, 'एवमेवं प्रतिपत्तव्यम्' (७४) इति। सा तु प्रतिपन्नार्था, 'जीव चिरं, प्रमोदन्तु ते देवताः, देवोऽपि अङ्गराजः पौरुषप्रीतो मोचयतु त्वाम्, एतेऽपि भद्रमुखास्त्वां दयन्ताम्' (७५) इति क्षणात् अपासरत्। आनीये च अहम् आरक्षिकनायकस्य शासनात् चारके (७६)।

अथ उत्तरेद्युः आगत्य इत्वरः सुभगमानी सुन्दरम्मन्यः पितुः अत्ययात् (७७) अचिराधिष्ठिताधिकारः तारुण्यमदात् अनति-

(७०) त्वत्कण्ठाभिमर्शी तव कण्ठं स्पृशं, रागमञ्जरीमित्यर्थः, अपितु स्पृष्टवान् धर्षितवानिति तथाभूतः त्वत्कोधर्षणकारी। अत एव वैरास्पदं शत्रुभाजनं, अनुभूत इत्यर्थः। परिचर्य्यां सेवाम्। आकल्पसारः वेशसारः, अलङ्कारसारः इत्यर्थः, "आकल्पवेशौ नेपथ्यम्" इत्यमरः। रूपाऽऽजीवः रूपेण सौन्दर्य्येण, अलङ्कारादिजनितेनेति भावः, आजीवति वृत्तिं करोतीति तथाभूतः वेश्याजनः, "वारस्त्री गणिका वेश्या रूपाऽऽजीवा" इत्यमरः।

(७१) निहितं रक्षितम्।

(७२) भवतु, यदिति शेषपदमूह्यम्।

(७३) अमुष्यां रागमञ्जर्याम्। वैरानुबन्धेन शत्रुतानुवर्तनेन।

(७४) प्रतिपत्तव्यं प्रतिविधातव्यं, तच्च अनुपदमेव शृगालिकया यथायथमनुष्ठाय प्रख्यापयिष्यते।

(७५) प्रतिपन्नार्था विदिताभिप्राया। पौरुषप्रीतः पौरुषेण पुरुषकारेण, प्रीतः प्रसन्नः। दयन्ताम् अनुकम्पन्ताम्।

(७६) आरक्षिकनायकस्य आरक्षिकाणां नगरपालानां, नायकस्य अध्यक्षस्य। शासनात् आदेशात्। चारके कारायाम्। "चारकम्" इति पाठान्तरम्।

(७७) उत्तरेद्युः परदिने। इत्वरः अतिगर्वितः। "गर्वितो इत्वर उद्धतः"

पक्वः कान्तको नाम नागरिकः (७८) किञ्चिदिव भर्त्सयित्वा माम् अभ्यधत्त (७९)—'न चेत् धनमित्रस्य अजिनरत्नं प्रतिप्रयच्छसि, (८०)न चेत् वा नागरिकेभ्यश्चोरितकानि प्रत्यर्पयसि, द्रक्ष्यसि पारम् अष्टादशानां कारणानाम्, (८१) अन्ते च मृत्युमुखम्' इति। मया तु स्मयमानेन अभिहितं—'सौम्य ! यद्यपि दद्याम् आ-जन्मनो मुषितं धनं, न तु अर्थपतिदाराऽपहारिणः शत्रोर्मे मित्रमुखस्य (८२) धनमित्रस्य चर्मरत्नप्रत्याशां पूरयेयम्, अदत्त्वैव तत् अयुतमपि यातनानाम् अनुभवेयम् इयं मे साधीयसी सन्धा'(८३)इति। तेन च क्रमेण वर्त्तमाने सान्त्वनतर्जनप्राये प्रतिदिनम् अनुयोगव्यतिकरे (८४) अनुगुणान्नपान-

इति वैजयन्ती। सुभगमानी आत्मानं सुभगं श्रेष्ठं मन्यते इति तथाभूतः। "सर्वोन्नतत्वं सौभाग्यं तस्मात् सुभग उच्यते" इति दिवाकरः। सुन्दरम्मन्यः आत्मानं सुन्दरं मन्यते इति तथोक्तः, सौन्दर्य्याभिमानीत्यर्थः। अल्पयात् नाम्नात्।

(७८) पचिरेति।—अचिरम् अधिष्ठितः प्राप्तः, अधिकारः काराध्यक्षपदमित्यर्थः येन तथाभूतः। तारुण्यमदात् यौवनगर्वात्। अनतिपक्वः अनतिपरिपक्वः, अल्पबुद्धिरित्यर्थः। नागरिकः काराध्यक्षः, "कारापतिर्नागरिकः" इति वैजयन्ती।

(७९) अभ्यधत्त अभिहितवान्।

(८०) प्रतिप्रयच्छसि प्रत्यर्पयसि।

(८१) नागरिकेभ्यः नगरवासिलोकेभ्यः। पारम् अन्तम्। कारणानां यातनानां, "कारणा तु यातना तीव्रवेदना" इत्यमरः। तासामष्टादशविधत्वं नीतिशास्त्रेऽभिहितं द्रष्टव्यम्।

(८२) स्मयमानेन ईषद्धसता। मित्रमुखस्य मित्रव्याजेन, कपटमित्रस्य इत्यर्थः, "मुखन्तु वदने मुख्ये नासे छद्मनि वा पुमान्" इति मानुषिः।

(८३) साधीयसी दृढ़ेत्यर्थः। सन्धा प्रतिज्ञा, "सन्धा स्थितौ प्रतिज्ञायाम्" इति विश्वः।

(८४) अनुयोगव्यतिकरे प्रश्नप्रकारे, वादानुवादे इति यावत्। "व्यसने च व्यतिकरः प्रकारव्यातयोरपि" इत्यमरः।

लाभात् कतिपयैः एवाहोभिः विरोपितव्रणः प्रकृतिस्थोऽहमासम्। (८५)

अथ कदाचित् अच्युताम्बरपीताऽऽतपत्विषि यायिनि वासरे (८६) हृष्टवर्णा शृगालिका उज्ज्वलेन वेशेन उपसृत्य दूरस्थानुचरा माम् उपश्लिष्य(८७)अब्रवीत्—'आर्य्य ! दिष्ट्या वर्धसे, फलिता (८८) तव सुनीतिः। यथा त्वयाऽऽदिष्टे, (८९) तथा धनमित्रमेत्य अब्रवम्—'आर्य्य ! तवैवमापन्नः (९०) सुहृत् इत्युवाच—'अहमद्य वेशसंसर्गसुलभात् पानदोषाद्वः। त्वया पुनः अविग्रहम् अद्यैव राजा विज्ञापनीयः, 'देव ! देवप्रसादात् एव पुराऽपि तत् अजिनरत्नम् अर्थपतिमुषितम् आसादितम्, अथ तु भर्त्ता रागमञ्जर्य्याः कश्चित् अक्षधूर्त्तः कलासु कवित्वेषु लोकवार्त्तासु च अतिवैचक्षण्यात् मया समसृज्यत ; (९१)तत्सम्बन्धा-

(८५) विरोपितव्रणः विरोपितम् उपशान्तं, चिकित्सितमिति वा, "विरोपित उपशान्तचिकित्सितः" इति गोपालितः, व्रणं रक्षिकप्रहारजनित क्षतमित्यर्थः यस्य तथाविधः। प्रकृतिस्थः स्वस्थतामापन्नः।

(८६) अच्युतेति।—अच्युतः कृष्णः, तस्य अम्बरं वस्त्रं, पीतमिति भावः, तद्वत् पीता पीतवर्णा, आतपानां सूर्य्यालोकानां, त्विट् प्रभा यस्मिन् तथाभूते, "प्रकाशो द्योत आतपः" इत्यमरः। यायिनि अय गच्छति, वासरे दिवसे, सायंकाले इति भावः।

(८७) हृष्टवर्णा प्रफुल्लाकारा। उज्ज्वलेन विशदेन, शुभ्रेणेत्यर्थः। दूरस्थेति।—दूरस्था अनुचराः सहचारिण्यो। उपश्लिष्य आलिङ्ग्य, संनिकृष्य वा।

(८८) दिष्ट्या भाग्येन। फलिता, सञ्जातफला, फलमस्या जातमिति इतच् प्रत्ययः।

(८९) आदिष्टे आदिष्टाऽस्मीत्यर्थः।

(९०) आपन्नः आपदि पतितः, आपद्ग्रस्तः इत्यर्थः, "आपन्न आपद्ग्रस्तः स्यात्" इत्यमरः।

(९१) लोकवार्त्तासु लोकव्यवहारेषु; नीतिशास्त्रप्रचारेषु इत्यर्थः। समसृज्यत संसृष्टः, मिलितः इत्यर्थः, सख्यभावेनेति भावः।

स्व वस्त्राभरणप्रेषणादिना तद्वार्त्तां प्रतिदिनम् अन्ववर्त्ते, तत् प्रसादावाप्तिक्लिष्ट निकृष्टाऽऽशयतया कितवः। (९२)तेन च कुपितेन हृतं तत् चर्म्मरत्नम्, आभरणसमुद्गकञ्च तस्याः। (९३) स तु भूयस्तेयाय भ्रमन् अग्रहीत नागरिकपुरुषैः, (९४) आपन्नेन च अमुना अनुसृत्य (९५)वृत्तान्ते रागमञ्जरीपरिचारिकायै शृगालिकायै पूर्वप्रणयानुवर्त्तिना तद्भाण्डनिधानोद्देशः (९६) कथितः। मम अपि चर्म्मरत्नम् उपायोपक्रान्तः (९७) यदि प्रयच्छेदिह देवपादैः प्रसादः कार्य्यः' इति। तथा निवेदितश्च नरपतिः असुभिः मामवियोज्य (९८) उपच्छन्दनैः एव स्वं ते दापयितुं प्रयतिष्यते, तन्नः पथ्यम्' (९९) इति। श्रुत्वैव च त्वदनुभावप्रत्ययात् अनतिवसुना (१००) तेन तत् तथैव सम्पादितम्। अथ अहं

---

(९२) अन्ववर्त्ते अनुसरणं करोमि, पोषयामीत्यर्थः। निकृष्टाऽऽशयतया नीचाऽऽशयत्वेन। कितवः धूर्त्तः।

(९३) आभरणसमुद्गकः अलङ्कारसम्पुटकः, अलङ्कारभाजनमिति यावत्। "समुद्गकः सम्पुटकः" इत्यमरः। तस्याः रागमञ्जर्य्याः।

(९४) भूयस्तेयाय पुनश्चौर्य्याय। नागरिकपुरुषैः कारापतिपुरुषैः, प्रहरिभिरित्यर्थः।

(९५) आपन्नेन आपद्ग्रस्तेन। अमुना धूर्त्तेन। अनुसृत्य अनुगम्य।

(९६) पूर्वप्रणयानुवर्त्तिना पूर्वप्रणयानुरोधिना। तद्भाण्डेति।—तस्याः रागमञ्जर्य्याः, भाण्डं भूषणपात्रं, "भाण्डं भूषणपात्रेऽपि भाण्डं मूलवणिग्धने" इति विश्वः; यद्वा—तद्भाण्डं पूर्वोक्तालङ्कारभाजनं, तस्य निधानोद्देशः रक्षणस्थानम्।

(९७) उपायोपक्रान्तः उपायैः सामादिभिः, उपक्रान्तः आयत्तीकृतः, वशीकृत इत्यर्थः। "उपक्रमो वशीकारे समारम्भे चिकित्सने" इति वैजयन्ती।

(९८) असुभिः प्राणैः। मामवियोज्य न विच्छिद्य, मम प्राणदण्डमकृत्वा इत्यर्थः।

(९९) उपच्छन्दनैः सान्त्वनैः, मधुरोपायैः इति भावः। स्वं धनं, चर्म्मरत्नम् इत्यर्थः। ते तुभ्यम्। नः अस्माकम्। पथ्यं हितम्।

(१००) त्वदिति।—तव अनुभावः प्रभावः, तस्य प्रत्ययात् विश्वासात्। अनतिवसुना नातिभीतेन।

त्वदभिज्ञानप्रत्यायितायाः (१) रागमञ्जर्याः सकाशात् यथेप्सितानि (२) वस्तूनि लभमाना राजदुहितुः अम्बालिकाया धात्रीं माङ्गलिकीं त्वदादिष्टेन मार्गेण अन्वरञ्जयम्। (३) तामेव च सङ्गमीकृत्य (४) रागमञ्जर्यैव अम्बालिकायाः सख्यं परममवीवृधम्। (५) अहरहश्च नवनवानि प्राभृतानि उपहरन्ती कथाश्चित्राः चित्तहारिणीः (६) कथयन्ती तस्याः परं प्रसादपात्रम् (७) आसम्। एकदा च हर्म्याङ्गनगतायाः तस्याः स्थानस्थितमपि कर्णकुवलयं स्रस्तम् (८) इति प्रतिसमादधती प्रमत्तेव प्रच्याव्य पुनः उत्क्षिप्य भूमेः तेन (९) उपकन्यकापुरं कारणेन

(१) त्वदिति।—तव अभिज्ञानेन केनचित् विश्वासजनकचिह्नेन, प्रत्यायितायाः विश्वासं गमितायाः।

(२) यथेप्सितानि यथाऽभिलषितानि।

(३) त्वदादिष्टेन तव मन्त्रणाऽनुरूपेणेति भावः। मार्गेण पथा, उपायेन इत्यर्थः। अन्वरञ्जयम् अनुरञ्जितवती।

(४) तां माङ्गलिकीम्। सङ्गमीकृत्य उपायीकृत्य, द्वारीकृत्येत्यर्थः। "अभ्युपाये सङ्गमे च निःश्रेण्यां सङ्गमो मतः" इत्युत्पलिनी।

(५) अवीवृधम् अवर्द्धयम्।

(६) प्राभृतानि उपायनानि। "प्राभृतन्तु प्रदेशनम्। उपायनमुपग्राह्यमुपहारस्तथोपदा" इत्यमरः। उपहरन्ती अर्पयन्ती। चित्राः आश्चर्यजननीः। चित्तहारिणीः मनोहारिणीः।

(७) प्रसादपात्रम् अनुग्रहभाजनम्।

(८) स्थानस्थितमपि कर्णस्थितमपीत्यर्थः। कर्णकुवलयं कर्णस्थितं नीलोत्पलम्। स्रस्तं स्खलितम्।

(९) प्रतिसमादधती यथास्थानमर्पयन्ती। प्रमत्तेव अनवहितेव। प्रच्याव्य भ्रंशयित्वा, कर्णादिति शेषः। तेन कर्णकुवलयेन।

केनापि भवनाङ्गनं (१०) प्रविष्टस्य कान्तकस्योपरि प्रवृत्तकुहर-पारावतत्रासनापदेशात् प्रहसन्ती प्राहार्षम्। (११) सोऽपि धन्यम्मन्यः (१२) पुरा किञ्चित् उन्मुखः स्मयमानो मत्कामंप्रहासितायाः राजदुहितुः विलासप्रायम् (१३) आकारमात्माभिलाष-मूलमिव यथा सङ्कल्पयेत्तथा मया अपि संज्ञयैव किमपि चतुरम् आचेष्टितम्। (१४) आकृष्टधन्वना च मनसिजेन विद्धः सन् दिग्धफलेन पत्रिणाऽतिमुग्धः कथंकथमपि (१५) अपासरत्। सायञ्च राजकन्याऽङ्गुलीयकमुद्रितां (१६) वासताम्बूलवरांशुक-युगलभूषणावयवगर्भाञ्च पेटिकां (१७) कयाचित् बालिकया

(१०) उपकन्यकापुरं कन्याऽन्तःपुरसमीपे। भवनाङ्गनं गृहचत्वरम्, "अङ्गनं चत्वराजिरे" इत्यमरः।

(११) कान्तकस्य पूर्वोक्तनागरिकस्य। प्रवृत्तेति।—प्रवृत्तं प्रारब्धं, कुहरं सुरतं येन तादृशस्य, "कुहरं सुषिरे दम्भे नागलोके रतेऽपि च" इत्यजयः, "कुहर-प्रवृत्त" इति पाठे—कुहरे सुरते, प्रवृत्तस्य, पारावतस्य कपोतस्य, "पारावतः कलरवः कपोतः" इत्यमरः, त्रासनं भयप्रदर्शनं, तदेव अपदेशः छलं तस्मात्। प्राहार्षं प्रहृतवती, निक्षिप्तवती इत्यर्थः।

(१२) धन्यम्मन्यः आत्मानं धन्यं सुभगं, मन्यते इति धन्यम्मन्यः।

(१३) स्मयमानः मन्दं हसन्। मदिति।—मम कर्मणा कुवलयताडनरूपेणेत्यर्थः, प्रहासितायाः प्रकर्षेण हासं गमितायाः, हसन्त्या इति भावः। राजदुहितुः राज-कन्यायाः। विलासप्रायं विलासबहुलम्।

(१४) आत्माभिलाषमूलमिव स्वाभिलाषनिबन्धनमिव। सङ्कल्पयेत् बुध्येत। संज्ञयैव हस्तनेत्रादिभिरर्थसूचनयैव, इङ्गितेनैव इत्यर्थः, "संज्ञा स्याच्चेतना नाम हस्ताद्यै-श्चार्थसूचना" इत्यमरः। आचेष्टितं विलसितम्।

(१५) दिग्धफलेन दिग्धं विषाक्तं, "विषाक्ते दिग्धलिप्तकौ" इत्यमरः, फलं शराग्रं "लाभे शस्ये शराग्रे व्युष्टौ च फलकी फलम्" इति शाश्वतः, यस्य तादृशेन। पत्रिणा शरेण। अतिमुग्धः अतिमात्रं विह्वलः। कथंकथमपि अतिकष्टेन।

(१६) राजकन्येति।—राजकन्याया अङ्गुलीयकेन मुद्रिताम् अर्पितमुद्राचिह्नाम्।

(१७) वासेति।—वासः सुगन्धिद्रव्यं, ताम्बूलं पर्णं, यद्वा—वासं कर्पूरादिभिः

ग्राहयित्वा रागमञ्जर्य्यां इति नीत्वा कामकक्ष्यागारम् अगाम्। अगाधे च रागसागरे मग्नो नावमिव माम् उपलभ्य परम् (१८) अतुष्यत्। अवस्थान्तराणि (१९) च राजदुहितुः सुदारुणानि व्यावर्णयन्त्या मया स दुर्मतिः दूरम् उदमाद्यत। (२०)तत्प्रार्थिता च अहं त्वत्प्रियाप्रहितमिति मम एव मुखताम्बूलोच्छिष्टानुलेपनं निर्माल्यं मलिनांशुकञ्च अन्येद्युः उपाहरम्। (२१)तदीयानि च राजकन्यार्थमिति आदाय छन्नमेव अपाविध्यम्। (२२) इत्थञ्च सन्धुक्षितमन्मथाग्निः एकान्ते मया उपमन्त्रितोऽभूत्— 'आर्य्य! लक्षणानि एव तव अविसंवादीनि, (२३) तथा हि,

---

वासितं, सुरभीकृतमित्यर्थः, "घनसारादिभिर्यत्तु वासितं वासमुच्यते" इति वैजयन्ती, तादृशं यत् ताम्बूलं, वरं श्रेष्ठम्, अंशुकयुगलं वसनयुगं, भूषणावयवाः; कतिचिद्भूषणा-नीत्यर्थः, गर्भे अभ्यन्तरे यस्यास्तथोक्ताम्। पेटिकां समुद्गकविशेषम्। "वङ्गेरिकाम्" इति पाठे—वेत्रपुटिकाम्, "झाँपी" इति यस्याः प्रसिद्धिः। "वङ्गेरी वेत्रपुटिका" इति वैजयन्ती।

(१८) अगाधे अतलस्पर्शे, प्रगाढ़े इत्यर्थः। रागसागरे राजकन्यां प्रति अनुराग-समुद्रे। नावमिव तरणीमिव। उपलभ्य प्राप्य। परमत्यन्तम्।

(१९) अवस्थान्तराणि कामजाः दशाविशेषान्।

(२०) सुदारुणानि दुःसहानि। व्यावर्णयन्त्या वि विशेषेण, आ सम्यक्, वर्णयन्त्या प्रकटयन्त्या। स दुर्मतिः निर्बोधः कान्तकः। दूरम् अत्यर्थम्। उदमाद्यत उन्मत्तीकृतः।

(२१) तत्प्रार्थिता तेन कान्तकेन, प्रार्थिता याचिता सती। त्वदिति।—तव प्रियया राजदुहित्रा, प्रहितं प्रेषितं, त्वदर्थमिति शेषः। मुखताम्बूलं मुखचर्वितं ताम्बूलम्, उच्छिष्टानुलेपनं स्वभुक्तावशिष्टाङ्गरागम्। निर्माल्यं भुक्तोज्झित-पुष्पम्। मलिनांशुकं परिहितवसनम्। अन्येद्युः अन्यस्मिन् दिने। उपाहरम् उपहारमदाम्।

(२२) तदीयानि कान्तकसम्बन्धीनि, तत्तद्वस्तूनीति शेषः। राजकन्यार्थं राज-दुहितृनिमित्तं नयामि। इति एवम्, उक्त्वेति शेषः। आदाय गृहीत्वा। छन्नमेव गुप्तमेव। अपाविध्यं पर्य्यत्यजम्। "अपोढ़ानि" इति पाठे—अपोढ़ानि त्यक्तानि।

(२३) सन्धुक्षितेति।—सन्धुक्षितः प्रज्वालितः, मन्मथाग्निः मदनानलः यस्य

मत्प्रातिवेश्य: कश्चित् कार्त्तान्तिक: 'कान्तकस्य हस्ते राज्यमिदं पतिष्यति, तादृशानि तस्य लक्षणानि' इत्यादिक्षत् ।(२४) तदनुरूपमेव (२५)च त्वाम् इयं राजकन्यका कामयते। तदेकापत्यश्च (२६) राजा तया त्वां समागतम् उपलभ्य कुपितोऽपि दुहितुर्मरणभयात् न उच्छेत्स्यति,(२७)प्रत्युत(२८) प्रापयिष्यति एव यौवराज्यम्। इत्ययम् अयमर्थोऽर्थानुबन्धी किमिति तात! न आराध्यते? (२९) यदि कुमारीपुरप्रवेशाभ्युपायं न अवबुध्यसे, ननु बन्धनागारभित्तेर्व्याममात्रमन्तरालम् आरामप्राकारस्य, (३०) केनचित्तु हस्तवतैकागारिकेण (३१) तावतीं

तादृश:। उपमन्त्रित: उपदिष्ट:। लक्षणानि चिह्नानि। अविसंवादीनि विसंवादरहितानि, शोभनानीत्यर्थ:।

(२४) मत्प्रातिवेश्य: मम प्रतिवेशी, "प्रतिवेशी वसति य: प्रातिवेश्य: स उच्यते" इति वैजयन्ती। कार्त्तान्तिक: सामुद्रिक:, लक्षणाभिज्ञ इत्यर्थ:, ज्योतिषिक इति यावत, "कार्त्तान्तिको लक्षणज्ञ:" इति वैजयन्ती। आदिक्षत् आदिष्टवानित्यर्थ:।

(२५) तत् तस्मात्, अनुरूपमेव युक्तमेव; यद्वा—तदनुरूपमेव सामुद्रिकोक्तलक्षणसदृशमेव।

(२६) तदेकापत्य: तन्मात्रसन्तान:।

(२७) उपलभ्य ज्ञात्वा। उच्छेत्स्यति हनिष्यति, त्वामिति शेष:।

(२८) प्रत्युत वैपरीत्ये।

(२९) अयमर्थ: राजदुहिता समागमरूपं वस्तु। अर्थानुबन्धी प्रयोजनान्तरसाधक:, राज्यलाभरूपार्थान्तरविषयसम्पादक इत्यर्थ:। आराध्यते आसेव्यते, आश्रीयते इत्यर्थ:।

(३०) ननु इत्यवधारणे। बन्धनागारभित्ते: बन्धनागारं कारा, तस्य भित्ते: कुड्यस्य, "भित्ते:" इति पञ्चम्यन्तनिर्देशो वा, भित्तिप्रदेशादित्यर्थ:। व्याम: परिमाणविशेष:, "बाँध" इति यस्य प्रसिद्धि:, "व्यामो बाह्वो: सकरयोस्ततयोस्तिर्यगन्तरम्" इत्यमर:, तस्य मात्रम्। आरामप्राकारस्य उपवनप्राचीरस्य, "आराम: स्यादुपवनम्" इति "प्राकारो वरण: साल:" इति चामर:।

(३१) हस्तवता शिल्पकुशलेन, सुदक्षाचौर्यकर्मणीत्यर्थ:। ऐकागारिकेण चौरेण, "चौरैकागारिकस्तेनदस्युतस्करमोषका:" इत्यमर:।

सुरङ्गां (१२) कारयित्वा प्रविष्टस्य उपवनं तव उपरिष्टात् अस्मदायत्तैव रक्षा, (१३) रक्ततरो हि तस्याः परिजनो न रहस्यं भेत्स्यति' (१४) इति। सोऽब्रवीत्—'साधु भद्रे! दर्शितम्; अस्ति कश्चित् तस्करः खननकर्मणि सगरसुतानामिव अन्यतमः, स चेत् लभ्यः क्षणेनैतत् कर्म (१५) साधयिष्यति' इति। 'कतमोऽसौ? किमिति न लभ्यते?' इति मयोक्ते 'येन तत् धनमित्रस्य चर्मरत्नं मुषितम्' इति त्वामेव निरदिक्षत्। (१६) 'यदि एवम् एहि, 'त्वया अस्मिन् कर्मणि साधिते चित्रैः उपायैः त्वामहं मोचयिष्यामि' इति शपथपूर्वं तेन सन्धाय सिद्धेऽर्थे भूयोऽपि निगडयित्वा 'योऽसौ चौरः स सर्वथा उपक्रान्तः, न तु धृष्टतमः प्रकृष्टवैरः (१७) तत् अजिनरत्नं दर्शयिष्यति' इति राज्ञे विज्ञाप्य चित्रमेनं घातयिष्यसि। तथा च सति अर्थः सिध्यति, रहस्यञ्च न स्रवति' (१८) इति

---

(१२) तावतीं तत्प्रमाणाम्। सुरङ्गां सन्धिम्।

(१३) उपरिष्टात् उपरीत्यर्थः। अस्मदायत्तैव अस्मदधीनैव, वयमेव तस्या रक्षायै नियुक्ताः, अतस्तव रक्षणमस्माभिरेव करणीयं, मा तेऽस्तु काऽपि शङ्केति भावः।

(१४) रक्ततरः अत्यनुरक्तः, तां प्रतीति शेषः। रहस्यं गोप्यम्। भेत्स्यति प्रकटयिष्यति।

(१५) अन्यतमः एकतमः। सगरसुता हि षष्टिसहस्रसङ्ख्याकाः पृथ्वीं खनित्वा पातालं जग्मुरिति पौराणिकी वार्त्ता। एतत् कर्म सुरङ्गाखननरूपं कार्यम्।

(१६) निरदिक्षत् निर्दिष्टवान्।

(१७) त्वया चौररूपिणा अपहारवर्मणेत्यर्थः। कर्मणि सुरङ्गाखननरूपे। साधिते निष्पादिते। चित्रैः अद्भुतैः। उपायैः कौशलैः। तेन चौरेण। सन्धाय सङ्गत्य। सिद्धे सम्पन्ने। अर्थे प्रयोजने। निगडयित्वा संयम्य, बद्ध्वेत्यर्थः। सर्वथा सर्वैः प्रकारैः, सामदण्डादिभिरुपायैरित्यर्थः। उपक्रान्तः प्रकृतरत्नं कथयितुं आरब्धः इत्यर्थः। धृष्टतमः अतिप्रगल्भः। प्रकृष्टवैरः दृढशत्रुभावः।

(१८) अर्थः प्रयोजनम्। रहस्यं गुप्तं, राजकन्यासङ्गमरूपमित्यर्थः। न स्रवति न भिद्यते, न प्रकटीभवतीत्यर्थः।

मया उक्तो सोऽतिहृष्टः प्रतिपद्य मामेव त्वदुपप्रलोभने (३९) नियुज्य बहिरवस्थितः, प्रायरूपम् (४०) इतःपरं चिन्त्यताम्' इति।

प्रीतेन च मया उक्तं—'मदुक्तमल्पं, त्वन्नय एव अत्र भूयान्, (४१) आनयैनम्' इति। अथ आनीतेन अमुना मन्मोचनाय प्रयतः कृतः, मया च रहस्यानिर्भेदाय। (४२) विनिगडीकृतस्य स्नानभोजनविलेपनानि अनुभूय नित्यान्धकारात् काराभित्तिकोणात् आरभ्य उरगास्येन (४३) सुरङ्गाम् अकरवम्, अचिन्तयच्चैवं, 'हन्तुमनसैव अमुना (४४) मन्मोचनाय प्रयत्नः कृतः, तत् अमुं हत्वाऽपि नासत्यवाद-दोषेण स्पृश्ये' इति। निष्पततस्य मे निगडनाय प्रसार्यमाणपाणेस्तस्य पादेन उरसि निहत्य पातितस्य तस्यैव असि-धेन्वा शिरो न्यकृन्तम्, (४५) अकथयच्च शृगालिकां,

(३९) स कान्तकः। प्रतिपद्य स्वीकृत्य। त्वदिति।—तव उपप्रलोभने लोभप्रदर्शनेन वशीकरणे।

(४०) प्रायरूपं युक्तरूपं, युक्तियुक्तमित्यर्थः, "प्रायं युक्ताय कर्तव्यम्" इति वैजयन्ती।

(४१) मदुक्तं मया यदुपदिष्टं तदित्यर्थः। अल्पं किञ्चित, अकिञ्चित्कर-मित्यर्थः। त्वन्नयः तव नीतिः, भूयान् महान्, तव नीत्यैव सर्वं सेत्स्यतीति भावः।

(४२) अमुना कान्तकेन। मन्मोचनाय मम कारामोचनाय। रहस्यानिर्भेदाय गुप्तव्यापाराप्रकटनाय।

(४३) विनिगडीकृतः निगडात् मोचितः, विमुक्तशृङ्खल इत्यर्थः। नित्यान्ध-कारात् सततनिमिरात्। उरगास्येन फणिमुखाकारखननास्त्रेण।

(४४) हन्तुमनसैव वधार्थिनैव। अमुना कान्तकेन।

(४५) निष्पततः निर्गच्छतः, उपवनगतसुरङ्गाप्रान्तादिति शेषः। निगडनाय बन्धनाय। प्रसार्यमाणः विस्तार्यमाणः, पाणिर्येन तथाभूतस्य। तस्य कान्तकस्य, उरसीत्यनेनान्वयः। असिधेन्वा छुरिकया, "छुरिका चासिधेनुका" इत्यमरः। न्यकृन्तं निकृत्तवान्, चिच्छेदेत्यर्थः।

—'भण भद्रे! कथम्भूतः कन्यापुरसन्निवेशः? (४६) महा-
मयं प्रयासो मा वृथैव भूत्, अमुत्र (४७) किञ्चित् चोरयित्वा
निवर्त्तिष्ये' इति। तदुपदर्शितविभागश्च अवगाह्य कन्या-
ऽन्तःपुरं प्रज्वलत्सु मणिप्रदीपेषु नैकक्रीडाखेदसुप्तस्य परि-
जनस्य मध्ये महार्हरत्नप्रत्युप्तसिंहाकारदन्तपादे हंसतूल-
गर्भकोमलशय्योपधानशालिनि कुसुमलवच्छुरितपर्य्यन्ते
पर्य्यङ्कतले (४८) दक्षिणपादपार्ष्णिरधोभागानुवेष्टितेतर-
चरणाग्रपृष्ठम्, (४९) ईषद्विवृतमधुरगुल्फसन्धि, परस्पराश्लिष्ट-

(४६) भण कथय। कन्यापुरस्य कन्याऽन्तःपुरस्य, सन्निवेशः संस्थानं, "संस्थानं सन्निवेशे च स्वरूपे च निगद्यते" इति वररुचिः।

(४७) प्रयासः श्रमः, यत्नो वा। अमुत्र अस्मिन् कन्यापुरे।

(४८) तदिति।—तया शृगालिकया, उपदर्शितः उपदिष्टः, विभागः संस्थानविशेषः यस्य तादृशम्। अवगाह्य प्रविश्य। मणिप्रदीपेषु मणयः प्रदीपा इव तेषु रत्नप्रदीपेषु। नैकेति।—नैका बहुविधाः, क्रीडाः ताभिः खेदः परिश्रमः, तेन सुप्तस्य निद्रितस्य। महार्हेति।—महार्हैः महामूल्यैः, रत्नैः मणिभिः, प्रत्युप्ताः खचिताः, सिंहाकाराः सिंहाकृतिवत् निर्मिताः, दन्तपादा हस्तिदन्तनिर्मितपादा यस्य तादृशे। "मण्डितमहार्घरत्नप्रत्युप्तसिंहाकारदन्तपादे" इति पाठे—मण्डितानि अलङ्कृतानि, महार्घाणि महामूल्यानि, रत्नानि प्रत्युप्तानि येषु तादृशाः सिंहाकारा दन्तपादा यस्य तथाविधे इत्यर्थः। हंसेति।—हंसवत् धावल्ये स्पर्शे च हंसतुल्याः, तूलाः कार्पासाः, गर्भे अभ्यन्तरे यस्याः तादृशी, कोमला मृदुला च, या शय्या, तादृशम् उपधानञ्च शिरोनिधानञ्च, तच्छालिनि तच्छोभिनि। कुसुमेति।—कुसुमानां लवैः खण्डैः, क्षुद्रक्षुद्रपुष्पैरित्यर्थः, छुरितः व्याप्तः, पूरित इत्यर्थः, पर्य्यन्तः प्रान्तदेशः यस्य तथाभूते। पर्य्यङ्कतले खट्वोपरि, "शयनं मञ्चपर्य्यङ्कपल्यङ्काः खट्वया समाः" इत्यमरः।

(४९) दक्षिणेति।—दक्षिणपादस्य यः पार्ष्णिः पश्चाद्भागः पादमूलं वा, तस्य अधोभागेन निम्नदेशेन, अनुवेष्टितं युक्तम्, इतरचरणस्य वामपादस्य, अग्रपृष्ठम् उपरिभागः यस्मिन् तत् यथा तथा, "पार्ष्णिः पाश्चात्यभागेऽपि पादमूलोन्मत्त-स्त्रियोः" इति विश्वः। "अनुवेष्टित" इत्यत्र "अनुवलित" इति पाठान्तरम्।

(५०) ईषदिति।—ईषत् अल्पं, विवृतः प्रकटितः, सुकोमलशय्यायां शायित्व

जङ्घाकाण्डम्, (५०) आकुञ्चितकोमलोभयजानु, किञ्चिद्वेल्लितोरुदण्डयुगलम्, (५१) अधिनितम्बस्रस्तमुक्तैकभुजलताग्रपेशलम्, (५२) अपाश्रयान्तनिहिताकुञ्चितेतरभुजलतोत्तानतलकरकिसलयम्, (५३) आभुग्नश्रोणिमण्डलम्, अतिश्लिष्टचीनांशुकोत्तरीयम्, (५४) अनतिवलिततनुतरोदरम्, अणुतरनिःश्वासारम्भकम्पमानकठोरकुचकुड्मलम्, (५५)

---

निम्नत्वादिति भावः, मधुरः मनोहरः, गुल्फयोः घुटिकायाः, पादग्रन्थेरिति यावत्, "तद्ग्रन्थी घुटिके गुल्फौ" इत्यमरः, सन्धिः संयोगो यस्मिन् तद्यथा तथा । परस्परेति ।—परस्परम् आश्लिष्टौ संसक्तौ, जङ्घाकाण्डौ जङ्घारूपौ दण्डौ यस्मिन् तद्यथा तथा, "काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु" इत्यमरः ।

(५१) आकुञ्चितेति ।—आकुञ्चितं सङ्कुचितं, कोमलं सुकुमारम्, उभयं जानु जङ्घोर्वोः सन्धिः यस्मिन् तत् यथा तथा । किञ्चिदिति ।—किञ्चित् ईषत्, वेल्लितं सङ्कुचितम्, ऊरुदण्डयुगलं यस्मिन् तत् यथा तथा ।

(५२) अधीति ।—अधिनितम्बं नितम्बस्य उपरि, स्रस्तं शिथिलं यथा तथा, मुक्तं पातितं, यत् एकभुजलतायाः एककराग्रभागः, तेन पेशलं मनोज्ञं यथा तथा ।

(५३) अपाश्रयेति ।—अपाश्रयस्य शिरोभागस्य, "अपाश्रयः शिरोभागः" इति वैजयन्ती ; अन्ते पर्य्यन्ते, निहितायाः स्थापितायाः, "निहित" इत्यत्र "निमित" इति पाठेऽपि स एवार्थः ; आकुञ्चितायाः सङ्कुचितायाः, इतरभुजलताया अपरबाहुलतायाः, उत्तानम् ऊर्द्ध्वगतं, तलं यस्य तादृशः, करः किसलयमिव यत्र तद्यथा तथा ।

(५४) आभुग्नेति ।—आभुग्नम् ईषत् कुटिलं, श्रोणिमण्डलं नितम्बबिम्बं यस्मिन् तत् यथा तथा । अतीति ।—अतिशयेन श्लिष्टं शरीरसम्बद्धमित्यर्थः, चीनांशुकस्य चीनदेशीयवसनस्य, उत्तरीयं यस्मिन् तत् यथा तथा । "अन्तरीयम्" इति पाठे—अन्तरीयमधोवस्त्रम्, "अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके" इत्यमरः ।

(५५) अनतीति ।—अनतिवलितं नातिनतं, तनुतरम् अतिक्षीणम्, उदरं यस्मिन् तत् यथा तथा । अणुतरेति ।—अणुतरेण अल्पतमेन, "अतनुतर" इति पाठे—अतनुतरेण आयतेनेत्यर्थः, निद्रितस्य निःश्वासाधिक्यादिति भावः, निःश्वासारम्भेण निःश्वासप्रवृत्त्या इत्यर्थः, कम्पमाने कठोरे कठिने, कुचकुड्मले स्तनमुकुले यस्मिन्, तत् यथा तथा ।

आ-तिरश्चीन-बन्धुर-शिरोधरोद्देश-दृश्यमान-निष्टप्त-तपनीय-सूत्र-पर्यस्तपद्मरागकण्ठकम्, (५६) अर्धलम्बाधरकर्णपाशनिभृत-कुण्डलम्, (५७) उपरिपरावृत्त-श्रवणपाशरत्नकर्णिकाकिरण-मञ्जरीपिञ्जरितविषमव्याविद्धाशिथिलशिखण्डबन्धम्, (५८) आत्मप्रभापटलदुर्लक्ष्यपाटलोत्तराधरविवरं, (५९) गण्डस्थली-सङ्क्रान्तहस्तपल्लवदर्शितकर्णावतंसकत्वम्, (६०) उपरि-

(५६) आ-तिरश्चीनेति।—आ-तिरश्चीनः ईषद्वक्रः, बन्धुरः उन्नतानतः, "बन्धुरन्तून्नतानतम्" इत्यमरः; सुन्दरो वा, "बन्धुरं सुन्दरे हृष्टे बन्धुरं नम्र-वाचकम्" इति शाश्वतः; सः शिरोधरोद्देशः ग्रीवाप्रदेशः, तस्मिन् दृश्यमानं निष्टप्ते अग्निसन्तापेन विशुद्धे इति यावत्, निर्मले इति भावः, "निसस्तपतावनासेवने" (८।३।१०२ पा०) इति षत्वम्; तपनीयसूत्रे सुवर्णतन्तौ, "तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम्" इत्यमरः; पर्यस्तं विन्यस्तं, ग्रथितमित्यर्थः, पद्मरागकण्ठकं पद्मरागमणिविनिर्मितकण्ठाभरणविशेषो यस्मिन् तत् यथा तथा।

(५७) अर्धेति।—अर्धलम्बः उपरितनांशस्य केशावृतत्वात् अर्धांशमात्र-दृश्यः, अधरोऽधोभागो यस्य तादृशौ, "अधस्तादपि चाधरः" इत्यमरः; कर्णपाशौ शोभनकर्णौ, "पाशस्तु मृगपक्ष्यादिबन्धने। कर्णान्ते शोभनार्थः स्यात् कचान्ते निकरार्थकः। छात्राद्यन्ते च निन्दार्थः" इति हैमः; निभृतं निश्चलं, कुण्डलं कर्णभूषणं यस्मिन् तद्यथा तथा।

(५८) उपरीति।—उपरिपरावृत्तः समुन्नतः, ऊर्ध्वांशस्थ इत्यर्थः, सः श्रवणपाशः शोभनकर्णः, कर्णोपरिभाग इत्यर्थः, तत्र रत्नकर्णिकाया रत्नमयकर्णभूषणविशेषस्य, "कर्णिका तालपत्रं स्यात् कुण्डलं कर्णवेष्टनम्" इत्यमरः; किरणानां प्रभाणां, मञ्जरीभिः राजिभिः, पिञ्जरितः पिञ्जरीकृतः, विषमव्याविद्धः अत्यर्थं कुटिलः, "आविद्धं कुटिलं भुग्नम्" इत्यमरः; अशिथिलः अस्रस्तः, रचनानैपुण्येन निद्रावस्थायामपि यथापूर्वमव-स्थित इति भावः, "व्याविद्धशिथिल" इति पाठे—शिथिलः पार्श्वपरिवर्तनादिना श्लथीभूतश्च इत्यर्थः, शिखण्डबन्धः चूडाबन्धः, वेणिबन्ध इत्यर्थः, केशबन्धरचना इति यावत्, यस्मिन् तद्यथा तथा, "शिखण्डो बर्हचूडयोः" इति मेदिनी।

(५९) आत्मेति।—आत्मनः स्वस्य, प्रभापटलेन किरणनिचयेन, दुर्लक्ष्यं दुर्दर्शं, पाटलस्य श्वेतरक्तस्य, उत्तराधरस्य ओष्ठयुगलस्य, विवरम् अन्तरालं यस्मिन् तद्यथा तथा।

कपोलादर्शतल-निषण्ण-चित्रवितानपत्रजातजनित-विशेषक-क्रियम्, (६१) आमीलितलोचनेन्दीवरम्, अविभ्रान्तभ्रू-पताकम्, (६२) उद्भिद्यमानश्रमजलपुलकभिन्नशिथिल-चन्दन-तिलकम्, (६३) आननेन्दुसम्मुखालककलतञ्च विस्रब्धप्रसुप्ताम् अतिधवलोत्तरच्छदनिमग्नप्रायैकपार्श्वतया (६४) चिर-विलसनखेदनिश्चलां, (६५) शरदम्भोधरोत्सङ्गशायिनीमिव सौदामनीं (६६) राजकन्याम् अपश्यम्।

---

(६०) गण्डेति।—गण्डस्थल्यां कपोलदेशे, कपोलनिम्ने इत्यर्थः, सङ्क्रान्तेन स्थितेन, हस्तपल्लवेन करकिसलयेन, दर्शितं प्रकटितं, कर्णावतंसस्य कर्णभूषणस्य, नवपल्लवरूपस्येति भावः, कृत्यं कार्य्यं यस्मिन् तद्यथा तथा।

(६१) उपरीति।—उपरिकपोलः गण्डस्योर्द्ध्वभाग एव, आदर्शतलं दर्पणं, दर्पणवत् स्वच्छगण्डोर्द्ध्वभाग इत्यर्थः, तत्र निषण्णा सङ्क्रान्ता, चित्रवितानस्य उपरिस्थितस्य चित्रितचन्द्रातपस्य, पत्रजातेन पत्राकारचित्रविशेषेण, प्रतिबिम्बितेनेति भावः, जनिता उत्पादिता, विशेषकक्रिया तिलकक्रिया, भक्तिरचना इत्यर्थः, यस्मिन् तद्-यथा तथा।

(६२) आमीलितेति।—आमीलिते मुद्रिते, लोचने इन्दीवरे नीलोत्पले इव यस्मिन् तद्यथा तथा। अविभ्रान्तेति।—अविभ्रान्ते विभ्रमरहिते, निद्रावशादिति भावः, भ्रुवौ पताके इव यस्मिन् तद्यथा तथा।

(६३) उद्भिद्यमानेति।—उद्भिद्यमानेन उद्गच्छता, श्रमजलपुलकेन घर्मजनित-रोमहर्षणेन, भिन्नं विदारितं, धौतप्रायमित्यर्थः, अत एव शिथिलम् आर्द्रत्वात् विद्रुतं, चन्दनतिलकं यस्मिन् तद्यथा तथा।

(६४) आननेति।—आननं मुखम्, इन्दुश्चन्द्र इव, तस्य सम्मुखे अलकाश्चूर्ण-कुन्तलाः, लता इव कलङ्करूपेति भावः, यस्मिन् तद्यथा तथा। एतानि क्रिया-विशेषणानि। विस्रब्धप्रसुप्तां निःशङ्कनिद्रिताम्। अतीति।—अतिधवले अतिशुभ्रे, उत्तरच्छदे उपर्य्यास्तरणे, निमग्नप्रायः प्रायेण निमग्नः, वर्णसाम्याददृश्यप्राय इति भावः, एकपार्श्वो यस्यास्तस्या भावस्तया।

(६५) चिरेति।—चिरं दीर्घकालं व्याप्य, विलसनं विहारः, तेन यः खेदः श्रमः, तेन निश्चलां स्थिरां, प्रगाढ़निद्रागमादिति भावः।

(६६) शरदिति।—शरदम्भोधरः शारदीयो मेघः, निर्जलतया अतिधवल

दृष्ट्वैव स्फुरदनङ्गरागगर्भाकितः चौरयितव्यनिःस्पृहः तथैव(६७) तावत् चौर्य्यमाणहृदयः (६८) किंकर्त्तव्यतामूढः क्षणम् अतिष्ठम्, अतर्कयञ्च—'न चेत् इमां वामलोचनामाप्नुयां, न मृष्यति मां जीवितुं वसन्तबन्धुः। (६९) असङ्केतितपरामृष्टा च इयमतिबाला व्यक्तमार्त्तरवेण (७०) निहन्यान्मे मनोरथं, ततोऽहमेवाप्नीय, (७१) तत् इयमत्र प्रतिपत्तिः' इति नागदन्तलग्ननिर्य्यासवालुकाकल्कवर्णितं (७२) फलकमादाय मणिसमुद्गकात् वर्णवर्त्तिकाम् (७३) उद्धृत्य

इति भावः, तस्य उत्सङ्गे क्रोड़े, मध्ये इत्यर्थः, शेते तिष्ठतीति तथोक्ताम्। सौदामनीं विद्युतमिव, सुदामा पर्वतभेदस्तेनैका दिक् तत्प्रान्तभवत्वात् अण्।

(६७) स्फुरदिति।—स्फुरन् उद्भवन्, अनङ्गस्य कामस्य, रागः आवेशो यस्य तथाभूतः। चकितः सम्भ्रान्तः। चौरयितव्ये चौर्य्यव्यापारे, निःस्पृहः निराकाङ्क्षः। तथैव कन्यकयैव।

(६८) चौर्य्यमाणेति।—चौर्य्यमाणम् अपह्रियमाणं, हृदयं यस्य तथाभूतः।

(६९) वामलोचनां सुनयनाम्। मृष्यति क्षमते। वसन्तबन्धुः कामः।

(७०) असङ्केतितेति।—असङ्केतिता अदत्तसङ्केता सती, परामृष्टा स्पृष्टा, हठात् स्पृष्टेति यावत्। अतिबाला, अतिशयेन मुग्धा। व्यक्तं स्फुटं, निश्चितमेवेत्यर्थः। आर्त्तरवेण चीत्कारेणेत्यर्थः।

(७१) निहन्यात् नाशयेत्, विफलीकुर्य्यादित्यर्थः। आप्नीय आहतो भवेयमित्यर्थः, पुररक्षिभिरिति शेषः। आङ्-पूर्वकात् हन्तेरकर्मकादात्मनेपदविधानात् विधिलिङ् उत्तमपुरुषैकवचनम्।

(७२) प्रतिपत्तिः कर्त्तव्येत्यर्थः। नागदन्तेति।—नागदन्तः गृहभित्तौ प्रोथितकाष्ठखण्डविशेषः, "खाङ्गा" इति यस्य प्रसिद्धिः, "नागदन्तो द्विपरदे गृहान्निर्गतदारुणि" इति विश्वः; तत्र लग्नेन स्थितेन, निर्य्यासवालुकाकल्केन चिक्कणकाथरूपेण द्रव्येण, यद्वा—निर्य्यासेन रसकद्रव्यविशेषस्य क्वाथेन सह, पिष्टा वालुका एलवालुकाख्यः सुगन्धिहरितवर्णद्रव्यविशेषः, "एलवालुकमैलेयं सुगन्धि हरिवालुकम्। वालुकञ्च" इत्यमरः; तत्कल्केन तत्पिण्डेन, तत्कल्कलेपनेनेत्यर्थः, वर्णितं रञ्जितम्।

(७३) फलकं काष्ठखण्डम्। मणिसमुद्गकात् मणिमयसम्पुटकात्, रत्नपेटिकात् इत्यर्थः, "समुद्गकः सम्पुटकः" इत्यमरः। वर्णवर्त्तिकां रञ्जनतूलिकाम्।

तां तथाशयानां तस्याश्च माम् आबद्धाञ्जलिं चरणलग्नमालिख्य-मार्य्याञ्चैताम् ( ७४ )—

'त्वामयमाबद्धाञ्जलि दासजनस्त्वमिममर्थमर्थयते ।
स्वपिहि मया सह सुरतव्यतिकरखिन्नेव मा मैवम् ॥' (७५)

हेमकरण्डकाच्च वासताम्बूलवीटिकां कर्पूरगुटिकां पारिजातकञ्च उपयुज्य अलक्तकपाटलेन तद्रसेन सुधाभित्तौ चक्रवाकमिथुनं निरष्ठीवम्, ( ७६ ) अङ्गुलीयकविनिमयञ्च

( ७४ ) आलिख्य इत्यस्य पक्षे चित्रितवान् इत्यर्थः, अपरञ्च सम्यक् लिखितवान् इत्यर्थश्च, तेन चरणलग्नं मां चित्रितवान् आर्यांच लिखितवानिति निष्कर्षः। आर्यां छन्दोविशेषमयी वाक् ताम्, "यस्याः प्रथमे पादे द्वादशमात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये पञ्चदश चतुर्थके साऽऽर्या ॥" इति लक्षणात्। एतां वक्ष्यमाणाम्।

( ७५ ) त्वामिति।—अयं दासजनः तव भृत्यस्वरूपः अयं जनः, आबद्धाञ्जलि कृतकरद्वयसंयोगं यथा स्यात् तथा, इति क्रियाविशेषणम्; "तौ युतावञ्जलिः पुमान्" इत्यमरः; त्वां भवतीं, त्वत्समीपे इत्यर्थः, इमं मनसा अभिलषितम्, इमं वक्ष्यमाणम्, अर्थं प्रयोजनम्, अर्थयते याचते। किमित्याह, स्वपिहीति।—मया सह सुरतव्यतिकरेण निधुवनव्यापारेण, खिन्ना श्रान्ता सत्येव, स्वपिहि निद्रां गच्छ, एवम् अनेन प्रकारेण, सुरतखेदं विनेत्यर्थः, मा मा न न, स्वपिहीति शेषः।

( ७६ ) हेमकरण्डकात् सुवर्णपेटकात्। वासताम्बूलवीटिकां सुगन्धताम्बूलवीटिकां "मिठा पानेर खिलि" इति भाषा। कर्पूरगुटिकां कर्पूरवटिकां, क्षुद्रकर्पूरगोलकम् इत्यर्थः। पारिजातकं सुगन्धखदिरं, पारिजातं देवतरुपुष्पं, तदिव इति पारिजातकं देवकुसुमापरपर्य्यायकं लवङ्गमित्यर्थो वा, "लवङ्गं देवकुसुमं श्रीसंज्ञम्" इत्यमरः; इवार्थे कन्। उपयुज्य भक्षयित्वा। अलक्तकेति।—अलक्तकवत् लाक्षारसवत्, पाटलः श्वेतरक्तः तेन, "श्वेतरक्तस्तु पाटलः" इत्यमरः। तद्रसेन तस्य चर्वितस्य ताम्बूलादेरित्यर्थः, रसेन द्रवेण। सुधाभित्तौ सुधया चूर्णेन, चूर्णलेपेन धवलितेत्यर्थः, "सुधा गङ्गेष्टकाचूर्णं स्नुही चामृतमूर्वयोः" इत्यजयः; भित्तिः कुड्यं तस्याम्। निरष्ठीवं निष्ठ्यूतवानहं, निष्ठीवनेन चक्रवाकं चक्रवाकीञ्च चित्रितवानित्यर्थः।

हत्वा कथंकथमपि निरगाम्। सुरङ्गया च प्रत्येत्य (७७) बन्धनागारं तत्र बद्धस्य नागरिकवरस्य सिंहघोषनाम्नः तेषु एव दिनेषु मित्रत्वेन उपचरितस्य (७८) 'एवं मया कृतस्तपस्वी कामुकः, तत् त्वया प्रतिभिद्य रहस्यं लब्धव्यो मोक्षः' इत्युपदिश्य सह शृगालिकया निरक्रामिषम्। (७९)

नृपतिपथे च समागत्य रक्षिपुरुषैः समग्रहि, (८०) अचिन्तयञ्च—'अलमस्मि जवेनापसर्त्तुमनास्पृष्ट एवैभिः, एषा पुनर्वराकी गृह्येत, तत् इदमत्र प्राप्तरूपम्' (८१) इति तान् एव चपलम् अभिपत्य (८२) स्वपृष्ठसमर्पितकूर्परः पराङ्मुखः स्थित्वा 'यद्यहमस्मि तस्करः, भद्राः! बध्नीत मां, युष्माकमयमधिकारो न पुनरस्या वर्षीयस्याः' (८३) इत्यवादिषम्। सा तु तावता उन्नीतमदभिप्राया (८४) तान्

(७७) प्रत्येत्य प्रत्यागत्य।

(७८) तेषु एव दिनेषु यावन्ति दिनानि अहं कारागारे न्यवसं तावत्कालमध्ये इत्यर्थः। उपचरितस्य उपासितस्य, मित्रभावेनाराधितस्येत्यर्थः।

(७९) तपस्वी दीनः। प्रतिभिद्य प्रकाश्य। मोक्षः कारावासात् मुक्तिः। निरक्रामिषं निरगमम्।

(८०) समग्रहि गृहीतः।

(८१) अलं समर्थः। जवेन वेगेन। अपसर्त्तुं पलायितुम्। अनास्पृष्टः अस्पृष्टः। एभिः रक्षिपुरुषैः। एषा शृगालिका। वराकी अनुकम्पार्हा। प्राप्तरूपं रम्यं, समयोचितया युक्तियुक्तम् इत्यर्थः, "प्राप्तरूपो बुध-रम्ययोः" इति मेदिनी।

(८२) तानेव रक्षिपुरुषानेव। चपलं शीघ्रं यथा तथा। अभिपत्य उपगम्य।

(८३) स्वपृष्ठेति।—स्वस्य पृष्ठे निजपृष्ठदेशे, समर्पितौ स्थापितौ, कूर्परौ कफोणिद्वयं येन तथाभूतः, "स्यात् कफोणिस्तु कूर्परः" इत्यमरः। पराङ्मुखः विमुखः, रक्षिपुरुषान् पश्चात्कृत्य इत्यर्थः। अयमधिकारः मां बद्धुं क्षमता। अस्याः वर्षीयस्याः वृद्धाया न पुनस्तां बद्धुमधिकार इत्यर्थः।

(८४) सा शृगालिका। तावता स्वपरिमितवचनेन। उन्नीतेति।—उन्नीतः अवगतः मम अभिप्रायो यया तादृशी।

सप्रणामम् अभ्युपेत्य, 'भद्रमुखाः! मम एष पुत्रो वायुग्रस्तः (८५) चिराच्चिकित्सितः। पूर्वेद्युः प्रसन्नकल्पः प्रकृतिस्थ एव जातः, जाताश्वया मया बन्धनात् निष्क्रमय्य स्नापितोऽनुलेपितश्च परिधाप्य निष्प्रवाणियुगलम्, (८६) अभ्यवहार्य्य परमान्नमौशीरेऽस्य कामचारः (८७) कृतोऽभूत्। अथ निशीथे (८८) भूय एव वायुनिघ्नः 'निहत्य कान्तकं नृपतिदुहितरं रमेयम्' इति रंहसा परेत्य (८९) राजपथम् अभ्यपतत्। निरूप्य च अहं पुत्रम् एवं-गतम् (९०) अस्यां वेलायाम् (९१) अनुधावामि। तत् प्रसीदत, बद्धैनं मह्यमर्पयत' इति यावत् असौ क्रन्दति, तावदहं 'स्थविरे! केन देवो मातरिश्वा बद्धपूर्वः? किमिते काकाः शौङ्गेयस्य मे निग्रहीतारः? (९२)

(८५) भद्रमुखाः! भद्रं साधुः, "स्याद्भद्रं साधुशर्मणोः" इति शाश्वतः; इति मुखं शब्दः, अभिधा इत्यर्थः, येषां ते, हे साधवः! "मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि। सन्ध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम्।" इति मेदिनी। वायुग्रस्तः उन्मत्तः।

(८६) प्रसन्नकल्पः प्रायेण हृष्टचित्तः। जाताश्वया जातविश्वासया, सुस्थतां प्रतीति शेषः। निष्प्रवाणियुगलं नववस्त्रद्वयम्, "अनाहतं निष्प्रवाणि तन्त्रकञ्च नवाम्बरे" इत्यमरः।

(८७) अभ्यवहार्य्य भोजयित्वा। औशीरे शयनासने, "औशीरं शयनासनम्" इति हलायुधः। कामचारः स्वेच्छाचारः।

(८८) निशीथे अर्द्धरात्रे।

(८९) वायुनिघ्नः वाताधीनः, वायुरोगाक्रान्तः इत्यर्थः। रंहसा वेगेन। परेत्य गत्वा।

(९०) निरूप्य दृष्ट्वा। एवं-गतम् एवमवस्थम्।

(९१) अस्यां वेलायां निशीथसमये इत्यर्थः।

(९२) मातरिश्वा वायुः, वायुः यथा न केनापि धर्त्तुं शक्यते तथा अहमपीति भावः। शौङ्गेयः विहङ्गमप्रभुः नीलपक्षः पक्षिविशेषः, "फिङ्गा" इति प्रसिद्धः।

शान्तं पापम्' (९३) इत्यभ्यधावम्। असौ अपि अमीभिः 'त्वमेव उन्मत्ता, या अनुन्मत्त इत्युन्मत्तं मुक्तवती, कस्मात् इदानीं बध्नाति?' इति निन्दिता कदर्थिता (९४) रुदत्येव माम् अन्वधावत्। गत्वा च रागमञ्जरीमहं चिरवियोगविक्लवाम् इमां बहुविधं समाश्वास्य तं निशाशेषमनयं, प्रभाते पुनः उदारकेण च समगच्छे।

अथ भगवन्तं मरीचिं वेश्याकृच्छ्रात् उत्थाय पुनः प्रतिपन्नतपःप्रभावप्रत्यापन्नदिव्यचक्षुषम् (९५) उपसङ्क्रम्य तेनास्मेरवभूतत्वद्दर्शनम् अवगमितः। (९६) सिंहघोषश्च कान्तकापचारं निर्भिद्य तत्पदे प्रसन्नेन राज्ञा प्रतिष्ठापितः (९७) तेन एव चारकसुरङ्गापथेन (९८) कन्यापुरप्रवेशं भूयोऽपि मे

---

"तिलच्छदस्तु प्रोक्तेयो विड्डारातिरित्यपि" इति वैजयन्ती। निवहोतारः निवहकर्त्तारः।

(९३) शान्तं पापम् ईदृशी असम्भवोक्तिः त्वया न निर्देश्या इत्यर्थः, "शान्तं पापमनिर्देश्ये" इति रत्नकोषः।

(९४) असौ ग्रामणिका। अमीभिः रक्षिभिः। अनुन्मत्त इति।—उन्मत्तं पुरुषम् अनुन्मत्त इति बुद्ध्वा मुक्तवती, बन्धनादिति शेषः। कदर्थिता तिरस्कृता।

(९५) वेश्याकृच्छ्रात् वेश्याव्यसनात्। उत्थाय आत्मानमुद्धृत्येत्यर्थः। प्रतिपन्नेति।—प्रतिपन्नेन प्राप्तेन, तपसः प्रभावेण सामर्थ्येन, प्रत्यापन्नं प्रत्युपागतं, दिव्यम् अलौकिकं, चक्षुः यस्य तथाविधम्।

(९६) उपसङ्क्रम्य समुपेत्य। तेन मरीचिना। अवगमितः ज्ञापितः।

(९७) कान्तकापचारमिति।—कान्तकः राजकन्यां प्रति पापमाचरिष्यम् इति विदित्वा केनचित् कारागारिकेण मदनुवर्तेन निहत इति कान्तकस्यैव अपराधम्। निर्भिद्य प्रकाश्य, राजसन्निधाविति शेषः। तत्पदे तस्यैव कान्तकस्य, पदे स्थाने, कारागाराध्यक्षत्वे इति यावत्। प्रतिष्ठापितः नियोजितः, बन्धनात् मुक्तः कारा... कृत इति भावः।

(९८) तेन मया कृतेन। चारकसुरङ्गापथेन कारागृहनिर्मितसुरङ्गामार्गेण।

सम्पादयत्। समगंसि च अहं मृगालिकामुखविसृत-वार्त्तानुरक्तया (९९) राजदुहित्रा। तेषु एव दिवसेषु चण्डवर्मा सिंहवर्मावधूतदुहितृप्रार्थनः कुपितोऽभियुज्य पुरम् अवा-रुणत्। (१००) अमर्षणश्च अङ्गराजो यावत् अरिः पारग्रामिकं विधिम् (१) आचिकीर्षति, तावत् स्वयमेव सालं (२) निर्भिद्य प्रत्यासन्नानपि (३) सहायान् अप्रतीक्षमाणो निर्गत्य अभ्यधिकबलेन विद्विषा सह सम्पराये भिन्नमर्मा (४) सिंह-वर्मा बलात् अगृह्यत। अम्बालिका च बलवदभिगृह्य चण्डवर्मणा हठात् परिणेतुम् आत्मभवनम् अनीयत। कौतु-कञ्च स किल 'अपरावसाने (५) विवाहः' इति अबध्नात्। अहञ्च धनमित्रगृहे तद्विवाहाय एव पिनद्धमङ्गलप्रतिसरः तमेवम् अवोचं—'सखे! समापतितमेव अङ्गनाद्याभिसरं (६)

---

(९९) समगंसि सङ्गतः अभूवम्। मृगालिकेति।—मृगालिकायाः मुखेन मुखोच्चारितवाक्येनेत्यर्थः, विसृताभिः विस्तारं गताभिः, मृगालिकया विशेषेण विसृताभिरित्यर्थः, वार्त्ताभिः वृत्तान्तैः, मत्कार्यप्रवर्त्तनैरित्यर्थः, अनुरक्तया मयि जातानुरागया।

(१००) तेषु एव दिवसेषु तावत्कालमध्ये। सिंहवर्मेति।—सिंहवर्मणा अवधूता निराकृता, दुहितुः कन्यायाः अम्बालिकायाः, प्रार्थना याच्ञा यस्य सः। अभियुज्य अभिगम्य, युद्धार्थमाक्रम्येत्यर्थः। अवारुणत् अवरुरोध।

(१) अमर्षणः कोपनः। अरिः चण्डवर्मा। पारग्रामिकं परग्रामाक्रमणोचितं, परराष्ट्रोपयोगिनमित्यर्थः। विधिं व्यापारं, नगरलुण्ठनादिकमिति भावः।

(२) सालं प्राकारम्।

(३) प्रत्यासन्नानपि सन्निहितानपि, समागतप्रायानपीत्यर्थः।

(४) अभ्यधिकबलेन प्रबलेन। विद्विषा शत्रुणा चण्डवर्मणा। सम्पराये सङ्ग्रामे। भिन्नमर्मा विदारितहृदयः।

(५) कौतुकं मङ्गलार्थहस्तसूत्रम्। अपरावसाने निशाशेषे।

(६) तद्विवाहाय तथा तस्या वा विवाहार्थम्। पिनद्धेति।—पिनद्धः बद्धः, मङ्गलप्रतिसरः माङ्गलिकहस्तसूत्रं येन तथोक्तः। "मा अनुबन्धने हस्तसूत्रे प्रति-

राजमण्डलम्; सुगूढमेव सम्भूय पौरवृद्धैः तत् उपावर्त्तय, उपावृत्तश्च कृतकृत्यः कृत्तशिरसमेव शत्रुं (७) द्रक्ष्यसि' इति। 'तथा' च तेन अभ्युपगते गतायुषोऽमुष्य भवनम् उत्सवाकुलम् (८) उपसमाधीयमानपरिणयोपकरणम् (९) इतस्ततः प्रवेशनिर्गमप्रवृत्तलोकसम्पातम् अलक्ष्यशस्त्रिकः सह प्रविश्य मङ्गलपाठकैः अम्बालिकापाणिपल्लवम् अग्नौ साक्षिणि आथर्वणेन विधिना (१०) अर्प्यमाणम् आदित्समानस्य आयामिनं बाहुदण्डम् आकृष्य छुरिकया उरसि (११) प्राहार्षम्। स्फुरतश्च कतिपयान् अन्यानपि यमविषयम् (१२) अगमयम्। हत-

चरोऽभिसरान्" इत्यमरः। तं धनमित्रम्। समापादितं समुपस्थितम्। अङ्गमायाभिसरम् अङ्गरक्षसहायम्। ("अनुप्लवः सहायश्चानुचरोऽभिसरः समाः" इत्यमरः)।

(७) सम्भूय मिलित्वा। पौरवृद्धैः स्थविरैः पुरवासिगणैः। उपावर्त्तय प्रतिनिवर्त्तय, तत्कृत्यं राज्ञैव पूर्णकृतत्वात् न तत्र साहाय्यमपेक्षणीयमित्युक्त्वा समीपे एव अवस्थापयेत्यर्थः। उपावृत्तश्च प्रतिनिवृत्तश्च, प्रत्यागतश्चेत्यर्थः। कृत्तशिरसं छिन्नमस्तकम्। शत्रुं चण्डवर्माणम्।

(८) अभ्युपगते स्वीकृते। गतायुषः निःशेषजीवनकालस्य। अमुष्य चण्डवर्मणः। उत्सवाकुलम् आनन्दविह्वलम्।

(९) उपेति।—उपसमाधीयमानं समानीयमानं, परिणयस्य विवाहस्य, उपकरणं द्रव्यसम्भारः यस्मिन् तथाभूतम्।

(१०) प्रवेशेति।—प्रवेशाय अभ्यन्तरगमनाय, निर्गमाय बहिरागमनाय च प्रवृत्तानाम् उद्यतानां, लोकानां सम्पातः सम्मर्दः यत्र तादृशम्। अलक्ष्यशस्त्रिकः गुप्तशस्त्र इत्यर्थः। अग्नौ साक्षिणि सतीति शेषः, अग्निं साक्षीकृत्य इत्यर्थः। आथर्वणेन पुरोधसा। ("आथर्वणो नाऽथर्वज्ञ-ब्राह्मणे च पुरोधसि" इति मेदिनी)। विधिना शास्त्रोक्तविधानेन।

(११) अर्प्यमाणं दीयमानम्। आदित्समानस्य आदातुमिच्छतः। आयामिनं दीर्घम्। उरसि वक्षसि।

(१२) स्फुरतः कोपेन प्रज्वलतः इत्यर्थः। यमविषयं यमराज्यम्।

विध्वस्तश्च तद्गृहम् अनुविचरन् वेपमानमधुरगात्रीं विशाल-लोचनाम् अभिनिशाम्य (१३) तदालिङ्गनसुखम् अनुबुभूषुः ताम् आदाय गर्भगृहम् अविक्षम्। (१४) अस्मिन्नेव क्षणे तवाप्यस्मि नवाम्बुवाहगम्भीरेण (१५) स्वरेण अनुगृहीतः" इति।

श्रुत्वा च स्मित्वा च देवोऽपि राजवाहनः "कथमसि कार्कश्येन कर्णीसुतम् अपि अतिक्रान्तः !!" इत्यभिधाय पुनः अवेक्ष्य उपहारवर्माणम्—"आचक्ष्व, तव इदानीम् अवसरः" (१६) इति अभाषत।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते उत्तरपीठिकायाम्
अपहारवर्मचरितं नाम द्वितीय उच्छ्वासः।

---

(१३) वेपमानेति।—वेपमानं कम्पमानं, मधुरं रमणीयं, गात्रं यस्यास्तथा-भूताम्। अभिनिशाम्य श्रावयित्वा, मद्व्यापारमिति शेषः, कोऽहमिति प्रत्यभि-ज्ञापनेन सान्त्वयित्वा इत्यर्थः। ("शम आलोचने" इति चौरादिकस्य रूपम्); यद्वा,—अभिनिशाम्य दृष्ट्वा। ["शमो दर्शने" (ग०) इति दर्शनार्थकशमधातोः मित्त्वाभावात् न ह्रस्वः]।

(१४) गर्भगृहं गृहाभ्यन्तरम् अन्तर्गृहं वा। अविक्षं प्रविष्टवानस्मि।

(१५) नवाम्बुवाहगम्भीरेण नवीनमेघध्वनिवत् गभीरेण।

(१६) कार्कश्येन नैष्ठुर्य्येण। कर्णीसुतं तस्करशास्त्रप्रवर्त्तकपुरुषविशेषम्। अवसरः अवकाशः, वक्तुमिति शेषः।

इति दशकुमारचरितटीकायां द्वितीयोच्छ्वासः।

# अथ तृतीयोच्छ्वासः।

## उपहारवर्म्मचरितम्।

सोऽपि सस्मितं प्रणम्य आरभत अभिधातुम्—"एषोऽपि अहमस्मि पर्य्यटन् एकदा गतो विदेहेषु मिथिलाम्; (१) अप्रविश्यैव वहिः क्वचिन्मठिकायां विश्रमितुम् एत्य (२) कयाऽपि वृद्धतापस्या दत्तपाद्यः (३) क्षणम् अलिन्दभूमौ अवास्थिषि। (४) तस्यास्तु मद्दर्शनात् एव किमपि आबद्ध-धारम् अश्रु प्रावर्त्तत। (५) 'किमेतदम्ब! कथय कारणम्?' इति पृष्टा सकरुणम् आचष्ट—'जैवातृक! (६) ननु श्रूयते पतिः अस्याः मिथिलायाः प्रहारवर्म्मा नाम आसीत्, तस्य खलु मगधराजो राजहंसः परं मित्रम् आसीत्। तयोश्च वल्लभे वलसम्बलयोः इव वसुमतीप्रियंवदे (७) सख्यम्

---

(१) मिथिलां विदेहराजधानीम्; वर्त्तमान "त्रिहुत" नगरीम्।

(२) वहिः नगरात् वहिःप्रदेशे। मठिकायां क्षुद्रमठे। ("मठश्छात्रादि-निलयः" इत्यमरः)। एत्य समागत्य।

(३) दत्तपाद्यः समर्पितपादोदकः।

(४) अलिन्दभूमौ वहिर्द्वारप्रकोष्ठे। ("प्रघाणप्रघणालिन्दा वहिर्द्वार-प्रकोष्ठके" इत्यमरः)। अवास्थिषि अवस्थितः।

(५) किमपि अनिर्वचनीयमित्यर्थः। आबद्धधारम् अविच्छिन्नप्रवाहम्। प्रावर्त्तत प्रासरत्।

(६) आचष्ट उवाच। जैवातृक! आयुष्मन्! ("जैवातृकः स्यादायुष्मान्" इत्यमरः)।

(७) तयोः राजहंसप्रहारवर्म्मणोः। वल्लभे प्रियतमे, महिष्यौ इति शेषः। वलेति।—वलश्च इन्द्रनाशितः असुरभेदश्च, सम्बलश्च कामदेवनाशितश्च तौ

अप्रतिमम् अधत्ताम्। (८) अथ प्रथमगर्भाभिनन्दिताञ्च प्रियसखीं वसुमतीं दिदृक्षुः प्रियंवदा सह भर्त्रा पुष्पपुरम् (९) अगमत्।

अस्मिन्नेव च समये मालवेन मगधराजस्य (१०) महत् जन्यम् (११) अजनि। तत्र लेशतोऽपि दुर्लक्ष्यां गतिम् (१२) अगमत् मगधराजः। मिथिलेन्द्रस्तु मालवेन्द्रप्रयत्नप्राणितः स्वविषयं प्रतिनिवृत्तो ज्येष्ठस्य (१३) संहारवर्मणः सुतैः विकटवर्मप्रभृतिभिः व्याप्तं (१४) राष्ट्रमाकर्ण्य स्वस्रीयात् (१५) सुह्मपतेः दण्डावयवम् आदित्सुः अटवीपथम् अव-

---

असुरौ तयोरिव। "बलवृत्रयोः" इति पाठान्तरम्। वसुमतीप्रियंवदे तदाख्ये महिष्याविन्यर्थः।

(८) अप्रतिमं निरुपमम्, अत्यन्तमित्यर्थः। अधत्तां धृतवत्यौ।

(९) प्रथमेति।—प्रथमेन आदिभूतेन, गर्भेण गर्भधारणेन, अभिनन्दिताम् अत्यर्थं हृष्टाम्। प्रियंवदा प्रहारवर्मपत्नी। भर्त्रा प्रहारवर्मणा सह। पुष्पपुरं मगधनगरीं, वर्त्तमान "पाट्ना" नगरीम्।

(१०) मालवेन मालवाधिपेन मानसारेण। मगधराजस्य राजहंसस्य।

(११) जन्यं युद्धम्। ("युद्धमायोधनं जन्यम्" इत्यमरः)।

(१२) तत्र युद्धे। लेशतोऽपि ईषदपि, गुप्तचरैरपीति भावः। दुर्लक्ष्यां सारथिहीनतया धावमानाश्वैः सुदूरापवाहनात् अन्यैरलक्षितां, दुर्ज्ञेयामित्यर्थः। गतिमवस्थाम्; मगधराजः पराजितः क्व गत इति न केनापि ज्ञायते इति भावः। यद्वा—दुर्लक्ष्यां दुरनुमेयां, मगधराजः पराजितो भविष्यति इति न केनापि तर्कितामिति भावः।

(१३) मिथिलेन्द्रः प्रहारवर्मा, राजहंससाहाय्याय सङ्ग्रामे अवतीर्ण इति भावः। मालवेन्द्रस्य मानसारस्य, प्रयत्नेन चेष्टया, सुहृदवस्थागतिश्रवणेन मूर्च्छितोऽपि पश्चात् व्यजनवाय्वादिरूपेणेति भावः, प्राणितः जीवितः। स्वविषयं स्वदेशम्। ज्येष्ठस्य अग्रजस्य भ्रातुरित्यर्थः।

(१४) व्याप्तम् अधिकृतम्।

(१५) स्वस्रीयात् भगिनीपुत्रात्। ("स्वस्रीयो भागिनेयः" इत्यमरः)।

(१६) दण्डावयवं सैनाङ्गं, हस्त्यश्वादिकमित्यर्थः। ("दण्डः सैन्ये दमे

गाह्य लुब्धकलुप्तसर्वस्वः (१६) अभूत्। तत्सुतेन (१७) च कनीयसा हस्तवर्त्तिना (१८) सह एकाकिनी वनचरशर-वर्षभयपलायिता वनम् अगाहिषि। (१९) तत्र च मे शार्दूल-नखावलीढनिपतितायाः पाणिभ्रष्टः (२०) स बालकः कस्यापि कपिलाशवस्य (२१) क्रोडम् अभ्यलीयत। (२२) तच्छवाकर्षिणश्च (२३) व्याघ्रस्य असून् इषुः इष्वसनयन्त्र-मुक्तः (२४) क्षणादालिक्षत्। (२५) भिल्लदारकैः (२६) स बालोऽपाहारि। (२७) सा तु अहं मोहसुप्ता (२८)

---

यमे" इति मेदिनी)। आदित्सुः आदातुं ग्रहीतुमिच्छुः। अटवीपथं वनमार्गम्। अवगाह्य प्रविश्य। लुब्धकेति।—लुब्धकैः व्याधैः, लुप्तं हृतं, सर्वस्वं सर्वधनं यस्य तथाभूतः।

(१७) तत्सुतेन तस्य प्रहारवर्मणः पुत्रेण।

(१८) कनीयसा कनिष्ठेन। हस्तवर्त्तिना हस्तस्थितेन।

(१९) एकाकिनी असहाया। वनचरेति।—वनचराणां व्याधानां, शर-वर्षात् बाणवृष्टेः, भयेन पलायिता सती। वनम् अगाहिषि प्रविष्टाऽभवम्।

(२०) शार्दूलेति।—शार्दूलस्य व्याघ्रस्य, नखेन नखराघातेन, अवलीढा आक्रान्ता, विद्धा इत्यर्थः, अत एव निपतिता तथाभूतायाः। पाणिभ्रष्टः हस्तच्युतः।

(२१) कपिलाशवस्य मृतगोशरीरस्य।

(२२) क्रोडम् उदरनिम्नम्। अभ्यलीयत प्राविशत्।

(२३) तच्छवेति।—तस्य शवस्य आकर्षिणः आकर्षकस्य।

(२४) असून् प्राणान्। इषुः शरः। इष्वसनेति।—इषवः शराः, अस्यन्ते क्षिप्यन्ते अनेनेति इष्वसनं धनुः, तदेव यन्त्रं शिल्पकर्मविशेषः, तस्मात् तेन वा मुक्तः निक्षिप्तः।

(२५) आलिक्षत् आस्वादयामास, जहारेत्यर्थः।

(२६) भिल्लदारकैः म्लेच्छजातिविशेषबालकैः, व्याधकुमारैरिति यावत्।

(२७) अपाहारि अपहृतः।

(२८) मोहसुप्ता मोहेन मूर्च्छया, सुप्ता इव सुप्ता निद्रिता, मूर्च्छाक्रान्ता इत्यर्थः।

केनापि वृष्णिपालेन (२९) उपनीय स्वं कुटीरम् आवेश्य (३०) कृपया अपक्रान्तव्रणा (३१) स्वस्थीभूय स्वभर्त्तुः (३२) अन्तिकम् उपतिष्ठासुः असहायतया यावत् व्याकुलीभवामि तावत् ममैव दुहिता सह यूना केनापि तमेव उद्देशम् (३३) आगमत्।

सा च भृशं रुरोद। रुदितान्ते च सा सार्थघाते (३४) स्वहस्तगतस्य राजपुत्रस्य किरातभर्त्तृहस्तगमनम्, (३५) आत्मनश्च केनापि वनचरेण व्रणविरोपणं, (३६) स्वस्यायाश्च पुनः तेन उपयन्तुं चिन्तितायाः निकृष्टजातिसंसर्गवैलक्ष्यात् प्रत्याख्यानपारुष्यं, तदक्षमेण च अमुना विविक्ते विपिने स्वशिरःकर्त्तनोद्यमः, (३७) अनेन यूना यदृच्छया दृष्टेन

(२९) वृष्णिपालेन मेषपालेन, ("मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके" इत्यमरः), गोपालेनेव वा, ("वृष्णिर्यदुषु गोपेषु" इति अजयः)।

(३०) उपनीय नीत्वा। कुटीरं क्षुद्रगृहम्। आवेश्य प्रवेश्य, तत्रैव अवस्थाप्येत्यर्थः।

(३१) अपक्रान्तव्रणा औषधादिना अपनीतव्रणक्षतेत्यर्थः।

(३२) स्वभर्त्तुः निजप्रभोः, प्रहारवर्मण इत्यर्थः।

(३३) उपतिष्ठासुः जिगमिषुः। यूना तरुणेन। उद्देशं स्थानम्।

(३४) रुदितान्ते रोदनानन्तरम्। सार्थघाते सङ्घभङ्गे, सहचरवर्गात् विच्छेदे इत्यर्थः।

(३५) स्वहस्तगतस्य निजहस्तस्थितस्य। राजपुत्रस्य प्रहारवर्मणः ज्येष्ठपुत्रस्य, धात्रीतया निजरक्षणाधीनस्येति भावः। किरातेति।—किरातानां म्लेच्छजातिविशेषाणां, भर्त्ता अधिपतिः, तस्य हस्तगमनं हस्तप्राप्तिः, अधीनतेति यावत्।

(३६) व्रणविरोपणम्, अस्त्राघातजनितक्षतचिकित्सनम्।

(३७) तेन वनचरेण। उपयन्तुं परिणेतुम्। चिन्तितायाः आध्यातायाः, अभिलषितायाः इति भावः। निकृष्टेति।—निकृष्टा अधमा, जातिः किरातजातिः, तस्याः संसर्गे सम्बन्धे, यत् वैलक्ष्यं विलक्षता, अवहेलना इत्यर्थः, तस्मात्। प्रत्याख्यानपारुष्यं निरसनकार्कश्यं, तन्निराकरणार्थे कटुवाक्यप्रयोग इत्यर्थः।

तस्य दुरात्मनो (३८) हननम्, आत्मनश्च उपयमनम् (३९) इति अकथयत्। स तु पृष्टो मिथिलेन्द्रस्यैव कोऽपि सेवकः कारणविलम्बी तन्मार्गानुसारी (४०) जातः। सह तेन भर्त्तुः (४१) अन्तिकम् उपसृत्य पुत्रवृत्तान्तेन श्रोत्रमस्य देव्याः प्रियंवदायाश्च अदहाव। (४२) स च राजा दिष्ट-दोषात् ज्येष्ठभ्रातृपुत्रैः चिरं विगृह्य (४३) पुनः असहिष्णुतया अतिमात्रं चिरं प्रयुध्य बद्धः, देवी च बन्धनं गमिता। (४४) दग्धा (४५) पुनः अहमस्मिन् अपि वार्द्धके हतजीवितम् अपारयन्ती हातुं प्रव्रज्यां (४६) किल अग्रहीषम्। दुहिता

---

तदधमेण तेन कटुवाक्यं सोढुमसमर्थेनेत्यर्थः। अमुना वनचरेण। विविक्ते विजने। स्वस्य आत्मनः, तस्याः कन्यायाः इत्यर्थः, शिरःकर्त्तनोद्यमः शिरश्छेदनोद्योगः।

(३८) अनेन यूना, येन सह आगता इति भावः। "अनेन" इत्यत्र "तेन" इति पाठे—तेन मया सह आगतेनानेन इत्यर्थः। यदृच्छया स्वैरितया, स्वेच्छाक्रमेणेत्यर्थः, आगतेनेति शेषः, ("यदृच्छा स्वैरिता" इत्यमरः) यद्वा—सहसा इत्यर्थः। दुरात्मनः दुष्टस्य, वनचरस्येति शेषः।

(३९) उपयमनं परिणयः, अनेन यूना सहेति शेषः।

(४०) स तु मद्दुहितुः परिणयात् जामातेति यावत्। पृष्टः मया जिज्ञासितः। कारणविलम्बी कारणवशात् कृतसमयातिक्रमः। तन्मार्गानुसारी तस्य मिथिलेन्द्रस्य मार्गम् अनुसरतीति तथोक्तः।

(४१) तेन मम जामात्रा। भर्त्तुः प्रभोः प्रहारवर्मणः।

(४२) अस्य प्रहारवर्मणः। अदहाव दग्धम् अकुर्व, आवामिति शेषः, पुत्रापहरणरूपाप्रियवृत्तान्तश्रवणजनितशोकाग्निज्वालयेति भावः, इत्यपि साऽकथयदिति पूर्वेणान्वयः।

(४३) स राजा प्रहारवर्मा। दिष्टदोषात् भाग्यदोषात्। विगृह्य विरोध्य, कलहयित्वेत्यर्थः।

(४४) देवी प्रियंवदा। गमिता प्रापिता, विकटवर्मणा स्वभृत्यैरिति शेषः।

(४५) दग्धा भस्मीभूतभाग्या।

(४६) हतजीवितं दुष्प्राणान्। अपारयन्ती अशक्नुवन्ती। हातुं त्यक्तुम्,

तु मम हतजीविताकृष्टा विकटवर्ममहिषी (४७) कल्पसुन्दरी किल अग्निम्रियत्। तौ चेत् राजपुत्रौ निरुपद्रवौ (४८) एव अवर्तिष्येताम्, इयता कालेन तव इमां वयोऽवस्थाम् अस्प्रक्ष्यताम्। तयोश्च सतोर्न दायादा नरेन्द्रस्य प्रसह्यकारिणो भवेयुः' इति प्रवृद्धमन्युः (४९) अभिरुरोद।

श्रुत्वा च तां तापसीगिरम् अहमपि प्रवृद्धबाष्पो निगूढ़मभ्यधां—(५०) 'यद्येवम् अम्ब! समाश्वसिहि। (५१) ननु (५२) अस्ति कश्चित् मुनिः त्वया तदवस्थया पुत्राभ्युपपादनार्थं (५३) याचितः, तेन स (५४) लब्धो वर्द्धितश्च। वार्त्ता

अत एव दग्धा सन्तापवत्त्वेन दग्धप्राया इति पूर्वेणान्वयः। प्रव्रज्यां सन्न्यासधर्मम्।

(४७) हतजीविताकृष्टा हतजीवितेन दुर्दैवक्लिष्टजीवनेन, आकृष्टा वशीभूता, दुःखप्रायेषु ममतावशवर्त्तिनी सतीत्यर्थः। विकटवर्मा प्रहारवर्मणो ज्येष्ठभ्रातृपुत्रः, तस्य महिषी कृताभिषेका भार्य्याम्।

(४८) निरुपद्रवौ निर्बाधौ।

(४९) तयोः राजपुत्रयोः। सतोः जीवतोः। दायादाः ज्ञातयः, विकटवर्मप्रभृतय इत्यर्थः। नरेन्द्रस्य राज्ञः प्रहारवर्मणः। प्रसह्यकारिणः बलात्कारकारिणः, बलेन राज्यापहारिण इत्यर्थः। प्रवृद्धमन्युः प्रकर्षेण वर्द्धितः मन्युः शोको यस्यास्तादृशी, अतिशोकार्त्तेत्यर्थः। ("मन्युशोकौ तु शुक् स्त्रियाम्" इत्यमरः)।

(५०) प्रवृद्धबाष्पः यथेष्टमश्रु मुञ्चन्नित्यर्थः। निगूढ़ं निभृतम्। अभ्यधाम् अवोचम्।

(५१) समाश्वसिहि समाश्वस्ता भव।

(५२) ननु सम्बोधनार्थमव्ययम्।

(५३) तदवस्थया व्याघ्रनखप्रहारपतितयेत्यर्थः। पुत्रस्य शिशुदारकैः अपहृतस्य, अभ्युपपादनार्थम् अनुसन्धाय प्रत्यर्पणाय इत्यर्थः।

(५४) तेन मुनिना। स बालः।

इयम् अतिमहती, (५५) किमनया, सोऽहम् अस्मि। शक्यश्च मया असौ विकटवर्मा यथाकथञ्चित् उपश्लिष्य (५६) व्यापादयितुम्। अनुजाः पुनः अतिबहवः, तैः अपि घटन्ते पौरजानपदाः। (५७) मान्तु न कश्चित् इहत्यः ईदृक्तया जनो जानाति। (५८) पितरौ अपि तावदित्थं मां न संविदाते, (५९) किमुत इतरे? तत् एनम् अर्थम् उपायेन साधयिष्यामि' इति अगादिषम्। सा तु वृद्धा सरुदितं परिष्वज्य मुहुः शिरसि उपाघ्राय प्रस्नुतस्तनी सगद्गदम् अगदत्—'वत्स! चिरं जीव, भद्रं तव। प्रसन्नोऽद्य भगवान् विधिः। अद्यैव प्रहारवर्मणि अधि विदेहा जाताः, यतः प्रलम्बमानपीनबाहुः भवान् अपारम् एतत् (६०) शोकसागरम् अद्य उत्तारयितुं स्थितः। अहो! महद्भागधेयं देव्याः प्रियंवदायाः' इति हर्षनिर्भरा स्नानभोजनादिना माम् उपाचरत्। (६१) अशिश्रियच्च अस्मिन्

(५५) वार्ता वृत्तान्तः। अतिमहती अतिविस्तृता इत्यर्थः।

(५६) यथाकथञ्चित् येन केनापि प्रकारेण। उपश्लिष्य सन्निधिमेत्य।

(५७) अनुजाः कनीयांसः, विकटवर्मण इति शेषः। पुनरिति।—मया विकटवर्मणो व्यापादनेऽपि तदीयानामनुजानां बहुत्वात् तैः सह पुनः पौरजानपदाः पुरवासिनः जनपदवासिनश्च, घटन्ते सङ्गच्छन्ते। (भविष्यत्सामीप्ये लट्)।

(५८) इहत्यः अत्रत्यः, एतन्नगरवासीत्यर्थः। ईदृक्तया राजपुत्रतया। न जानाति मदत्पत्तिवृत्तान्तानभिज्ञत्वात्तेषाम् इति भावः।

(५९) संविदाते जानीतः। (संवेत्तेरिह सकर्मकतया आत्मनेपदमसाधु)।

(६०) प्रहारवर्मणि अधि प्रहारवर्मणः अधीना इत्यर्थः। ["यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी" (२।३।९ पा०) इति सूत्रेण सप्तमी]। विदेहाः विदेहवासिनः। प्रलम्बमानौ सुदीर्घौ, आ-जानुविस्तृतौ इति यावत्, पीनौ मांसलौ, बाहू भुजौ यस्य सः महाभुज इत्यर्थः। "एतत्" इत्यत्र "बत" इति पाठान्तरं दृश्यते। (खेदार्थकमव्ययमिदं, "खेदानुकम्पासन्तोष-विस्मयामन्त्रणे बत" इत्यमरः)।

(६१) भागधेयं भाग्यम्। हर्षनिर्भरा हर्षपूर्णा। उपाचरत् असेवत।

मठैकदेशे निशि कटशय्याम्। (६२) अचिन्तयच्च—'विना उपधिना (६३) अयमर्थो न साध्यः, स्त्रियश्च उपधीनाम् उद्भवक्षेत्रम्। (६४) अतोऽन्तःपुरवृत्तान्तम् अस्या अवगम्य तद्द्वारेण किञ्चिज्जालम् (६५) आचरेयम्' इति चिन्तापन्न एव मयि महार्णवोन्मग्नमार्त्तण्डतुरङ्गमनिःश्वासरयावधूतेव व्यावर्त्तत त्रियामा, (६६) समुद्रगर्भवासजडीकृत इव मन्द-प्रतापो दिवसकरः (६७) प्रादुरासीत्।

उत्थाय अवसायितदिनमुखनियमविधिः (६८) तां मे मातरम् (६९) अवादिषम्—'अम्ब! जाल्मस्य (७०) विकट-

---

(६२) कटशय्यां किलिञ्जशयनं, तनुतया विदारितवंशखण्डादिकृतशयनीय-विशेषं, "चाटाइ" इति भाषा। ("कटकिलिञ्जकौ") इत्यमरः)।

(६३) उपधिना कपटेन।

(६४) उद्भवक्षेत्रम् उत्पत्तिस्थानम्।

(६५) अस्याः तापस्याः, तापसीमुखादित्यर्थः। तद्द्वारेण वृत्तान्तज्ञानद्वारा। जालं कपटम्। ("जालं समूह आनाये गवाक्षे कपटेऽपि च" इति वैजयन्ती)।

(६६) महार्णवेति।—महार्णवात् महासमुद्रात्, उन्मग्नः उत्थितः, यः मार्त्तण्डः सूर्यः, तस्य तुरङ्गमाणाम् अश्वानां, अश्वानामिति यावत्, तस्य समस्तमित्या-दिति भावः; निःश्वासरयेण निःश्वासपवनवेगेन, अवधूतेव कम्पितेव। व्यावर्त्तत प्रतिहता, अपासरदित्यर्थः। त्रियामा रात्रिः।

(६७) समुद्रेति।—समुद्रस्य गर्भे अभ्यन्तरे, वासेन अवस्थानेन, जडीकृत इव शीतलीकृत इव। ("तुषारः शीतलो जडः" इति वैजयन्ती)। मन्दप्रतापः क्षीणप्रभ इत्यर्थः। दिवसकरः सूर्यः।

(६८) अवसायितेति।—अवसायितः समापितः, दिनमुखस्य प्रातःकालस्य, नियमविधिः कर्तव्यानुष्ठानं, शौचादिकमित्यर्थः, येन सः तथाभूतः, अनुष्ठित-प्रातःकृत्यः।

(६९) मातरम् उपमातरं, धात्रीमित्यर्थः।

(७०) जाल्मस्य मूर्खस्य।

वर्म्मणः कच्चिदन्तःपुरवृत्तान्तम् अभिजानासि ?' इति अनवसितवचन (७१) एव मयि काचित् अङ्गना प्रत्यदृश्यत। ताञ्च अवेक्ष्य सा मे धात्री हर्षाश्रुकुण्ठितकण्ठम् (७२) आचष्ट —'पुत्रि पुष्करिके! पश्य भर्त्तृदारकम्, (७३) अयमसौ अल्पपया मया वने परित्यक्तः, पुनरपि एवम् (७४) आगतः' इति। सा तु हर्षनिर्भरनिपीड़िता (७५) चिरं प्ररुद्य बहु विलप्य शान्ता पुनः स्वमात्रा राजान्तःपुरवृत्तान्ताख्याने न्ययुज्यत। उक्तञ्च तया—'कुमार! कामरूपेश्वरस्य कलिन्दवर्म्मनाम्नः कन्या कल्पसुन्दरी नाम कलासु (७६) रूपे च अप्सरसोऽपि अतिक्रान्ता पतिमपि अभिभूय (७७) वर्त्तते। तदेकवल्लभः (७८) स तु बहुवरोधोऽपि (७९) विकटवर्म्मा' इति। ताम् अवोचम्—'उपसर्पणं मत्प्रयुक्तैः (८०)

---

(७१) अनवसितवचने असमाप्तवचसि, ब्रुवतीत्यर्थः।

(७२) हर्षेति।—हर्षाश्रुभिः आनन्दवाष्पैः, कुण्ठितः सङ्कुचितः, निरुद्धः इत्यर्थः, कण्ठो यत्र तद्यथा तथा।

(७३) भर्त्तृदारकं राजपुत्रम्।

(७४) अल्पपया निर्दयया। एवम् अनेन वेशेनेत्यर्थः।

(७५) हर्षेति।—हर्षस्य आनन्दस्य, निर्भरेण आतिशय्येन, निपीड़िता आक्रान्ता।

(७६) कलासु चतुःषष्टिप्रकारासु विद्यासु।

(७७) अभिभूय पराजित्य, वशीकृत्येत्यर्थः, आधिपत्येनेति भावः; पत्या तदनुरञ्जनार्थं बहुशः क्लिश्यते इति तात्पर्य्यम्।

(७८) तदेकवल्लभः सा एव एका अद्वितीया, वल्लभा प्रिया यस्य तथोक्तः।

(७९) बहुवरोधः बहुदारः। ("अवरोधस्तिरोधाने राजदारेषु तद्गृहे" इति मेदिनी)।

(८०) उपसर्पं सेवस्व। एनां कल्पसुन्दरीम्। मत्प्रयुक्तैः मदिष्टैः।

गन्धमाल्यैः, उपजनय च असमानदोषनिन्दादिना (८१) स्वभर्त्तरि द्वेषम्। अनुरूपभर्तृगामिनीनाञ्च वासवदत्तादीनां वर्णनेन ग्राहय अनुशयम्, (८२) अवरोधान्तरेषु च अमुष्य विलसितानि (८३) सुगूढ़ानि अपि प्रयत्नेन अन्विष्य प्रकाशयन्ती मानमस्या वर्द्धय' इति। पुनरिदम् अम्बाम् अवोचम् —'इत्थमेव त्वयाऽपि अनन्यव्यापारया (८४) नृपाङ्गना असौ उपस्थातव्या। (८५) प्रत्यहञ्च यद्यत्तत्र वृत्तजातं, तदस्मि त्वया एव अवबोध्य, (८६) मद्दुहित्रा पुनः इयमुदर्कस्वादुनोऽस्मत्कर्मणः प्रसाधनाय (८७) छायेव अनपायिनी (८८) कल्पसुन्दरीम् अनुवर्त्ततामू' इति। ते च तदर्थं तथैव अन्वतिष्ठताम्।

केषुचिद्दिनेषु गतेषु आचष्ट मां मदम्बा—'वत्स! माधवीव

(८१) उपजनय उत्पादय। असमानेति।—असमानोऽतुल्यः, पतिपत्न्योरननुरूपता एवेत्यर्थः, दोषः दूषणम्, अनिष्टोत्पादक इत्यर्थः, तेन या निन्दा तदादिना, स्त्रीपुंसौ सुसदृशावेवोत्कृष्टौ, विषमौ तु दोष एव इत्येवं स्वामिनः स्वायोग्यत्वानिबन्धननिन्दादिना।

(८२) अनुरूपभर्तृगामिनीनां स्वसदृशपत्यनुयायिनीनाम्। ग्राहय जनय इत्यर्थः। अनुशयम् अनुतापम्।

(८३) अवरोधान्तरेषु अपरान्तःपुरिकाविशेषेषु। अमुष्य विकटवर्मणः। विलसितानि चेष्टितानि।

(८४) अनन्यव्यापारया अनन्यकार्य्यया, अन्यत् कार्य्यं परिहरन्त्येत्यर्थः।

(८५) उपस्थातव्या अनुरञ्जनीया।

(८६) वृत्तजातं वृत्तान्तसमूहः। अवबोध्यः विज्ञाप्यः, अहमिति शेषः।

(८७) इयं त्वद्दुहिता। उदर्केति।—उदर्कः उत्तरं फलम्, ("उदर्कः फलमुत्तरम्" इत्यमरः) स्वादु मधुरं यस्य तादृशस्य, उत्तरकालहितस्येति यावत्। प्रसाधनाय निष्पादनाय।

(८८) अनपायिनी अविनाशिनी, सततमनुगच्छन्तीत्यर्थः।

(८९) माधवी वासन्तीलताविशेषः, ("वासन्ती माधवीलता" इत्यमरः)।

पिचुमन्दाश्लेषिणी यथा असौ (८९) श्लाघ्यमात्मानं मन्येत, तथोपपाद्य (९०) स्थापिता, किं भूयः कृत्यम्?' इति। पुनः अहमभिलिख्य आत्मनः प्रतिकृतिम् 'इयममुष्यै नेया; नीताश्चैनां निर्वर्ण्य (९१) सा नियतमेवं वक्ष्यति—'ननु अस्ति कश्चित् ईदृशाकारः पुमान्?' इति। प्रतिब्रूयाश्चैनां 'यदि स्यात्ततः किम्?' इति। तस्य यदुत्तरं सा दास्यति, तत् अहमस्मि प्रतिबोधनीयः' (९२) इति। सा 'तथा' इति राजकुलम् उपसङ्क्रम्य (९३) प्रतिनिवृत्ता माम् एकान्ते न्यवेदयत्—'वत्स! दर्शितोऽसौ चित्रपटः तस्यै मत्तकाशिन्यै, (९४) चित्रीयमाणा च असौ 'भुवनमिदं सनाथीकृतं येन, (९५) देवेऽपि कुसुमधन्वनि नेदृशी वपुःश्रीः संनिधत्ते, चित्रमेतत् चित्रतमम्!!। (९६) न च तम् अवैमि य ईदृशम् इदम् इहत्यो निर्मिमीते। (९७) केन इदम् आलिखितम्?' इत्याहृतवती

---

पिचुं कुष्ठं, मन्दयति मृद्नाति वा, (अच्) पिचुमन्दः निम्बवृक्षः, तम् आश्लिष्यति आलिङ्गतीति तथोक्ता, निम्बतरुमाश्रित्य उत्थिता इत्यर्थः। असौ कल्पसुन्दरी।

(९०) उपपाद्य विधाय।

(९१) एनां प्रतिकृतिम्। निर्वर्ण्य दृष्ट्वा। ("निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणम्" इत्यमरः)।

(९२) प्रतिबोधनीयः विज्ञापनीयः।

(९३) तथा तदेव करोमि। इति, उक्त्वा इति शेषः। उपसङ्क्रम्य उपगम्य।

(९४) मत्तकाशिन्यै प्रशस्तनितम्बायै, उत्तमाङ्गनायै इत्यर्थः।

(९५) चित्रीयमाणा आश्चर्यमाप्नुवाना। सनाथीकृतं नाथवत् कृतं, भूषितमित्यर्थः। येन, चित्रस्थेनानेन इति शेषः, "चित्रमेतत् चित्रतमम्" इत्युत्तरवाक्येनान्वयः; अत्र "तत्" इति पदम् ऊहनीयम्; तदेतत् चित्रमिति चित्रतममित्यर्थः।

(९६) कुसुमधन्वनि कामे। संनिधत्ते वर्तते। चित्रम् आश्चर्यम्। चित्रतमम् अत्याश्चर्यम्।

(९७) तं चित्रकरम्। अवैमि जानामि। यः चित्रकरः। इहत्यः एतद्देशवासी इत्यर्थः। निर्मिमीते चित्रयति।

व्याहृतवतो (९८) च। मया च स्मेरया उदीरितं (९९)—'देवि! सदृशम् आज्ञापयसि, भगवान् मकरकेतुरपि एवं सुन्दर इति न शक्यमेवं सम्भावयितुम्। अथ च विस्तीर्णेयम् अर्णवनेमिः, (१००) क्वचित् ईदृशमपि रूपं दैवशक्त्या सम्भवेत्। अथ तु यदि एवंरूपो रूपानुरूपशिल्पशीलविद्याज्ञानकौशलो युवा महाकुलीनश्च (१) कश्चित् सन्निहितः स्यात्, स किं लप्स्यते?' (२) इति। तयोक्तम्—'अम्ब! किं ब्रवीमि, शरीरं हृदयं जीवितमिति, सर्वमिदम् अल्पम् अनर्हञ्च। (३) ततो न किञ्चित् लप्स्यते? न चेत् अयं विप्रलम्भः स्यात्, तस्य अमुष्य दर्शनानुभवेन यदिदं चक्षुश्चरितार्थं (४) भवेत् तथाऽनुग्रहः कार्य्यः' इति। भूयोऽपि मया दृढतरीकर्त्तुम् उपन्यस्तम्—'अस्ति कोऽपि राजसूनुर्निगूढं (५) चरन्।

(९८) व्याहृतवतो कथितवतो।

(९९) स्मेरया ईषत् हसन्त्या इत्यर्थः। उदीरितमुक्तम्।

(१००) अर्णवनेमिः पृथिवी।

(१) अथ प्रश्ने। ("मङ्गलानन्तरारम्भ-प्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः)। रूपेति।—रूपस्य सौन्दर्य्यस्य, अनुरूपं सदृशं, शिल्पं कारवं, शीलं स्वभावः, विद्याः चतुर्दशविधाः अष्टादशविधा वा, ज्ञानं बुद्धिः, कौशलं नैपुण्यञ्च यस्य तथाभूतः। महाकुलीनः सद्वंशे जातः।

(२) लप्स्यते? प्राप्स्यति?।

(३) शरीरमिति।—स शरीरं हृदयं जीवितञ्च, लप्स्यते इत्यनुषङ्गः। अनर्हम् अयोग्यं, तस्येति शेषः।

(४) विप्रलम्भः वञ्चनं, मिथ्येत्यर्थः। दर्शनानुभवेन दर्शनेन सफलेन, यः अनुभवः उपलम्भः, प्राप्तिरित्यर्थः ("उपलम्भस्त्वनुभवः" इत्यमरः) तेन, साक्षात्परिचयेन इत्यर्थः। चरितार्थं कृतार्थम्।

(५) दृढतरीकर्त्तुम् एतद्वाक्यं सत्यं न वा इति निश्चयेन ज्ञातुमित्यर्थः। उपन्यस्तं वचनमुपक्रान्तम्, उक्तम् इत्यर्थः, ("उपन्यासस्तु वाङ्मुखम्" इत्यमरः)। निगूढं गुप्तम्।

अमुष्य वसन्तोत्सवे सह सखीभिः नगरोपवनविहारिणी रतिरिव विग्रहिणी यदृच्छया दर्शनपथं गताऽसि, गतश्च असौ कामशरैकलक्ष्यतां माम् अन्ववर्त्तिष्ट। (६) मया च वामन्योऽन्यानुरूपैः अन्यदुर्लभैः आकारादिभिः गुणातिशयैश्च प्रेक्ष्यमाणया तद्रचितैः एव कुसुमशेखरस्रगनुलेपनादिभिः चिरमुपासिता (७) असि। सादृश्यञ्च स्वमनेन स्वयमेव अभिलिख्य त्वत्समाधिगाढ़त्वदर्शनाय (८) प्रेषितम्। एष चेत् अर्थो निश्चितस्तस्य अमुष्य अतिमानुषप्राणसत्त्वप्रज्ञाप्रकर्षस्य न किञ्चित् दुष्करं नाम। (९) तमद्य एव दर्शयेयं, सङ्केतो देयः' (१०) इति।

तया तु किञ्चिदिव ध्यात्वा (११) पुनः अभिहितम्—

(६) अमुष्य राजसूनोः। विग्रहिणी मूर्त्तिमती। यदृच्छया सहसा इत्यर्थः। कामेति।—कामशरस्य मदनबाणस्य, एकः मुख्यः, लक्ष्यः वेध्यः, तस्य भावः तां, कामाधीनतामित्यर्थः। अन्ववर्त्तिष्ट अनुचरति स्म।

(७) वां युवयोः। अन्योऽन्यानुरूपैः परस्परसुसदृशैः। तद्रचितैः राजपुत्रनिर्मितैः। कुसुमेति।—कुसुमानि, शेखरस्रजः शिरोधार्य्यमाल्यानि, अनुलेपनानि घृष्टचन्दनादीनि च, तदादिभिः तत्प्रभृतिभिः। उपासिता आराधिता।

(८) सादृश्यं प्रतिकृतिमित्यर्थः। स्वं स्वकीयम। अनेन तरुणेन। त्वत्समाधीति।—तव समाधेः समर्थनस्य, अर्थुरयोग्यत्वनिश्चयकरणरूपस्य मनोव्यापारस्येत्यर्थः, ("स्युः समर्थननीवाक-नियमाश्च समाधयः" इत्यमरः) गाढ़त्वं दृढ़त्वं, तस्य दर्शनाय परीक्षणाय।

(९) एष अर्थः तद्दर्शनानुभवेन चक्षुषोश्चरितार्थतासम्पादनरूपविषय इत्यर्थः। निश्चितः नियतः। तस्य अमुष्य यूनः। अतिमानुषेति।—अतिमानुषः अलौकिक इत्यर्थः, प्राणानां सत्त्वस्य बलस्य, प्रज्ञायाश्च बुद्धेश्च, प्रकर्षः उत्कर्षः यस्य तथाभूतस्य। न किञ्चित् दुष्करं नाम तेन कर्त्तुमशक्यं न किमपीति सम्भावयामीत्यर्थः।

(१०) सङ्केतः अभिसरणस्थाननिर्देश इत्यर्थः। देयः कर्त्तव्य इत्यर्थः।

(११) ध्यात्वा चिन्तयित्वा।

'अम्ब ! तत्र न एतदिदानीं गोप्यतमम्, अतः कथयामि ; मम तातस्य राज्ञा प्रहारवर्मणा सह महती प्रीतिः आसीत् । मातुश्च मे मानवत्याः प्रियवयस्या देवी प्रियंवदा आसीत् । ताभ्यां पुनः अजातापत्याभ्यामेव कृतः समयः (१२) अभूत्, 'आवयोः पुत्रवत्याः पुत्राय दुहितृमत्या दुहिता देया' इति । तातस्तु मां जातां प्रनष्टापत्या प्रियंवदेति प्रार्थयमानाय विकटवर्मणे दैवात् (१३) दत्तवान् । अयञ्च निष्ठुरः, पितृद्रोही, नात्युपपन्नसंस्थानः, कामोपचारेषु अलब्धवैचक्षण्यः, कलासु काव्यनाटकादिषु मन्दाभिनिवेशः, शौर्योन्मादी, दुर्विकत्थनः, अनृतवादी, अस्थानवर्षी (१४) च, नातिरोचते मह्यमेष भर्त्ता । विशेषतश्च एषु वासरेषु, यत् अयमुद्याने मदन्तरङ्गभूतां पुष्करिकामपि

---

(१२) ताभ्यां मानवतीप्रियंवदाभ्याम् । अजातापत्याभ्याम् अजाते अपत्ये ययोः ताभ्याम् अनुत्पन्नतनयाभ्याम्, अपत्योत्पत्तेः प्रागेवेत्यर्थः । समयः शपथः, ("समयाः शपथाचार-सिद्धान्तेषु तथा विधि । क्रियाकारे च निर्देशे सङ्केते कालभाषयोः ॥" इति मेदिनी) ।

(१३) प्रनष्टापत्या मृतपुत्रा अपहृतपुत्रा वा । ["नशः षान्तस्य" (८।४।३६ पा०) इति षान्तत्वात् णत्वाभावः] । दैवात् विधिवशात्, मम दौर्भाग्यादित्यर्थः ।

(१४) पितृद्रोही पितुः पितृव्यानीयस्य प्रहारवर्मणः इत्यर्थः, भ्रातृपुत्रस्यापि पुत्रत्वेन पितृव्यस्य पितृतुल्यत्वमिति भावः ; द्रोही अनिष्टाचरणशीलः । नात्युपपन्नसंस्थानः नात्युपपन्नं नातियुक्तम्, अरमणीयमिति यावत्, संस्थानम् अवयवयोजनं यस्य सः, नातिसुन्दरावयव इत्यर्थः । कामोपचारेषु मदनव्यापारेषु । अलब्धवैचक्षण्यः अनिपुणः । कलासु चतुःषष्टिविधविद्यासु । काव्येति ।—काव्येषु श्रव्यरूपेषु, नाटकेषु दृश्यरूपेषु, आदिशब्दात् आख्यायिकेतिहासादिकेषु च । मन्दाभिनिवेशः नातिनिविष्टः, अनभिज्ञः इत्यर्थः । शौर्योन्मादी शौर्येण बलदर्पेणेत्यर्थः, उन्मादी समुद्धत इत्यर्थः । दुर्विकत्थनः दुष्टभाषी विकत्थनः आत्मश्लाघानिरतश्चेति तादृशः तथा आत्मश्लाघाकारी । अनृतवादी मिथ्यावादी । अस्थानवर्षी अपात्रदानशीलः ।

(१५) विशेषतश्च एषु वासरेषु सम्प्रति कियन्ति दिनानि आरभ्य विशेषेण तु

उपान्तवर्त्तिनीम् अनादृत्य (१५) मयि आबद्धसापत्न्यमत्सराम् अनात्मज्ञाम् आत्मनाटकीयां (१६) रमयन्तिकां नाम अपत्यनिर्विशेषम् अस्मत्संवर्द्धितायाः चम्पकलतायाः स्वयमवचिताभिः सुमनोभिः अलमकार्षीत्। (१७) मदुपभुक्तमुक्ते चित्रकूटगर्भवेदिकागते रत्नतल्पे (१८) तया सह व्यहार्षीत्। (१९) अयोग्यश्च (२०) पुमान् अवज्ञातुश्च (२१) प्रवृत्तः, तत् किमिति अपेक्ष्यते? (२२) परलोकभयस्य ऐहिकेन दुःखेन

---

मे विरागास्पदः अभूत् इत्यर्थः। यत् यस्मात्। अयं भर्त्ता। मदन्तरङ्गभूतां ममात्मीयभूताम्। उपान्तवर्त्तिनीं समीपस्थिताम्। अनादृत्य अवज्ञाय।

(१६) आबद्धेति।—आबद्धः दृढसञ्जातः, सापत्न्येन सपत्नीभावेन, मत्सरो विद्वेषः, सपत्न्यां समानपतिकायाः भवः सापत्न्यः, तादृशः यः मत्सरः सापत्न्यमत्सरः इति वा यस्याः ताम्। अनात्मज्ञाम् आत्मज्ञानविहीनाम्, अहं का? कीदृशी मे मर्य्यादा इत्यादिज्ञानविहीनाम् इत्यर्थः। आत्मनाटकीयाम् आत्मनः नर्त्तकीम्।

(१७) अपत्यनिर्विशेषं पुत्रनिर्विशेषं, सन्तानवदित्यर्थः। अस्मत्संवर्द्धिताया अस्माभिर्वृद्धिं प्रापितायाः, आलवालपूरणादिनेति भावः। अवचिताभिः उद्धृताभिः, उत्तोलिताभिरित्यर्थः। सुमनोभिः कुसुमैः ("सुमनाः पुष्पमालत्योः स्त्रियां ना धीरदेवयोः" इति मेदिनी)। अलमकार्षीत् अलङ्कृतवान्, भूषयामासेत्यर्थः।

(१८) मदुपभुक्तमुक्ते मया आदौ उपभुक्तं विहृतं, पश्चात् मुक्तं त्यक्तं तस्मिन्। चित्रकूटेति।—चित्रं नानावर्णं, कूटं शिखरं यस्य तथोक्तः क्रीडापर्वतविशेषः, ("कूटोऽस्त्री शिखरं शृङ्गम्" इत्यमरः) तस्य गर्भे अभ्यन्तरे, या वेदिका परिष्कृता भूमिः, ("वेदिः परिष्कृता भूमिः" इत्यमरः) तद्गते तत्र स्थिते, स्थापिते इत्यर्थः, रत्नतल्पे रत्नखचितपर्य्यङ्के इत्यर्थः।

(१९) व्यहार्षीत् विजहार, विहारं कृतवान् इत्यर्थः।

(२०) अयोग्यः अननुरूपः।

(२१) अवज्ञातुम् अवमन्तुम्।

(२२) तत् तस्मात्। किमिति कथम्। अपेक्ष्यते? आकाङ्क्ष्यते? नैवापेक्ष्यते, त्यजतीति शेषः, नैव तन्मुखापेक्षिणी तिष्ठामीति भावः।

अन्तरितम्, (२३) अविषह्यं हि योषिताम् अनङ्गशरनिषङ्गीभूतचेतसाम् अनिष्टजनचिरसंवासयन्त्रणादुःखम्। (२४) अतोऽमुना पुरुषेण माम् अद्य श्वो वा उद्यानमाधवीगृहे समागमय। (२५) तद्वार्त्ताश्रवणमात्रेण एव हि मम अतिमात्रं मनोऽनुरक्तम्। अस्ति च अयमर्थराशिः, अनेन अमुष्य पदे प्रतिष्ठाप्य (२६) तमेव अत्यन्तम् उपचर्य्य (२७) जीविष्यामि' इति। मया अपि तदभ्युपेत्य प्रत्यागतम्, अतःपरं भर्त्तृदारकः प्रमाणम्' (२८) इति।

ततः तस्या एव सकाशात् अन्तःपुरसन्निवेशम्, अन्तर्वंशिकपुरुषस्थानानि, प्रमोदवनप्रदेशानपि विभागेन अवगम्य

---

(२३) अन्तरितं तिरोहितम्।

(२४) अविषह्यं सोढुमशक्यम्। अनङ्गेति।—अनङ्गस्य कामस्य, शराणां बाणानां, निषङ्गीभूतं तूणीभूतम्, आधारतां प्राप्तमित्यर्थः, चेतः चित्तं यासां तासां, मदनशरविद्धचित्तानामित्यर्थः। अनिष्टेति।—अनिष्टजनः अप्रियजनः, अमनोनीतजनः इत्यर्थः, तेन चिरसंवासः दीर्घकालसहवासः, तेन या यन्त्रणा तीव्रवेदना, सैव तया वा दुःखम्।

(२५) समागमय संयोजय।

(२६) अनेन अर्थराशिना। अमुष्य विकटवर्मणः। पदे स्थाने, सिंहासने इति यावत्। ["अमुं स्वे पदे" इति पाठे—अमुं राजसुतम्। स्वे स्वकीये। पदे स्थाने, निजराज्ये इत्यर्थः]। प्रतिष्ठाप्य निवेश्य।

(२७) तमेव राजपुत्रमेव। उपचर्य्य सेवित्वा।

(२८) मया [illegible]। अभ्युपेत्य तथा करोमीति प्रतिश्रुत्येत्यर्थः। भर्त्तृदारकः राजसुतः, उपहारवर्मा इति यावत्। प्रमाणं प्रमाता, कर्त्तव्यावधारकः इत्यर्थः।

(२९) तस्याः मदुपमातुः। अन्तःपुरसन्निवेशम् अन्तःपुरस्य संस्थितिम्। अन्तर्वंशिकेति।—अन्तर्वंशिकपुरुषाः अन्तःपुराधिकृताः भृत्यवर्गाः, ("अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः" इत्यमरः) तेषां स्थानानि अवस्थितिप्रदेशान्। प्रमोदेति।—प्रमोदवनं क्रीडोद्यानं, तस्य प्रदेशान् स्थानानि। विभागेन अमुष्यां दिशि एतत्

अस्तगिरिशिखरपातक्षुभितशोणित इव शोणीभवति भानुबिम्बे, पश्चिमाम्बुधिपयःपातनिर्वापितपतङ्गाङ्गारधूमसम्भार इव भरितनभसि तमसि विजृम्भिते, परदारपरामर्शोन्मुखस्य मम आचार्य्यकमिव कर्त्तुमुद्यते गुरुपरिग्रहग्रहणश्लाघिनि ग्रहाग्रेसरे क्षपाकरे, कल्पसुन्दरीवदनपुण्डरीकेण इव मद्दर्शनातिरागप्रथमोपनतेन स्मयमानेन (२९) चन्द्रमण्डलेन सन्धुक्ष्यमाणतेजसि त्रिभुवनविजिगीषोद्यते देवे पुष्पधन्वनि, (३०)

अमुष्यां दिशि एतदिति भागमेवेत्यर्थः। अवगम्य विदित्वा। अस्तेति।—अस्तगिरेः अस्ताचलस्य, शिखरे शृङ्गे, यः पातः पतनं, तेन क्षुभितम् अकस्मात् प्रोच्छलितं, निःसृतमित्यर्थः, शोणितं रक्तं यस्य तथाभूते इव। शोणीभवति सन्ध्यारागेण रक्तीभवति सतीत्यर्थः। भानुबिम्बे सूर्य्यमण्डले। पश्चिमेति।—पश्चिमाम्बुधेः पश्चिमसमुद्रस्य, पयसि जले, पातेन पतनेन, निर्वापितः निर्वाणं गतः, नष्टप्रभ इत्यर्थः, यः पतङ्गः सूर्य्यः, ("पतङ्गौ पक्षिसूर्य्यौ च" इत्यमरः) स एवाङ्गारः अलातं, दग्धकाष्ठावयवः इत्यर्थः, तस्य धूमसम्भारे इव धूमराशाविव। (भृञ् इत्यस्य) भरितं व्याप्तं, नभः आकाशं येन तादृशे। तमसि अन्धकारे। विजृम्भिते प्रसृते। परदारेति।—परस्य दाराः पत्नी, तेषां परामर्शे स्पर्शे, अभिगमनरूपे इत्यर्थः, उन्मुखस्य उद्यतस्य। आचार्य्यकम् आचार्य्यकर्म, उपदेष्टृकार्य्यमित्यर्थः तदिव, स्वयमपि परदारपरामर्शित्वात् मामपि तथोपदेष्टुमिवेति भावः। गुर्विति।—गुरोः अध्यापकस्येत्यर्थः, बृहस्पतेरिति यावत, यः परिग्रहः पत्नी, तारा इत्यर्थः, ("परिग्रहः कलत्रे च" इति शाश्वतः) तस्य ग्रहणेन आयत्तीकरणेन, हरणेनेत्यर्थः, श्लाघते उल्लसतीति तादृशे, कामवशंवदतया गुरुपत्नीगामिनीत्यर्थः। ग्रहाग्रेसरे ग्रहाणाम् अन्तरीक्षचराणां मङ्गलादीनाम्, अग्रेसरे अग्रवर्त्तिनि, श्रेष्ठे इत्यर्थः। क्षपाकरे निशापतौ चन्द्रे। कल्पसुन्दरीति।—कल्पसुन्दर्य्याः वदनमेव पुण्डरीकं सिताम्भोजं तेनेव, ("पुण्डरीकं सिताम्भोजम्" इत्यमरः)। मद्दर्शनेति।—मम दर्शने अवलोकने, परदारपरामर्शोन्मुखोऽयं जनः इदानीं कीदृशाकारः सञ्जातः इत्यवलोकनायेत्यर्थः, यः अतिरागः अत्यासक्तिः, अत्याग्रह इत्यर्थः, तेन प्रथमं प्रागित्यर्थः, उपनतेन उपस्थितेन, इवेति शेषः। स्मयमानेन ईषद्धसता, विकसता इत्यर्थः।

(३०) सन्धुक्ष्येति।—सन्धुक्ष्यमाणम् उद्दीप्यमानं, तेजः प्रभावो यस्य

यथोचितं शयनीयम् अभजे। (३१) अचौर्यचरश्च सिद्धप्राय एव अयमर्थः, (३२) किन्तु परकलत्रलङ्घनाद्धर्मपीड़ा (३३) भवेत्, साऽपि अर्थकामयोः द्वयोः उपलम्भे (३४) शास्त्रकारैः अनुमतैवेति। गुरुजनबन्धमोक्षोपायाभिसन्धिना (३५) मया च एष व्यतिक्रमः (३६) कृतः, तदपि पापं निर्हृत्य कियत्याऽपि धर्मः कलया (३७) मां समाश्रयेत् (३८) इति। अपि तु एतदाकर्ण्य देवो राजवाहनः सुहृदो वा किं नु वक्ष्यन्ति?' इति चिन्तापराधीन एव निद्रया परामृश्ये, (३९) अदृश्यत च स्वप्ने भगवान् भर्गः, आह स्म च—'सौम्य उपहारवर्मन्! मा स्म ते दुर्विकल्पो (४०) भूत्, यतस्त्वमसि मदंशः,

---

तादृशे, सम्पूर्णगगनचन्द्रस्य अतिशयेन उद्दीपकत्वादिति भावः। अत एव त्रिभुवनस्य विजयतः, विजिगीषा विजयेच्छा, तत्र उद्यते प्रवृत्ते। पुष्पधन्वनि कन्दर्पे।

(३१) शयनीयं शय्यातलम्। अभजे आश्रयम्, अशयिषीत्यर्थः।

(३२) अचौर्यं विचारणकार्येण। सिद्धप्रायः प्रायेण सिद्धः, सफल इत्यर्थः। अयमर्थः कल्पसुन्दरीलाभ-पितृमातृबन्धनमोचनरूपप्रयोजनमित्यर्थः।

(३३) परेति।—परकलत्रस्य परस्त्रियाः, लङ्घनात् मर्यादाऽतिक्रमणा-दित्यर्थः, हरणात् इति यावत्। धर्मपीड़ा धर्महानिः, अधर्म इत्यर्थः।

(३४) साऽपि धर्मपीडाऽपि। उपलम्भे लाभे।

(३५) गुरुजनेति।—गुरुजनानां मातापित्रादीनां, बन्धः बन्धनं, कारावास इत्यर्थः, तस्मात् मोक्षः परित्राणं, तस्य उपाये साधने, अभिसन्धिः आशयो यस्य तथाभूतेन, अथवा—उपाये यः अभिसन्धिः अभिप्रायः तेन, (हेत्वर्थे तृतीया)।

(३६) व्यतिक्रमः विपर्ययः, धर्मातिक्रमरूपः अनुचितव्यवहार इत्यर्थः।

(३७) तत् पापमपि परदारहरणरूपधर्मातिक्रमजनितं दुष्कृतमपीत्यर्थः। निर्हृत्य खण्डयित्वा। कियत्याऽपि अल्पयाऽपीत्यर्थः। धर्मः गुरुजनबन्धनमोचन-जनितसुकृतम्। कलया अंशेन।

(३८) समाश्रयेत अवलम्बेत।

(३९) अपि तु परन्तु। परामृश्ये स्पृष्टे, निद्राक्रान्तोऽभवमित्यर्थः।

(४०) भर्गः शिवः। आह स्म उवाच, भगवान् भर्ग इति शेषः। दुर्विकल्पः भ्रान्तिहेतुकः अन्यथाविचारः।

मज्जटाभारजालनोचिताऽमरसरिदस्ति वरवर्णिनी। (४१) तां च कदाचित् गजाननो जलक्रीड़ां कुर्वन् अतिव्यगाहत। (४२) सा च सपत्नीतनयविहितां (४३) विलोड़नाम् असहमाना (४४) तम् अशपत्—'एहि मर्त्यत्वम्' (४५) इति। सोऽपि (४६) अहेतुकशापप्रदानात् क्रुद्धस्ताम् अशपत्—'यथेह बहुभोग्या, तथा प्राप्यापि मानुष्यकम् अनेकसाधारणी (४७) भव' इति। ततः तेन प्रतिशप्ता सा विलक्षेव (४८) माम् उपसृत्य सगद्गदम् अगदत्—'स्वामिन्! अहम् अनवरतभवच्चरणवरिवस्याविधायिनी (४९) न शापार्हा।' इति आकर्ण्य कृपा-

(४१) मदिति।—मम हरस्य, जटाभारेण जटासमूहेन, जालनं धारणं, तत्रोचिता अभ्यस्ता, निरन्तरं मम जटाजालविहारिणी। अमरसरित् गङ्गा। अस्ति इयम्। वरवर्णिनी सुन्दरी, उत्तमाङ्गनेत्यर्थः, कल्पसुन्दरी इति यावत्, अस्ति कल्पसुन्दरी शापावतीर्णा गङ्गेति निष्कर्षः।

(४२) तां गङ्गाम्। गजाननः गणेशः। अतिव्यगाहत अत्यर्थं व्यलोड़यत।

(४३) सा च अमरसरित्। सपत्नीति।—सपत्न्याः समानपतिकायाः, पार्वत्या इत्यर्थः, तनयेन पुत्रेण, गणेशेन इत्यर्थः, विहितां कृताम्।

(४४) विलोड़नाम् आलोड़नाम्, अवगाहनम् इत्यर्थः। असहमाना असहिष्णुः, अक्षमा इत्यर्थः।

(४५) एहि प्राप्नुहि। मर्त्यत्वं मानुषभावम्।

(४६) सोऽपि गजाननोऽपि।

(४७) इह स्वर्गे। मानुष्यकं मनुष्यत्वं, मनुष्यदेहम् इत्यर्थः। अनेकेति।—अनेकेषाम् एकाधिकानां, साधारणी सामान्या, समानभोग्या इत्यर्थः।

(४८) प्रतिशप्ता प्रतिरूपं शप्ता, अविहितशापस्य उत्तररूपेण शापग्रस्ता इत्यर्थः। विलक्षेव विस्मयान्वितेव, लज्जितेव इति यावत्, ("विलक्षो विस्मयान्विते" इत्यमरः)।

(४९) अनवरतेति।—अनवरतम् अजस्रं, भवतः तव, चरणयोः पादयोः, वरिवस्या परिचर्या, ("वरिवस्या तु शुश्रूषा परिचर्याऽप्युपासना" इत्यमरः) विदधातीति तथोक्ता भवदीयपादपद्मसेविका।

क्रान्तमनसा मया उक्तं—'प्रिये ! न अस्य (५०) शापोऽन्यथा भवितुम् अर्हति, परं त्वदनुग्रहार्थम् अहमात्मनोऽंशं द्विधा विभज्य विकटवर्मनृपरूपेण मिथिलापतिप्रहारवर्मात्मजोपहार-वर्मात्मना च मर्त्त्यलोकेऽवतरिष्यामि, त्वञ्च कामरूपाधिपतेः कलिङ्गवर्मनाम्नः कन्या कल्पसुन्दरी नाम भूत्वा ज्यायसा मदंशेन विकटवर्मणा प्रथमम् अल्पीयांसम् अनेहसं (५१) सङ्गता, तस्मिन् विकटवर्मणि मन्मूर्त्तावेव लयम् उपगते पुनः उपहारवर्मात्मकं कनीयांसं मदंशम् उपलभ्य तेन सार्कं (५२) विविधसुखोपभोगम् अनुभविष्यसि। तत् अयमर्थो भव्यः, (५३) भवता निराशङ्कः' (५४) इति।

प्रतिबुध्य च प्रीतियुक्तः तदहरपि प्रियासङ्केतव्यतिकरादि-स्मरणेन (५५) अहमनैषम्। अन्येद्युः अनन्यथावृत्तिः अनङ्गो मय्येव इषुवर्षम् (५६) अवर्षत्। अशुष्यच्च ज्योतिष्मतः

---

(५०) अस्य गजाननस्य।

(५१) ज्यायसा ज्येष्ठेन, प्रथमावतीर्णेनेत्यर्थः। अनेहसं कालम्, ("कालो दिष्टोऽप्यनेहापि समयः" इत्यमरः)।

(५२) मन्मूर्त्तावेव उपहारवर्मात्मकमदीयशरीरे एव लयं मिश्रीभावम्, अदर्शनमिति यावत्, नाशमिति भावः। उपगते प्राप्ते। कनीयांसं कनिष्ठं, पश्चादवतीर्णमित्यर्थः। उपलभ्य प्राप्य। तेन उपहारवर्मणा। सार्कं सह।

(५३) अर्थः व्यापारः, विकटवर्मणः विनाशरूपः त्वया सह कल्पसुन्दर्याः समागमरूपः च घटनेत्यर्थः। भव्यः अवश्यम्भावीत्यर्थः।

(५४) निराशङ्कः न आशङ्कनीयः, अस्याः परकलत्रत्वाभावात् एतत्समागमे धर्मपीडा ते न भविष्यति अतो न भेतव्यः इत्यर्थः।

(५५) प्रीतियुक्तः स्वप्नादेशस्मरणेन हृष्टचित्तः सन् इत्यर्थः। प्रियेति।— प्रियायाः कल्पसुन्दर्याः, सङ्केतव्यतिकरादीनां सङ्केते अभिसरणस्थाने, व्यतिकरादीनां परस्परमिलनादीनां, स्मरणेन चिन्तनेन।

(५६) अनन्यथावृत्तिः मदेकवृत्तिः, मत्पीडनैकव्यापार इत्यर्थः। इषुवर्षं शरवर्षणम्।

प्रभामयं सरः। (५७) प्रासरच्च तिमिरमयः कर्दमः। (५८) अहञ्च कार्दमिकनिवसनः, दृढतरपरिकरः, खड्गपाणिः, उपसम्भृतप्रकृतोपस्करः (५९) स्मरन् मातृदत्तानि अभिज्ञानानि राजमन्दिरपरिखाम् उदन्वसम् (६०) उपातिष्ठे। अथ उपखातं मातृगृहद्वारे (६१) पुष्करिकया प्रथमसन्निधापितां वेणुयष्टिम् (६२) आदाय तया शायितया (६३) च परिखां,

---

(५७) ज्योतिष्मतः सूर्य्यस्य। प्रभामयं तेजोरूपम्। सरः तड़ागः, दिनावसानात् सूर्य्यः क्षीणतेजाः अभवदिति भावः।

(५८) प्रासरच्च अजृम्भत च, प्रादुरभवदित्यर्थः। तिमिरमयः अन्धकारस्वरूपः। कर्दमः पङ्कः, कृष्णवर्णत्वात् कर्दमे तिमिरत्वोपचारो बोध्यः, सरसः शुष्कतायां कर्दमप्रकाशस्य युज्यते एव इति भावः; रात्रिः समागता इति समुदायार्थः।

(५९) कार्दमिकेति।—(कर्दमेन रक्तं ठक्) कार्दमिकं कर्दमेनाक्तं, नीलवर्णरञ्जितमिति यावत्, निवसनं वस्त्रं यस्य तथाभूतः, परिहितनीलाम्बर इत्यर्थः, अन्धकाररात्रौ कृष्णवर्णवसनस्य अभिसारो-पयोगित्वात् तत्परिधानं बोध्यम्। दृढेति।—दृढतरः अतिशयेन दृढः, परिकरः कक्षाबन्धः यस्य तादृशः, दृढबद्धकटिरित्यर्थः, ("कक्षाबन्धः परिकरः" इति वैजयन्ती)। उपसम्भृतेति।—उपसम्भृतः सङ्गृहीतः, प्रकृतः अभिसरणोपयुक्तः, उपस्करः साधनम्, उपकरणमित्यर्थः, येन तथाभूतः, गृहीताभिसरणोपयोगिद्रव्यसम्भार इत्यर्थः। ("साधनं स्यादुपस्करे" इति वैजयन्ती)।

(६०) मातृदत्तानि उपमातृकथितानि। अभिज्ञानानि चिह्नानि। राजमन्दिरेति।—राजमन्दिरस्य राजभवनस्य, परिखां प्राचीरसन्निहितखातम्। उदन्वसम् उत्कटजलां, जलपूर्णामित्यर्थः।

(६१) उपखातं खातसमीपे इति उपखातं परिखासमीपे इत्यर्थः। मातृगृहद्वारे उपमातुर्भवनद्वारसमीपे, उपमातृगृहसम्मुखस्थपरिखासमीपे इति समुदितार्थः।

(६२) पुष्करिकया उपमातुः कन्यया। प्रथमसन्निधापितां प्रागुपस्थापिताम्। वेणुयष्टिं वंशदण्डम्।

(६३) तया वेणुयष्ट्या। शायितया पातितया, खातोपरि इति शेषः।

स्थापितया च प्राकारमलङ्घयम्। (६४) अधिरुह्य पक्वेष्टका-चितेन गोपुरोपरितलाधिरोहिणा सोपानपथेन (६५) भुवम् अवातरम्। (६६) अवतीर्य च बकुलवीथीम् (६७) अति-क्रम्य चम्पकावलिवर्त्मना मनागिव (६८) उपसृत्योत्तराहि करुणं (६९) चक्रवाकमिथुनरवम् अशृणवम्। पुनरुदीचा पाटलिपथेन सशंलभ्यविशालसौधकुक्षोदरेण शरक्षेपमिव (७०) गत्वा पुनः प्राचा पिण्डीभाण्डीरषण्डमण्डिताभयपार्श्वेन

---

(६४) स्थापितया ऊर्द्ध्वभावेन रचितया। प्राकारं प्राचीरम्। अलङ्घयम् उत्पतन्, उल्लङ्घितवान् इत्यर्थः। "अलङ्घयम्" इत्यत्र "अध्यरोहम्" इति पाठः सङ्गतः।

(६५) अधिरुह्य, प्राकारमिति शेषः। पक्वेष्टकाचितेन पक्वैरिष्टकैः चितः व्याप्तः तेन पक्वेष्टकारचितेनेत्यर्थः। गोपुरेति।—गोपुरस्य पुरद्वारस्य, ("पुरद्वारन्तु गोपुरम्" इत्यमरः) उपरितलं शिरोभागम्, अधिरुह्यते अनेनेति तथोक्तेन, नगरद्वारोपरिस्थमट्टारोहणोपयोगिना इत्यर्थः। सोपानपथेन सोपानमार्गेण।

(६६) अवातरम् अवतीर्णवान्।

(६७) बकुलवीथीम् उभयतो बकुलवृक्षवेष्टितमार्गम्।

(६८) चम्पकावलिवर्त्मना चम्पकवृक्षश्रेणीवेष्टितमार्गेण। मनागिव अल्पमिव, किञ्चिन्मात्रमित्यर्थः।

(६९) उत्तराहि उत्तरस्यां दिशि। करुणं दीनं, निशायामन्योऽन्यवियुक्तत्वात् शोकसूचकमित्यर्थः।

(७०) उदीचा उत्तरेण, उत्तरस्यां दिशि अवस्थितेन इत्यर्थः। पाटलि-पथेन उभयतः पाटलातरुश्रेणिवेष्टितपथेन, ("पाटलिः पाटला मोघा काचस्थाली फलेरुहा" इत्यमरः)। सशंलेति।—सशंलेन तिमिरावृतत्वात् उग्रतरामर्षेण, अर्थ-शेषं, यत् विशालम् उन्नतं, सौधं हर्म्यं, तस्य कुक्षि भित्तिः, उदरे मध्यदेशे यस्य तादृशेन, उभयतः पाटलातरुवेष्टितमार्गपार्श्वावस्थितविशालहर्म्यश्रेणीमध्यवर्त्तिना इत्यर्थः। शरक्षेपमिव बाणक्षेपपर्य्यन्तदेशमिव, शरेणनिक्षिप्तबाणस्य पतनोपयोगि-देशपर्य्यन्तमित्यर्थः।

(७१) प्राचा पूर्वदिशा, पूर्वस्यां दिशि अवस्थितेन इत्यर्थः। पिण्डीति।—

सैकतपथेन (७०) किञ्चित् अन्तरम् अतिक्रम्य पुनः अवाचीं चूतवीथीम् अगाहिषि। (७१) ततश्च गहनतरम् उदरोपरचितरत्नवेदिकं (७२) माधवीलतामण्डपम् ईषद्विवृतसमुद्गकोन्मिषितभासा दीपवर्त्त्या न्यरूपयम्। (७३) प्रविश्य च एकपार्श्वे फुल्लपुष्पनिरन्तरकुरुण्टपोतपङ्क्तिभित्तिपरिगतं गर्भगृहम्, अवनिपतिताकृष्णाशोकलतामयम् अभिनवकुसुमकोरकपुलकलाञ्छितं प्रत्यग्रप्रवालपटलपाटलं कवाटम् उद्घाट्य (७४) प्राविशम्। तत्र च आसीत् स्वास्तीर्णं कुसुम-

---

पिण्डी तगरतरुः रक्ताशोको वा, ("पिण्डी स्यात्तगरेऽलाबूखर्जूरीभेदयोरपि" इति विश्वः, "रक्ताशोके तु पिण्डी स्यात्" इति वैजयन्ती) भाण्डीरः क्षुपभेदः, ("भाण्डीरो मल्लिकावन्धः" इत्यमरः) तयोः षण्डाभ्यां श्रेणीभ्यां, मण्डितौ अलङ्कृतौ, उभयपार्श्वौ यस्य तादृशेन। सैकतपथेन वालुकामयमार्गेण।

(७१) अन्तरं दूरम्। अवाचीं दक्षिणदिग्वर्त्तिनीमित्यर्थः। चूतवीथीम् उभयतो रसालवृक्षश्रेणीवेष्टितमार्गम्। अगाहिषि प्रविष्टवान्।

(७२) गहनतरम् अतिशयेन दुष्प्रवेशम्, अन्तःपुरमध्यवर्त्तितया रक्षिभिर्दर्शनाशङ्कया इति भावः। उदरेति।—उदरे अभ्यन्तरे, उपरचिता निर्मिता, रत्नवेदिका मणिमयोपवेशनस्थानं यस्य तथोक्तम्।

(७३) ईषदिति।—ईषत् अल्पं, विवृतेन उद्घाटितेन, समुद्गकेन सम्पुटकेन, सम्पुटाकारद्वारविशेषेण गवाक्षविशेषेण वा इत्यर्थः, काचनिर्मितसम्पुटाकारावरणेनेत्यर्थो वा, उन्मिषिताः प्रकटिताः, भासः प्रभाः यस्याः तथाविधया। दीपवर्त्त्या दीपस्य वर्त्त्या दशया, दीपरूपया वर्त्त्या "बाति" इति वा। न्यरूपयम् अवालोकयम्।

(७४) एकपार्श्वे एकस्मिन् विभागे। फुल्लेति।—फुल्लैः विकसितैः, पुष्पैः निरन्तरा व्याप्ता इत्यर्थः, या कुरुण्टपोतानां क्षुद्रकुरुवकवृक्षाणां, पङ्क्तिः राजिः, सा एव भित्तिः कुड्यं, तया परिगतं युक्तम्। गर्भगृहम् अभ्यन्तरगृहम्। अवनीति।—अवनौ भूमौ, पतिता या अकृष्णाशोकलता रक्ताशोकशाखा, ("समे शाखालते" इत्यमरः) तन्मयं तया निर्मितमित्यर्थः। अभिनवेति।—अभिनवाः नवोद्गताः, कुसुमानां कोरकाः कलिका एव, पुलकाः प्रस्तरविशेषाः, ("पुलकः क्रिमिभेदे प्रस्तरभेदे च मणिदोषे" इति मेदिनी) तैः लाञ्छितम् अलङ्कृतम्। प्रत्यग्राणां नवानां,

शयनं, सुरतोपकरणवस्तुगर्भाश्च कमलिनीपलाशसम्पुटाः, (७५) दन्तमयं तालवृन्तं, सुरभिसलिलभरितश्च भृङ्गारकः। (७६) समुपविश्य मुहूर्त्तं विश्रान्तः परिमलम् अतिशयवन्तम् आघ्रासिषम्, (७७) अश्रौषञ्च मन्दं मन्दं पदशब्दम्। श्रुत्वैव सङ्केतगृहान्निर्गत्य रक्ताशोकस्कन्धपार्श्वव्यवहिताङ्गयष्टिः (७८) स्थितोऽस्मि। सा च सुभ्रूः सुषीमकामा शनैः उपेत्य तत्र माम् अदृष्ट्वा बलवदव्यथिष्ट। (७९) व्यसृजच्च मत्तराजहंसीव कण्ठरागवल्गुगद्गदां (८०) गिरं, 'व्यक्तम् (८१) अस्मि

---

प्रवालानां पल्लवानां, पटलेन समूहेन, पाटलं श्वेतरक्तम्। कवाटं द्वारावरणम्। उद्घाट्य अपसार्य्य।

(७५) स्वास्तीर्णं सुशोभनम्, आस्तीर्णम् आस्तरणम्, आच्छादनमित्यर्थः, यस्य तादृशं, यद्वा—सुष्ठु यथा तथा आस्तीर्णं विस्तीर्णं, विरचितमित्यर्थः। कुसुमशयनं पुष्परचितं पर्य्यङ्कम्। सुरतेति।—सुरतस्य उपकरणानि साधनानि, चन्दन सुगन्धताम्बूलादीनि, गर्भे उदरे येषां तथागताः। कमलिनीति।—कमलिनीनां पद्मिनीनां, पलाशैः पत्रैः, कृताः सम्पुटाः पात्रविशेषाः।

(७६) दन्तमयं हस्तिदन्तनिर्मितम्। भृङ्गारकः जलपात्रविशेषः, "झारी" "गाडु" इति प्रसिद्धः।

(७७) परिमलं जनमनोहरगन्धम् ("स्यादामर्दे परिमलो गन्धे जनमनोहरे" इति शाश्वतः)। अघ्रासिषम् आघ्राणमकार्षम्।

(७८) सङ्केतगृहात् अभिसरणार्थनिर्दिष्टगुप्तगृहात्, माधवीमण्डपादित्यर्थः। रक्तेति।—रक्ताशोकस्य स्कन्धः काण्डः, तस्य पार्श्वेन एकदेशेन, व्यवहिता तिरोहिता, अङ्गयष्टिः यस्य तथाभूतः, गोपायितदेह इत्यर्थः।

(७९) सुषीमेति।—सुषीमं शिशिरं, शैत्यगुणवद्द्रव्यमित्यर्थः, कामयते या सा तथाभूता, अनुरूपसङ्गलाभेन उत्कण्ठाया अनुरूपपतिलाभेन तापनिवारणात् कामसन्तापशमनार्थिनीत्यर्थः, ("सुषीमः शिशिरो जडः" इत्यमरः)। बलवत् अतिमात्रम्। अव्यथिष्ट विव्यथे।

(८०) व्यसृजच्च अत्यजच्च, अभाषतेत्यर्थः। कण्ठेति।—कण्ठरागेण कण्ठे यः रागः गान्धारादिस्वरानुकारिस्वरविशेषः तेन, ("रागस्तु मात्सर्ये लोहितादिषु।

विप्रलब्धा, (८२) नास्त्युपायः प्राणितुम्। (८३) अयि हृदय! किम् इदम्? अकार्य्यं कार्य्यवत् अध्यवसाय तदसम्भवेन किमेवम् उत्ताम्यसि? (८४) भगवन् पञ्चबाण! कः तव अपराधः कृतो मया? यत् एवं दहसि न च भस्मीकरोषि?' इति।

अथ अहमाविर्भूय विवृतदोषभाजनः (८५) 'भामिनि! (८६) ननु बह्वपराद्धं भवत्या चित्तजन्मनः, (८७) यत् अमुष्य जीवितभूतां रतिमाकृत्या कदर्थितवती, (८८) धनुर्यष्टिं भ्रूलताभ्यां, (८९) भ्रमरमालामयीं ज्यां नीलालकद्युतिभिः, अस्त्राणि (९०) अपाङ्गवीक्षितैः, महारजनध्वजपटां-

क्रोधादावनुरागे च गान्धारादौ नृपेऽपि च" इति मेदिनी) कण्ठस्खलनमाधुर्य्येणेत्यर्थः, वल्गुः मनोहरः, गद्गदः अस्पष्टभाषणं यस्यां तादृशीम्।

(८१) व्यक्तं स्फुट, निश्चितमित्यर्थः।

(८२) विप्रलब्धा वञ्चिता, प्रतारिता; मिथ्यावचनेनेति शेषः।

(८३) प्राणितुं जीवितुम्, उत्कण्ठातिशयादिति भावः।

(८४) किमिदम्? ते सञ्जातमिति शेषः, तवेदृशं चापल्यं कथं सञ्जातम्? इत्यर्थः। अकार्य्यम् अनुचितं कर्म, व्यभिचारकर्म इत्यर्थः, कार्य्यवत् करणीयवत् कर्त्तव्यमित्यर्थः, अध्यवसाय निश्चित्य, तदसम्भवेन तस्य अप्राप्त्या, किं कथम्, एवम् उत्ताम्यसि? खिद्यसे?।

(८५) आविर्भूय प्रकटीभूय, आत्मानं प्रकाश्येत्यर्थः। विवृतेति।—विवृतं प्रकटीकृतम्, उन्मुक्तावरणीकृतमित्यर्थः, दोषभाजनम् आत्मीयाधारः येन तादृशः सन्।

(८६) भामिनि! कोपने! ("कोपना सैव भामिनी" इत्यमरः)।

(८७) अपराद्धम् अपराधः कृतः। चित्तजन्मनः मनोभवस्य, कामस्येत्यर्थः।

(८८) अमुष्य मदनस्य। आकृत्या अवयवेन। कदर्थितवती अधिक्षिप्तवती, तिरस्कृतवतीत्यर्थः।

(८९) धनुर्यष्टिं चापदण्डम्। भ्रूलताभ्यां कदर्थितवतीत्यनेनान्वयः।

(९०) भ्रमरमालामयीं भ्रमरसमूहविरचिताम्। ज्यां मौर्वीम्। नीलालकद्युतिभिः नीलवर्णचूर्णकुन्तलकान्त्या। अस्त्राणि, कौसुमानीति शेषः।

शुकं दशनच्छदमयूखजालैः, प्रथमसुहृदं मलयमारुतं परिमलपटीयसा (९१) निःश्वासपवनेन, परभृतरुतम् अतिमञ्जुलैः प्रलापैः, (९२) पुष्पमयीं पताकां भुजयष्टिभ्यां, दिग्विजयारम्भपूर्णकुम्भमिथुनम् उरोजकुम्भयुगलेन, (९३) क्रीड़ासरो नाभिमण्डलेन, सम्राड्रथं श्रोणिमण्डलेन, (९४) भवनरत्नतोरणस्तम्भयुगलम् (९५) ऊरुयुगलेन, लीलाकर्णकिसलयं (९६) चरणतलप्रभाभिः; अतः स्थाने एव त्वां दुनोति (९७) मकरकेतुः। मां पुनः अनपराधम् अधिकम् आयासयति (९८) इत्येष एव तस्य दोषः। तत् प्रसीद सुन्दरि! जीवय मां जीवनौषधैः इव अपाङ्गैः अनङ्गभुजङ्गदष्टम्' इति

(९१) महारजनेति।—महारजनं कुसुम्भं, कुसुम्भाख्यपुष्पमित्यर्थः, ("स्यात् कुसुम्भं वह्निशिखं महारजनमित्यपि" इत्यमरः) तेन रञ्जितो यो ध्वजपटः, तस्य अंशुरिव अंशुकं तत्, प्रभामित्यर्थः। दशनच्छदेति।—दशनच्छदस्य अधरस्य, मयूखजालैः किरणसमूहैः। प्रथमेति।—प्रथमः मुख्यः, सुहृत् बन्धुः तम्। मलयमारुतं मलयपवनम्। परिमलेति।—परिमलेन मनोहरेण सौरभेण, पटीयान् महत्तरः तेन।

(९२) परभृतरुतं कोकिलरवम्। अतिमञ्जुलैः अतिमधुरैः। प्रलापैः सुभाषितैः।

(९३) दिग्विजयेति।—दिशां विजयारम्भे यत् पूर्णकुम्भमिथुनं पूर्णकलसयुगलं तत्। उरोजेति।—उरोजौ पयोधरौ, कुम्भाविव तयोर्युगलेन द्वयेन।

(९४) सम्राड्रथं साम्राज्यस्यन्दनम्। श्रोणिमण्डलेन नितम्बदेशेन।

(९५) भवनेति।—भवनस्य गृहस्य, यत् रत्नमयं तोरणस्तम्भयुगलं वहिर्द्वारस्तम्भयुग्मं तत्।

(९६) लीलेति।—लीलार्थं यत् कर्णपूरं किसलयं नवपल्लवं तत्। सर्वत्र "कदर्थितवती" इति पूर्वोक्तेनान्वयः।

(९७) स्थाने एव युक्तमेव, ("युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः)। दुनोति सन्तापयति।

(९८) आयासयति क्लेशयति, पीडयतीत्यर्थः।

(९९) जीवनौषधैः मृतसञ्जीवनैः भेषजैः। अपाङ्गैः कटाक्षवीक्षणैः,

आश्लिष्टवान्, अरीरमच्च अनङ्गरागपेशलविशाललोचनाम्। (९९) अवसितार्थाञ्च आरक्तवलितेक्षणाम् ईषत्स्वेदरेखोद्भेदजर्जरित-कपोलमूलाम् अनर्गलकलप्रलापिनीम् अकव्रणदशनकररुहा-र्पणव्यतिकराम् अत्यर्थपरिश्लथाङ्गीम् (१००) आर्त्तामिव लक्षयित्वा मानसीं शारीरीञ्च धारणां शिथिलयन् आत्मानमपि तया समानार्थम् आपादयम्। (१) तत्क्षणविमुक्तसङ्गतौ रतावसानिकं विधिम् (२) अनुभवन्तौ चिरपरिचितौ इव

कटाक्षपातरूपैः मृतसञ्जीवनसेकैरिति समुदितार्थः। आश्लिष्टवान् आलिङ्गितवान्। अरीरमं रमितवांश्च। अनङ्गेति।—अनङ्गरागेण कामावेशेन, पेशले मनोहरे, विशाले आयते, लोचने यस्याः तादृशीम्।

(१००) अवसितार्थां समापितप्रयोजनां, कृतरमणामित्यर्थः। आरक्तेति।—आरक्ते ईषद्रक्ते, वलिते वक्रं चलिते, ईक्षणे यस्यास्तथाभूताम्। 'आरक्तविकुञ्चितेक्षणाम्' इति पाठे—आरक्ते ईषल्लोहिते, विकुञ्चिते चञ्चलीकृते, ईक्षणे यस्यास्तथाभूताम्। ईषदिति।—ईषत् अल्पं यथा तथा, स्वेदरेखाणां घर्मबिन्दूनां, सुरतश्रमजनितानामिति भावः, उद्भेदेन उन्मेषेण, जर्जरितं कुट्टितं, बिन्दुबिन्दुघर्मोद्भेदेन तथाविधमिव दृश्यमानमिति भावः, कपोलमूलं गण्डतलं यस्यास्तथाविधाम्। अनर्गलम् अनवरतं, कलं मधुरं, प्रलपतीति तथोक्ताम्, अविरतमञ्जुभाषिणीमित्यर्थः। अकव्रणेति।—अकव्रणं निर्दयं यथा तथा, दशनानां दन्तानां, कररुहाणाञ्च नखानाञ्च, अर्पणेन अधरपयोधरादौ निवेशनेन, दशनाघाताघातेन इत्यर्थः, व्यतिकरः व्यसनं, पीडा इत्यर्थः, यस्यास्तथोक्तां, प्रगाढदशननखक्षतचिह्नितामित्यर्थः। अत्यर्थेति।—अत्यर्थं परिश्लथानि शिथिलानि, निःसहानि इत्यर्थः, रतिश्रान्ततया इति भावः, अङ्गानि यस्यास्तथोक्ताम्।

(१) आर्त्तामिव क्लान्तामिव। मानसीं धारणां मनसः स्थैर्यं, शारीरीं धारणां शरीरस्थैर्यं, मनःशरीरयोर्बन्धनमिति भावः। शिथिलयन् श्लथयन्; रतिक्रियावसाने शारीरमानसावसादः प्रसिद्धः। समानार्थम् आर्त्तमित्यर्थः। आपादयम् अकरवम्।

(२) तत्क्षणेति।—तत्क्षणमेव विमुक्ता त्यक्ता, सङ्गतिः सङ्गतिः, परस्परसंश्लेषः इत्यर्थः, याभ्यां तथोक्तौ, पृथक्स्थितावित्यर्थः। रतावसानिकं सुरतावसानानुष्ठेयम्। विधिं व्यापारम्।

अतिरूढविस्रम्भौ (३) अपराम् अवातिष्ठावहि। तत आवयोः वियोगकाले समुपजाते पुनः अहमुष्णम् आयतञ्च निःश्वस्य किञ्चिद्दीनदृष्टिः सचकितप्रसारिताभ्यां (४) भुजाभ्याम् एनाम् अनतिपीडं (५) परिष्वज्य नातिविशदम् (६) अचुम्बिषम्। अश्रुमुखी तु सा—'यदि प्रयासि नाथ! प्रयातमेव मे जीवितं गणय; नय माम् अपि, न चेत् दासजनो निष्प्रयोजनः' इत्यञ्जलिम् अवतंसताम् (७) अनैषीत्। अवादिषञ्च ताम्—'अयि मुग्धे! कः सचेतनः स्त्रियम् अभिकामयमानां (८) न अभिनन्दति? यदि मदनुग्रहनिबन्धः तवाभिसन्धिः, (९) आचराविचारं (१०) मदुपदिष्टम्। आदर्शय राज्ञे मत्सादृश्यगर्भं चित्रपटम्, आचक्ष्व च—'किमियमाकृतिः पुरुषसौन्दर्यस्य पारम् आरूढा (११) न वा?' इति। 'बाढमारूढा' इति नूनमसौ वक्ष्यति। ब्रूहि भूयः 'यद्येवम्, अस्ति काऽपि तापसी देशान्तरभ्रमणलब्धप्रागल्भ्या (१२) मम च मातृभूता,

---

(३) अतिरूढेति।—अतिरूढः अतिशयेन जातः, विस्रम्भः विश्वासः ययो-स्तादृशाविव, परस्परविश्वस्ताविवेत्यर्थः।

(४) सचकितप्रसारिताभ्यां ससम्भ्रमविस्तृताभ्याम्।

(५) अनतिपीडं स्वल्पपीडमित्यर्थः।

(६) नातिविशदं नातिपरिस्फुटं, नातिगाढमित्यर्थः।

(७) अवतंसतां शिरोभूषणताम्।

(८) अभिकामयमानां याचमानाम्।

(९) मदनुग्रहेति।—मयि अनुग्रहे कृपायां, कृपाप्रदर्शने इत्यर्थः; निबन्धः हठ इत्यर्थः। अभिसन्धिः अभिप्रायः।

(१०) आचर अनुतिष्ठ। अविचारं विचारमकृत्वेत्यर्थः।

(११) पारं परमोत्कर्षमिति यावत्। आरूढा प्राप्ता इत्यर्थः।

(१२) देशान्तरेति।—देशान्तरभ्रमणेन लब्धं प्रागल्भ्यं प्रतिभा, अभिज्ञता इति यावत्, यया तादृशी।

तया इदम् आलेख्यरूपं पुरस्कृत्य अहमुक्ता, 'सोऽस्ति तादृशो मन्त्रः, येन त्वमुपोषिता पर्वणि विविक्तायां (१३) भूमौ पुरोहितैः हुतमुक्ते समार्चिषि (१४) नक्तम् एकाकिनी शतं चन्दनसमिधः (१५) शतम् अगुरुसमिधः, कर्पूरमुष्टीः, (१६) पट्टवस्त्राणि च प्रभूतानि (१७) हुत्वा भविष्यसि एवमाकृतिः। (१८) अथ चालयिष्यसि (१९) घण्टाम्। घण्टापुटक्वणिताहूतश्च भर्त्ता (२०) भवत्यै सर्वं रहस्यजातम् आख्याय निमीलिताक्षो (२१) यदि त्वाम् आलिङ्गेत्, इयम् आकृतिः अमुम् उपसङ्क्रामेत्, (२२) त्वन्तु भविष्यसि यथा पुराकारैव। यदि भवत्यै भवत्प्रियाय च एवं रोचेत। न च अस्मिन् विधौ विसंवादः (२३) शङ्क्यः' इति। वपुश्चेत् इदं तव अभिमतं, सह

---

(१३) येन मन्त्रेण। उपोषिता कृतोपवासा। पर्वणि अमावास्यायाम्। विविक्तायां विशुद्धायां, जनशून्यायां वा।

(१४) हुतमुक्ते आदौ हुतः पश्चात् मुक्तः परित्यक्तः तस्मिन्। समार्चिषि अग्नौ।

(१५) चन्दनसमिधः चन्दनकाष्ठानि।

(१६) अगुरुसमिधः अगुरुचन्दनकाष्ठानि। कर्पूरमुष्टीः मुष्टिपरिमितान् पलपरिमितान् वा कर्पूरान् ("मुष्टिर्द्वयोः पले" इति मेदिनी)।

(१७) प्रभूतानि प्रचुराणि।

(१८) एवमाकृतिः एवम् ईदृशी, उक्तरूपालेख्यचित्रितपुरुषप्रकारा इत्यर्थः, आकृतिः यस्यास्तथाभूता।

(१९) चालयिष्यसि आन्दोलयिष्यसि, वादयिष्यसि इत्यर्थः।

(२०) घण्टापुटेति।—घण्टापुटस्य घण्टारूपपात्रस्य, क्वणितं शब्दितं, तेन आहूतः आकारितः, तदाकर्ण्यागतः इत्यर्थः। भर्त्ता तव स्वामी।

(२१) सर्वं रहस्यजातं सर्वं गोप्यमुदन्तजातमित्यर्थः। निमीलिताक्षः मुद्रितनयनः।

(२२) अमुं तव भर्त्तारम्। उपसङ्क्रामेत् गच्छेत्।

(२३) विधौ व्यापारे, विषये इत्यर्थः। विसंवादः विप्रलम्भः, [illegible] इत्यर्थः।

सुहृन्मन्त्रिभिः अनुज्ञैः पौरजानपदैश्च सम्मन्त्र्य तेषामपि अनुमते कर्मणि अभिमुखेन स्थेयम्' इति। स नियतम् अभ्युपैष्यति। (२४) पुनः अस्यामेव प्रमोदवनवाटीशृङ्गाटिकायाम् आथर्वणिकेन विधिना संज्ञपितपशुना अभिहुत्य मुक्ते हिरण्यरेतसि तद्धूमशमनेन (२५) सम्प्रविष्टेन मया अस्मिन्नेव लतामण्डपे स्थातव्यम्। त्वं पुनः प्रगाढ़ायां प्रदोषवेलायाम् आलपिष्यसि (२६) कर्णे कृतकृतकनर्मस्मिता (२७) विकटवर्माणं, 'धूर्त्तोऽसि (२८) त्वम अकृतज्ञश्च, (२९) मदनुग्रहलब्धेनापि रूपेण लोकलोचनोत्सवायमानेन मत्सपत्नीः अभिरमयिष्यसि; नाहम् आत्मविनाशाय वेतालोत्थापनम् आचरेयम्' (३०) इति। श्रुत्वा इदं त्वद्वचः स यत् वदिष्यति तन्मह्यम् एकाकिन्युपागत्य निवेदयिष्यसि। ततः परम् अहमेव ज्ञास्यामि। मत्पदचिह्नानि च उपवने पुष्करिकया

(२४) स तव भर्त्ता। नियतं निश्चितम्, अवश्यमित्यर्थः। अभ्युपैष्यति अङ्गीकरिष्यति।

(२५) प्रमोदेति।—प्रमोदाय क्रीड़ायै, या वनवाटी उपवाटिका, गृहोपवनमित्यर्थः, तस्याः शृङ्गाटिकायां चतुष्पथे, ("शृङ्गाटकचतुष्पथे" इत्यमरः)। आथर्वणिकेन अथर्ववेदोक्तेन। विधिना नियमेन; अथवा—आथर्वणिकेन पुरोहितेन। विधिना यथाविधि। संज्ञपितः मारितः पशुश्छागः यत्र विधौ तेन। अभिहुत्य होमं कृत्वा। मुक्ते त्यक्ते। हिरण्यरेतसि वह्नौ। तद्धूमशमनेन तस्य धूमनिरस्या सहेत्यर्थः।

(२६) प्रगाढ़ायां परिपूर्णायामिति यावत्। प्रदोषवेलायां रजनीमुखसमये, ("प्रदोषो रजनीमुखम्" इत्यमरः)। आलपिष्यसि कथयिष्यसि।

(२७) कृतेति।—कृतं कृतकं कृत्रिमं, नर्मस्मितं कौतुकहास्यं यया तादृशी।

(२८) धूर्त्तोऽसि वञ्चकोऽसि।

(२९) अकृतज्ञः कृतोपकारानभिज्ञः, अकृतोपकार इति यावत्।

(३०) वेतालोत्थापनं भूतविशेषोत्पादनम्। आचरेयम् अनुतिष्ठेयम्।

प्रमार्जय' (३१) इति। सा तथेति शास्त्रोपदेशमिव मदुक्त-माहृत्य अक्षतसुरतरागेव कथंकथमपि अगात् अन्तःपुरम्। अहमपि यथाप्रवेशं निर्गत्य स्वमेव आवासम् अयासिषम्।

अथ सा मत्तकाशिनी (३२) तथा तम् अर्थम् अन्वतिष्ठत्। अतिष्ठच्च तन्मते स दुर्मतिः। अभ्रमच्च (३३) पौर-जानपदेषु इयमद्भुतायमाना वार्त्ता, 'राजा किल विकटवर्मा देवीमन्त्रबलेन देवयोग्यं वपुः आसादयिष्यति। नूनमेषः न विप्रलम्भोऽतिकल्याणः, (३४) केव कथा प्रमादस्य? (३५) स्वस्मिन्नेव अन्तःपुरोपवने स्वाग्रमहिष्येव (३६) सम्पाद्यः किल अयमर्थः। तथा तु बृहस्पतिप्रतिमबुद्धिभिः मन्त्रिभिः अपि अभ्युदनुमतः। यद्येवं भावि, (३७) नान्यदतः परमस्ति किञ्चित् अद्भुतम्, अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः' इति प्रस्तृततरेषु (३८) लोकवादेषु, प्राप्ते पर्वदिवसे, (३९) प्रगाढ़ायां प्रौढ़तमसि (४०) प्रदोषवेलायाम् अन्तःपुरोद्यानात् उदैरत् धूर्जटिकण्ठधूम्रो (४१) धूमोद्गमः। सौराज्यदधितैल-

(३१) प्रमार्जय प्रोञ्छय।

(३२) मत्तकाशिनी उत्तमाङ्गना, ("वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी" इत्यमरः)।

(३३) अभ्रमत् प्रासरत्।

(३४) अतिकल्याणः अतिशुभकरः।

(३५) प्रमादस्य अनवधानतायाः, ("प्रमादोऽनवधानता" इत्यमरः)।

(३६) स्वाग्रमहिष्या स्वस्य अग्रमहिषी प्रधानमहिषी तया।

(३७) भावि भविष्यत्।

(३८) प्रस्तृततरेषु अत्यर्थं विस्तृतिं गतेषु।

(३९) पर्वदिवसे अमावस्यायाम्।

(४०) प्रौढ़तमसि निविडान्धकारायाम्।

(४१) उदैरत् उदतिष्ठत्, (उत्पूर्वकात् ईर्-धातोर्लङ् प्रथमपुरुषैकवचने

गौरसर्षपवसामांसरुधिराहुतीनाञ्च परिमलः पवनानुसारी दिशि दिशि प्रावासीत्। (४२) प्रशान्ते च सहसा धूमोद्गमे तस्मिन् अहमविशं निशान्तोद्यानम्, (४३) आगमच्च गजगामिनी। आलिङ्ग्य च मां सस्मितं समभ्यधत्त (४४)— 'धूर्त्त! सिद्धं ते समीहितम्, अवसितश्च पशुरसौ। (४५) अमुष्य (४६) च उपप्रलोभनाय त्वदादिष्टया दिशा (४७) मया उक्तं—'कितव! न साधयामि ते सौन्दर्य्यम्, एवं-सुन्दरो हि त्वम् अप्सरसाम् अपि स्पृहणीयो भविष्यसि, किमुत मानुषीणाम्? मधुकर इव निसर्गचापल्यात् यत्र क्वचित् आसज्जति (४८) भवादृशो नृशंसः' (४९) इति। तेन तु मे पादयोः निपत्य अभिहितं—'रम्भोरु! सहस्व (५०) मत्कृतानि दुश्चरितानि, (५१) मनसाऽपि न चिन्तयेयमितः परमितरनारीम्। त्वरस्व प्रस्तुते (५२) कर्म्मणि' इति। तदहम्

सिद्धम्। "उदैरयत्" इति पाठे—चौरादिक ईर्-धातोर्लङि रूपम्)। धूर्जटीति।—धूर्जटेः हरस्य, कण्ठवत् धूम्र. कृष्णलोहितः, ("धूम्रधूमलौ कृष्णलोहिते" इत्यमरः)।

(४२) प्रावासीत प्रासरत।

(४३) निशान्तोद्यानं गृहोद्यानं, ("निशान्तं गृहशान्तयोः" इत्यमरः)।

(४४) समभ्यधत्त अब्रवीत्।

(४५) अवसितः अवसानं गतः। पशुः पशुवत् बुद्धिरहितः, पराभिसन्धिज्ञान-शून्यतया पशुतुल्यः मूर्खं इत्यर्थः। असौ विकटवर्मा।

(४६) अमुष्य पशोः।

(४७) दिशा रीत्या, उपदेशमार्गेणेत्यर्थः।

(४८) आसज्जति आसक्तो भवति।

(४९) नृशंसः घातुकः, निष्ठुर इत्यर्थः, ("नृशंसो घातुकः क्रूरः" इत्यमरः)।

(५०) सहस्व क्षमस्व।

(५१) दुश्चरितानि दुष्टाचरणानि, अन्यनारीगमनरूपाणीति भावः।

(५२) प्रस्तुते प्रक्रान्ते। ["प्रक्रान्ते" इति पाठान्तरम्]।

ईदृशेन वैवाहिकेन नेपथ्येन (५३) त्वाम् अभिसृतवती। (५४) प्रागपि रागाग्निसाक्षिकम् (५५) अनङ्गेन गुरुणा (५६) दत्तैव तुभ्यम् एषा जाया। (५७) पुनरपि इमं जातवेदसं (५८) साक्षीकृत्य स्वहृदयेन दत्ता' इति प्रपदेन चरणपृष्ठे निष्पीड्य उत्क्षिप्तपादपार्ष्णिः इतरेतरव्यतिषक्तकोमलाङ्गुलि-दलेन भुजलताद्वयेन कन्धरां मम आवेष्ट्य सलीलम् आननम् आनमय्य (५९) स्वयम् उन्नमितमुखकमला विभ्रान्तविशाल-दृष्टिः (६०) अमन्दम् अचुम्बत्।

अथ एनाम् 'इहैव कुरुण्टकगुल्मगर्भे (६१) तिष्ठ, यावत्

(५३) नेपथ्येन वेशेन।

(५४) अभिसृतवती अभिगतवती।

(५५) प्रागपि पूर्वमपि। रागाग्निसाक्षिकं रागः अनुरागः एव, अग्निः साक्षी यस्मिन् कर्मणि तद्यथा तथा।

(५६) गुरुणा आचार्येण, ऋत्विजेति भावः।

(५७) जाया पत्नी, अहमिति भावः।

(५८) जातवेदसम् अग्निम्।

(५९) प्रपदेन पादाग्रेण, अग्रपादेनेत्यर्थः, अङ्गुलिमूलेनेति यावत्, ("पादाग्रं प्रपदम्" इत्यमरः)। चरणपृष्ठे पादतले। निष्पीड्य दृढनिवेशनेन क्रोडयित्वेत्यर्थः, अङ्गुलीभिः सुदृढभरप्रदानेनेति भावः। उत्क्षिप्तेति।—उत्क्षिप्तौ उद्धृतौ, पादयोः पार्ष्णी गुल्फाधोभागौ यया तथाभूता। इतरेतरेति।—इतरेतरम् अन्योऽन्यं, व्यतिषक्ताः समासक्ताः, कोमलाः अङ्गुलय एव दलानि पत्राणि यस्य तादृशेन। भुजौ लते इव तयोर्द्वयेन। कन्धरां ग्रीवाम्। आवेष्ट्य आश्लिष्य। सलीलं सविलासम्। आननं मुखं, मदीयमिति शेषः। आनमय्य आनमितं कृत्वा।

(६०) विभ्रान्तेति।—विभ्रान्ते विघूर्णिते, विशाले दीर्घे, दृष्टी नेत्रे यस्याः तादृशी।

(६१) कुरुण्टकेति।—कुरुण्टकानां पीतपुष्पसहचराणां, गुल्मः स्तम्बः, गुच्छ इत्यर्थः, ("अप्रकाण्डे स्तम्बगुल्मौ" इत्यमरः) तस्य गर्भे अभ्यन्तरे।

अहं निर्गत्य साधयेयं साध्यं (६२) सम्यक्' इति विसृज्य ताम्, उपसृत्य होमानलप्रदेशम् (६३) अशोकशाखावलम्बिनीं घण्टाम् अचालयम्। अकूजञ्च (६४) सा तं जनं (६५) कृतान्तदूतीवाह्वयन्ती। प्रावर्त्तिषि (६६) च अहम् अगुरु-चन्दनप्रमुखाणि होतुम्, आयासीत् च राजा यथोक्तं देशम्। आकुलपन्नमिव किञ्चित् सविस्मयं विचार्य्य तिष्ठन्तम् अब्रवं— 'ब्रूहि सत्यं भूयोऽपि मे भगवन्तं चित्रभानुम् (६७) एव साक्षीकृत्य, न चेत अनेन रूपेण मत्सपत्नीः अभिरमयिष्यसि, ततः त्वयि इदं रूपं सङ्क्रामयेयम्' इति। स तदैव 'देवी एव इयं, नोपधिः' (६८) इति स्फुटोपजातसम्प्रत्ययः (६९) प्रावर्त्तत शपथाय। स्मित्वा पुनः मया उक्तं—'किं वा शपथेन? कैव हि मानुषी मां परिभविष्यति? यदि अप्सरोभिः सङ्गच्छसे सङ्गच्छस्व कामम्। कथय कानि ते रहस्यानि, तत्कथनान्ते हि त्वत्स्वरूपभ्रंशः' (७०) इति। सोऽब्रवीत्—'अस्ति वृद्धो मत्पितुः कनीयान् भ्राता प्रहारवर्म्मा, तं विषान्नेन

(६२) साधयेयम् अनुतिष्ठेयम्। साध्यं कार्य्यम्।

(६३) विसृज्य विमुच्य। तां कलसुन्दरीम्। उपसृत्य आगत्य। होमानल-प्रदेशं होमाग्निस्थानम्।

(६४) अकूजत अध्वनत्।

(६५) सा घण्टा। तं जनं विकटवर्माणम्।

(६६) प्रावर्त्तिषि प्राक्रमम्।

(६७) चित्रभानुम् अग्निम्, ("चित्रभानुर्विभावसुः" इत्यमरः)।

(६८) उपधिः छलम्।

(६९) स्फुटेति।—स्फुटं सुव्यक्तम्, उपजातः सम्प्रत्ययः सम्यग्विश्वासः यस्य तथोक्तः।

(७०) त्वत्स्वरूपभ्रंशः तव स्वरूपस्य आकृतेः, भ्रंशः अपगमाभाव इत्यर्थः।

व्यापाद्य अजीर्णदोषं ख्यापयेयम् (७१) इति मन्त्रिभिः सह अध्यवसितम्। (७२) अनुजाय विशालवर्मणे दण्डचक्रं पुण्ड्रदेशाभिक्रमणाय दित्सितम्। (७३) पौरवृद्धश्च पाञ्चालिकः परिव्रातश्च सार्थवाहः (७४) खनतिनाम्नो यवनात् वज्रम् (७५) एकं वसुन्धरामूल्यं लघीयसाऽर्घेण लभ्यमिति मम एकान्तेऽमन्त्रयेताम्। (७६) गृहपतिश्च (७७) मम अन्तरङ्गभूतो जनपदमहत्तरः शतहलिरलीकवादशीलम् अवलेपवन्तं दुष्टग्रामण्यम् अनन्तसीरं जनपदकोपेन घातयेयमिति दण्डधरानुद्धारकर्मणि मत्प्रयोगात् नियोक्तुम् अभ्युपागमत्। (७८)

(७१) व्यापाद्य विनाश्य। अजीर्णदोषं विसूचिकामित्यर्थः। ख्यापयेयं प्रकाशयेयम्।

(७२) अध्यवसितं मन्त्रणया स्थिरीकृतम्।

(७३) अनुजाय कनीयसे। दण्डचक्रं सैन्यमण्डलम्। पुण्ड्रेति।—पुण्ड्रस्य तन्नामकस्य देशस्य, अभिक्रमणाय जयाय। दित्सितं दातुमिष्टम्।

(७४) पौरेति।—पौरेषु पुरवासिषु मध्ये, वृद्धः स्थविरः। पाञ्चालिकः तदाख्यः। परिव्रातः कुतश्चित् सङ्कटात् परिरक्षित इत्यर्थः। सार्थवाहो वणिक् तन्नामा वा।

(७५) वज्रं हीरकम्।

(७६) वसुन्धरामूल्यं वसुन्धरा पृथिवी, मूल्यं यस्य तादृशं, समस्तभूमण्डलं दत्त्वाऽपि लभ्यमित्यर्थः। लघीयसा अल्पीयसा। अर्घेण मूल्येन। मम इति (सम्बन्धविवक्षया षष्ठी) मया सहेत्यर्थः। अमन्त्रयेतां मन्त्रणामकुरुतां, कथितवन्तौ इत्यर्थः।

(७७) गृहपतिः गृहस्थः, ("भवेत् गृहपतिः पुंसि गृहस्थेऽपि च सत्रिणि" इति मेदिनी)।

(७८) अन्तरङ्गभूतः आत्मीयभूतः। जनपदमहत्तरः जनपदेषु देशेषु, महत्तरः अतिमहान्, अतिसम्भ्रान्त इत्यर्थः। शतहलिः शतलाङ्गलैः कृषिकारकः कश्चित् तन्नामा इत्यर्थः। अलीकवादशीलं मृषावादरतं, शतहलेः मिथ्या कुत्साकारिणमित्यर्थः, अनन्तसीरेण बहुलाङ्गलवत्त्वेन शतहलेरधिकेन द्वेषात् लोके मिथ्याऽपवादः प्रचारितः

इत्थमिदम् आचिरप्रसूतं रहस्यम्'। (७९) इति आकर्ण्य तम् 'इयत् तव आयुः, (८०) उपपद्यस्व (८१) स्वकर्मोचितां गतिम्' इति छुरिकया द्विधाकृत्य कृत्तमात्रं (८२) तस्मिन्नेव प्रवृत्तस्फीतसर्पिषि हिरण्यरेतसि (८३) अजुहवम्, अभूच्च असौ भस्मसात्। (८४) अथ स्त्रीस्वभावात् ईषद्विह्वलां हृदयवल्लभां (८५) समाश्वास्य हस्तकिसलये (८६) अवलम्ब्य गत्वा तद्गृहम् अनुज्ञया अस्याः सर्वाणि अन्तःपुराणि आहूय सद्य एव सेवां (८७) दत्तवान्। विस्मितविलासिनीसार्थमध्ये (८८)

---

पुत्रस्य गूढाभिप्रायः। अवलेपवन्तम् अहङ्कारवन्तम्। दुष्प्रापमर्थं दुर्लभं साम्राज्यं, प्रहारवर्मणि अनुरागिणामिति भावः। जनपदकोपेन जनपदानां देशवासिनां, कोपेन। घातयिष्यं नाशयेयम्। इति इत्याशयेनेति भावः। दण्डधरान् दण्डकर्मणि नियुक्तान्, राजपुरुषप्रभृतीनित्यर्थः। उद्धारकर्मणि उन्मूलनक्रियायां, तस्य विनाशव्यापारे इत्यर्थः। मत्प्रयोगात् मदादेशात्। यद्वा—दण्डधरैर्दण्डनायकैः, अनुद्धारकर्मणि दोषशून्यस्य मारणे तेषामप्रवृत्त्या तदनुच्छेदकर्मणि, मत्प्रयोगात् मत्कर्तृकगूढप्रयोगात्, नियोक्तुम् उद्धारे प्रवर्त्तयितुमित्यर्थः। अभ्युपागमम् स्वीकार, मतवर्णिरित्यन्वयः।

(७९) आचिरप्रसूतम् आपाततः उपस्थितम्। रहस्यं गोप्यम्।

(८०) इयत् एतावत्पर्य्यन्तम्। आयुः जीवनकालः।

(८१) उपपद्यस्व प्राप्नुहि।

(८२) द्विधाकृत्य द्विखण्डं कृत्वा। कृत्तमात्रं छिन्नमात्रम्।

(८३) प्रवृत्तेति।—प्रवृत्तानि प्रदत्तानि इत्यर्थः, स्फीतानि प्रचुराणि, सर्पींषि घृतानि यस्मिन् तथाभूते, अतिमात्रं ज्वलतीति भावः। हिरण्यरेतसि वह्नौ।

(८४) भस्मसात् भस्मावशेषः।

(८५) हृदयवल्लभां प्राणकान्ताम्।

(८६) हस्तकिसलये करपल्लवे।

(८७) सेवां परिचर्य्यामित्यर्थः।

(८८) विस्मितेति।—विस्मितानाम् आश्चर्य्यान्वितानां, विलासिनीनां सार्थः वृन्दः, तस्य मध्ये।

कञ्चित् विहृत्य कालं, विसृष्टावरोधमण्डलः ( ८९ ) तामेव संहतोरुमूरूपपीड़ं भुजोपपीड़ञ्च उपगूह्य तल्पे ( ९० ) अभिरमयन् अल्पामिव तां त्रियामामनैषम्। अलभे ( ९१ ) च तन्मुखात् तद्राजकुलस्य शीलम्। उषसि स्नात्वा कृतमङ्गलो मन्त्रिभिः सह समगच्छे, तांश्च अब्रवम्—'आर्य्याः! रूपेण एव सह परिवृत्तो मम स्वभावः, य एष विषान्नेन हन्तुं चिन्तितः पिता मे, स मुक्ता स्वमेतद्राज्यं भूय एव ग्राहयितव्यः, पितृवत् अमुष्मिन् वयं शुश्रूषया एव वर्त्तामहे, न ह्यस्ति पितृवधात् परं पातकम्' इति। भ्रातरञ्च विशालवर्माणम् आहूय उक्तवान्—'वत्स! न सुभिक्षाः ( ९२ ) साम्प्रतं पुण्ड्राः। ते दुःखमोहोपहताः त्यक्तात्मानो ( ९३ ) राष्ट्रं नः सुभिक्षम् अभिद्रवेयुः। अतो मुष्टिवधः शस्यवधो वा ( ९४ ) यदा उत्पद्यते, तदा अभिग्रास्यसि, नाद्य यात्रा युक्ता' इति। नगरवृद्धो अपि अज्ञापिषम् ( ९५ )—'अल्पीयसा मूल्येन महार्हं वस्तु माऽस्तु

(८९) विसृष्टेति।—विसृष्टं त्यक्तम्, अवरोधमण्डलम् अपरान्तःपुरिकावर्गः येन तथाभूतः।

(९०) संहतोरुं सम्मिलितोरुयुगलां, घनीकृत्येत्यर्थः। ऊरूपपीड़ं ऊर्व्वोः ऊर्व्वोः उपपीड़ा यस्मिन् तत् यथा तथा। भुजोपपीड़ं भुजयोः उपपीड़ा यस्मिन् तत् यथा तथा। उपगूह्य आलिङ्ग्य। तल्पे शय्यायां, ("तल्पं शय्याऽट्टदारेषु" इत्यमरः)।

(९१) अलभे प्राप्नुवम्, अजानम् इत्यर्थः।

(९२) सुभिक्षाः सुलभभिक्षाः, सम्पन्नशस्या इत्यर्थः।

(९३) दुःखेति।—दुःखेन दुर्भिक्षजनितेनेति भावः, यः मोहः ज्ञानाभावः, तेन उपहताः आक्रान्ताः। अत एव त्यक्ताः आत्मा यैः तादृशाः जीवननिरपेक्षाः सन्तः इत्यर्थः।

(९४) मुष्टिवधः मुष्टेः मुष्टिमात्रधान्यस्य, वधः उपघातः। शस्यवधः शस्यमात्राणां वा वधः उपघातः, दुर्भिक्षमिति यावत्।

(९५) नगरवृद्धो पाथाविषयधाधिकारी। अज्ञापिषम् उक्तवान्।

मे लभ्यं धर्मरक्षायै, तत् अनुगुणेनैव मूल्येनादः (९६) क्रीयताम्' इति। अतश्चलितश्च राष्ट्रमुख्यम् आहूय आख्यातवान्—'योऽसौ अनन्तसीरः प्रहारवर्मणः पक्ष इति जिनाशयिषितः, (९७) सोऽपि पितरि मे प्रकृतिस्थे किमिति नाश्येत? तत् त्वयाऽपि तस्मिन् संरम्भो (९८) न कार्यः' इति।

ते इमे सर्वं मम आभिज्ञानिकम् (९९) उपलभ्य स एव अयमिति निश्चिन्वाना विस्मयमानाश्च मां महादेवीञ्च प्रशंसन्तो मन्त्रबलानि च उद्घोषयन्तो बन्धनात् पितरौ निष्क्रामय्य स्वं राज्यं प्रत्यपादयन्। (१००) अहञ्च तया मे धात्र्या सर्वमिदं मम आचेष्टितं (१) रहसि पित्रोः अवगमय्य प्रहर्षकाष्ठाधिरूढयोः (२) तयोः पादमूलम् अभजे। (३) अभज्ये च यौवराज्यलक्ष्म्या तदनुज्ञाततया (४) प्रसाधितात्मा देवपादविरहदुःखदुर्भगान् भोगान् निर्विशन्। (५) भूयोऽस्य

(९६) अनुगुणेन गुणानुरूपेण, योग्येन इत्यर्थः। अदः वस्त्रम्।

(९७) जिनाशयिषितः नाशयितुमिष्टः।

(९८) संरम्भः कोपः।

(९९) ते इमे अमात्यादय इत्यर्थः। आभिज्ञानिकं विकटवर्मवाचनिकं ज्ञापकमित्यर्थः, वचनजातमिति शेषः।

(१००) प्रत्यपादयन् प्रत्यर्पयामासुः।

(१) आचेष्टितम् अनुष्ठितकार्य्यम्।

(२) अवगमय्य वेदयित्वा। प्रहर्षेति।—प्रहर्षस्य प्रकृष्टानन्दस्य, काष्ठा उत्कर्षः, ताम् अधिरूढयोः प्राप्तयोः।

(३) अभजे असेवे।

(४) अभज्ये असेव्ये, आश्रिये इत्यर्थः। तदनुज्ञाततया ताभ्यां पितृभ्याम्, अनुज्ञाततया अनुमततया।

(५) प्रसाधितात्मा सम्पादितधैर्य्यः, धैर्य्यमाश्रित्य इत्यर्थः, अलङ्कृतशरीर इत्यर्थो

प्रियसखस्य सिंहवर्मणो लेख्यात् चण्डवर्मणा चम्पाभियोगम् अवगम्य प्रभुवधो मित्ररक्षा च उभयमपि करणीयमेव इति अलघुना लघुसमुत्थानेन सैन्यचक्रेण अभ्यसरम्, (६) अभवच्च भूमिः त्वत्पादलक्ष्मीसाक्षात्क्रियामहोत्सवानन्दराशेः" (७) इति।

श्रुत्वा एतद्देवो राजवाहनः सस्मितम् अवादीत्—"पश्यत, पारतल्पिकम् उपधियुक्तम् अपि गुरुजनबन्धव्यसनमुक्तिहेतुतया दुष्टामित्रप्रमापणाभ्युपायतया राज्योपलब्धिमूलतया (८) च पुष्कलौ अर्थधर्मौ अपि अरीरधत्। (९) किं हि बुद्धिमद्भिः प्रयुक्तं (१०) न अभ्युपैति (११) शोभाम्?" इति अर्थपाल-

---

स्य। देवेति।—देवस्य पादविरहेण चरणसेवाविच्छेदेन यत् दुःखं तेन दुर्भगान् अप्रियान्। निर्विघ्नम् उपभुञ्जानः।

(६) लेख्यात् लिपितः। चम्पाभियोगं चम्पानगराक्रमणम्। प्रभुवधः रिपु-विनाशः, चण्डवर्मणः मालवाधीशप्रणयित्वात् राजहंसप्रतिपक्षत्वेन प्रभुत्वं बोद्धव्यम्। अलघुना महता। लघुसमुत्थानेन सत्वरोद्योगेन शीघ्रगामिना वा। सैन्यचक्रेण बलनिचयेन। अभ्यसरम् अभ्यगच्छम्।

(७) भूमिः पात्रम्। त्वदिति।—तव पादयोः या लक्ष्मीः शोभा, तस्याः साक्षात्क्रिया सन्दर्शनं, सैव महोत्सवः, तेन य आनन्दराशिः प्रहर्षनिचयः तस्य।

(८) पारतल्पिकं पारदारिकं, परस्त्रीगमनमित्यर्थः। उपधियुक्तं कपटयुक्तम्, अधर्म्यमित्यर्थः। गुरुजनेति।—गुरुजनानां पित्रादीनां, बन्धः कारावास एव, व्यसनं विपत्, तस्मात् मुक्तेः उद्धारस्य, हेतुतया कारणतया। दुष्टानाम् अमित्राणां प्रभूणां, प्रमापणस्य वधस्य, अभ्युपायतया साधनतया। राज्यस्य उपलब्धिः प्राप्तिः, तस्याः मूलतया निदानतया।

(९) पुष्कलौ अतिशोभनौ, अत्युत्कृष्टौ इत्यर्थः। अरीरधत् असाधयत्, ("राध संसिद्धौ" इत्यस्मात् चौरादिकात् लुङि रूपम्)।

(१०) बुद्धिमद्भिः प्राज्ञैः। प्रयुक्तम् अनुष्ठितम्।

(११) अभ्युपैति प्राप्नोति।

मुखे निधाय स्निग्धदीर्घां (१२) दृष्टिम्, "आचष्टां (१३) भवान् आत्मीयचरितम्" इति आदिदेश।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते उत्तरपीठिकायाम् उपहारवर्मचरितं नाम तृतीय उच्छ्वासः।

---

## अथ चतुर्थोच्छ्वासः।

### अर्थपालचरितम्।

सोऽपि बद्धाञ्जलिः अभिदधे—"देव! सोऽहमपि एभिरेव सुहृद्भिः एककर्मा ऊर्मिमालिनेमिभूमिवलयं (१) परिभ्रमन् उपासरं कदाचित् काशीपुरीं वाराणसीम्। (२) उपस्पृश्य च मणिभङ्गनिर्मलाम्भसि मणिकर्णिकायाम् (३) अविमुक्तेश्वरं (४)

---

(१२) स्निग्धदीर्घां स्नेहपूर्णामायताञ्च।

(१३) आचष्टां ब्रवीतु।

इति तृतीयोच्छ्वासः।

---

(१) एककर्मा एकम् अभिन्नं, समानमित्यर्थः, कर्म भवदन्वेषणरूपमिति भावः, यस्य तथोक्तः, भवदन्वेषणार्थीत्यर्थः। ऊर्मीति।—ऊर्मीणां तरङ्गाणां, माला समूहः, अस्यास्तीति ऊर्मिमाली समुद्रः, स एव नेमिः सीमा यस्य तादृशं, ("नेमिस्तु चक्रधारायां सीमवर्त्मव्यवस्थयोः" इत्यजयः) भूमिवलयं भूमण्डलम्।

(२) उपासरम् अगच्छम्। वाराणसीम् असि-वरणानद्योर्मध्यवर्त्तिनीम्।

(३) उपस्पृश्य स्नात्वा। मणीति।—मणिभङ्गः रत्नच्छेदः, तद्वत् निर्मलम् अम्भो जलं यस्यास्तादृश्याम्। मणिकर्णिकायां तदाख्यतीर्थे इत्यर्थः।

(४) अविमुक्तेश्वरम् अविमुक्तं काशीक्षेत्रं, तस्य ईश्वरं काशीनाथमित्यर्थः।

भगवन्तम् अन्धकमथनम् (५) अभिप्रणम्य प्रदक्षिणं परिभ्रमन् पुरुषमेकम् आयामवन्तम् आयसपरिघपीवराभ्यां (६) भुजाभ्याम् आबध्यमानपरिकरम् अविरतरुदितोच्छूनताम्र-दृष्टिम् (७) अद्राक्षम्। अतर्कयञ्च—'कर्कशः (८) अयं पुरुषः, कार्पण्यम् इव (९) वर्षति म्लानतारं (१०) चक्षुः, आरम्भश्च साहसानुवादी, (११) नूनमसौ प्राणनिस्पृहः किमपि कृच्छ्रं प्रियजनव्यसनमूलं प्रपित्सते। (१२) तत् पृच्छेयम् एनम्, अस्ति चेत् ममापि कोऽपि साहाय्यदानाव-काशः' (१३) इति तम् एनम् अभ्युपपद्य अपृच्छं—'भद्र!

---

(५) अन्धकमथनम् अन्धकासुरनिसूदनम्।

(६) आयामवन्तम् आयतदेहमित्यर्थः। आयसेति।—आयसः अयः लौहं तन्निर्मितः, परिघः अर्गलः, ("अर्गलः स्यात् परिघः" इति वैजयन्ती) तद्वत् पीवरौ स्थूलौ, दृढौ इति यावत् ताभ्याम्।

(७) आबध्यमानेति।—आबध्यमानः आरभ्यमाणः, परिकरः कक्षाबन्धः येन तथाभूतम्, ("कक्षाबन्धः परिकरः" इति वैजयन्ती)। अविरतेति।—अविरतम् अविश्रान्तं यथा तथा, रुदितेन रोदनेन, उच्छूने स्फीते, ताम्रे रक्ते, दृष्टी नेत्रे यस्य तथाविधम्।

(८) कर्कशः परुषः, कठोराकार इत्यर्थः।

(९) कार्पण्यमिव दैन्यमिव।

(१०) म्लानतारं मलिनतारं, बाष्पाच्छन्नतया निष्प्रभकनीनिकमित्यर्थः। ("तारकाऽक्ष्णः कनीनिका" इत्यमरः)।

(११) आरम्भः अध्यवसायः। साहसानुवादी साहसम् अविमृश्य कर्मकर-णोत्साहविशेषः, तदनुवदति प्रकटयतीति तथाभूतः।

(१२) कृच्छ्रं कष्टम्, आत्मघातादिरूपं दुःखजनकं कर्मेत्यर्थः। प्रियजनस्य व्यसनं विपत्, तन्मूलं तन्निबन्धनमित्यर्थः। प्रपित्सते प्रपत्तुमिच्छति।

(१३) साहाय्यम् आनुकूल्यम्, सख्यमिति भावः, तस्य दाने अवकाशः अवसरः, प्रयोजनमिति यावत्।

सन्नाहः (१४) अयं साहसम् अवगमयति, (१५) न चेत् गोप्यम् इच्छामि श्रोतुं शोकहेतुम्' इति। स मां सबहुमानं निर्वर्ण्य 'को दोषः, श्रूयताम्' इति क्वचित् करवीरतले मया सह निषण्णः कथाम् अकार्षीत्।—

'महाभाग! सोऽहम् अस्मि पूर्वेषु कामचरः (१६) पूर्णभद्रो नाम गृहपतिपुत्रः, (१७) प्रयत्नसंवर्धितोऽपि पित्रा दैवच्छन्दानुवर्त्ती (१८) तु चौर्य्यवृत्तिः आसम्। अथास्यां काशीपुर्य्याम् अर्य्यवर्य्यस्य (१९) कस्यचित् गृहे चोरयित्वा रूपाभिग्राहितो (२०) बद्धः। वध्ये (२१) च मयि मत्तहस्ती मृत्युविजयो नाम हिंसाविहारी राजगोपुरोपरितलाधिरूढस्य पश्यतः कामपालनाम्नः उत्तमामात्यस्य शासनात् (२२)

---

(१४) सन्नाहः समुद्योगः, परिकरबन्धनं वा।

(१५) अवगमयति बोधयति।

(१६) पूर्वेषु पूर्वदेशेषु। कामचरः स्वेच्छाचारी। एकवाक्ये तु—पूर्वेषुकामः पूर्वदिग्वर्त्ती पुरभेदः, तत्र चरः।

(१७) गृहपतिपुत्रः सदा अन्नादिदानशीलगृहस्थपुत्रः।

(१८) दैवेति।—दैवस्य अदृष्टस्य, भाग्यस्येत्यर्थः, छन्दः आशयः, ("दैवं दिष्टं भागधेयं भाग्यम्" इति "छन्दोऽभिप्राय आशयः" इति चामरः) तम् अनुवर्त्तते अनुसरतीति तथाभूतः, दुर्भाग्यपरतन्त्र इत्यर्थः।

(१९) अर्य्यवर्य्यस्य वैश्यश्रेष्ठस्य, ("ऊरव्या ऊरुजाः अर्य्याः वैश्या भूमिस्पृशो विशः" इत्यमरः)।

(२०) रूपेति।—रूपेण नाणकेन, अपहृतमुद्राचिह्नितनिष्कादिधनेनेत्यर्थः, ("रूपमाकारसौन्दर्य्ये नाणकश्लोकयोरपि" इति शाश्वतः) अभिग्राहितः धारितः, राजपुरुषैरिति शेषः।

(२१) वध्ये हन्तव्ये, आसन्नवधदण्डे इति भावः।

(२२) राजेति।—राज्ञः गोपुरं पुरद्वारं, ("पुरद्वारन्तु गोपुरम्" इत्यमरः) तस्य उपरितलम् अधिरूढस्य उपरिस्थितस्येत्यर्थः। उत्तमामात्यस्य प्रधानसचिवस्य। शासनात् आदेशात्।

जनकण्ठरवद्विगुणितघण्टारवो मण्डलितहस्तकाण्डः समभ्यधावत्। (२३) अभिपत्य (२४) च मया निर्भयेण निर्भर्त्सितः परिणमन् दारुखण्डसुषिरानुप्रविष्टोभयभुजदण्डचण्डघटितप्रतिमानो (२५) भीतवत् न्यवर्त्तिष्ट। भूयश्च नेत्रा जातसंरम्भेण निकामदारुणैः वागङ्कुशपादपातैः अभिमुखीकृतः, (२६) मया अपि द्विगुणाबद्धमन्युना (२७) निर्भर्त्स्य अभिहतो (२८) निवृत्यापाद्रवत्। (२९) अथ मया निपत्य सरभसमाकृष्टो

(२३) जनेति।—जनानां युद्धदर्शनार्थमागतानामिति भावः, कण्ठरवेण कोलाहलेनेत्यर्थः, द्विगुणितः द्विरावृत्तः, वर्द्धित इति यावत्, घण्टायाः तस्य कण्ठविलम्बिन्या इति भावः, रवः ध्वनिः यस्य तथाभूतः। मण्डलितं घूर्णितं, हस्तकाण्डं शुण्डादण्डः येन तथाभूतः। समभ्यधावत् द्रुतं मत्समीपमागमदित्यर्थः।

(२४) अभिपत्य समुपेत्य।

(२५) निर्भर्त्सितः तर्जितः। परिणमन् तिर्य्यग्दन्तप्रहारं कुर्वन्, ("तिर्य्यग्दन्तप्रहारस्तु गजः परिणतो मतः" इति वैजयन्ती)। दारुखण्डेति।—दारुखण्डसुषिरे तत्र पतितकाष्ठखण्डविशेषस्य छिद्रे, अनुप्रविष्टेन अनुप्रवेशितेनेत्यर्थः, उभयभुजदण्डेन दण्डाकारभुजयुगलेन, महोद्योगेनेति भावः, चण्डं तीव्रं यथा तथा, घटितं संयोजितम्, आघातितमित्यर्थः, प्रतिमानं दन्तमध्यं यस्य तथाभूतः, ("दन्तयोरुभयोर्मध्यं प्रतिमानं प्रचक्षते" इति वैजयन्ती)।

(२६) नेत्रा नायकेन, हस्तिपालेनेत्यर्थः। जातसंरम्भेण जातकोपेन, हस्तिनः पलायनादिति भावः। निकामदारुणैः अतिनिष्ठुरैः। वागङ्कुशपादपातैः वाक् सङ्केतवचनम्, अङ्कुशः हस्तिशासनदण्डविशेषः, पादः चरणः, तेषां पातैः प्रयोगैः, मम विनाशार्थं वाक्तर्जनैः अङ्कुशप्रहारैः पादाघातैश्चेत्यर्थः। अभिमुखीकृतः मत्समीपमुपनीतः।

(२७) द्विगुणेति।—द्विगुणं यथा तथा, आबद्धः सञ्जातः, मन्युः क्रोधः यस्य तथाभूतेन, अतिक्रुद्धेनेत्यर्थः।

(२८) अभिहतः ताड़ितः।

(२९) अपाद्रवत् पलायिष्ट।

रुष्टश्च यन्ता—'हन्त ! ( ३० ) मृतोऽसि, क्व यासि ? कुञ्जराप-सद !' इति निशितेन वारणेन वारणं ( ३१ ) मुहुर्मुहुः अभिघ्नन् निर्याणभागे ( ३२ ) कथमपि मदभिमुखम् अकरोत्। अथ अवोचम्—'अपसरतु द्विरदकीट ( ३३ ) एषः। अन्यः कश्चित् मातङ्गपतिः ( ३४ ) आनीयतां, येन ( ३५ ) अहं मुहूर्त्तं विहृत्य ( ३६ ) गच्छामि गन्तव्यां गतिम्' ( ३७ ) इति। दृष्ट्वैव स मां रुष्टम् उद्गर्जन्तम् ( ३८ ) उत्क्रान्तयन्तृ-नियतनिष्ठुराङ्कुशः ( ३९ ) पलायिष्ट। मन्त्रिणा पुनः अहमाहूय अभ्यधायिषि ( ४० )—'भद्र ! मृत्युरिव मृत्युविजयो नाम

---

( ३० ) निपत्य समीपमागत्य। सरभसं सवेगम्, आक्रुष्टः तर्जितः, अत एव रुष्टः क्रुद्धः, मयीति शेषः। यन्ता आधोरणः, हस्तिपालक इत्यर्थः। हन्तेति कोपसूचकमव्ययम्।

( ३१ ) कुञ्जरापसद ! गजनिहीन ! गजाधम ! इत्यर्थः, ("निहीनो-ऽपसदो जाल्मः" इत्यमरः)। निशितेन तीक्ष्णेन। वारणेन गजनिवारणेन, अङ्कुशेन इत्यर्थः, ("वारणस्तु गजे प्रोक्तो वारणं तन्निवारणे" इत्यजयः)। वारणं गजेन्द्रम्।

( ३२ ) अभिघ्नन् ताडयन्। निर्याणभागे अपाङ्गदेशे, ("अपाङ्गदेशो निर्याणम्" इत्यमरः)।

( ३३ ) अपसरतु गच्छतु। द्विरदकीटः हस्तिकीटः, अयं हस्ती कीट इव मया गण्यते इति भावः।

( ३४ ) मातङ्गपतिः गजराजः।

( ३५ ) येन मातङ्गपतिना।

( ३६ ) विहृत्य क्रीडित्वा।

( ३७ ) गन्तव्यां अवश्याम्। गतिम् अवस्थाम्।

( ३८ ) स गजः। उद्गर्जन्तम् उच्चैर्नदन्तम्।

( ३९ ) उत्क्रान्तेति।—उत्क्रान्ता अपगता, यन्तुः नायकस्य, नियतनिष्ठुरा सततकठिना, आज्ञा येन तथाभूतः।

( ४० ) मन्त्रिणा कामपालेन। अभ्यधायिषि अभिहितः।

हिंसाविहारी, ( ४१ ) सोऽयमपि तावत् त्वया एवम्भूतः ( ४२ ) ज्ञातः। तद्विरम कर्मणोऽस्मात् मलीमसात्। ( ४३ ) किम् अलम् ( ४४ ) असि प्रतिपद्य अस्मान् आर्य्यवृत्त्या वर्त्तितुम् ?' ( ४५ ) इति। 'यथाऽऽज्ञापितोऽस्मि' इति विज्ञापितोऽयं ( ४६ ) मया मित्रवन्मयि प्रवर्त्तिष्ट। ( ४७ ) पृष्टश्च मया एकदा रहसि जातविस्रम्भेण अभाषत स्वचरितम्। ( ४८ )

'आसीत् कुसुमपुरे राज्ञो रिपुञ्जयस्य ( ४९ ) मन्त्री धर्मपालो नाम विश्रुतधीः श्रुतर्षिः। ( ५० ) अमुष्य पुत्त्रः सुमित्रो नाम पितेव समः प्रज्ञागुणेषु, तस्य अस्मि द्वैमातुरः ( ५१ ) कनीयान् भ्राताऽहम्। वेशेषु विलसन्तं ( ५२ )

( ४१ ) हिंसाविहारी हिंसया वधव्यापारेणेत्यर्थः, विहरति विचरतीति तथोक्तः।

( ४२ ) एवम्भूतः निर्जित इत्यर्थः।

( ४३ ) विरम निवर्त्तस्व। मलीमसात् मलिनात्, निन्दितचौर्य्यादित्यर्थः।

( ४४ ) अलं समर्थः।

( ४५ ) प्रतिपद्य आश्रित्य। आर्य्यवृत्त्या सद्व्यवहारेण। वर्त्तितुं स्थातुम्।

( ४६ ) अयं, मन्त्री कामपाल इति शेषः।

( ४७ ) प्रवर्त्तिष्ट अतिष्ठत्, व्यवाहरत इत्यर्थः।

( ४८ ) रहसि विजने। जातविस्रम्भेण सञ्जातविश्वासेन। अभाषत उवाच, कामपाल इति शेषः। स्वचरितं निजवृत्तान्तम्।

( ४९ ) रिपुञ्जयस्य शत्रुविजयिनः, राजहंसस्येति भावः।

( ५० ) विश्रुतधीः विश्रुता विख्याता, धीः प्रज्ञा यस्य तथोक्तः, अतिबुद्धिमान् इत्यर्थः। श्रुतर्षिः अधीतवेदः, ("श्रुतिस्तु वेदे आम्नायो ब्रह्मणि त्रिगम्बरे" इति वैजयन्ती)।

( ५१ ) द्वैमातुरः द्वयोर्मात्रोरपत्यं पुमानिति द्वैमातुरः वैमात्रेयः, परं ज्येष्ठस्य सुमित्रस्यैव माता प्रतिपालिका इत्यतो द्वैमातुरत्वमिति बोध्यम्।

( ५२ ) वेशेषु वेश्याजनाश्रयेषु। विलसन्तं विहरन्तम्।

माम् असौ विनयरुचिः (५३) अवारयत्। अवार्य्यदुर्नयः (५४) च अहम् अपसृत्य (५५) दिङ्मुखेषु भ्रमन् (५६) यदृच्छया (५७) अस्यां वाराणस्यां प्रमोदवने मदनदमनाराधनाय (५८) निर्गत्य सह सखीभिः कन्दुकेन अनुक्रीड़मानां (५९) काशीभर्त्तुः चण्डसिंहस्य कन्यां कान्तिमतीं नाम चकमे, कथमपि समगच्छे (६०) च। अथ छन्नम् (६१) विहरता कुमारीपुरे सा मया आसीत् आपन्नसत्त्वा, (६२) कञ्चित् सुतञ्च सुतवती। मृतजात इति सोऽपविद्धः तया (६३) रहस्यनिर्भेदभयात् परिजनेन क्रीड़ाशैले, अवर्ण्यां (६४) च श्मशानं नीतः। तया एव निवर्त्तमानया निशीथे राजवीथ्याम् आरक्षिकपुरुषैः अभिगृह्य तर्जितया दण्डपारुष्यभीतया निर्भिन्नं रहस्यम्। (६५) राजाज्ञया निशीथेऽहम् आक्रीड़-

(५३) असौ मदग्रजः। विनयरुचिः विनीतस्वभाव इत्यर्थः।

(५४) अवार्य्यदुर्नयः अनिवार्य्यदुश्चेष्ट इत्यर्थः।

(५५) अपसृत्य देशात् निःसृत्येत्यर्थः।

(५६) भ्रमन् पर्य्यटन्।

(५७) यदृच्छया स्वेच्छया।

(५८) प्रमोदवने क्रीड़ोद्याने। मदनदमनस्य हरस्य, आराधनाय पूजनाय।

(५९) कन्दुकेन गेण्डुकेन, "बल्" इति यस्य प्रसिद्धिः। अनुक्रीड़मानाम् अनुविहरन्तीम्।

(६०) कथमपि केनापि प्रकारेण। समगच्छे सङ्गतः अभवम्।

(६१) छन्नं निभृतम्।

(६२) आपन्नसत्त्वा अन्तःसत्त्वा, गर्भिणीत्यर्थः।

(६३) अपविद्धः परित्यक्तः। तया कान्तिमत्या इत्यर्थः।

(६४) अवर्ण्यां कयाचित् भिक्षुपत्न्या।

(६५) निवर्त्तमानया प्रत्यागच्छन्त्या। निशीथे अर्द्धरात्रे, ("अर्द्धरात्रनिशीथौ द्वौ" इत्यमरः)। राजवीथ्यां राजमार्गे। आरक्षिकपुरुषैः प्रहरिजनैः।

गिरिदरीगृहे विश्रब्धप्रसुप्तः तयोपदर्शितो यथोपपन्नरज्जुबद्धः (६६) श्मशानम् उपनीय मातङ्गेनोद्यतेन कृपाणेन प्राजिहीर्ष्ये। (६७) नियतिबलात् लूनबन्धः तमसिम् आच्छिद्य अन्त्यजं (६८) तम् अन्यांश्च कांश्चित् प्रहृत्य अपासरम्। अशरणश्च (६९) भ्रमन् अटव्याम् एकया उदश्रुमुख्या कयाऽपि दिव्याकारया सपरिचारया (७०) कन्यया उपस्थायिषि। (७१) सा माम् अञ्जलिकिसलयोत्तंसितेन मुखविलोलकुन्तलेन मूर्ध्ना (७२) प्रणम्य मया

अभिगृह्य धृत्वा। तर्जितया निर्भर्त्सितया। दण्डेति।—दण्डपारुष्यात् अयथने कठिनदण्डात्, भीतया। निर्भिन्नं प्रकाशितम्। रहस्यं गुप्तम्।

(६६) आक्रीडेति।—आक्रीडगिरिः क्रीडापर्वतः, तस्य दरी गुहा एव, गृहं तस्मिन्। विश्रब्धप्रसुप्तः निःशङ्कं निद्रितः। तया शवर्य्या। उपदर्शितः अयं स इति प्रदर्शितः। यथेति।—यथोपपन्नया यथाप्राप्तया, रज्ज्वा बद्धः संयमितः।

(६७) मातङ्गेन चण्डालेन, ("चण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमाः" इत्यमरः) उद्यतः वधार्थमुद्गृतः तेन। कृपाणेन असिना। प्राजिहीर्ष्ये प्रहर्त्तुमिष्टः, आराधकपुरुषैरिति शेषः।

(६८) नियतिबलात् दैववशात्। लूनबन्धः छिन्नबन्धनः। आच्छिद्य चण्डालहस्तादाकृष्येत्यर्थः। अन्त्यजं चण्डालम्।

(६९) अशरणः निराश्रयः।

(७०) उदश्रुमुख्या वाष्पप्लावितवदनया। दिव्याकारया स्वर्गीयाकारवत्या। सपरिचारया परिचारः परिचर्य्या, शुश्रूषा इत्यर्थः, अत्र तु लक्षणया तदुपकरणं प्रतीयते इति परिचर्य्योपकरणसमेतयेत्यर्थः। "सपरिवारया" इति पाठे तु परिजनसहितया इत्यर्थः।

(७१) उपस्थायिषि उपस्थानं गतोऽस्मि, सङ्गतिं प्राप्तोऽस्मीति यावत्

(७२) अञ्जलीति।—अञ्जलिः करद्वयसंयोगः एव, ("तौ युतावञ्जलिः पुमान्" इत्यमरः) किसलयः नवपल्लवः, तेन उत्तंसितेन अलङ्कृतेन। मुखेति।—मुखे विलोलाश्चञ्चलाः, कुन्तलाः केशाः यस्य तादृशेन। मूर्ध्ना शिरसा; शिरसि अञ्जलिं निधाय इति समुदितार्थः।

अथ वनवटद्रुमस्य कस्यापि महतः प्रच्छायशीतले (७३) तले निषण्णा, 'काऽसि वासु! कुतोऽस्यागता? कस्य हेतोः अस्य मे प्रसीदसि?' इति साभिलाषम् आभाषिता (७४) मया वाङ्मयं मधुवर्षम् अवर्षत्।

'आर्य्य! नाथस्य (७५) यक्षाणां मणिभद्रस्य अस्मि दुहिता तारावली नाम। साऽहं कदाचित् अगस्त्यपत्नीं लोपामुद्रां नमस्कृत्य अपावर्त्तमाना (७६) मलयगिरेः, परेतावासे (७७) वाराणस्याः कमपि दारकं (७८) रुदन्तम् अद्राक्षम। आदाय च एनं तीव्रस्नेहात् मम पित्रोः सन्निधिम् अनैषम्, अनैषोच्च मे पिता देवस्य अलकेश्वरस्य आस्थानीम्। (७९) अथ अहमाहूय आज्ञप्ता हरसखेन (८०)—'बाले! बालेऽस्मिन् कीदृशस्ते भावः?' (८१) इति। 'औरसे इव अस्मिन् वत्से वत्सलता' इति मया विज्ञापितः 'सत्यमाह वराकी' इति (८२) तन्मूलाम अतिमहतीं कथाम् अकरोत्। तत्र एतावन्मयाऽवगतं, त्वं किल शौनकः शूद्रकः कामपालश्च अभिन्नः। बन्धुमती विनयवती कान्तिमती च

(७३) प्रच्छायशीतलं प्रकृष्टच्छायाशीतले।

(७४) साभिलाषं सतृष्णम्। आभाषिता अभिहिता।

(७५) नाथस्य अधिपतेः।

(७६) अपावर्त्तमाना निवर्त्तमाना।

(७७) परेतावासे श्मशाने।

(७८) दारकं बालकम्।

(७९) अलकेश्वरस्य कुबेरस्य। आस्थानीं सभाम्।

(८०) हरसखेन शिवमित्रेण, धनपतिना कुबेरेणेत्यर्थः।

(८१) भावः अभिप्रायः, स्नेहः इति यावत्।

(८२) वराकी अनुकम्पार्हा।

(८३) शौनकः शूद्रकः कामपाल इत्यादि।—एकस्मिन् जन्मनि श

अभिन्ना ; वेदिमती आर्य्यदासी तारावली च एकैव ; हंसावली शूरसेना सुलोचना च अनन्या ; नन्दिनी रङ्गपताका इन्दुसेना च अपृथग्भूता। (८३) या किल शौनकावस्थायाम् अग्निसाक्षिकम् आत्मसात् कृता गोपकन्या, सा एव किल आर्य्यदासी, पुनश्च अद्य तारावल्यभूवम्। (८४) बालश्च किल शूद्रकावस्थे त्वयि आर्य्यदास्यवस्थायां मयि उदभूत्, (८५) अवर्द्धत च विनयवत्या स्नेहवासनया। स तु तस्यां कान्तिमत्यवस्थायाम् अद्योदभूत्। एवम् अनेकमृत्युमुखपरिभ्रष्टं दैवात् मया उपलब्धं तमेकपिङ्गादेशात् (८६) वने तपस्यतो राजहंसस्य देव्यै वसुमत्यै, तत्सुतस्य भाविचक्रवर्त्तिनो राजवाहनस्य परिचर्य्यार्थं समर्प्य गुरुभिः (८७) अभ्यनुज्ञाता कृतान्तयोगात् कृतान्तमुखपरिभ्रष्टस्य (८८) ते पादपद्मशुश्रूषार्थम् आगताऽस्मि’ इति।

श्रुत्वा ताम् अनेकजन्मरमणीम् असकृत् (८९) आश्लिष्य

---

शौनकनामा आसीः, तत्र बन्धुमती, वेदिमती, हंसावली, नन्दिनी इति चतस्रो भार्य्यास्तवाभूवन्। ततोऽन्यस्मिन् जनने त्वं शूद्रक आसीः, तत्र तव विनयवती, आर्य्यदासी, शूरसेना, रङ्गपताका इति चतस्रः भार्य्याः। अस्मिंश्च जनने त्वं कामपालनामाऽसि, अत्र तव कान्तिमती, तारावली, सुलोचना, इन्दुसेना इति चतस्रः।

(८४) गोपकन्या कस्यचित् गोपस्य दुहिता, वेदिमतीति यावत्, वेदिमती-आर्य्यदासी तारावलीनामभिन्नत्वादिति भावः। सैव गोपकन्या वेदिमती एव, तव शूद्रकावस्थायाम् आर्य्यदासी आसीत्, अद्य इदानीम्। सा तारावली नाम अहम्।

(८५) उदभूत उत्पन्नः।

(८६) तं बालकम्। एकपिङ्गादेशात् कुबेराज्ञया।

(८७) गुरुभिः पित्रादिभिः।

(८८) कृतान्तयोगात् दैववशात्। कृतान्तस्य यमस्य, मुखात् परिभ्रष्टः कथञ्चित् च्युतः तस्य, ("कृतान्तो यमसिद्धान्त-दैवाकुशलकर्मसु" इति विश्वः)।

(८९) असकृत् पुनः पुनः।

हर्षाश्रुमुखो मुहुर्मुहुः सान्त्वयित्वा तत्प्रभावदर्शिते महति मन्दिरे अहर्निशं भूमिदुर्लभान् (९०) भोगाननवभूवम्। द्वित्राणि दिनानि अतिक्रम्य मत्तकाशिनीं ताम् अवादिषं—'प्रिये! प्रत्यपकृत्य (९१) मत्प्राणद्रोहिणः चण्डसिंहस्य वैरनिर्यातनसुखम् अनुबुभूषामि' (९२) इति। तया सस्मितम् अभिहितम्—'एहि कान्त! कान्तिमतीदर्शनाय नयामि त्वाम्' इति स्थितेऽर्द्धरात्रे राज्ञो (९३) वासगृहम् अनीये। (९४) ततः तच्छिरोभागवर्त्तिनीम् आदाय असियष्टिं प्रबोध्य (९५) एनं प्रस्फुरन्तम् (९६) अब्रवम्—'अहमस्मि भवज्जामाता भवदनुमत्या विना तव कन्याऽभिमर्षी। (९७) तम् अपराधम् अनुवृत्त्या (९८) प्रमार्ष्टुम् आगतः' इति। सोऽतिभीतो माम् अभिप्रणम्य आह—'अहमेव मूढोऽपराद्धः, यस्तव दुहितृसंसर्गानुग्राहिणो ग्रहग्रस्त इव उत्क्रान्तसीमा (९९) समादिष्टवान् बधम्। तदास्तां कान्तिमती, राज्यमिदं,

(९०) भूमिदुर्लभान् मर्त्यलोकदुष्प्रापान्, स्वर्गीयानित्यर्थः।

(९१) प्रत्यपकृत्य प्रत्यपकारं कृत्वा।

(९२) अनुबुभूषामि अनुभवितुमिच्छामि।

(९३) स्थितेऽर्द्धरात्रे अर्द्धरात्रे समागते। राज्ञः चण्डसिंहस्य।

(९४) अनीये नीतः।

(९५) प्रबोध्य जागरयित्वा।

(९६) प्रस्फुरन्तं प्रकम्पमानम्।

(९७) कन्याभिमर्षी कन्याम् अभिमृष्टवान् स्पृष्टवानिति यावत्, कन्या-संसर्गी इत्यर्थः।

(९८) अनुवृत्त्या सेवया।

(९९) दुहित्रिति।—दुहित्रा सह संसर्गात् संसर्गं कृत्वा, अनुगृह्णातीति तादृशस्य, कृपया मद्दुहित्रा सङ्गतस्येत्यर्थः। ग्रहग्रस्त इव भूताविष्ट इव। उत्क्रान्तसीमा लङ्घितमर्यादः।

मम च जीवितमपि अद्य प्रभृति भवदधीनम्' इति। अथ अपरेद्युः प्रकृतिमण्डलं सन्निधाप्य (१००) विधिवत् आत्मजायाः पाणिम् अग्राहयत्। अश्रावयच्च तनयवार्त्तां तारावली कान्तिमत्यै, सुलोचनेन्द्रसेनाभ्याञ्च पूर्वजाति-वृत्तान्तम्। इत्थमहं मन्त्रिपदापदेशं यौवराज्यम् अनुभवन् विहरामि विलासिनीभिः' इति। (१)

स (२) एवं मादृशेऽपि (३) जन्तौ परिचर्य्यानुबन्धी (४) बन्धुरेकः सर्वभूतानाम् अलसकेन स्वर्गते श्वशुरे, (५) ज्यायसि (६) च श्याले (७) चण्डघोषनाम्नि स्त्रीषु अतिप्रसङ्गात् प्रागेव क्षयक्षीणायुषि (८) पञ्चवर्षदेशीयं सिंहघोषनामानं कुमारम् अभ्यषेचयत्, (९) अवर्द्धयच्च विधिना एनं स साधुः। तस्य

(१००) प्रकृतिमण्डलम् अमात्यादिवर्गम्। सन्निधाप्य समीपमानाय्य, समाहूय इति यावत्। "सन्निपात्य" इति पाठे—स एवार्थः।

(१) मन्त्रिपदापदेशम् अमात्यपदव्याजम्, अमात्यपदमिषेणेत्यर्थः। इति इत्थम् स्वचरितं कामपालः मया पृष्टोऽभाषतेत्यन्वयः।

(२) स कामपालः।

(३) मादृशेऽपि मत्सदृशेऽपि, अतिजाल्मेऽपि इति भावः।

(४) परिचर्य्यानुबन्धी सेवापरः।

(५) अलसकेन अजीर्णरोगविशेषेण, आलस्यकारिणा क्षयरोगेण इत्यर्थो वा, ("क्षयस्त्वलसको मतः" इति वैजयन्ती)। श्वशुरे चण्डसिंहे।

(६) ज्यायसि ज्येष्ठे।

(७) श्याले पत्नीभ्रातरि, ("श्यालाः स्युर्भ्रातरः पत्न्याः" इत्यमरः)।

(८) अतिप्रसङ्गात् अत्यासक्तेः। प्रागेव पूर्वमेव, पितुर्मरणादपि इति शेषः। क्षयेति।—क्षयेण क्षयरोगेण, क्षीणम् आयुर्जीवनकालो यस्य तादृशे।

(९) पञ्चवर्षदेशीयं पञ्चवर्षीयकल्पमित्यर्थः, प्रायेण पञ्चवर्षवयस्कमिति यावत्। कुमारं कनिष्ठश्यालम्। अभ्यषेचयत् अभिषिक्तमकारयत्। अलसकेन ज्यायसि श्याले च क्षयरोगेण स्वर्गते सति सः कामपालः कुमारम् अभ्यषेचयदित्यन्वयः।

अथ यौवनोन्मादिनः ( १० ) पैशुन्यवादिनो ( ११ ) दुर्मन्त्रिणः कतिचित् आसन् अन्तरङ्गभूताः। ( १२ ) तैः किलासौ इत्थम् अग्राह्यत ( १३ )—'प्रसह्यैव स्वसा तव अमुना भुजङ्गेन ( १४ ) सङ्गृहीता। पुनः प्रसुप्ते ( १५ ) राजनि प्रहर्त्तुम् उद्यतासिः ( १६ ) आसीत्, तेन अस्मै दैवात् तत्क्षणप्रबुद्धेन भीत्या अनुनीय दत्ता कन्या। तच्च देवज्येष्ठं चण्डघोषं विषेण हत्वा बालोऽयम् असमर्थं इति त्वमद्यापि प्रकृतिविश्रम्भणाय उपेक्षितः। क्षिणोति ( १७ ) च पुरा स कृतघ्नो भवन्तम्। तमेव अन्तकपुरम् अभिगमयितुं ( १८ ) यतस्व' इति। स तथा दूषितोऽपि ( १९ ) यवीयसीभयात् न अमुष्मिन् पापम् ( २० )

(१०) तत्र कुमारसिंहघोषस्य। यौवनोन्मादिनः यौवनेन उन्मत्तस्य।

(११) पैशुन्यवादिनः पैशुन्यं खलस्वभावं, वदन्ति प्रकटयन्तीति तथाभूताः, दुर्जना इत्यर्थः।

(१२) अन्तरङ्गभूताः आत्मीयस्वरूपाः।

(१३) अग्राह्यत अबोध्यत।

(१४) प्रसह्यैव बलपूर्वकमेव। स्वसा भगिनी, कान्तिमतीत्यर्थः। भुजङ्गेन विटेन, लम्पटेनेत्यर्थः, ("भुजङ्गो विटसर्पयोः" इत्यमरः)।

(१५) प्रसुप्ते निद्रिते।

(१६) प्रहर्त्तुं हन्तुं, त्वामिति शेषः। उद्यतासिः उद्धृतखड्गः।

(१७) देवज्येष्ठं देवस्य राज्ञः भवतः, ज्येष्ठम् अग्रजम्। प्रकृतिविश्रम्भणाय प्रकृतीनाम् अमात्यादीनां प्रजावर्गाणां वा विश्वासोत्पादनाय। उपेक्षितः अगणितः, न मारितः इत्यर्थः। क्षिणोति वधं नेष्यतीत्यर्थः। पुरा अचिरकालमध्ये इत्यर्थः, ["निकटागामिके पुरा" इत्यमरः। "यावत्पुरानिपातयोर्लट्" (३।३।४ पा०) इति पुराशब्दयोगात् भविष्यति लट्]।

(१८) अभिगमयितुं नेतुम्।

(१९) दूषितोऽपि भेदितोऽपि।

(२०) यवीयसीभयात् यवीयस्याः तारावल्याः भयात्। "यवीयसीप्रभावात्" इति पाठान्तरम्। अमुष्मिन् कामपाले। पापम् अनिष्टम्।

आचरितुम् अशक्नोत्। एषु किल दिवसेषु अयथापूर्वम् (२१) आकृतौ कान्तिमत्याः समुपलक्ष्य राजमहिषी सुलक्षणा नाम सप्रणयम् अपृच्छत्—'देवि! न अहम् अयाथातथ्येन विप्रलम्भनीया, (२२) कथय तथ्यं, केनेदम् अयथापूर्वम् आननारविन्दं तवैषु वासरेषु?' इति। सा तु अवादीत्—'भद्रे! स्मरसि किम् अद्यापि अयाथातथ्येन किञ्चिन्मया उक्तपूर्वम्? सखी मे तारावली सपत्नी च किमपि कलुषिताशया (२३) रहसि भर्त्रा मद्गोत्रापदिष्टा (२४) प्रणयमपि उपेक्ष्य (२५) प्रणम्यमानाऽपि अस्माभिः उपोढमत्सरा प्रावसत्, (२६) अवसीदति च नः पतिः, अतो मे दौर्मनस्यम्' (२७) इति। तत् प्रायेण एकान्ते सुलक्षणया कान्ताय कथितम्। अथ असौ निर्भयोऽस्य प्रियतमाविरहपाण्डुभिः अवयवैः धैर्यस्तम्भिताश्रुपर्याकुलेन (२८) चक्षुषा उष्णश्वासशोषिताभिरिव अनतिपेशलाभिः (२९) वाग्भिर्वियोगं दर्शयन्तं, (३०)

(२१) अयथापूर्वं पूर्वतो विपरीतं, विषादमिति भावः।

(२२) अयाथातथ्येन अयाथार्थ्येन, असत्यतया इत्यर्थः। विप्रलम्भनीया प्रतारणीया।

(२३) किमपि किञ्चिदित्यर्थः। कलुषिताशया मलिनिताभिप्राया, विरक्त-भावेत्यर्थः।

(२४) भर्त्रा कामपालेन। मद्गोत्रापदिष्टा मदीयनाम्ना समाहूता, ("गोत्रं नाम्न्यचले कुले" इत्यमरः)।

(२५) उपेक्ष्य अगणयित्वा।

(२६) उपोढमत्सरा प्ररूढविद्वेषा। प्रावसत् देशान्तरमगच्छत्।

(२७) अवसीदति अवसादं गच्छति। दौर्मनस्यं दुःखितचित्तत्वम्।

(२८) धैर्येति।—धैर्येण स्तम्भितैः रुद्धैः, अश्रुभिः पर्याकुलेन परितो व्याकुलेन।

(२९) उष्णेति।—उष्णश्वासैः दीर्घनिःश्वासैः, शोषिताभिरिव शुष्कीकृताभिरिव। अनतिपेशलाभिः अनतिमनोज्ञाभिः, शुष्कत्वेन कार्कश्यादिति भावः।

कथमपि राजकुले कार्य्याणि कारयन्तं पूर्वसङ्केतितैः (२१) पुरुषैः अभिग्राह्य अबन्धयत्। तत्र किल स्थानस्थानेषु दोषान् उद्घोष्य तयोरुद्धरणीये चक्षुषी, यथा तन्मूलम् एव अस्य मरणं भवेदिति। अतोऽत्र एकान्ते यथेष्टम् अश्रु मुक्त्वा तस्य साधोः पुरः प्राणान् मोक्तुकामो बध्नामि परिकरम्' इति। (२२)

मया अपि तत् पितृव्यसनम् आकर्ण्य पर्य्यश्रुणा (२३) सोऽभिहितः,—'सौम्य! किं तव गोपायित्वा? यः तस्य सुतो यश्चकान्यया देवस्य राजवाहनस्य पादशुश्रूषार्थं देव्या वसुमत्या हस्ते न्यासः (२४) कृतः, सोऽहमस्मि। शक्ष्यामि सहस्रमपि सुभटानाम् उदायुधानां (२५) हत्वा पितरं मोचयितुम्। अपि तु सङ्कुले (२६) यदि कश्चित् पातयेत् तदङ्गे शस्त्रिकां, सर्वं एव मे यत्नो भस्मनि हुतमिव भवेत्' इत्यनवसितवचने एव (२७) मयि महान् आशीविषः प्राकाररन्ध्रेण उदैरयत् (२८) शिरः। तमहं मन्त्रौषधबलेन अभिगृह्य पूर्णभद्रम् अब्रवं—'भद्र! सिद्धं नः समीहितम्, (२९)

(२०) वियोगं विरहम्। दर्शयन्तं प्रकटयन्तम्।

(२१) पूर्वसङ्केतितैः प्राक्शिक्षितैः।

(२२) स्थानस्थानेषु स्थानात् स्थानान्तरेषु विविधस्थानेषु इत्यर्थः। उद्धरणीये उत्पाटनीये। इति, इत्यन्तं पूर्णभद्रवचनम्।

(२३) पर्य्यश्रुणा गलदश्रुणेव।

(२४) हस्ते न्यासः हस्ते निक्षेपः।

(२५) सुभटानां सुवीराणाम्। उदायुधानाम् उद्यतशस्त्राणाम्।

(२६) सङ्कुले जनसम्बाधे इत्यर्थः।

(२७) अनवसितवचने एव असमाप्तवाक्ये एव।

(२८) आशीविषः सर्पः, ("आशीविषो विषधरः" इत्यमरः)। प्राकाररन्ध्रेण प्राचीरच्छिद्रेण। उदैरयत् ऊर्ध्वमकरोत्।

(२९) समीहितं वाञ्छितम्।

अनेन तातम् अलक्ष्यमाणः सङ्कुले यदृच्छया पातितेन नाम दंशयित्वा तथा विषं स्तम्भयेयं, यथा मृत इत्युदास्येत। (४०) त्वया तु मुक्तसाध्वसेन (४१) माता मे (४२) बोधयितव्या, 'यो यक्ष्या वने देव्या वसुमत्या हस्तार्पितो युष्मत्सूनुः, सोऽनुप्राप्तः पितुरवस्थां मत्त उपलभ्य (४३) बुद्धिबलात् इत्थम् आचरिष्यति। त्वया तु मुक्तत्रासया (४४) राज्ञे प्रेषणीयम्, (४५) 'एष खलु क्षत्रधर्मः, यत बन्धुः अबन्धुः वा दुष्टः, स निरपेक्षं निग्राह्यः (४६) इति। स्त्रीधर्मश्च एषः यत् अदुष्टस्य दुष्टस्य वा भर्त्तुर्गतिर्गन्तव्येति। तत् अहम् अमुना एव सह चिताग्निमारोक्ष्यामि। युवतिजनानुकूलः पश्चिमो (४७) विधिः अनुज्ञातव्यः' इति। स एवं निवेदितो नियतम् अनुज्ञास्यति। ततः स्वमेव अगारम् आनीय काण्डपटीपरिक्षिप्ते विविक्तोद्देशे दर्भसंस्तरणम् अधिशाय्य स्वयं कृतानुमरणमण्डनया (४८) त्वया च तत्र सन्निधेयम्। (४९)

(४०) उदास्येत उपेक्ष्येत।

(४१) मुक्तसाध्वसेन निर्भयेण।

(४२) माता मे कान्तिमतीत्यर्थः।

(४३) मत्तः मत्सकाशात्। उपलभ्य विदित्वा।

(४४) मुक्तत्रासया व्यक्तशङ्कया।

(४५) प्रेषणीयं सन्देष्टव्यं, वाचिकमिति शेषः।

(४६) निरपेक्षं निरनुरोधम्। निग्राह्यः दण्डनीयः।

(४७) युवतिजनानुकूलः तरुणीजनोचितः। "अभिजनानुरूपः" इति पाठे —अभिजनस्य कुलस्य, अनुरूपः योग्य इत्यर्थः। पश्चिमः चरमः।

(४८) काण्डेति।—काण्डपटी तिरस्करिणी, तया परिक्षिप्ते आवृते। विविक्तोद्देशे निर्जनप्रदेशे। दर्भसंस्तरणं कुशशयनम्। अधिशाय्य शाययित्वा। स्वयम् आत्मना। कृतेति।—कृतम् अनुमरणमण्डनं सहगमनभूषणं यया तथाभूतया।

(४९) सन्निधेयम् उपस्थातव्यम्।

अहन्तु बाह्यकक्षागतः (५०) त्वया प्रवेशयिष्ये। ततः पितरम् उज्जीव्य तदभिरुचितेन (५१) अभ्युपायेन चेष्टिष्यामहे' इति।

स (५२) तथेति हृष्टतरः तूर्णम् अगमत्। अहन्तु घोषणास्थाने चिञ्चावृक्षं (५३) घनतरविपुलशाखम् आरुह्य गूढतनुः अतिष्ठम्। आरूढश्च लोको यथायथम् उच्चैः स्थानानि, उच्चावचप्रलापाः प्रस्तुताः। (५४) तावच्च पितरं तस्करम् इव पश्चाद्बद्धभुजम् उद्धुरध्वनि महाजनानुयातम् आनीय मदभ्याशे एव (५५) स्थापयित्वा मातङ्गः त्रिः (५६) अघोषयत्—'एष मन्त्री कामपालो राज्यलोभात् भर्त्तारं चण्डसिंहं युवराजं चण्डघोषञ्च विषान्नेन उपांशु (५७) हत्वा, पुनः देवोऽपि सिंहघोषः पूर्णयौवन इति अस्मिन् पापम् आचरिष्यन् विश्वासात् रहस्यभूमौ (५८) पुनः अमात्यं शिवनागम् आहूय स्थूणम् अङ्गारवर्षञ्च राजवधाय उपजप्य (५९)

(५०) बाह्यकक्षागतः बाह्यकक्षा बहिःप्रकोष्ठं, गतः उपस्थितः, ("कक्षा प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने" इत्यमरः)।

(५१) उज्जीव्य प्राणयित्वा। तदभिरुचितेन तदनुमतेन।

(५२) स पूर्णभद्रः।

(५३) घोषणास्थाने श्लोकामुखैः प्रख्यापनस्थले। चिञ्चावृक्षं तिन्तिडीवृक्षम्।

(५४) उच्चावचप्रलापाः नानाविधा आलापाः, ("उच्चावचं नैकभेदम्" इत्यमरः) उच्चनीचप्रलापा वा। प्रस्तुताः प्रक्रान्ताः।

(५५) उद्धुरध्वनि उद्धुरः दृढः, प्रगाढः इत्यर्थः, ध्वनिः कलकलशब्दः यत्र तद्यथा तथा। मदभ्याशे एव मत्समीपे एव।

(५६) मातङ्गः चाण्डालः। त्रिः त्रिवारम्। ["द्वित्रिचतुर्भ्यः सुच्" (५।४।१८ पा०) इति सुच्-प्रत्ययः]।

(५७) उपांशु रहसि।

(५८) रहस्यभूमौ निभृतप्रदेशे।

(५९) स्थूणमङ्गारवर्षं च तन्नामकौ राजानुचरौ। उपजप्य भेदयित्वा।

तैः स्वामिभक्त्या विवृतगुह्यः (६०) 'राज्यकामुकस्य अस्य ब्राह्मणस्य अन्धतमसप्रवेशो न्याय्यः' (६१) इति प्राड्विवाक-वाक्यात् अभ्युद्धरणाय (६२) नीयते। पुनः अन्योऽपि यदि स्यात् अन्यायवृत्तिः, (६३) तमपि एवमेव यथार्हेण दण्डेन योजयिष्यति देवः' इति। श्रुत्वैतद्दृढकालकले महाजने पितु-रङ्के प्रदीप्ताग्निरसम् आशीविषं व्यक्षिपम्। अहञ्च भीतो नाम अवप्लुत्य (६४) तत्रैव जनादनुलीनः (६५) क्रुद्धव्याल-दष्टस्य तातस्य विच्छिन्नजीवरश्मेः (६६) विषं क्षणात् अस्तम्भ-यम्। (६७) अपतच्च स भूमौ मृतकल्पः। प्रालपच्च—'सत्य-मिदं, राजावमाननं दैवो दण्ड एव स्पृशतीति, यत् अयम् अक्षिभ्यां विना अवनिपेन चिकीर्षितः, (६८) प्राणैः एव वियोजितो विधिना' इति। मतुलाश्च केचित् अन्यमन्यन्त,

(६०) तैः श्रवणनागादिभिः। विवृतगुह्यः प्रकाशितरहस्यः।

(६१) अन्धतमसप्रवेशः अन्धतमसं गाढान्धकारं, तस्मिन् प्रवेशः। न्याय्यः विचारसिद्धः।

(६२) प्राड्विवेकवाक्यात् विचारपतिवचनात्, ("द्रष्टरि व्यवहाराणां प्राड्विवाकाक्षदर्शकौ" इत्यमरः)। अभ्युद्धरणाय नेत्रोत्पाटनाय।

(६३) अन्यायवृत्तिः दुराचारः।

(६४) भीतः नास्मिन्लोके मिथ्याभीत इत्यर्थः। अवप्लुत्य सिंहासनादवतीर्य।

(६५) जनात् जनमाश्रित्य, (ल्यब्लोपे पञ्चमी), अनुलीनः अन्तर्भूतः इत्यर्थः, जनताऽन्तर्गत इति यावत्। "जनानुलीनः" इति पाठान्तरम्; तत्र जनेषु अनुलीनः।

(६६) विच्छिन्नेति।—विच्छिन्ना कृता, विषसम्पर्कनादिनेति भावः, जीवस्य जीवनस्य, रश्मिः येन तथाभूतः।

(६७) अस्तम्भयं बद्धमकरवम्।

(६८) अक्षिभ्यां विना चक्षुर्विहीनः। अवनिपेन राज्ञा। चिकीर्षितः कर्तुमिष्टः।

अपरे पुनः निनिन्दुः। दर्वीकरस्तु (६९) तमपि चण्डालं दृष्ट्वा रूढ़त्रासद्रुतलोकदत्तमार्गः (७०) प्राद्रवत।

अथ मदस्वा पूर्णभद्रबोधितार्था तादृशेऽपि व्यसने नातिविह्वला (७१) कुलपरिजनानुयाता पद्भ्याम् एव धीरम् आगत्य मत्पितुः उत्तमाङ्गम् उत्सङ्गेन धारयन्ती आसित्वा राज्ञे समदिशत् (७२)—'एष मे पतिः तवापकर्त्ता न वेति दैवमेव जानाति, न मेऽनया अस्ति चिन्तया फलम्; अस्य तु पाणिग्राहकस्य गतिम् अननुपपद्यमाना (७३) भवत्कुलं कलङ्कयेयम्, (७४) अतोऽनुमन्तुम् अर्हसि भर्त्रा सह चिताऽधिरोहणाय माम्' इति। श्रुत्वा चैतत् प्रीतियुक्तः समादिक्षत् (७५) क्षितीश्वरः 'क्रियतां कुलोचितः संस्कारः, उत्सवोत्तरश्च पश्चिमं विधिसंस्कारम् अनुभवतु मे भगिनीपतिः' इति। चण्डाले तु मत्प्रतिषिद्धसकलमन्त्रवादिप्रयासे संस्थिते (७६) कामपालोऽपि कालदष्ट एवेति स्वभवनोपनयनम् (७७) अमुष्य स्वमाहात्म्यप्रकाशनाय महीपतिः अन्व-

(६९) दर्वीकरः सर्पः।

(७०) रूढ़ेति।—रूढ़ेन जातेन, त्रासेन; द्रुतैः पलायितैः, लोकैः दत्तः मार्गो यस्मै तथाभूतः।

(७१) नातिविह्वला नातिकातरा।

(७२) धीरं मन्दम्। आसित्वा उपविश्य। समदिशत् सन्देशं वाचिकं प्रेरितवतीत्यर्थः।

(७३) पाणिग्राहकस्य भर्तुः। अननुपपद्यमाना अननुगच्छन्ती।

(७४) कलङ्कयेयं कलङ्कितं कुर्य्याम्।

(७५) समादिक्षत् समादिशत्।

(७६) मदिति।—मया प्रतिषिद्धः मन्त्रबलेन निवारितः, सकलानां मन्त्रवादिनां मान्त्रिकाणां, प्रयासो यस्मिन् तादृशे, अत एव संस्थिते मृते।

(७७) स्वभवनोपनयनं स्वगृहप्रापणम्।

मंस्त। (७८) आनीतश्च पिता मे विविक्तायां भूमौ दर्भशय्याम् अधिशय्य (७९) स्थितोऽभूत्। अथ मदम्बा मरणमण्डनम् अनुष्ठाय सकरुणं सखीरामन्त्र्य, मुहुः अभिप्रणम्य भवनदेवताः, यत्ननिवारितपरिजनाक्रन्दिता पितुर्मे शयनस्थानम् एकाकिनी प्राविशत्। तत्र च पूर्वमेव पूर्णभद्रोपस्थापितेन मया वैनतेयतां (८०) गतेन निर्विषीकृतं भर्त्तारम् ऐक्षत। हृष्टतमा पत्युः पादयोः पर्य्यश्रुमुखी प्रणिपत्य माञ्च मुहुर्मुहुः प्रस्नुतस्तनी परिष्वज्य सहर्षबाष्पगद्गदम् अगदत्—'पुत्र! मयाऽसि जातमात्रः पापया परित्यक्तः, स किमर्थमेवं माम् अतिनिर्घृणाम् अनुगृह्णासि? अथवैष निरपराध एव ते जनयिता, युक्तमस्य प्रत्यानयनम् अन्तकाननात्। (८१) क्रूरा खलु तारावली, या त्वाम् उपलभ्यापि तत्त्वतः कुबेरात् असमर्प्य मह्यम् अर्पितवती देव्यै वसुमत्यै। नैव वा सदृशकारिणी, न हि तादृशात् भाग्यराशेः (८२) विना मादृशो जनोऽल्पपुण्यः तवार्हति कलप्रलापामृतानि कर्णाभ्यां पातुम्; एहि मां परिष्वजस्व' इति भूयो भूयः शिरसि जिघ्रन्ती, अङ्कम् आरोपयन्ती, तारावलीं गर्हयन्ती, आलिङ्गयन्ती, अश्रुभिः अभिषिञ्चन्ती च उत्कम्पिताङ्गयष्टिः अन्यादृशीव क्षणम् अजनिष्ट। जनयिताऽपि मे नरकादिव स्वर्गं तादृशात् व्यसनात्तथाभूतम् अभ्युदयम्

(७८) अन्वमंस्त अनुमेने।

(७९) दर्भशय्यां कुशास्तरणम्। अधिशय्य शयित्वा। "अधिशाय्य" इति केचित्।

(८०) वैनतेयतां गरुडतां, गारुडविद्यावित्त्वमिति यावत्।

(८१) अन्तकाननात् मृत्युमुखात्।

(८२) सदृशकारिणी अनुरूपकारिणी। भाग्यराशेः सौभाग्यपूर्णजनादित्यर्थः।

आरूढ़ः पूर्णभद्रेण च विस्तरेण यथावृत्तान्तमावेदितो भगवतो मघवतोऽपि (८३) भाग्यवन्तमात्मानम् अजीगणत्। मनागिव च मत्सम्बन्धम् आख्याय हर्षविस्मितात्मनोः पित्रोः अकथयम्—'आज्ञापयतं काऽद्य नः प्रतिपत्तिः?' (८४) इति। पिता मे आब्रवीत्—'वत्स! गृहमेव इदम् अस्मदीयम् अतिविशालशालवलयम् अक्षय्यायुधस्थानम्, (८५) अलङ्घ्यतमा (८६) च गुप्तिः, (८७) उपक्रान्ताश्च मयाऽतिबहवः सन्ति सामन्ताः, प्रकृतयश्च भूयस्यो न मे व्यसनम् अनुरुध्यन्ते, (८८) सुभटानाञ्च (८९) अनेकसहस्रम् अस्त्येव ससुहृत्पुत्त्रदारम्। अतोऽत्रैव कतिपयानि अहानि स्थित्वा बाह्याभ्यन्तरङ्गान् (९०) कोपान् उत्पादयिष्यामः। कुपितांश्च उपसङ्गृह्य प्रोत्साह्य हि अस्य प्रकृत्यमित्रान्, उत्थाप्य सहजांश्च द्विषः, (९१)

---

(८३) मघवतोऽपि इन्द्रादपि।

(८४) प्रतिपत्तिः इतिकर्तव्यता।

(८५) अब्रवीत्।—अतिविशालः अत्युन्नतः, शालः प्राकारः, ("प्राकारो वरणः सालः" इत्यमरः) वलयं वेष्टनं यस्य तथाभूतम्। अक्षय्यायुधस्थानम् अविनश्वरास्त्राश्रयं, प्रभूतास्त्रपूर्णमित्यर्थः।

(८६) अलङ्घ्यतमा अतिशयेन लङ्घयितुमशक्या।

(८७) गुप्तिः संवरणं, गृहस्य रक्षाविधानमित्यर्थः।

(८८) सामन्ताः समन्तायाः स्वदेशाव्यवहितभूमेः ईशे राजानः सामन्ताः स्वदेशानन्तरराजानः। प्रकृतयः प्रधानपुरुषाः। भूयस्यः बह्व्यः। व्यसनम् अनिष्टम्। अनुरुध्यन्ते अभिरुन्धन्ति, अनुमोदन्ते इत्यर्थः।

(८९) सुभटानां महावीराणाम्।

(९०) बाह्याभ्यन्तरङ्गान् बहिरङ्गान् आभ्यन्तरङ्गांश्च।

(९१) अस्य राज्ञः। प्रकृत्यमित्रान् प्राकृतशत्रून्, विषयानन्तरवर्तिनृपान् इत्यर्थः। उत्थाप्य उत्तोल्य, उद्बोध्येत्यर्थः। सहजान् स्वाभाविकान्, द्विषः शत्रून्, पितृव्यपुत्रादीनित्यर्थः।

दुर्दान्तम् एनम् (९२) उच्छेत्स्याम:' इति। 'को दोष:, तथाऽस्तु' इति तातस्य मतमन्वमंसि। (९३)

तथा अस्मासु प्रतिविधाय तिष्ठत्सु, राजाऽपि विज्ञापितोदन्तो (९४) जातानुताप: पारग्रामिकान् प्रयोगान् (९५) प्राय: प्रायुङ्क्त। (९६) ते च अस्माभि: प्रत्यहम् अहन्यन्त। (९७) अस्मिन्नेव अवसरे पूर्णभद्रमुखाच्च राज्ञ: शय्यास्थानम् अवगम्य तदैव स्वोदवसितभित्तिकोणात् (९८) आरभ्य उरगास्येन (९९) सुरङ्गाम् अकार्षम्। गता च सा भूमिस्वर्गकल्पम् अनल्पकन्यकाजनं (१००) कमपि उद्देशम्। (१) अव्यथिष्ट च दृष्ट्वैव स मां नारीजन:। तत्र काचित् इन्दुलेखेव स्वलावण्येन रसातलान्धकारं निह्नुवाना, (२) भूमिरिव विग्रहिणी, हरगृहिणीव असुरविजयाय अवतीर्णा, (३)

(९२) दुर्दान्तं दुर्विनीतम्। एनं सिंहघोषम्।

(९३) अन्वमंसि अनुमोदितवान्।

(९४) विज्ञापितोदन्त: लोकैर्ज्ञापितवृत्तान्त:।

(९५) पारग्रामिकान् परग्रामे परराज्ये भवा: पारग्रामिका: तान् परराष्ट्रीयान्। प्रयोगान् विविधविनाशोपायानिति यावत्।

(९६) प्रायुङ्क्त अस्मान् प्रति प्रयुक्तवान्।

(९७) अहन्यन्त नाशिता:, व्यर्थीकृता इत्यर्थ:।

(९८) स्वोदवसितेति।—स्वस्य आत्मन:, उदवसितं गृहं, ("गृहं गेहोदवसितं वेश्म सद्म निकेतनम्" इत्यमर:) तस्य भित्तिकोणात् कुड्यप्रदेशात्।

(९९) उरगास्येन सर्पमुखाकृतिखननास्त्रेण।

(१००) सा सुरङ्गा। भूमिस्वर्गकल्पं भूतलस्थितस्वर्गसदृशम्। अनल्पेति।—अनल्प: बहुल:, कन्यकाजन: यस्मिन् तथोक्तम्।

(१) उद्देशं स्थानम्।

(२) निह्नुवाना अपनयन्ती, निराकुर्वतीत्यर्थ:।

(३) विग्रहिणी मूर्त्तिमती।। हरगृहिणीव गौरीव। असुराणां विजयाय अवतीर्णा।

पातालम् आगता गृहिणीव भगवतः कुसुमधन्वनः, राजलक्ष्मीः इव अनेककुनृपतिदर्शनपरिहाराय महीविवरं प्रविष्टा; निष्टप्तकनकपुत्त्रिका इव अवदातकान्तिः (४) कन्यका चन्दनलता इव मलयमारुतेन मद्दर्शनेन उदकम्पत। (५) तथाभूते च तस्मिन् अङ्गनासमाजे (६) कुसुमितेव (७) काशयष्टिः पाण्डुशिरसिजा स्थविरा (८) काचित् चरणयोर्मे निपत्य त्रासदीनम् (९) अब्रूत—'दीयताम् अभयदानमस्मै अनन्यशरणाय (१०) स्त्रीजनाय। किमसि देवकुमारो दनुजयुद्धतृष्णया (११) रसातलं विविक्षुः? आज्ञापय कोऽसि? कस्य हेतोः आगतोऽसि?' इति। सा तु मया प्रत्यवादि—'मास्म सुदत्यः! भैषुः; (१२) अहमस्मि द्विजातिवृषात् (१३) कामपालात् देव्यां कान्तिमत्याम् उत्पन्नोऽर्थपालो नाम। सत्यर्थे (१४) निजगृहात् नृपगृहं

(४) निष्टप्तेति।—निष्टप्ता ज्वलन्ती, कनकपुत्त्रिकेव काञ्चनपुत्तलिकेव। अवदाता उज्ज्वला, कान्तिः यस्यास्तथाभूता।

(५) उदकम्पत उच्चैरकम्पत।

(६) तथाभूते व्यथमाने इति भावः। अङ्गनासमाजे नारीसमूहे।

(७) कुसुमितेव सञ्जातपुष्पेव।

(८) पाण्डुरिति।—पाण्डवः शुभ्राः, शिरसिजाः केशा यस्यास्तथाभूता। स्थविरा वृद्धा।

(९) त्रासदीनं भयवैक्लव्यम्।

(१०) अनन्यशरणाय नास्ति अन्यत् शरणं रक्षिता यस्य तादृशाय, ("शरणं गृहरक्षित्रोः" इत्यमरः)।

(११) दनुजेति।—दनुजैः दानवैः, पातालवासिभिरिति भावः, सह यत् युद्धं तस्य तृष्णया वाञ्छया।

(१२) सुदत्यः! शोभनदन्ताः! इति स्त्रीणां सम्बोधनम्। भैषुः भीता भवत।

(१३) द्विजातिवृषात् द्विजश्रेष्ठात्।

(१४) सत्यर्थे प्रयोजने सति।

सुरङ्गया उपसरन् इहान्तरे (१५) वो दृष्टवान्, कथयत काः स्थ यूयम् ? कथमिह निवसथ ?' इति।

सा उदञ्जलिः (१६) उदीरितवती—'भर्तृदारक ! भाग्यवत्यो वयं, याः त्वाम् एभिरेव चक्षुर्भिः अनघम् (१७) अद्राक्ष्म। श्रूयतां, यस्तव मातामहः चण्डसिंहः, तेन अस्यां देव्यां लीलावत्यां चण्डघोषः कान्तिमतीति अपत्यद्वयम् उदपादि। चण्डघोषस्तु युवराजोऽत्यासङ्गात् अङ्गनासु राजयक्ष्मणाऽसुचयम् अगात् अन्तर्वत्न्यां देव्याम् आचारवत्याम्। (१८) अमुया (१९) च इयं मणिकर्णिका नाम कन्या प्रसूता। अथ प्रसववेदनया मुक्तजीविता आचारवती पत्युरन्तिकम् (२०) अगमत्। अथ देवः चण्डसिंहो माम् आहूय उपह्वरे (२१) समाज्ञापयत्—'अर्हिमति ! कन्यका इयं कल्याणलक्षणा, ताम् इमां मालवेन्द्रनन्दनाय (२२) दर्पसाराय विधिवत् वर्द्धयित्वा दित्सामि, (२३) बिभेमि च कान्तिमतीवृत्तान्तात् आरभ्य कन्यकानां प्रकाशावस्थापनात्,

(१५) उपसरन् गच्छन्। इह अन्तरे अस्मिन् अवकाशे।

(१६) उदञ्जलिः उन्नमिताञ्जलिः।

(१७) अनघम् अपापम्।

(१८) राजयक्ष्मणा क्षयेण। असुचयं प्राणनाशम्। "सुरचयम्" इति पाठे—सुरचयं देवगृहं, स्वर्गमित्यर्थः, ("चयो रोगान्तरे वेश्म-कल्यान्तापचयेषु च" इति विश्वः)। अन्तर्वत्न्यां गर्भवत्याम्। आचारवत्यां तदाख्यायां स्वनुषायाम्।

(१९) अमुया आचारवत्या।

(२०) मुक्तजीविता त्यक्तप्राणा। पत्युरन्तिकं समीपं, स्वर्गमित्यर्थः।

(२१) उपह्वरे रहसि।

(२२) मालवेन्द्रो मालवराजः, तस्य नन्दनः पुत्रः तस्मै।

(२३) वर्द्धयित्वा वृद्धिं प्रापय्य, प्रतिपादय इत्यर्थः। दित्सामि दातुमिच्छामि।

अत इयम् अरातिव्यसनाय कारिते (२४) महति भूमिगृहे कृत्रिमशैलगर्भोत्कीर्णनानामण्डपप्रेक्षागृहे प्रचुरपरिवर्हया(२५) भवत्या संवर्द्ध्यताम्। (२६) अस्त्यत्र भोग्यवस्तु वर्षशतेनापि अक्षय्यम्' (२७) इति। स तथोक्ता निजवासगृहस्य अङ्गन-भित्तौ अर्द्धपादं किष्कुविष्कम्भम् उद्धृत्य (२८) तेनैव द्वारेण स्थानम् इदम् अस्मान् अवीविशत्। (२९) इह च नो वसन्तीनां द्वादश समाः समत्ययुः। (३०) इयञ्च वत्सा तरुणीभूता, न च अद्यापि स्मरति राजा, काममियं पिता-महेन दर्पसाराय सङ्कल्पिता, (३१) त्वदम्बया कान्तिमत्या च

(२४) अरातिव्यसनाय शत्रुभ्यः विपत्परित्राणायेत्यर्थः। कारिते सम्पादिते। "व्यसनापसारिते" इति पाठे—व्यसनाय व्यसननिवारणार्थम्, अपसारिते आच्छादिते, गुप्ते इत्यर्थः।

(२५) कृत्रिमेति।—कृत्रिमः यः शैलः, अवस्य इति भावः, तस्य गर्भे मध्ये, उत्कीर्णानि रचितानि, नाना बहुविधानि, मण्डपानि प्रेक्षागृहाणि नृत्य-शालाश्च यस्मिन् तादृशे, ("प्रेक्षा नृत्येक्षणं प्रज्ञा" इत्यमरः)। प्रचुरपरिवर्हया प्रभूतपरिच्छदया।

(२६) संवर्द्ध्यतां प्रतिपाल्यताम्।

(२७) अक्षय्यं चेतुमशक्यम्।

(२८) निजवासगृहस्य निजवासभवनस्य। अङ्गनभित्तौ अङ्गनप्रदेशे, ("भित्तिः कुड्यप्रदेशयोः" इति मेदिनी)। "अङ्गनभित्तौ" इत्यत्र "द्वाङ्गुलभित्तौ" इति पाठे—अङ्गुलिद्वयपरिमितभित्तौ। अर्द्धपादम् अर्द्धेन सहितं पादं चतुर्थांशं, हस्तमितद्वारस्य भागत्रयमित्यर्थः। किष्कुविष्कम्भं हस्तमितं प्रतिबन्धं, हस्तमितं द्वारमित्यर्थः, ("किष्कुर्हस्ते वितस्तौ च" इत्यमरः। "विष्कम्भो योगभेदे स्यात् विस्तारप्रतिबन्धयोः" इति मेदिनी)। यद्वा—चमकोष्ठकारमितं विष्कम्भमावरणकाष्ठम्। उद्धृत्य उन्मोच्य।

(२९) अस्मान् नः, मत्प्रभृतीन् कन्याजनानित्यर्थः। अवीविशत् प्रवेशया-मास।

(३०) समाः वत्सराः। समत्ययुः अतीताः।

(३१) सङ्कल्पिता दित्सिता।

इयं गर्भस्थैव द्यूतजिता स्वमात्रा (३२) तवैव जायात्वेन (३३) समकल्प्यत, तदत्र प्राप्तरूपं (३४) चिन्त्यतां कुमारेण एव' इति। तां पुनः अवोचम्—'अद्यैव राजगृहे किमपि कार्य्यं साधयित्वा प्रतिनिवृत्तो युष्मासु यथार्हं प्रतिपत्स्ये' (३५) इति। तेनैव दीपदर्शितबिलपथेन गत्वा, स्थितेऽर्द्धरात्रे, तदर्द्धपादं प्रत्युद्धृत्य वासगृहं प्रविष्टो विस्रब्धसुप्तं (३६) सिंहघोषं जीवग्राहम् (३७) अग्रहीषम्। आकृष्य च तम् अहिमिव अहिरिपुः स्फुरन्तम् (३८) अमुनैव भित्तिरन्ध्रपथेन स्त्रैणसन्निधिम् (३९) अनैषम्। आनीय च स्वभवनम्, आयसनिगड़सन्दानितचरणयुगलम् अवनमितमलिनवदनम् अश्रुवहलरक्तचक्षुषम् (४०) एकान्ते जनयित्रोः (४१) मम अदर्शयम्, अकथयञ्च बिलकथाम्।

अथ पितरौ प्रहृष्टतरौ तं निकृष्टाशयं निशाम्य, बन्धने

(३२) द्यूतजिता द्यूतेन जिता। स्वमात्रा निजजनन्या आचारवत्या।

(३३) जायात्वेन भार्य्यात्वेन।

(३४) प्राप्तरूपं युक्तियुक्तमित्यर्थः।

(३५) यथार्हं यथायोग्यम्। प्रतिपत्स्ये करिष्यामि इत्यर्थः।

(३६) विस्रब्धसुप्तं निःशङ्कनिद्रितम्।

(३७) जीवग्राहं जीवस्य जीवनस्य, ग्राहो ग्रहणं यस्मिन् कर्मणि तद्यथा तथा।

(३८) अहिरिपुः गरुड़ः। स्फुरन्तं कम्पमानम्।

(३९) अमुना एतेन, येन इदानीमेव आगतं तेनेत्यर्थः। स्त्रैणेति।—स्त्रीणां समूहः स्त्रैणं, तस्य सन्निधिं निकटम्।

(४०) आयसेति।—आयसेन लौहमयेन, निगड़ेन शृङ्खलेन, सन्दानितं बद्धं, चरणयोर्युगलं यस्य तथाभूतम्। अवनमितेति।—अवनमितम् अधःकृतं, मलिनं विवर्णं, वदनं येन तथोक्तम्। अश्रुवहलेति।—अश्रुवहले वाष्पपूर्णे, रक्ते चक्षुषी यस्य तथोक्तम्।

(४१) जनयित्रोः पित्रोः।

नियम्य (४२) तस्या दारिकायाः (४३) यथार्हेण कर्मणा (४४) मां पाणिम् अग्राहयेताम्। अनाथकञ्च (४५) तद्राज्यम् अस्मदायत्तमेव जातं, प्रकृतिकोपभयात् (४६) मन्मात्रा मुमुक्षितोऽपि (४७) न मुक्त एव सिंहघोषः। तथास्थिताश्च वयम् अङ्गराजः सिंहवर्मा देवपादानां भक्तिमान् कृतकर्मा चेति अमित्राभियुक्तम् एनमभ्यसराम, (४८) अभूवञ्च भवत्पादपङ्कजरजोऽनुग्राह्याः। स च इदानीं भवच्चरणप्रणाम-प्रायश्चित्तम् अनुतिष्ठतु सर्वदुश्चरितक्षालनम् अनार्य्यः (४९) सिंहघोषः" इति अर्थपालः प्राञ्जलिः प्रणनाम।

देवोऽपि राजवाहनः, "बहु पराक्रान्तं बहूपयुक्ता च बुद्धिः, मुक्तबन्धस्ते श्वशुरः पश्यतु माम्" इत्यभिधाय भूयः प्रमतिमेव पश्यन् प्रीतिस्मेरः, "प्रस्तूयतां (५०) तावत् आत्मीयं चरितम्" इति आज्ञापयत्।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते उत्तरपीठिकायाम्
अर्थपालचरितं नाम चतुर्थ उच्छ्वासः।

---

(४२) नियम्य बद्ध्वा। बन्धने कारायाम्। नियम्य बद्ध्वा।

(४३) दारिकायाः कन्यायाः, मणिकर्णिकाया इत्यर्थः।

(४४) कर्मणा विधिना।

(४५) अनाथकम् अराजकम्।

(४६) प्रकृतीनां प्रधानपुरुषाणाम्, अमात्यपौराणामित्यर्थः, कोपभयात् क्रोधाशङ्कातः।

(४७) मुमुक्षितोऽपि मोक्तुमिष्टोऽपि।

(४८) कृतकर्मा सम्पादितबहुकार्य्यः, देवपादानाम् इत्यनेनैवान्वयः। अमित्राभियुक्तं शत्रुभिराक्रान्तम्। एनम् अङ्गराजम्। अभ्यसराम साहाय्यदानाय उपागच्छाम।

(४९) अनार्य्यः असाधुः।

(५०) प्रस्तूयतां प्रकाश्यताम्।

इति चतुर्थोच्छ्वासः।

# अथ पञ्चमोच्छ्वासः ।

## प्रमतिचरितम् ।

सोऽपि प्रणम्य विज्ञापयामास—"देव! देवस्य अन्वेषणाय दिक्षु भ्रमन् अभ्रङ्कषस्य (१) अपि विन्ध्यपार्श्वरूढस्य वनस्पतेः अधः परिणतपतङ्गबालपल्लवावतंसिते पश्चिमदिगङ्गनामुखे पल्वलाम्भसि उपस्पृश्य (२) उपास्य सन्ध्यां, तमःसमीकृतेषु (३) निम्नोन्नतेषु गन्तुमक्षमः क्षमातले (४) किसलयैः उपरचय्य शय्यां शिशयिषमाणः (५) शिरसि कुर्वन् अञ्जलिं, 'या अस्मिन् वनस्पतौ वसति देवता, सैव मे शरणमस्तु शरारुचक्रचारभीषणायां शर्वगलश्यामशार्वरान्धकारपूराध्मातगभीरगह्वरायाम् (६) अस्यां महाटव्याम् एककस्य (७)

---

(१) अभ्रङ्कषस्य गगनस्पर्शिनः।

(२) परिणतेति।—परिणतः परिपक्वः, अस्तोन्मुखत्वात् अरुणवर्ण इति यावत्, यः पतङ्गः सूर्यः, ("पतङ्गौ पक्षिसूर्यौ च" इत्यमरः) स एव बालपल्लवः नवकिसलयः, तेन अवतंसिते भूषिते। पश्चिमा दिगेव अङ्गना तस्याः मुखे। पल्वलाम्भसि क्षुद्रसरःसलिले, ("वेशन्तः पल्वलञ्चाल्पसरः" इत्यमरः)। उपस्पृश्य आचम्य।

(३) तम इति।—तमसा अन्धकारेण, समीकृतेषु समभूमिवत् प्रतीयमानेषु इत्यर्थः।

(४) क्षमातले पृथ्वीतले।

(५) उपरचय्य कृत्वा। शिशयिषमाणः शयितुमिच्छन्।

(६) शरारुचक्रेति।—शरारूणां हिंस्राणां प्राणिनां, चक्रस्य समूहस्य, चारेण सञ्चारेण, भीषणायां भयावहायाम्। शर्वेति।—शर्वस्य हरस्य, गलः कण्ठः, तद्वत् श्यामः नीलः, यः शार्वरान्धकारपूरः नैशतिमिरचयः, तेन आध्मातं पूरितं, गभीरं निबिडं, गह्वरं बिलं यस्यास्तथोक्तायाम्; यद्वा—आध्मातः गभीरः गह्वरः निकुञ्जादिः यस्यास्तथाभूतायाम्। ("गह्वरस्तु गुहादम्भ-निकुञ्जगहनेष्वपि" इति विश्वः)।

(७) महाटव्यां महारण्ये। एककस्य एकाकिनः।

मे प्रसुप्तस्य’ ( ८ ) इत्युपधाय ( ९ ) वामभुजम् अशयिषि। ततः क्षणादेव अवनितुर्लभेन स्पर्शेन असुखायिषत ( १० ) किमपि गात्राणि, आह्लादयिषतेन्द्रियाणि, अभ्यमनायिष्ट (११) च अन्तरात्मा, विशेषतश्च हृषिताः तनूरुहाः, पर्यस्फुरत् (१२) मे दक्षिणभुजः। ‘कथन्नु इदम्!!’ इति मन्दमन्दम् उन्मिषन् (१३) उपर्यच्छचन्द्रातपच्छेदकल्पं शुक्लांऽशुकवितानम् ऐक्षिषि। (१४) वामतो वलितदृष्टिः समया सौधभित्तिं चित्रास्तरणशायिनम् ( १५ ) अतिविस्रब्धप्रसुप्तमङ्गनाजनम् अलक्षयम्। दक्षिणतो दत्तचक्षुः आगलितस्तनांशुकाम्, अमृतफेनपटलपाण्डुरशयनशायिनीम्, आदिवराहदंष्ट्रांशुजाललग्नाम् अंसस्रस्तदुग्धसागरदुकूलोत्तरीयां, भयसाध्वसमूर्च्छिताम् इव (१६)

( ८ ) प्रसुप्तस्य शयितस्य निद्रितस्य वा।

( ९ ) उपधाय उपधानीकृत्य, शिरोनिधानीकृत्येत्यर्थः।

( १० ) असुखायिषत सुखायितानि, सुखीकृतानीत्यर्थः।

( ११ ) अभ्यमनायिष्ट प्रमोदमापादित इत्यर्थः।

( १२ ) हृषिताः तनूरुहाः लोमानि, रोमहर्षो जात इत्यर्थः। पर्यस्फुरत् प्रस्पन्दे।

( १३ ) उन्मिषन् उन्मीलयन्, चक्षुरिति शेषः।

( १४ ) अच्छेति।—अच्छः निर्मलः, यश्चन्द्रातपः चन्द्रालोकः, तस्य छेदकल्पं खण्डसदृशम्। शुक्लांऽशुकवितानं श्वेतवसननिर्मितचन्द्रातपमित्यर्थः। ऐक्षिषि दृष्टवान्।

( १५ ) वलितदृष्टिः सञ्चालितनयनः। समया सविधे। सौधभित्तिं हर्म्यकुड्यं, ( समयायोगे द्वितीया ) सौधभित्तेः समीपे इत्यर्थः। चित्रास्तरणशायिनं विचित्रशय्याशयितम्।

( १६ ) आगलितेति।—आगलितम् ईषत् स्खलितं, स्तनयोरंशुकं वसनं यस्याः तथाविधाम्। अमृतेति।—अमृतानां जलानां, फेनपटलं फेनराशिः, तद्वत् पाण्डुरं श्वेतं, यत् शयनं शय्या, तत्र शेते इति तथोक्ताम्। आदीति।—आदिवराहस्य दंष्ट्रयोः अंशुजालेषु किरणसमूहेषु, लग्नां पतिताम्। अंसेति।—अंसात् स्कन्धात्,

सौधम् आगतम् !! (२०) का च तत् अरण्यस्थलीसमास्तीर्णं (२१) पल्लवशयनम् !! कुतस्त्यञ्च (२२) इदम् इन्दुगभस्तिसम्भार-भासुरं हंसतूलदुकूलशयनम् !! (२३) एष च को नु शीत-रश्मिकिरणरजतरज्जुदोलापरिभ्रष्टमूर्च्छित (२४) इव अप्सरो-गणः स्वैरसुप्तः (२५) सुन्दरीजनः !! का च इयं देवीव अरविन्द-हस्ता शारदशशाङ्कमण्डलामलदुकूलोत्तरच्छदम् (२६) अधिशेते शयनतलम् !! न तावत् एषा देवयोषा, (२७) यतो मन्दमन्द-मिन्दुकिरणैः संवाह्यमाना कमलिनीव सङ्कुचति। (२८) भग्न-वृन्तच्युतरसबिन्दुशबलितं पाकपाण्डु चूतफलमिव उद्भिन्नस्वेद-

तादृशाः, शूलाः वज्रादिभयनिवारणार्थं प्रासादशिखरे स्थापितलौहदण्डविशेषाः; पङ्क्तिषु दशसु दिक्षु. ("पङ्क्तिश्चाक्षरच्छन्दो-दशमश्चालिषु स्त्रियाम्" इति मेदिनी) ये ध्वजशिखरशूलाः, तैः उल्लेखन उन्नतम्। सौधं हर्म्यम्। आगतम् उपस्थितम्।

(२१) अरण्यस्थलीति।—अरण्यस्थल्यां वनभूमौ, समास्तीर्णं रचितम्।

(२२) कुतस्त्यं कुतो भवं, कुत आगतमित्यर्थः।

(२३) इन्द्विति।—इन्दोश्चन्द्रस्य, गभस्तीनां, किरणानां, सम्भारः समष्टिः, तद्वत् भासुरं दीप्तियुक्तम्, उज्ज्वलमित्यर्थः। हंसेति।—हंसः हंसवत् शुभ्रं कोमलं चेत्यर्थः, यत् तूलं, तद्वत् दुकूलं तूलवत् धवलकोमलवस्त्रं, तादृशतूलनिर्मितवस्त्र-निर्मितं वा, तद्रचितं शयनं शय्या।

(२४) शीतेति।—शीतरश्मिश्चन्द्रः, तस्य किरणा एव रजतरज्जवः, तासां दोला तादृशरज्जुबद्धहिन्दोलयन्त्रं, तस्मात् परिभ्रष्टः पतितः, अत एव मूर्च्छितः सञ्जातमोहः।

(२५) स्वैरसुप्तः विश्रम्भनिद्रितः।

(२६) अरविन्दहस्ता पद्महस्ता, लक्ष्मीरित्यर्थः। शारदेति।—शारदस्य शरत्कालिकस्य, शशाङ्कमण्डलस्य चन्द्रमण्डलस्येव, अमलं निर्मलम्, अतिशुभ्रमित्यर्थः, दुकूलं पट्टवस्त्रम्, उत्तरच्छदः आस्तरणं यस्य तादृशम्।

(२७) देवयोषा देवाङ्गना।

(२८) संवाह्यमाना सेव्यमाना। सङ्कुचति निमीलति, निद्रातीत्यर्थः।

रेखं गण्डस्थलम् आलक्ष्यते, (२९) अभिनवयौवनविदाह-निर्भरोष्मणि कुचतटे वैवर्ण्यम् उपैति वर्णकम्। (३०) वाससो (३१) च परिभोगानुरूपं धूसरिमाणम् (३२) आदर्शयतः; तदेषा मानुष्येव। दिष्ट्या (३३) च अनुच्छिष्टयौवना, (३४) यतः सौकुमार्य्यम् आगताः सन्तोऽपि संहता इव (३५) अवयवाः, प्रस्निग्धतमा अपि पाण्डुताऽनुविद्धेव देहच्छविः, (३६) दन्तपीडाऽनभिज्ञतया नातिविशदरागो मुग्धे विद्रुमद्युतिः अधरमणिः, (३७) अनत्यापूर्णम् आरक्तमूलं चम्पकमुकुलदलम् इव कठोरं (३८) कपोलतलम्,

---

(२९) अग्रेति।—अग्रात् स्तनात् च्युता गलिताः, ये रसाः, तेषां बिन्दुभिः पृषतैः, शबलितं चित्रितं, व्याप्तमित्यर्थः। पाकेन परिणामेन, पाण्डु पाण्डुवर्णं, श्वेतपीतमिति यावत्। चूतफलमिव आम्रफलमिव। उद्भिन्ना स्वेदरेखा घर्मधारा यत्र तादृशम्। गण्डस्थलं कपोलदेशः। आलक्ष्यते दृश्यते।

(३०) अभिनवेति।—अभिनवं यत् यौवनं, तस्य विदाहेन विशिष्टेन सन्तापेन, निर्भरः प्रचुरः, ऊष्मा उत्तापः यस्मिन् तादृशे। "निर्भरः" इत्यत्र "दुर्लभः" इति पाठे—दुर्लभः दुष्प्रापः, दुःसह इति यावत्, ऊष्मा यत्र तादृशे। वैवर्ण्यं विवर्णस्य भावः तत्, मालिन्यमित्यर्थः। वर्णकम् अङ्गरागः, अनुलेपनमिति यावत्।

(३१) वाससी वसने, परिधानोत्तरीये इत्यर्थः।

(३२) परिभोगानुरूपं व्यवहारोचितम्। धूसरिमाणं धूसरत्वम्।

(३३) दिष्ट्या भाग्येन।

(३४) अनुच्छिष्टयौवना अनुपभुक्ततारुण्या।

(३५) संहता इव दृढा इव, श्लिष्टा इति यावत्।

(३६) प्रस्निग्धतमा प्रकर्षेण स्निग्धभावमुपगता। पाण्डुरिति।—पाण्डुतया श्वेतपीतभावेन, अनुविद्धा युक्ता। देहच्छविः अङ्गप्रभा।

(३७) दन्तपीडेति।—दन्तपीडा दशनक्षतं, तस्याम् अनभिज्ञतया अपरिचिततया, अनाभ्यासेनेति यावत्। नातिविशदरागः नातिप्रकृष्टकान्तिः। विद्रुमद्युतिः प्रवालप्रभः। अधरमणिः दशनच्छदरत्नम्।

(३८) अनत्यापूर्णम् अतिशयेन आपूर्णं न भवतीति अनत्यापूर्णम्, अक्लिन्न-

अनङ्गबाणपातमुक्ताशङ्कस्य विस्रब्धमधुरं (३९) सुप्यते, न च एतदुरःस्थलं निर्दयविमर्दविस्तारितमुखस्तनयुगलम्। (४०) अस्ति च अनतिक्रान्तशिष्टमर्य्यादचेतसो (४१) मम अस्याम् (४२) आसक्तिः। आसक्त्यनुरूपं (४३) पुनः आश्लिष्टा (४४) यदि, स्फुटम् आर्त्तरवेणेव (४५) सह निद्रां मोक्ष्यति। अथाहं न शक्ष्यामि च अनुपश्लिष्य (४६) शयितुम्; अतो यद्भावि तद्भवतु, भाग्यमत्र परीक्षिष्ये' इति स्पृष्टास्पृष्टम् (४७) एव किमपि आविद्धरागसाध्वसं व्यवसृतः (४८) स्थितोऽस्मि। साऽपि किमपि उत्कम्पिना रोमोद्भेदवता (४९)

यौवनोद्भेदात् इति भावः, यौवनस्य पूर्णतायान्तु स्तनपूर्णत्वं भवतीति बोध्यम्। आरक्ताम ईषत् रक्तं, मुखं यस्य तथोक्तम्। कठोरं कठिनम्, अशिथिलमिति यावत्।

(३९) अनङ्गेति।—अनङ्गस्य कामस्य, बाणपातात् शरपातात्, मुक्ता त्यक्ता, आशङ्का यस्मिन् तद्यथा तथा, अस्यात्येव यौवनोद्भेदात् कामस्य नातिपीडाकरत्वादिति भावः। विस्रब्धमधुरं निःशङ्कमनोहरम्।

(४०) निर्दयेति।—निर्दयविमर्देन निष्ठुरपीडनेन, विस्तारितं विशेषेण प्रसारितं, मुखं यस्य तादृशं स्तनयोर्युगलम्।

(४१) अनतिक्रान्तेति।—अनतिक्रान्ता अनुल्लङ्घिता, शिष्टानां मर्य्यादा येन तादृशं चेतः चित्तं यस्य तथाभूतस्य।

(४२) अस्यां कन्यकायाम्।

(४३) आसक्त्यनुरूपं रागानुगुणम्।

(४४) आश्लिष्टा आलिङ्गिता।

(४५) आर्त्तरवेणेव कातरस्वरेणेव, चीत्कारेणेवेत्यर्थः।

(४६) अनुपश्लिष्य अनालिङ्ग्य।

(४७) स्पृष्टास्पृष्टं किञ्चित् स्पृष्टं किञ्चिदस्पृष्टं यस्मिन् तद्यथा तथा।

(४८) आविद्धेति।—आविद्धः अनुस्यूतः, रागः आसक्तिः, साध्वसं भयञ्च यस्मिन् तद्यथा तथा। व्यवसृतः व्याजनिद्रितः।

(४९) उत्कम्पिना उत्कम्पशालिना, ईषद्वेपथुमता इत्यर्थः। रोमोद्भेदवता रोमाञ्चितेन, भयहर्षादिति भावः।

वामपार्श्वेन सुखायमानेन मन्दं मन्दं जृम्भिकारम्भमन्थराङ्गी त्वङ्गदग्रपक्ष्मणोः (५०) चक्षुषोः अलसताम्यत्तारकेण अनतिपक्वनिद्राकषायितापाङ्गपरभागेण युगलेन ईषत् उन्मिषन्ती, (५१) त्रासविस्मयहर्षरागशङ्काविलासविभ्रम-व्यवहितानि व्रीडाऽन्तराणि (५२) कानि कानि अपि कामेन अद्भुतानुभावेन अवस्थान्तराणि (५३) कार्य्यमाणा, परिजन-प्रबोधनोद्यतां गिरं, (५४) कामावेशपरवशं हृदयम्,

(५०) सुखायमानेन सुखमनुभवतेत्यर्थः। मन्दमिति।—मन्दं मन्दम अल्पम् अल्पं यथा तथा। जृम्भिकेति।—जृम्भिकारम्भः गात्रभङ्गोद्योगः, ("जृम्भिका गात्रभङ्गः स्यात्" इत्यमरः) तेन मन्थरम् अलसं मनोहरं वा, ("मन्थरो मन्दसुन्दरौ" इति वैजयन्ती) अङ्गं यस्यास्तथाविधा। त्वङ्गदिति।—त्वङ्गत् चलत्, ("त्वगि चलने" इत्यस्य शतरि रूपम) अग्रपक्ष्म पक्ष्मणां नेत्रलोम्नामग्रं ययोस्तथोक्तयोः।

(५१) अलसेति।—अलसा मन्दचालिता, ताम्या क्लान्ता, श्रान्तेति यावत्, तारका कनीनिका यस्य तादृशेन। अनतिपक्वेति।—अनतिपक्वया नातिपक्वया, असम्पूर्णयेति यावत्, निद्रया कषायितः रञ्जितः, ताम्रीभूत इति यावत्, अपाङ्गयोः नेत्रप्रान्तयोः, परभागः गुणोत्कर्षः यस्य तादृशेन। ईषत् अल्पम्, उन्मिषन्ती उन्मीलयन्ती, अवलोकयन्तीत्यर्थः।

(५२) त्रासेति।—त्रासः कोऽयं किं हर्तुं वा आयात इति भयमित्यर्थः, विस्मयः अनुद्घाटितपिधाने गृहे विस्रब्धसुप्ताया मे पार्श्वे कथमस्य समागम इति आश्चर्यं, हर्षः अभिनवयौवनोद्भटात् तादृशयुवकसन्दर्शनात् इति प्रमोदः, रागः युवकस्य मनोहरावयवदर्शनेन आसक्तिः, शङ्का एतदवस्थां मां कोऽपि पश्येत् वदेदिति आशङ्का, विलासविभ्रमौ स्त्रीणां सात्त्विकभावविशेषौ, एतैर्व्यवहितानि विशेषेण अवहितानि, लक्ष्यविषयीभूतानीत्यर्थः। व्रीडाऽन्तराणि व्रीडायाः अन्तरः विशेषो येषु तादृशानि, विचित्रलज्जायुक्तानि।

(५३) अद्भुतानुभावेन आश्चर्यप्रभावेण। अवस्थान्तराणि दशाविशेषान्।

(५४) परिजनेति।—परिजनानां पार्श्ववर्त्तिनां सखीजनानां, प्रबोधनाय जागरणाय, उद्यतां प्रवृत्ताम्। गिरं वाचम्।

अङ्गानि च साध्वसायाससंवर्ध्यमानस्वेदपुलकानि कथंकथमपि निगृह्य मत्स्पृष्टेव मधुरकूणितत्रिभागेण मन्दमन्दप्रचारितेन चक्षुषा मदङ्गानि निर्वर्ण्य ( ५५ ) दूरोत्सर्पितपूर्वकायाऽपि ( ५६ ) तस्मिन्नेव शयनतले सचकितम् ( ५७ ) अशयिष्ट, अजनिष्ट मे रागाविष्टचेतसोऽपि किमपि निद्रा। पुनः अननुकूलस्पर्शदुःखायमानगात्रः प्राबुध्ये। ( ५८ ) प्रबुद्धस्य च सैव मे महाटवी, तदेव तरुतलं, स एव पत्रास्तरः (५९ ) मम अभूत्, विभावरी (६० ) च व्ययासीत्। ( ६१ ) अभूच्च मे मनसि 'किमयं स्वप्नः !! किं विप्रलम्भो ( ६२ ) वा !! किम् इयम् आसुरी ( ६३ ) दैवी वा काऽपि माया !! (६४) यद्भावि तद्भवतु, नाहमिदं तत्त्वतो (६५)

( ५५ ) साध्वसेति।—साध्वसेन भयेन, यः आयासः क्लान्तिः, तेन संवर्ध्यमानाः आप्याय्यमानाः, स्वेदपुलकाः घर्मरोमहर्षौ, सात्त्विकविकारविशेष इति यावत्, येषु तादृशानि। कथंकथमपि अतिकृच्छ्रेण। निगृह्य संहृत्येत्यर्थः। मत्स्पृष्टेव सलज्जेन। मधुरेति।—मधुरं यथा तथा, कूणितः सङ्कुचितः, त्रिभागः यस्य तादृशेन। निर्वर्ण्य दृष्ट्वा।

( ५६ ) दूरोत्सर्पितेति।—दूरम् अत्यन्तम्, उत्सर्पितः अपनीतः, पूर्वकायो यया तथोक्ता।

( ५७ ) सचकितं सभयसम्भ्रमम्।

( ५८ ) अननुकूलेति।—अननुकूलेन अप्रीतिकरेण, स्पर्शेन दुःखायमानं दुःखम् अनुभवत्, गात्रं यस्य तथाविधः। प्राबुध्ये अजागरम्।

( ५९ ) पत्रास्तरः पर्णशय्या।

( ६० ) विभावरी रात्रिः।

( ६१ ) व्ययासीत् अपगात।

( ६२ ) विप्रलम्भः विसंवादः, प्रकृतेरन्यथाभाव इति यावत्।

( ६३ ) आसुरी असुरकल्पिता।

( ६४ ) माया छलना।

( ६५ ) तत्त्वतः यथार्थतः।

नावबुध्य मोक्ष्यामि भूमिशय्यां, यावदायुः अत्रत्यायै देवतायै प्रतिशयितो (६६) भवामि' इति निश्चितमतिः अतिष्ठम् ।

अथ आविर्भूय काऽपि रविकराभितप्तकुवलयदामताम्राङ्गयष्टिः, क्लिन्ननिवसनोत्तरीया, निरलक्तकरूक्षपाटलेन निःश्वासोष्मजर्जरितत्विषा दन्तच्छदेन वमन्तीव कपिलधूमधूम्रं (६७) विरहानलम्, अनवरतसलिलधाराविसर्जनात् रुधिरावशेषमिव लोहिततरं द्वितयमक्ष्णोः (६८) उद्वहन्ती, कुलचारित्रबन्धनपाशविभ्रमेण एकवेणीभूतेन केशपाशेन, नीलांशुकचीरचूलिकापरिवृता, (६९) पतिव्रतापताका इव

(६६) प्रतिशयितः कस्मैचिदभीष्टलाभाय सुदृढ़ प्रतिज्ञाय कामपि देवतामुद्दिश्य अवस्थानं प्रतिशयः, सः अस्य सञ्जात इति प्रतिशयितः । (अस्य सञ्जाते इतच्-प्रत्ययः) ।

(६७) रवीति ।—रविकरेण सूर्यकिरणेन, अभितप्तं सन्तप्तं, यत् कुवलयदाम नीलोत्पलमाला, तद्वत् ताम्रा म्लाना, अङ्गयष्टिर्यस्यास्तादृशी । क्लिन्नेति ।—क्लिन्नं क्लेदयुक्तं, मलिनमित्यर्थः, "क्लिष्ट" इति पाठे—क्लिष्टम् उपहतम्, जीर्णमित्यर्थः, निवसनम् उत्तरीयञ्च यस्यास्तथोक्ता । निरलक्तकेति ।—निरलक्तकम् अलक्तकरागरहितम्, अत एव रूक्षं, पाटलं स्वभावतः श्वेतरक्तं तेन । निःश्वासोष्मणा उष्णनिःश्वासेन, जर्जरिता मालिन्यमापादिता, त्विट् कान्तिर्यस्य तादृशेन । दन्तच्छदेन अधरेण । वमन्तीव उद्गिरन्तीव, प्रकटयन्तीवेत्यर्थः । कपिलेति ।—कपिलः पिङ्गलः, ("कडारः कपिलः पिङ्ग-पिशङ्गौ कद्रुपिङ्गलौ" इत्यमरः) यः धूमः, तद्वत् धूम्रः किञ्चिदारक्तश्याम इत्यर्थः, तम् ।

(६८) अनवरतेति ।—अनवरतम् अविच्छेदं, यत् सलिलधाराविसर्जनम् अश्रुधारावर्षणं तस्मात् । रुधिरावशेषमिव केवलरक्तावशिष्टमिव । लोहिततरम् अतिरक्तम् । द्वितयं युगलम् । अक्ष्णोश्चक्षुषोः ।

(६९) कुलेति ।—कुलचारित्रं कौलिकं सच्चरित्रं, तस्य बन्धनाय पाशस्येव रज्ज्वा इव, विभ्रमो विलासो यस्य तादृशेन । एकवेणीभूतेन, प्रवासस्थपतिकाया एकवेणीधरत्वस्य शास्त्रीयत्वादिति बोध्यम् । केशपाशेन उपलक्षिता । (उपलक्षणे

सञ्चरन्ती. क्षामक्षामा अपि दैवतानुभावात् अनतिक्षीणवर्णाव-काशा सीमन्तिनी प्रणिपतन्तं (७०) मां प्रहर्षोत्कम्पितेन भुजलताद्वयेन उत्थाप्य पुत्रवत् परिष्वज्य शिरसि उपाघ्राय वात्सल्यमिव स्तनयुगलेन स्तन्यच्छलात् प्रक्षरन्ती (७१) शिशिरेण अश्रुणा निरुद्धकण्ठी स्नेहगद्गदं व्याहार्षीत् (७२)— 'वत्स! यदि वः कथितवती मगधराजमहिषी वसुमती 'मम हस्ते बालम् अर्थपालं निधाय कथाञ्च काञ्चित् आत्मभर्तृ-पुत्रसम्बोजनानुबद्धां राजराजप्रवर्त्तितां (७३) कृत्वा अन्त-र्द्धानमगात् आत्मजा मणिभद्रस्य' (७४) इति, सा अहमस्मि वो जननी, पितुर्वो धर्मपालसूनोः सुमन्त्रानुजस्य काम-पालस्य पादमूलात् निष्कारणकोपकलुषिताशया प्रोष्यानुशय-विधुरा (७५) स्वप्ने केनापि रक्षोरूपेण उपेत्य (७६) मम-

---

इतीयः)। नीलांशुकेति।—नीलांशुकस्य नीलवसनस्य, चोरं लुण्ठः, तस्य चूर्णिका कञ्चुकः, तथा परिहृता संवृता।

(७०) क्षामक्षामाऽपि अतिकृशाऽपि; दैवतानुभावात् स्वकीयदैवप्रभावात्। अनतिक्षीणः नातिमलिनः, वर्णस्य अवकाशः दीप्तिः, औज्ज्वल्यमित्यर्थः, यस्याः सा तथोक्ता। सीमन्तिनी कामिनी। प्रणिपतन्तं प्रणमन्तम्।

(७१) स्तने भवं स्तन्यं क्षीरं, तच्छलात् तद्दुग्धमिषेण इत्यर्थः। प्रक्षरन्ती प्रस्रवन्ती।

(७२) व्याहार्षीत् अवोचत्।

(७३) राजराजप्रवर्त्तितां धनाधिपकथिताम्।

(७४) अन्तर्द्धानमगमत् तिरोदधे। आत्मजा कन्या। मणिभद्रस्य यक्षविशेषस्य।

(७५) निष्कारणेति।—निष्कारणेन [illegible]हेतु-केनेति भावः, कोपेन कलुषितः मलिनितः, आशयो यस्याः तादृशी। प्रोष्य प्रवासे स्थित्वा। अनुशयेन अनुतापेन, कथमहमीदृशं कोपं भर्त्तरि कृतवतीति पश्चात्तापेनेत्यर्थः, विधुरा कातरा।

(७६) रक्षोरूपेण राक्षसरूपिणा। उपेत्य समीपमागत्य।

ऽस्मि—'चण्डिकायां (७७) त्वयि वर्षमात्रं वसामि प्रवास-दुःखाय' इति ब्रुवत्यैव अहम् आविष्टा प्राबुध्ये। (७८) गतश्च (७९) तत् वर्षं वर्षसहस्रदीर्घम्। अतीतायान्तु यामिन्यां देवदेवस्य त्र्यम्बकस्य श्रावस्त्याम् उत्सवसमाजम् अनुभूय (८०) बन्धुजनश्च स्थानस्थानेभ्यः समापतितम् अभिसमीक्ष्य (८१) सुप्तायापा पत्युः पार्श्वम् अभिसरिष्यामीति प्रस्थितायामेव (८२) मयि त्वम् अत्र अभ्युपेत्य 'प्रतिपन्नोऽस्मि (८३) शरणम् इहत्यां (८४) देवताम्' इति प्रसुप्तोऽसि। एवं शाप-दुःखाविष्टया तु मया तदा न तत्त्वतः परिच्छिन्नो (८५) भवान्, अपि तु शरणागतम् अविरलप्रमादायाम् (८६) अस्यां महाटव्याम् अयुक्तं परित्यज्य गन्तुमिति मया त्वमपि स्वपन्नेवासि नीतः। प्रत्यासन्ने (८७) च तस्मिन् देवगृहे पुनः अचिन्तयं—'कथमिह तरुणेन अनेन सह समाजं गमिष्यामि ?' इति। अथ राज्ञः श्रावस्तीश्वरस्य यथार्थनाम्नो धर्मवर्द्धनस्य कन्यां नवमालिकां घर्मकालसुभगे कन्यापुर-

(७७) चण्डिकायां कोपनायां, ("चण्डस्त्वत्यन्तकोपनः" इत्यमरः)।

(७८) आविष्टा, तेनेति शेषः। प्राबुध्ये जागरम्।

(७९) गतम् अतिक्रान्तम्।

(८०) श्रावस्त्यां तदाख्यायां नगर्याम्। अनुभूय दर्शनादिना उपलभ्य इत्यर्थः।

(८१) समापतितं समागतम्। अभिसमीक्ष्य दृष्ट्वा।

(८२) प्रस्थितायामेव चलितायामेव।

(८३) प्रतिपन्नः प्राप्तः।

(८४) इहत्याम् अत्रत्याम्, एतत्स्थानवासिनीमित्यर्थः।

(८५) तत्त्वतः यथार्थतः। परिच्छिन्नः अवगतः।

(८६) अविरलेति।—अविरलः निरन्तरं, प्रमादो विपत् यस्यां तथाभूतायाम्; "अविरत" इति पाठान्तरम्।

(८७) प्रत्यासन्ने निकटवर्त्तिनि।

विमानहर्म्यतले विशालकोमलतल्पं शय्यातलम् अधिशयानां यदृच्छया उपलभ्य (८८) 'दिष्ट्या इयं (८९) सुप्ता, परिजनश्च गाढनिद्रः, शेताम् (९०) अयमत्र मुहूर्त्तमात्रं ब्राह्मणकुमारः यावत् कृतकृत्या निवर्त्तेय' (९१) इति त्वां तत्र शाययित्वा तम् उद्देशम् अगमम। दृष्ट्वा च उत्सवश्रियं, निर्विश्य (९२) च स्वजनदर्शनसुखम्, अभिवाद्य च त्रिभुवनेश्वरम्, आत्मालीकप्रत्याकलनोपारूढसाध्वसम्च (९३) नमस्कृत्य भक्तिप्रणतहृदया भगवतीम् अम्बिकां, तया गिरिदुहित्रा देव्या सस्मितम्—'अयि भद्रे ! मा भैषीः, भवेदानीं भर्त्तृपार्श्वगामिनी, गतस्ते शापः' इति अनुगृहीता सद्य एव प्रत्यापन्नमहिमा (९४) प्रतिनिवृत्य दृष्ट्वैव त्वां यथावत् (९५) अभ्यजानं 'कथं सत्युत एवायं वत्सस्य अर्थपालस्य प्राणभूतः सखा प्रमतिः !! इति। पापया मया अस्मिन् अस्था-

---

(८८) घर्मकालेति।—घर्मकालेन ग्रीष्मकालेन, सुभगे प्रीतिकरे। कन्येति। —कन्यापुरस्य कन्याऽन्तःपुरस्य, यत् विमानहर्म्यं सप्तभूमिकप्रासादः, ("विमानो व्योमयाने च सप्तभूमिगृहेऽपि च" इति विश्वः) तस्य तले उपरिभागे इत्यर्थः। यदृच्छया हठात्, दैवयोगेनेत्यर्थः। उपलभ्य प्राप्य।

(८९) दिष्ट्या भाग्येन। इयं नवमालिका।

(९०) शेतां शयनं करोतु।

(९१) निवर्त्तेय प्रत्यावृत्ता भवेयम्।

(९२) निर्विश्य उपभुज्य, ("निर्वेशो भृतिभोगयोः" इत्यमरः)।

(९३) आत्मालीकेति।—आत्मनः स्वस्य, अलीकम् अपराधः, भर्त्तृपरित्यागरूप इति भावः, ("अलीकमपराधः स्यादसत्याप्रिययोरपि" इति सज्जनः) तस्य प्रत्याकलनेन विवेकेन, उपारूढं जातं, साध्वसं भयं यस्मिन् तत् यथा तथा, ("भीतिर्भीः साध्वसं भयम्" इत्यमरः)।

(९४) प्रत्यापन्नेति।—प्रत्यापन्नः पुनः प्राप्तः, महिमा देवप्रभावो यया तादृशी।

(९५) यथावत् तत्त्वतः।

नात् औदासीन्यम् (९६) आचरितम्। अपि च अयम् अस्याम् आसन्नभावः, (९७) कन्या च एनं कामयते युवानम्, उभौ च इमौ लज्जसुप्तौ त्रपया (९८) साध्वसेन वा अन्योऽन्यम् आत्मानं (९९) न विवृण्वाते; (१००) गन्तव्यश्च मया। कामाघ्रातया (१) अपि अनया कन्यया रहस्यरक्षणाय (२) न समाभाषितः सखीजनः परिजनो वा। नयामि तावत् कुमारम्। पुनरपि इमम् अर्थं लब्धलक्षो यथोपपन्नैः (३) उपायैः साधयिष्यति' इति मत्प्रभावप्रस्वापितं (४) भवन्तम् एतदेव पत्रशयनं प्रत्यनैषम्। एवमिदं वृत्तम्, एषा च अहं पितुः ते पादमूलं प्रत्युपसर्पेयम्' (५) इति प्राञ्जलिं मां भूयः परिष्वज्य शिरसि उपाघ्राय कपोलयोः चुम्बित्वा स्नेहविक्लवा गताऽऽसीत्।

अहञ्च पञ्चबाणवश्यः श्रावस्तीम् अभ्यवर्त्तिषि। (६) मार्गे च महति निगमे नैगमानां ताम्रचूडयुद्धकोलाहलो (७)

(९६) औदासीन्यम् उपेक्षणम्।

(९७) अस्यां नवमालिकायाम्। आसन्नभावः अनुरक्ताशयः।

(९८) लज्जसुप्तौ कपटनिद्रितौ। त्रपया लज्जया।

(९९) आत्मानं स्वस्वरूपम्।

(१००) विवृण्वाते प्रकाशयतः।

(१) कामाघ्रातया मदनस्पृष्टया।

(२) रहस्यरक्षणाय गुह्यगोपनाय।

(३) लब्धलक्षः प्राप्तव्याजः, किमपि छलमुत्पाद्य इत्यर्थः, अयं कुमार एवं इति शेषः। यथोपपन्नैः यथोपस्थितैः।

(४) मदिति।—मम प्रभावेण प्रस्वापितं निद्रापितम्।

(५) प्रत्युपसर्पेयं गच्छेयम्।

(६) अभ्यवर्त्तिषि अगच्छम इत्यर्थः।

(७) निगमे पुरे, ("निगमः पुरे। वेदे वणिक्पथे मार्गे" इति

महान् आसीत्। अहञ्च तत्र सन्निहितः किञ्चित् अस्मेषि, (८) सन्निधिनिषण्णस्तु (९) मे वृद्धविटः (१०) कोऽपि ब्राह्मणः शनकैः स्मितहेतुम् अपृच्छत्। अब्रवञ्च—'कथमिव नारिकेलजातेः प्राच्यवाटकुक्कुटस्य प्रतीच्यवाटः (११) पुरुषैः असमीक्ष्य बलाकाजातिः (१२) ताम्रचूडो बलप्रमाणाधिकस्य एव प्रतिविसृष्टः' (१३) इति। सोऽपि तज्ज्ञः (१४) 'किमज्ञैः एभिः व्युत्पादितैः? तूष्णीमास्व' इति उपहस्तिकायाः (१५) ताम्बूलं कर्पूरसहितम् उद्धृत्य मह्यं दत्त्वा चित्राः कथाः कथयन् क्षणम् अतिष्ठत्। प्रायुध्येतां च अतिसंरब्धम् अनुप्रहारप्रवृत्तपक्षपुटकठोरवरवं विहङ्गमद्वयम्। (१६)

---

कलहः)। नैगमानां निगमवासिनां, नागरिकाणामित्यर्थः। ताम्रचूडेति।—ताम्रचूडानां कृकवाकूणां, ("कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः" इत्यमरः) युद्धेन कोलाहलः कलरवः।

(८) सन्निहितः समासन्नः। अस्मेषि स्मितमकरवम्।

(९) सन्निधिनिषण्णः समीपस्थः।

(१०) वृद्धविटः वृद्धः स्थविरः, विटः धूर्तः।

(११) नारिकेलजातेः नारिकेलजातीयस्य। प्राच्यवाटकुक्कुटस्य पूर्वदेशीयकुक्कुटविशेषस्य। प्रतीच्यवाटः पश्चिमदेशीयः।

(१२) असमीक्ष्य अविचार्य। बलाकाजातिः बलाकाजातीयः क्षुद्रकुक्कुटभेदः।

(१३) बलेति।—बलेन शक्त्या, प्रमाणेन परिमाणेन च, अधिकस्य महतः। प्रतिविसृष्टः युद्धार्थं नियुक्तः, विसृष्ट इत्यर्थः। ("दीर्घघोषः सितवपुर्महाप्राणः सुजन्मना। बलाकाजातिरित्युक्तस्तदन्यो नारिकेलकः॥" इति वैजयन्ती)।

(१४) तज्ज्ञः तदभिज्ञः।

(१५) व्युत्पादितैः शिक्षितैरित्यर्थः। तूष्णीं निःशब्दमित्यर्थः। आस्व उपविश। उपहस्तिकायाः ताम्बूलाधारचर्मपेटिकायाः, ("पूगाद्याधानी चर्मभस्त्रिका चोपहस्तिका" इति वैजयन्ती)। "उपहसितकायाः" इति पाठेऽपि स एवार्थः।

(१६) अतिसंरब्धम् अतिक्रुद्धम्। अनुप्रहारेति।—अनुप्रहारं प्रहाराभ्याम्

जितः (१७) च असौ प्रतीच्यवाटकुक्कुटः। सोऽपि विटः स्ववाटकुक्कुटविजयप्रहृष्टो मयि वयोविरुद्धं (१८) सख्यम् उपेत्य तदहरेव स्वगृहे स्नानभोजनादि कारयित्वा उत्तरेद्युः श्रावस्तीं प्रति यान्तं माम् अनुगम्य 'स्मर्त्तव्योऽस्मि सत्यर्थे' (१९) इति मित्रवत् विसृज्य प्रत्ययासीत्। अहञ्च गत्वा श्रावस्तीम् अध्वश्रान्तो वाह्योद्याने लतामण्डपे (२०) शयितोऽस्मि, हंसरवप्रबोधितश्च उत्थाय कामपि क्वणित-नूपुराभ्यां (२१) चरणाभ्यां मदन्तिकम् उपसर्पन्तीं युवतीम् अद्राक्षम्। सा तु आगत्य स्वहस्तवर्त्तिनि चित्रपटे लिखितं मत्सदृशं कमपि पुरुषं माञ्च पर्य्यायेण निर्वर्णयन्ती (२२) सविस्मयं सवितर्कं सहर्षञ्च क्षणम् अवातिष्ठत। मयाऽपि तत्र चित्रपटे मत्सादृश्यं पश्यता तद्दृष्टिविचेष्टितम् अनाकस्मिकं (२३) मन्यमानेन 'ननु सर्वसाधारणोऽयं (२४)

---

उद्यताभ्यां, स्वपक्षाभ्यां मुक्तः त्यक्तः, उत्सरित इत्यर्थः, कण्ठारवस्य शिञ्जस्येव, रवो येन तादृशम्। विटङ्कमध्यं कुक्कुटयुगलम्।

(१७) जितः पराभूतः।

(१८) स्ववाटेति।—स्वस्य आत्मनः, वाटः मार्गः, देश इत्यर्थः, ("वाटः पुमान् पथि क्षेत्रे" इति वररुचिः) तस्य कुक्कुटः निजदेशीयकुक्कुटः इत्यर्थः, तस्य विजयेन प्रहृष्टः विशेषेण प्रीतः। वयोविरुद्धं वयसा वार्द्धकेन, विरुद्धं विपरीतम्, अहं युवा स वृद्धः आवयोः सख्यमनुचितमिति भावः।

(१९) सत्यर्थे प्रयोजने सति।

(२०) वाह्योद्याने बहिरुपवने। लतामण्डपे लतावेष्टितमण्डपाकारस्थाने। "लतामण्डपे" इति पाठे—लतागृहे इत्यर्थः।

(२१) क्वणितेति।—क्वणितः शब्दितः, नूपुरौ ययोः तादृशाभ्याम्।

(२२) निर्वर्णयन्ती अवलोकयन्ती।

(२३) तद्दृष्टीति।—तस्याः युवत्याः, दृष्टिविचेष्टितं दर्शनव्यापारं, पर्य्यायेण मम मत्सादृश्यस्य च दर्शनमित्यर्थः। अनाकस्मिकम् अनिष्कारणम्।

(२४) सर्वसाधारणः सर्वेषां सम्भोग्य इत्यर्थः।

रमणीयः पुण्यारामभूमिभागः, (२५) किमिति चिरस्थिति-क्लेशः (२६) अनुभूयते? ननूपवेष्टव्यम्' इति अभिहिता सा सस्मितम् 'अनुगृहीताऽस्मि' इति न्यषीदत्। सङ्कथा च देश-वार्त्तानुविद्धा काचनावयोः (२७) अभूत्। कथासंश्रिता (२८) च सा 'देशातिथिरसि, दृश्यन्ते च ते अध्वश्रान्तानीव गात्राणि, यदि न दोषः, मम गृहेऽद्य विश्रमितुम् अनुग्रहः क्रियताम्' इति अशंसत्। (२९) अहञ्च 'अयि मुग्धे! (३०) नैष दोषः, गुण एव' इति तदनुमार्गगामी तद्गृहगतो राजार्हेण स्नानभोजनादिना उपचरितः (३१) सुखं निषण्णो रहसि पर्य्यपृच्छ्यं (३२)—'महाभाग! दिगन्तराणि भ्रमता क्वचिदस्ति किञ्चित् अद्भुतं भवतोपलब्धम्?' (३३) इति। मम अभवत् मनसि 'महदिदम् आश्वास्पदम्, (३४) एषा खलु निखिलपरिजनसम्बाधसंलक्षितायाः (३५) सखी राजदारिकायाः, चित्रपटे च अस्मिन्नपि तदुपरिविरचित-

---

(२५) पुण्येति।—पुण्यः पवित्रः, आरामभूमिभागः उपवनभूमिभागः।

(२६) चिरस्थितिक्लेशः बहुक्षणं दण्डायमानस्थानेन क्लेशः।

(२७) सङ्कथा परस्परालापः। देशेति।—कुत्र देशे तव निवासः? कथं वा अत्रागतः? इत्याद्यनुयोगयुक्ता। आवयोः मम तस्याश्चेत्यर्थः।

(२८) कथासंश्रिता संलापासक्ता।

(२९) अशंसत् अकथयत्।

(३०) मुग्धे! सुन्दरि! ("मुग्धः सुन्दरमूढयोः" इति विश्वः)।

(३१) उपचरितः सेवितः।

(३२) पर्य्यपृच्छ्यं परिपृष्टः।

(३३) उपलब्धं दृष्टं, ज्ञातम्, अनुभूतं वा।

(३४) आश्वास्पदम् आशास्थानम्।

(३५) निखिलेति।—निखिलेन बहुना, परिजनेन सम्बाधे सङ्कटे, आकीर्णे स्थाने इत्यर्थः, संलक्षितायाः सन्दृष्टायाः।

सितवितानं हर्म्यतलं, तद्गतञ्च प्रकामविस्तीर्णं शरदभ्रपटलपाण्डुरं (३६) शयनं, तदधिशायिनी च निद्रालीढ़लोचना (३७) मम एवेयं प्रतिकृतिः। (३८) अतो नूनम् (३९) अनङ्गेन साऽपि राजकन्या तावतीं भूमिम् (४०) आरोपिता, यस्याम् असह्यमदनज्वरव्यथितोन्मादिता (४१) अतो सखीनिर्बन्धपृष्टविक्रियानिमित्ता चातुर्य्येण एतद्रूपनिर्माणेन एव समर्थम् (४२) उत्तरं दत्तवती। रूपसंवादाच्च (४३) संशयात् अनया पृष्टः, भिन्द्याम् (४४) अस्याः संशयं यथाऽनुभवकथनेन' इति जातनिश्चयोऽब्रवं—'भद्रे! देहि चित्रपटम्' इति। सा च अर्पितवती मद्धस्ते। पुनः तम् (४५) आदाय तामपि व्याजसुप्ताम् उज्ज्वलन्मदनरागविह्वलां वल्लभाम् एकत्रैव अभिलिख्य (४६) 'काचित् एवम्भूता

(३६) तद्गतं हर्म्यतलस्थम्। प्रकामविस्तीर्णम् अतिविशालम्। शरदिति।—शरदि यत् अभ्रपटलं मेघनिचयः, तद्वत् पाण्डुरं शुभ्रम्।

(३७) निद्रेति।—निद्रया आलीढ़े स्पृष्टे, लोचने यस्याः सा तादृशी।

(३८) प्रतिकृतिः छविः।

(३९) नूनं मन्ये निश्चितं वा।

(४०) तावतीं तत्परिमिताम्। भूमिं स्थानम्, अवस्थामित्यर्थः।

(४१) असह्येति।—असह्येन सोढुमशक्येन, मदनज्वरेण कामसन्तापेन, व्यथिता पीड़िता, अत एव उन्मादिता।

(४२) सखीति।—सखीभिः सहचरीभिः, निर्बन्धेन आग्रहातिशयेन, पृष्टम् अनुयुक्तं, विक्रियानिमित्तं विकृतिकारणं यस्याः सा तथोक्ता। चातुर्य्येण वैदग्ध्येन। एतदिति।—एतस्य रूपस्य मत्प्रतिकृतेरित्यर्थः, निर्माणेनैव चित्रणेनैव। समर्थं योग्यम्।

(४३) रूपसंवादात् रूपस्य आकृतेः, संवादात् सादृश्यादित्यर्थः।

(४४) भिन्द्याम् अपनयेयम्।

(४५) तं चित्रपटम्।

(४६) व्याजसुप्तां कपटनिद्रिताम्। उज्ज्वलदिति।—उज्ज्वलता स्फुरता,

युवतिः इष्टमस्य पुंसः पार्श्वशायिनी अरण्यानीप्रसुप्तेन (४७) मया उपलब्धा, (४८) किल एष स्वप्नः' इति आलपञ्च। हृष्टया तु तया विस्तरतः पृष्टः सर्वमेव वृत्तान्तम् अकथयम्। असौ (४९) च सख्याः (५०) मन्निमित्तानि अवस्थान्तराणि (५१) अवर्णयत। तदाकर्ण्य च 'यदि तव सख्या मदनुग्रहोन्मुखं मानसं, गमय (५२) कानिचित् अहानि, कमपि कन्यापुरे निराशङ्कनिवासकारणम् उपायमारचय्यागमिष्यामि' इति कथञ्चित् एनाम् अभ्युपगमय्य (५३) गत्वा तदैव खर्वटं वृद्धविटेन समगंसि। (५४) ससम्भ्रमं सोऽपि विश्रमय्य तथैव स्नानभोजनादि कारयित्वा रहसि अपृच्छत्—'आर्य्य! कस्य हेतोः अचिरात् प्रत्यागतोऽसि?'।

प्रत्यवादिषमेनं—'स्थाने एवाहमार्य्येण अस्मि पृष्टः। श्रूयताम्, अस्ति हि श्रावस्ती नाम नगरी, तस्याः पतिः अपर इव धर्मपुत्रो (५५) धर्मवर्द्धनो नाम राजा। तस्य

---

मदनरागेण कामावेशेन, विह्वलां विवशाम्। वल्लभां प्रियाम्। एकत्रैव एकस्मिन्नेव स्थाने इत्यर्थः। अभिलिख्य चित्रयित्वा।

(४७) अरण्यानीप्रसुप्तेन महारण्यानिद्रितेन।

(४८) उपलब्धा दृष्टा।

(४९) असौ राजकन्यायाः सहचरी।

(५०) सख्याः राजदारिकायाः।

(५१) अवस्थान्तराणि दशाविशेषान्।

(५२) गमय अतिवाहय।

(५३) एनां सखीम्। अभ्युपगमय्य स्वीकार्य्य।

(५४) खर्वटम् "एकतो यत्र तु ग्रामो नगरं चैकतः स्थितम्। मिश्रं तु खर्वटो नाम नदीगिरिसमाकुलः॥" इत्युक्तलक्षणं ग्रामम्। वृद्धविटेन पूर्वोक्तेन। समगंसि सम्मिलितोऽस्मि।

(५५) धर्मपुत्रः धर्मनन्दनः, युधिष्ठिर इत्यर्थः।

दुहिता प्रत्यादेश इव श्रियाः, (५६) प्राणा इव कुसुमधन्वनः, सौकुमार्य्यविडम्बितनवमालिका (५७) नवमालिका नाम कन्यका। सा मया समापत्तिदृष्टा (५८) कामनाराचपङ्क्तिम् इव कटाक्षमालां मम मर्मणि व्यकिरत्। (५९) तच्छल्योद्धरण-क्षमश्च धन्वन्तरिसदृशः त्वदृते (६०) नैतरोऽस्ति वैद्य इति प्रत्यागतोऽस्मि। तत् प्रसीद कञ्चित् उपायम् आचरितुम्। अयमहं परिवर्त्तितस्त्रीवेशः (६१) ते कन्या नाम भवेयम्; अनुगतश्च मया त्वम् उपगम्य धर्मासनगतं धर्मवर्द्धनं वक्ष्यसि—'मम इयमेकैव दुहिता, जातमात्रायान्तु अस्यां जनः अस्याः संस्थिता, माता च पिता च भूत्वा अहमेव व्यवर्द्धयम्। एतदर्थमेव विद्यामयं शुल्कम् (६२) अर्जितुं गतोऽभूत् अवन्तिनगरीम् उज्जयिनीम् अस्मद्वैवाह्यकुलजः (६३)

(५६) प्रत्यादेशः निराकृतिः, ("प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः" इत्यमरः)। श्रियाः लक्ष्म्याः, श्रिया लक्ष्मीं निर्जितवतीत्यर्थः।

(५७) सौकुमार्य्येति।—सौकुमार्य्येण विडम्बिता अनुकृता, नवमालिका यया तादृशी।

(५८) समापत्तिः समं तुल्यकालम्, आपत्तिर्दर्शनविषयप्राप्तिः यस्मिन् तथाभूतं यथा तथा, दृष्टा, अन्योऽन्यदर्शनमेकदैव जातमिति सा मया दृष्टा तथा चाहं दृष्ट इत्यर्थः। यद्वा—समापत्तौ सम्यगापत्काले, रात्रौ महारण्यमध्ये निद्रागमनकाले इत्यर्थः, दृष्टा।

(५९) व्यकिरत् व्यक्षिपत्।

(६०) तदिति।—तच्छल्योद्धरणं तच्छल्यनिष्काशनं, तत्र क्षमः। त्वदृते त्वां विना।

(६१) परिवर्त्तितेति।—परिवर्त्तितः विनिमीतः, गृहीत इत्यर्थः, स्त्रीवेशो येन तथाभूतः।

(६२) एतदर्थम् एतत्कन्याप्राप्तिनिमित्तम्। विद्यामयं विद्यात्मकम्। शुल्कं पणं, विदुषे एव कन्या देयेति भावः।

(६३) अस्मद्वैवाह्यकुलजः अस्माकं विवाहदानार्हवंशसम्भूतः।

कोऽपि विप्रदारकः। तस्मै च इयम् अनुमता दातुम्, इतरस्मै न। योग्या तरुणीभूता च इयं, स च विलम्बितः। तेन तम् आनीय पाणिम् अस्या ग्राहयित्वा तस्मिन् न्यस्तभारः सन्न्यसिष्ये। (६४) दुरभिरक्ष्यतया तु दुहितॄणां मुक्तशैशवानां (६५) विशेषतश्च अमातृकाणाम् इह देवं मातापितृस्थानीयं प्रजानाम् आपन्नशरणम् (६६) आगतोऽस्मि। यदि वृद्धं ब्राह्मणम् अधीतिनम् अगतिम् (६७) अतिथिञ्च माम् अनुग्राह्यपक्षे गणयति आदिराजचरितो (६८) देवः, सैषा भवद्भुजतरुच्छायाम् (६९) अखण्डितचारित्रा तावत् अध्यास्तां, (७०) यावत् अस्याः पाणिग्राहकमानयेयम्' इति। स एवमुक्तो नियतम् अभिमनायमानः (७१) स्वदुहितृसन्निधौ मां वासयिष्यति। गतस्तु भवान् आगामिनि मासि फाल्गुने फाल्गुनीषु उत्तरासु (७२) राजान्तःपुरजनस्य तीर्थयात्रोत्सवो

(६४) सन्न्यसिष्ये सन्न्यासाश्रमं ग्रहीष्यामि।

(६५) दुरभिरक्ष्यतया दुःखेन रक्षणीयतया। मुक्तशैशवानां शैशवातिक्रान्तानाम्।

(६६) आपन्नशरणं विपन्नरक्षितारम्।

(६७) अधीतिनम् अधीतम् अभ्यस्तीति अधीती कृतवेदाध्ययनः तम्। अगतिं निरुपायम्।

(६८) आदिराजेति।—आदिराजस्य मनुमान्धातृप्रभृतिकस्य, चरितमिव चरितं यस्य तथाभूतः। "चरितधूर्य्यः" इति पाठे—चरितस्य या धूः धुरा, तद्वाहकः इत्यर्थः।

(६९) भवदिति।—भवतो भुज एव तरुः, तस्य छाया ताम्।

(७०) अध्यास्ताम् अधितिष्ठतु।

(७१) अभिमनायमानः अनुमोदमानः।

(७२) फाल्गुनीषु उत्तरासु उत्तरफाल्गुनीषु नक्षत्रेष्वित्यर्थः।

भविष्यति, तीर्थस्थानात् प्राच्यां दिशि गोरुतान्तरम् अति-क्रम्य वानीरवलयमध्यवर्त्तिनि (७३) कार्त्तिकेयगृहे कर-तलगतेन शुक्लाम्बरयुगलेन (७४) सह स्थास्यामि। स खलु अहम् अनभिशङ्क (७५) एव एतावन्तं कालं सह विहृत्य राजकन्यया भूयस्तस्मिन् उत्सवे गङ्गाम्भसि विहरन् विहारव्याकुले (७६) कन्यकासमाजे मग्नोऽपसृतः त्वदभ्यासे एव उन्मङ्क्ष्यामि। (७७) पुनः त्वदुपहृते (७८) वाससी परिधाय अपनीतदारिकावेशो (७९) जामाता नाम भूत्वा त्वामेव अनुगच्छेयम्। नृपात्मजा तु माम् इतस्ततोऽन्विष्यानासादयन्ती 'तया विना न भोक्ष्ये' इति वदन्ती एव अवरोधने स्थास्यति। तन्मूले च महति कोलाहले, क्रन्दत्सु परिजनेषु, रुदत्सु सखीजनेषु, शोचत्सु पौरजनेषु, किंकर्त्तव्यतामूढे सामात्ये पार्थिवे, त्वम् आस्थानीम् (८०) एत्य मां स्थापयित्वा वक्ष्यसि—'देव! स एष मे जामाता तव अर्हति श्रीभुजा-राधनम्; अधीती (८१) चतुर्षु आम्नायेषु, (८२) गृहीती

(७३) गोरुतान्तरं यावत्पर्य्यन्तं गोरवः याति तावत्परिमितदूरमित्यर्थः। अतिक्रम्य अतीत्य, किञ्चिद्दूरे इति भावः। वानीरेति।—वानीरवलयं वेतसतरुमण्डलं, तस्य मध्यवर्त्तिनि।

(७४) करतलगतेन हस्तस्थितेन। शुक्लाम्बरयुगलेन श्वेतवस्त्रद्वयेन।

(७५) स खलु धृतकन्यावेश एवेत्यर्थः। अनभिशङ्कः निःशङ्कः।

(७६) विहारव्याकुले विहारासक्तचित्ते इति यावत्।

(७७) त्वदभ्यासे एव तव समीपे एव। उन्मङ्क्ष्यामि उन्मग्नो भविष्यामि।

(७८) त्वदुपहृते त्वद्दत्ते।

(७९) अपनीतदारिकावेशः त्यक्तकन्यावेशः।

(८०) आस्थानीं सभाम्।

(८१) अधीती शिक्षितवेदः, ("योऽधीतशास्त्रवेदः स्यात् सोऽधीतीत्युच्यते बुधैः" इति कोषः। अधीतमनेनेति इनिः तद्योगे कर्मणि सप्तमी)।

षट्सु अङ्गेषु, आन्वीक्षिकीविचक्षणः, चतुःषष्टिकलागमप्रयोगचतुरः, (८३) विशेषेण गजरथतुरङ्गतन्त्रवित्, इष्वसनास्त्रकर्मणि (८४) गदायुद्धे च निरुपमः, पुराणेतिहासकुशलः, (८५) कर्त्ता काव्यनाटकाख्यायिकानां, (८६) वेत्ता सोपनिषदोऽर्थशास्त्रस्य, (८७) निर्मत्सरो (८८) गुणेषु, विश्रम्भी (८९) सुहृत्सु, शक्यः, संविभागशीलः, श्रुतधरः, गतस्मयश्च। (९०) न अस्य दोषम् अणीयांसम् अपि उपलभे, न च गुणेषु अविद्यमानं (९१)

(८२) आम्नायेषु वेदेषु ऋग्यजुःसामाथर्वसु।

(८३) अङ्गेषु शिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्योतिषेषु। आन्वीक्षिकीविचक्षणः आन्वीक्षिक्यां तर्कविद्यायां, विचक्षणः निपुणः। चतुःषष्टीति।—चतुःषष्टिः कलाः शिल्पानि, तासाम् आगमः शास्त्रं, तस्य प्रयोगे चतुरः दक्षः।

(८४) इष्वसनेति।—इषवो बाणाः, अस्यन्ते क्षिप्यन्ते अनेनेति इष्वसनं धनुः, तथा अस्त्राणि तेषां कर्मणि व्यवहारे।

(८५) पुराणेषु पञ्चलक्षणशास्त्रेषु ब्राह्मादिषु, इतिहासेषु पुरावृत्तग्रन्थेषु च, कुशलः।

(८६) काव्यानि श्रव्यकाव्यविशेषाः, शिशुपालवधादिरूपाणि इति यावत्, नाटकानि दृश्यकाव्यविशेषाः, अभिज्ञानशकुन्तलादिप्रकाराणि इति यावत्, आख्यायिकाः ज्ञातवृत्तार्थभूताः कथाः, कादम्बरीहर्षचरितादिरूपा इति यावत्, तासाम्।

(८७) सोपनिषदः धर्मशास्त्रसहितस्य वेदान्तसहितस्य वा, ("भवेदुपनिषद्धर्मे वेदान्ते विजने स्त्रियाम्" इति मेदिनी)। अर्थशास्त्रस्य कामन्दक्यादिनीतिशास्त्रस्य।

(८८) निर्मत्सरः विद्वेषरहितः।

(८९) विश्रम्भी विश्वासी।

(९०) शक्यः प्रियभाषी, ("शक्यः प्रियंवदः प्रोक्तः" इति हलायुधः। "शक्तः" इति पाठे—शक्तिसम्पन्नः)। संविभागशीलः सुविवेचकः, लब्धद्रव्यात् देवपितृतिथियोग्यविभजनतत्पर इत्यर्थः। श्रुतधरः श्रवणमात्रेण शास्त्रार्थधारकः। गतस्मयः गर्वरहितः।

(९१) अणीयांसम् अत्यल्पम्। गुणेषु मध्ये अविद्यमानम् असन्तं, कमपि गुणमिति शेषः, न, उपलभे इति पूर्ववाक्येनान्वयः।

तस्मादमुष्य ब्राह्मणमात्रस्य न लभ्य एष सम्बन्धो। (९२) दुहितरम् अस्मै समर्प्य वार्द्धकोचितम् अन्त्यम् आश्रमं सङ्क्रामेयं, (९३) यदि देवः साधु मन्यते' इति। स इदम् आकर्ण्य वैवर्ण्याक्रान्तवक्त्रः परम् उपेतो वैलक्ष्यम् (९४) आरप्स्यतेऽनुनेतुम् अनित्यतादिसङ्कीर्त्तनेन अत्रभवन्तं मन्त्रिभिः सह। त्वन्तु तेषाम् अदत्तश्रोत्रो (९५) मुक्तकण्ठं रुदित्वा चिरस्य वाष्पकुण्ठकण्ठः काष्ठानि आहृत्य अग्निं सन्धुक्ष्य (९६) राजमन्दिरद्वारे चिताधिरोहणाय उपक्रमिष्यसे। स तावदेव त्वत्पादयोर्निपत्य सामात्यो नरपतिरभिमतैः अर्थैः त्वाम् उपच्छन्द्य (९७) दुहितरं मह्यं दत्त्वा मद्योग्यतासमाराधितः (९८) समस्तमेव राज्यभारं मयि समर्पयिष्यति। सोऽयम् अभ्युपायोऽनुष्ठेयो यदि तुभ्यं रोचते' इति।

सोऽपि पटुर्विटानाम् (९९) अग्रणीः असकृदभ्यस्तकपटप्रपञ्चः (१००) पाञ्चालशर्मा यथोक्तम् अभ्यधिकञ्च निपुणम् उपक्रान्तवान्। आसीच्च मम सम्मोहितानाम् अहीनकाल-

---

(९२) एष सम्बन्धी दुहितुर्जामाता।

(९३) अन्त्यं चरमम्। आश्रमं सन्न्यासधर्ममित्यर्थः। सङ्क्रामेयम् आश्रयेयम्।

(९४) वैवर्ण्येति।—वैवर्ण्येन मालिन्येन, आक्रान्तं वक्त्रं वदनं यस्य तथोक्तः। परं महत्। वैलक्ष्यं सलज्जत्वम्।

(९५) अदत्तश्रोत्रः अदत्तकर्णः, तेषां वचनानि अशृण्वन्नित्यर्थः।

(९६) सन्धुक्ष्य प्रज्वाल्य।

(९७) उपच्छन्द्य प्रलोभ्य, सन्तोष्येत्यर्थः।

(९८) मदिति।—मम योग्यतया नैपुण्येन, समाराधितः सेवितः, प्रीणित इत्यर्थः।

(९९) विटानां धूर्त्तानाम्।

(१००) असकृदिति।—असकृत् पुनः पुनः, अभ्यस्तः शिक्षितः, कपटानां छलानां, प्रपञ्चः विस्तरः येन तथोक्तः।

सिद्धिः। (१) अत्रभवच्च मधुकर इव नवमालिकाम् आर्द्रसुमनसम्। (२) अस्य राज्ञः सिंहवर्मणः साहाय्यदानं सुहृत्सङ्केतभूमिगमनम् इत्युभयम् अपेक्ष्य सर्वबलसन्दोहेन (३) चम्पाम् इमाम् उपगतो देवाद्देवदर्शनसुखम् अनुभवामि" इति।

श्रुत्वा एतत् प्रमतिचरितं स्मितमुकुलितनयनः (४) "विलासप्रायम् ऊर्जितं मृदुप्रायं चेष्टितम्, (५) इष्ट एष मार्गः प्रज्ञावताम्। (६) अथ इदानीम् अत्रभवान् प्रविशतु" इति मित्रगुप्तम् ऐक्षत (७) क्षितीशपुत्रः।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते उत्तरपीठिकायां प्रमतिचरितं नाम पञ्चम उच्छ्वासः।

(१) समीहितानां वाञ्छितानाम्। अचिरकालसिद्धिः अल्पेनैव कालेन सिद्धिः लाभः। "आचिरकालसिद्धिः" इति पाठान्तरम्।

(२) आर्द्रेति।—आर्द्रं सरसं, सुष्ठु मनो यस्यास्तादृशीम्; अन्यत्र—आर्द्राः सरसाः, कोमला इत्यर्थः, सुमनसः पुष्पाणि यस्यास्तथोक्ताम्।

(३) सर्वेति।—सर्वेषां सर्वप्रकाराणां, हस्त्यश्वरथपादातमयानामित्यर्थः, बलानां सैन्यानां, सन्दोहः समूहः तेन।

(४) स्मितेति।—स्मितेन ईषद्धसितेन, मुकुलिते नयने यस्य तथाभूतः।

(५) विलासप्रायं विलासभूयिष्ठम्। ऊर्जितं शौर्ययुक्तम्, आभ्युदयिकमित्यर्थः। मृदुप्रायं प्रायेण कोमलम्। चेष्टितं, तवेति शेषः।

(६) मार्गः उपायः। प्रज्ञावतां बुद्धिमताम्; प्रज्ञावतामेव मार्गः एव इष्टः, इत्यूचे इति शेषः।

(७) ऐक्षत दृष्टवान्।

इति पञ्चम उच्छ्वासः।

# अथ षष्ठोच्छ्वासः।

## मित्रगुप्तचरितम्।

सोऽपि आचचक्षे।—

"देव! सोऽहमस्मि सुहृत्साधारणभ्रमणकारणः सुह्मेषु दामलिप्ताह्वयस्य (१) नगरस्य बाह्योद्याने महान्तम् उत्सवसमाजम् आलोकयम्। तत्र क्वचित् अतिमुक्तलतामण्डपे (२) कमपि वीणावादनेन आत्मानं विनोदयन्तम् उत्कण्ठितं युवानम् अद्राक्षम्, अप्राक्षञ्च—'भद्र! को नाम अयम् उत्सवः? किमर्थं वा समारम्भः? (३) केन वा निमित्तेन उत्सवम् अनादृत्य एकान्ते भवानुत्कण्ठित इव परिवादिनीद्वितीयः (४) तिष्ठति?' इति। सोऽभ्यधत्त—'सौम्य! सुह्मपतिस्तुङ्गधन्वा नाम अनपत्यः (५) प्रार्थितवान् अमुष्मिन्

---

(१) सुहृदिति।—सुहृदां साधारणं समानं, भ्रमणस्य कारणं यस्य तथोक्तः, भवदन्वेषणार्थीति भावः। सुह्मेषु तदाख्यदेशेषु। दामलिप्तेति।—दामलिप्त आह्वयो नाम यस्य तस्य, ("आह्वयः। आख्याह्वे अभिधानञ्च नामधेयञ्च नाम च" इत्यमरः)।

(२) अतिमुक्तेति।—अतिमुक्तलता माधवीलता, ("अतिमुक्तः पुण्ड्रकः स्यात् वासन्ती माधवीलता" इत्यमरः) तद्रचिते मण्डपे गृहे।

(३) समारम्भः प्रक्रान्तः।

(४) परिवादिनीति।—परिवादिनी वीणाविशेषः, ("सेतार" इति भाषा। "सा तु तन्त्रीभिः सप्तभिः परिवादिनी" इत्यमरः) द्वितीया यस्य तथोक्तः, वीणां वादयन्नित्यर्थः।

(५) अनपत्यः अपुत्रः।

आयतने विस्मृतविन्ध्यवासरागं ( ६ ) वसन्त्या विन्ध्यवासिन्याः पादमूलात् अपत्यद्वयम्। अनया च किल अस्मै प्रतिशयिताय ( ७ ) स्वप्ने समादिष्टम् ( ८ ) 'उत्पत्स्यते तव एकः पुत्रः, जनिष्यते च एका दुहिता, स तु तस्याः पाणिग्राहकम् अनुजीविष्यति। ( ९ ) सा तु सप्तमात् वर्षात् आरभ्य आ-परिणयनात् प्रतिमासं कृत्तिकासु कन्दुकनृत्येन ( १० ) गुण-वद्भर्तृलाभाय मां समाराधयतु, यञ्च अभिलषेत्, सा अमुष्मै देया। स च उत्सवः कन्दुकोत्सवनाम अस्तु' इति। ततः अल्पीयसा कालेन राज्ञः प्रियमहिषी मेदिनी नाम एकं पुत्रम् असूत, समुत्पन्ना च एका दुहिता। सा अद्य नाम कन्या कन्दुकावती सोमापीड़ां ( ११ ) देवीं कन्दुकविहारेण आराधयिष्यति। तस्यास्तु सखी चन्द्रसेना नाम धात्रेयिका मम प्रिया आसीत्, सा च एषु दिवसेषु राजपुत्रेण भीम-धन्वना बलवत् अनुरुद्धा। ( १२ ) तदहम् उत्कण्ठितो

---

(६) विस्मृतेति।—विस्मृतः विन्ध्यवासस्य विन्ध्याचलावस्थानस्य, रागः अनुरागः यस्मिन् तद्यथा तथा, अनया विन्ध्यवासिनी देवी राज्ञा दैवमवाप्तिभिश्च बहु सेव्यते इति भावः।

(७) प्रतिशयिताय तन्मनस्कतया अनशनेन शयनं प्रतिशयः, सः सञ्जातोऽस्य ( इति तारकादित्वादितच् ) प्रतिशयितः तस्मै, अभीष्टलाभाय भोजनादिवर्जनपूर्वं देवोद्देशेन कृतशयनाय इत्यर्थः।

(८) समादिष्टम् आज्ञप्तम्।

(९) स तु पुत्र इत्यर्थः। तस्याः कन्यायाः। पाणिग्राहकं परिणेतारम्। अनुजीविष्यति अनुजीव्यं करिष्यति, तदधीनो भविष्यतीति भावः।

(१०) कृत्तिकासु तदाख्यनक्षत्रेषु। कन्दुकनृत्येन कन्दुकक्रीड़या यत् नृत्यं तेन।

(११) सोमापीड़ां सोमश्चन्द्रः, आपीड़ः शिरोभूषणं यस्यास्ताम्, चन्द्रशेखरा-मित्यर्थः, ( "आपीड़ः शेखरः समौ" इति वैजयन्ती )।

(१२) बलवत् बलपूर्वकमित्यर्थः। अनुरुद्धा प्रार्थिता इत्यर्थः।

मन्मथशरशल्यदुःखोद्विग्नचेताः कलेन (१३) वीणारवेण आत्मानं किञ्चित् आश्वासयन् विविक्तम् अध्यासि' (१४) इति।

अस्मिन्नेव च क्षणे किमपि नूपुरक्वणितम् (१५) उपातिष्ठत्, आगता च काचित् अङ्गना। दृष्ट्वा एव स एनाम् उत्फुल्लदृष्टिरुत्थाय उपगूढकण्ठश्च तया (१६) तत्रैव उपाविशत्, अशंसच्च—'सा एषा मे प्राणसमा, यद्विरहो दहन इव दहति माम्, इदञ्च मे जीवितम् अपहरता राजपुत्रेण मृत्युना इव निरूष्मता (१७) नीतः। न च शक्नोमि राजसूनोरिति अमुष्मिन् पापम् आचरितुम्, अतोऽनया आत्मानं सुदृष्टं कारयित्वा त्यक्ष्यामि निष्प्रतिक्रियान् (१८) प्राणान्' इति। सा तु पर्यश्रुमुखी समभ्यधात्—'मास्म नाथ! मत्कृतेऽध्यवस्यः (१९) साहसम्। यस्त्वम् उत्तमात् (२०) सार्थवाहात् अर्थदासात् (२१) उत्पद्य कोशदास इति गुरुभिः अभिहितनामधेयः पुनः मदत्यासङ्गात् वेशदास (२२) इति द्विषद्भिः (२३)

---

(१३) कलेन मधुरेण।

(१४) विविक्तं विजनम्। अध्यासि अधितिष्ठामि।

(१५) नूपुरक्वणितं नूपुरध्वनिः।

(१६) स वीणावादको युवा। उपगूढकण्ठः आलिङ्गितकण्ठः। तया अङ्गनया।

(१७) निरूष्मतां शीतलतां निस्तेजस्त्वं वा।

(१८) "पापम्" इत्यत्र "न्यायम्" इति पाठे—न्यायानुरूपं दण्डम् इति भावः। निष्प्रतिक्रियान् प्रतिकाररहितान्, राजपुत्रकृतन्यायाचरणस्य प्रतीकाराक्षमान् इत्यर्थः।

(१९) अध्यवस्यः आश्रय, [अध्यवपूर्वात् स्यतेः लङि मध्यमपुरुषैकवचनरूपम्; "स्मोत्तरे लङ् च" (३।३।१७६ पा०) इति लङ्]।

(२०) उत्तमात् श्रेष्ठात्।

(२१) अर्थदासात् तन्नाम्नः।

(२२) मदत्यासङ्गात् मयि अत्यनुरागात्। वेशदासः वेश्यादासः।

प्रख्यापितोऽसि, तस्मिंस्त्वयि उपरते यद्यहं जीवेयं, 'नृशंसो वैश्यः' इति समर्थयेयं (२४) लोकवादम्। अतोऽद्यैव नय माम् ईप्सितं देशम्' इति। स तु माम् अभ्यधत्त— 'भद्र! भवद्दृष्टेषु राष्ट्रेषु कतमत् समृद्धं सम्पन्नसस्यं सत्पुरुषभूयिष्ठञ्च?' इति। तमहम् ईषत् विहस्य अब्रवं—'भद्र! विस्तीर्णेयम् अर्णवाम्बरा, न पर्यन्तः (२५) अस्ति स्थाने स्थाने रम्याणां जनपदानाम्। अपि तु न चेत् इह युवयोः सुखनिवासकारणं कमपि उपायम् उत्पादयितुं शक्नुयां, ततोऽहमेव भवेयम् अध्वदर्शी।' (२६) तावता उदैरयन् (२७) रणितानि मणिनूपुराणाम्। अथ असौ जातसम्भ्रमा 'प्राप्तेयं भर्तृदारिका कन्दुकावती कन्दुकक्रीडितेन देवीं विन्ध्यवासिनीम् आराधयितुम्। अनिषिद्धदर्शना च वयमस्मिन् कन्दुकोत्सवे। सफलम् अस्तु युष्मच्चक्षुः। आगच्छतं द्रष्टुम्, अहमस्याः सकाशवर्त्तिनी भवेयम्' इति अयासीत्। ताम् अन्वयाव (२८) च आवाम्। महति रत्नरङ्गपीठे स्थितां प्रथमं ताम्रोष्ठीम् अपश्यम्, अतिष्ठच्च सा सद्य एव मम हृदये। न मया अन्येन वा अन्तराले (२९) दृष्टा। विस्मया-

---

(२३) द्विषद्भिः शत्रुभिः।

(२४) समर्थयेयम् अनुमोदेय, समर्थनं कुर्यामित्यर्थः।

(२५) अर्णवाम्बरा समुद्रवसना, पृथिवीत्यर्थः। पर्यन्तः शेषः।

(२६) अध्वदर्शी मार्गदर्शकः।

(२७) तावता तत्कालेन। उदैरयन् उदगच्छन्, ("उदैरत" इति पाठे— अनुदात्तेत ईर्-धातोर्लङ् प्रथमपुरुषबहुवचने रूपम्)।

(२८) अन्वयाव अन्वगच्छाव।

(२९) अन्तराले अभ्यन्तरे, स्थितेन इति शेषः, कुत्रचित् अदृश्यस्थाने गुप्तभावेन स्थिता मया अन्येन वा सा न दृष्टा, परन्तु प्रकाशमेव दृष्टा इति भावः।

विष्टचित्तः (३०) च अचिन्तयं—'किमियं लक्ष्मीः? न हि न हि, तस्याः किल हस्ते विन्यस्तं कमलम्, अस्यास्तु हस्त एव कमलम्; भुक्तपूर्वा च असौ पुरातनेन पुंसा (३१) पूर्वराजैश्च, अस्याः पुनः अनवद्यम् अयातयामञ्च (३२) यौवनम्' इति चिन्तयति एव मयि सा अनघसर्वगात्री व्यत्यस्तहस्तपल्लवाग्रस्पृष्टभूमिः आलोलनीलकुटिलालका सविभ्रमं (३३) भगवतीम् अभिवन्द्य कन्दुकम् अमन्दरागरूषिताक्षम् अनङ्गमिव आलम्बत, लीलाशिथिलञ्च (३४) भूमौ मुक्तवती। मन्दोत्थितञ्च किञ्चित्कुञ्चिताङ्गुष्ठेन प्रसृतकोमलाङ्गुलिना (३५) पाणिपल्लवेन समाहृत्य हस्तपृष्ठेन च उन्नीय चटुलदृष्टिलाञ्छितं स्तवकम् इव भ्रमरमालानुविद्धम् अवपत-

---

(३०) विलोलेति।—विलोलया विस्मयेन, ("विलोला विस्मयोऽद्भुतम्" इति कोषः) आविष्टम् आक्रान्तं चित्तं यस्य तथाभूतः।

(३१) पुरातनेन पुंसा नारायणेन।

(३२) अनवद्यम् अनिन्द्यम्। अयातयामम् अपरिभुक्तं, ("जीर्णञ्च परिभुक्तञ्च यातयाममिदं द्वयम्" इत्यमरः)।

(३३) अनघसर्वगात्री सर्वाङ्गसुन्दरीत्यर्थः। व्यत्यस्तेति।—व्यत्यस्ताभ्यां विपर्य्यस्ताभ्यां, परावर्त्तिताभ्यामित्यर्थः, हस्तपल्लवाग्राभ्यां करकमलाग्राभ्यां, स्पृष्टा भूमिर्यया तथोक्ता। आलोलेति।—आलोलाः चञ्चलाः, नीलाः श्यामलाः, कुटिलाः भङ्गीभूताः, अलकाः चूर्णकुन्तला यस्याः तथोक्ता। सविभ्रमं सविलासम्।

(३४) अमन्देति।—अमन्देन प्रचुरेण, रागेण लोहिताद्युज्ज्वलवर्णेन, रूषितः रञ्जितः, अक्षः आत्मा, स्वरूपमित्यर्थः, यस्य तादृशम्, अन्यत्र—अमन्देन प्रबलेन, रागेण अनुरागेण, रूषिते रञ्जिते, अक्षिणी यस्य तादृशं, सुरञ्जिताक्षमित्यर्थः। आलम्बत गृहीतवती। लीलेति।—लीलया विलासेन, शिथिलं श्लथं यथा तथा।

(३५) मन्दोत्थितम् ईषदुत्थितम्। किञ्चिदिति।—किञ्चित् ईषत्, कुञ्चितः सङ्कोचं नीतः, अङ्गुष्ठः यस्य तादृशेन। प्रसृतेति।—प्रसृताः विस्तृताः, कोमलाः अङ्गुलयो यस्य तादृशेन।

(३६) चटुलेति।—चटुलया चञ्चलया, दृष्ट्या कृष्णतारेण चक्षुषा, लाञ्छितं

न्तम् आकाश एव अग्रहीत् अमुञ्चच्च, (३६) मध्यविलम्बितलये द्रुतलये (३७) च मृदु मृदु प्रहरन्ती तत्क्षणं चूर्णपदम् (३८) अदर्शयत्। प्रशान्तञ्च तं निर्दयप्रहारैः उदपातयत्, विपर्य्ययेण च प्राशमयत्। (३९) पक्षमृज्वागतञ्च वामदक्षिणाभ्यां कराभ्यां पर्य्यायेण अभिघ्नती शकुन्तमिव उदस्थापयत्, (४०) दूरोत्थितञ्च प्रपतन्तम् आहत्य गीतमार्गम् आरचयत्। (४१) प्रतिदिशञ्च गमयित्वा (४२) प्रत्यागमत्।

एवम् अनेककरणमधुरं (४३) विहरन्ती, रङ्गगतस्य रक्तचेतसो (४४) जनस्य प्रतिक्षणम् उच्चावचाः (४५) प्रशंसावाचः प्रतिगृह्णती, प्रतिक्षणारूढविभ्रमं (४६) कोशदास-

कुण्डलितया वलितम् इत्यर्थः। स्तवकमिव पुष्पगुच्छमिव। अमुञ्चत् अत्यजत्, पुनरप्यूर्द्ध्वमिति शेषः।

(३७) मध्येति।—मध्ये अन्तराले, मन्दशीघ्रविभिन्ने इत्यर्थः, विलम्बिते मन्दे च, लयः संख्यानविशेषः तस्मिन्। द्रुतलये शीघ्रसंख्याने।

(३८) चूर्णपदं कन्दुकतन्त्रोक्तक्रियाविशेषं, ("मध्यागत्योरानुलोम्यं न्यूनाधिक्य-क्षेपणं तच्चूर्णपदम्" इति कन्दुकतन्त्रम्)।

(३९) प्रशान्तम् अव्यापारतया स्थिरम्। तं कन्दुकम्। निर्दयप्रहारैः सुदृढघातैः। उदपातयत् उदक्षिपत्। विपर्य्ययेण वैपरीत्येन। प्राशमयत् प्रशान्तमकरोत्।

(४०) पक्षं वशमागतम्। ऋज्वागतं सरलभावेनोपगतमित्यर्थः। अभिघ्नती प्रहरन्ती। शकुन्तमिव पक्षिणमिव। उदस्थापयत् उदपातयत्।

(४१) आहत्य गृहीत्वा। गीतमार्गं कन्दुकतन्त्रोक्तगीतमार्गं गीतेन दशपद-चतुष्पदस्थानविशेषम् इत्यर्थः। आरचयत् अदर्शयत् अकारयत् वा।

(४२) गमयित्वा नयित्वा।

(४३) अनेकेति।—अनेककरणेन बहुप्रकारानुष्ठानेन, मधुरं मनोहरम्।

(४४) रङ्गगतस्य क्रीडाभूमिस्थितस्य। रक्तचेतसः अनुरक्तचित्तस्य।

(४५) उच्चावचाः नैकविधाः।

(४६) प्रतिक्षणेति।— प्रतिक्षणं क्षणे क्षणे, आरूढः उल्लासः, विभ्रमः विलासः

मंसेऽवलम्बा कण्टकितगण्डम् (४७) उत्फुल्लेक्षणाञ्च मयि अभिमुखीभूय तिष्ठति तत्प्रथमावतीर्णकन्दर्पकारित-कटाक्ष-दृष्टिः, तदनुमार्गविलसित-लीलाञ्चितभ्रूलता, श्वासानिलवेगा-न्दोलितैः दन्तच्छदरश्मिजालैः (४८) लीलापल्लवैः इव मुख-कमलपरिमलग्रहणलोलानलिनस्ताडयन्ती, (४९) मण्डल-भ्रमणेषु कन्दुकस्य अतिशीघ्रप्रचारतया विशन्तीव मद्दर्शन-लज्जया पुष्पमयं पञ्जरं, पञ्चबिन्दुप्रसृतेषु (५०) पञ्चापि पञ्च-बाणबाणान् युगपदिव अभिपततः त्रासेन अवघट्टयन्ती, (५१) गोमूत्रिकाप्रचारेषु घनदर्शितरागविभ्रमा विद्युल्लतामिव विडम्बयन्ती, भूषणमणिरणितदत्तलयसंवादिपादचारम्,

---

यस्मिन् तद्यथा तथा। "तरलतारकाविभ्रमम्" इति पाठे—तारकयोः साक्ष्णः जातः, विभ्रमः विलासो यस्मिन् तादृशम्।

(४७) कण्टकितगण्डं पुलकितकपोलम्।

(४८) तदिति।—तदेव प्रथमं पूर्वम्, अवतीर्णेन प्रविष्टेन, कन्दर्पेण कारिता पातिता, कटाक्षदृष्टिर्यया तथोक्ता। तदिति।—तस्य कन्दुकस्य, अनुमार्गे मार्गे लक्षीकृत्य, विलसिते व्यापारिते, अञ्चिते इत्यर्थः, लीलया विलासेन, अञ्चिते च प्रसृते च वक्रीकृते च वा, भ्रुवौ लते इव यया तथोक्ता। श्वासेति।—श्वासानिलस्य निःश्वासपवनस्य, वेगेन आन्दोलितैः स्पन्दितैः, कम्पितैरिति भावः। दन्तेति।—दन्तच्छदस्य अधरस्य, रश्मिजालैः प्रभापुञ्जैः।

(४९) मुखेति।—मुखं कमलमिव मुखकमलं, तस्य परिमलग्रहणे सौरभ-ग्रहणे, लोलान् सतृष्णान्, ("लोलश्चलसतृष्णयोः" इत्यमरः)। अलिनः भ्रमरान्, (अल-शब्दात् भूष-धातोर्वा इनि-प्रत्ययान्तोऽयम्)। ताडयन्ती निरस्यन्ती।

(५०) पञ्चेति।—पञ्चबिन्दुनामकेषु प्रसृतेषु कन्दुकस्य प्रचारविशेषेषु, अथवा—पञ्चबिन्दुर्नीतकमर्थे गतिभेदः, तत्प्रसृतेषु तद्व्यापारेषु।

(५१) अभिपततः आपततः। अवघट्टयन्ती ताडयन्ती, कन्दुकमिति शेषः, पञ्चवारमागतं कन्दुकं प्रक्षिपन्तीति भावः।

(५२) गोमूत्रेति।—गोमूत्रिका गोमूत्रं, तद्वत् प्रचाराः वक्रसरलगति-विशेषास्तेषु। घनेति।—घनं सान्द्रं, दर्शितः प्रकटितः, रागस्य अनुरागस्य, विभ्रमः

अपदेशस्मितप्रभाऽभिषिक्तबिम्बाधरम्, अंस-संसित-प्रतिसमाहितशिखण्डभारं, समाघट्टितक्वणितरत्नमेखलागुणम्, अञ्चितोच्छ्रित-पृथुनितम्बविलम्बित-विचलदंशुकोज्ज्वलम्, आकुञ्चित-प्रसृतवेल्लितभुजलताऽभिहत-ललितकन्दुकम्, आवर्जित-बाहुपाशम्, उपरिपरिवर्त्तित-त्रिक-विलग्नलोलकुन्तलम्, अवगलितकर्णपूर-कनकपत्रप्रतिसमाधानशीघ्रताऽनतिक्रमित-प्रकृतक्रीडनम्, असकृदुत्क्षिप्यमाणहस्तपादबाह्याभ्यन्तर-

---

विलासो यथा तथाविधा। विद्युल्लतामिव सौदामनीमिव। विडम्बयन्ती अनुकुर्वती। भूषणेति।—भूषणमणीनाम् अलङ्काररत्नानां, रचितेन शब्देन, दत्तः यो लयः साम्यं, तत्संवादी तदनुकारी, पादचारो यस्मिन् तद्यथा तथा। अपदेशेति।—अपदेशेन छलेन, यत् स्मितम् ईषत् हास्यं, तस्य प्रभया अभिषिक्तः अनुरञ्जित इत्यर्थः, बिम्बमिव अधरो यस्मिन् तद्यथा तथा। अंसेति।—अंसे स्कन्धदेशे, आदौ संसितः पतितः, पश्चात् प्रतिसमाहितः स्वस्थानं स्थापितः, शिखण्डभारः केशकलापः यस्मिन् तद्यथा तथा। समेति।—समाघट्टितः सन्ताडितः, नृत्यवशात् सञ्चालित इत्यर्थः, अत एव क्वणितः शब्दितः, रत्नमेखलागुणः रत्नकाञ्चीदाम यस्मिन् तद्यथा तथा। अञ्चितेति।—अञ्चितं प्रशंसितं यथा तथा, उच्छ्रितः यः पृथुर्महान्, नितम्बः, तत्र विलम्बितं संलग्नं, तथा विचलत् क्रीडावेगादुड्डीयमानञ्च, यत् अंशुकं सूक्ष्मवसनं, तेन उज्ज्वलं मनोज्ञं यथा तथा। आकुञ्चितेति।—आकुञ्चितं कदाचित् ईषद्वक्रीकृतं, प्रसृतं कदाचित् प्रसारितञ्च यथा तथा, वेल्लितया आकम्पितया, भुजलतया अभिहतः प्रहतः, ललितः सुन्दरः, कन्दुको यस्मिन् तद्यथा तथा। आवर्जितेति।—आवर्जितौ आनमितौ, बाहू पाशाविव यस्मिन् तद्यथा तथा। उपरीति।—उपरिपरिवर्त्तिते त्रिके पृष्ठवंशाधोभागे, ("पृष्ठवंशाधरे त्रिकम्" इत्यमरः) विलग्नाः पतिताः, लोलाश्चलाः, कुन्तलाः केशाः यस्मिन् तत् यथा तथा; यद्वा—उपरिपरिवर्त्तिते ऊर्द्ध्वदेशस्थे, त्रिके त्रये, स्थानत्रये इत्यर्थः, ललाटकपोलांसदेशे इति यावत्, विलग्नाः श्रमोद्भूतस्वेदजले संलिप्ताः, लोलाः कुन्तला यस्मिन् तत् यथा तथा। अवगलितेति।—अवगलितस्य स्रस्तस्य, कर्णपूरस्य कर्णभूषणस्य, कनकपत्रस्य तदाख्यालङ्कारविशेषस्य इत्यर्थः, प्रतिसमाधाने यथास्थानस्थापने, या शीघ्रता द्रुतकारिता, तया अनतिक्रमितम् अनुल्लङ्घितम्, अव्याहतम् इत्यर्थः, प्रकृतं प्रारब्धं, क्रीडनं यस्मिन् तत् यथा तथा। असकृदिति।—असकृत् पुनः पुनः, उत्क्षिप्यमाणानां हस्तपादानां

भ्रान्तकन्दुकम्, अवनमनोन्नमनैरत्यर्थनष्टदृष्टमध्ययष्टिकम्, अवपतनोत्पतननिर्व्यवस्थमुक्ताहारम्, अङ्कुरितघर्मसलिलदूषितकपोलपत्रभङ्गशोषणाधिकृतश्रवणपल्लवानिलम्, आगलितस्तनतटांशुकनियमनव्यापृतैकपाणिपल्लवञ्च निषद्य (५२) उत्थाय निमील्योन्मील्य स्थित्वा गत्वा च एव अतिचित्रं (५३) पर्यक्रीडत राजकन्या। अभिहत्य भूतलाकाशयोः अपि क्रीडान्तराणि दर्शनीयानि एकेनैव वा अनेकेनैव कन्दुकेन अप्रदर्शयत्। (५४) चन्द्रसेनादिभिश्च

बाह्याभ्यन्तरेषु भ्रान्तः कन्दुको यस्मिन् तद्यथा तथा। अवनमनेति।—अवनमनम् अवनतीभवनम्, उन्नमनम् उन्नतीभवनं, तयोरत्यर्थेन सातत्येन, नष्टा अदर्शनं गता, दृष्टा दर्शनं गता च, अवनमने नष्टा उन्नमने च दृष्टेत्यर्थः, मध्ययष्टिः मध्यस्थहारविशेषः ("यष्टिर्हारलताशस्त्रभेदयोः" इति विश्वः) यस्मिन् तद्यथा तथा। अवपतनेति।—अवपतनं न्युब्जीभावः, उत्पतनम् ऊर्द्ध्वीभावः, ताभ्यां निर्व्यवस्थः अनवस्थितः, इतस्ततो दोदुल्यमान इत्यर्थः, मुक्ताहारो यस्मिन् तद्यथा तथा। अङ्कुरितेति।—अङ्कुरितमीषदुद्भिन्नतया सञ्जाताङ्कुरवत् प्रतीयमानं, यत् घर्मसलिलं स्वेदवारि, तेन दूषितानां नष्टानां, लुप्तप्रायाणामित्यर्थः, कपोलयोः गण्डयोः, पत्रभङ्गानां पत्ररचनानां, घर्मार्द्राणामिति भावः, शोषणे आर्द्रभावापनयने इति यावत्, अधिकृतः नियुक्तः, श्रवणपल्लवस्य कर्णस्थितकिसलयस्य, अनिलो वायुः यस्मिन् तद्यथा तथा। आगलितेति।—आगलितम् ईषत् स्खलितं, स्तनतटस्य यदंशुकं वसनं, तस्य नियमने सन्निवेशने, व्यापृतः आसक्तः, एकः पाणिपल्लवः करकिसलयः यस्मिन् तद्यथा तथा। निषद्य उपविश्य।

(५३) अतिचित्रम् अतिमनोहरम्।

(५४) अभिहत्य अभिघातं कृत्वा। भूतलाकाशयोः कदाचित् भुवि कदाचित् आकाशे च, कन्दुकोपरि आघातं कृत्वेति भावः। क्रीडान्तराणि अन्याः क्रीडाः क्रीडाविशेषान् वा। एकेनेति।—एकेनैव कन्दुकेन अनेकेनैव वा बहुसङ्ख्यकेनैव कन्दुकेनेव इत्यर्थः, क्रीडान्तराणि अदर्शयत्। (वा-शब्दः अत्र "मणी वोष्ट्रस्य लम्बेते प्रियो वत्सतरो मम" इत्यादिवत् उपमानार्थको बोध्यः। "वा स्यात् विकल्पोपमयोरिवार्थे च समुच्चये" इत्यभिधानात्)।

प्रियसखीभिः सह विहृत्य, विहृतान्ते (५५) च अभिवन्द्य देवीं, मनसा मे सानुरागेण इव परिजनेन अनुगम्यमाना कुवलयशरमिव कुसुमशरस्य मयि अपाङ्गं समर्पयन्ती, सापदेशम् असकृत (५६) आवर्त्तमानवदनचन्द्रमण्डलतया स्वहृदयमिव मत्समीपे प्रेरितं प्रतिनिवृत्तं न वेति आलोकयन्ती सह सखीभिः कुमारीपुरम् अगमत्।

अहञ्च अनङ्गविह्वलः स्ववेश्म गत्वा कोशदासेन यत्नवत् अत्युदारं स्नानभोजनादिकम् अनुभावितोऽस्मि। सायञ्च उपसृत्य चन्द्रसेना रहसि मां प्रणिपत्य पत्युरंसमंसेन प्रणयपेशलम् आघट्टयन्ती (५७) उपाविशत्। आचष्ट च हृष्टः कोशदासः,—'भूयासमेवं यावत् आयुः आयताक्षि! (५८) त्वत्प्रसादस्य पात्रम्' इति। मया तु सस्मितम् अभिहितं—'सखे! किमेतत् आशास्यम्? (५९) अस्ति किञ्चित् अञ्जनम्, (६०) अनया तदञ्जनेतया (६१) राजसूनुरुपस्थितो वानरीमिव एनां द्रक्ष्यति, विरक्तश्च एनां पुनः त्यक्ष्यति' इति। तया तु स्मेरया (६२) अस्मि कथितः, 'सोऽयमार्य्येण आज्ञाकरो जनोऽत्यर्थम् अनुगृहीतः, यत् अस्मिन्नेव जन्मनि मानुषं वपुः अपनीय वानरीकरिष्यते। तदास्ताम् इदम्,

(५५) विहृतान्ते खेलनान्ते।

(५६) सापदेशं सव्याजम्। असकृत पुनः पुनः।

(५७) प्रणयपेशलं प्रेममधुरम्। आघट्टयन्ती स्पृशन्ती।

(५८) आयताक्षि! आयते दीर्घे, अक्षिणी यस्यास्तत्सम्बुद्धौ।

(५९) आशास्यम् आशंसनीयम्, इष्टार्थशंसनमित्यर्थः, त्वया यदाशास्यते नैतत् दुःसाध्यं, अल्पायासेनैव अहमेतत् साधयामीति भावः।

(६०) अञ्जनं कज्जलम्।

(६१) तदक्तनेत्रया तेन अञ्जनेन, अक्ते लिप्ते, नेत्रे यस्यास्तथाभूतया त्वया।

(६२) स्मेरया ईषत् हसन्त्या।

अन्यथाऽपि सिद्धं नः समीहितम्। (६३) अद्य खलु कन्दुकोत्सवे भवन्तम् अवहसितमनोभवाकारम् (६४) अभिलषन्ती रोषादिव शम्बरद्विषा अतिमात्रम् आयास्यते (६५) राजपुत्री। सोऽयमर्थो विदितभावया मया स्वमात्रे, (६६) तया तन्मात्रे, महिष्या (६७) च मनुजेन्द्राय निवेदयिष्यते। विदितार्थस्तु पार्थिवस्त्वया दुहितुः पाणिं ग्राहयिष्यति; ततश्च त्वदनुजीविना राजपुत्रेण भवितव्यम्। एष हि देवतासमादिष्टो विधिः। त्वदायत्ते च राज्ये न अलम् (६८) एव त्वाम् अतिक्रम्य माम् एवम् अवरोद्धुं भीमधन्वा। (६९) तत् सह्यताम् अयं त्रिचतुराणि दिनानि' इति माम् आमन्त्र्य प्रियश्च उपगूह्य प्रत्ययासीत्। मम च कोशदासस्य च तदुक्तानुसारेण च बहु विकल्पयतोः (७०) कथंचित् अक्षीयत क्षपा। (७१)

---

(६३) समीहितम् अभिलषितम्।

(६४) अवहसितेति।—अवहसितः न्यक्कृतः, मनोभवस्य कामस्य, आकारो येन तथाभूतम्।

(६५) रोषादिव त्वयि अभिलाषात् क्रोधादिवेत्यर्थः। शम्बरद्विषा कामेन, ("शम्बरारिर्मनसिजः" इत्यमरः)। आयास्यते पीड्यते; यथा कोऽपि कमपि प्रबलस्यापकर्तुमशक्नुवन् स्वजनानां पीडनेऽपि तस्यैव पीडनं भवेदिति मत्वा प्रबलस्य तस्य स्वजनं पीडयति, तद्वत् कामोऽपि राजतनयामिति भावः। (अत्र प्रत्यनीकमलङ्कारः, तदुक्तं दर्पणे—"प्रत्यनीकमशक्तेन प्रतीकारे रिपोर्यदि। तदीयस्य तिरस्कारस्तस्यैवोत्कर्षसाधकः॥" इति)।

(६६) विदितभावया विज्ञाताभिप्रायया। स्वमात्रे निजजनन्यै।

(६७) तया मज्जनन्या इत्यर्थः। तन्मात्रे तस्याः राजकन्यायाः, मात्रे जनन्यै। महिष्या राजपत्न्या।

(६८) अलं शक्तः।

(६९) अवरोद्धुं बलात् निरोद्धुम्। भीमधन्वा राजपुत्रः।

(७०) विकल्पयतोः विविधकल्पनां कुर्वतोः।

क्षपान्ते च कृतयथोचितनियमः (७२) तमेव प्रिया-दर्शनसुभगम् उद्यानोद्देशम् उपागतोऽस्मि। तत्रैव च उपसृत्य (७३) राजपुत्रो निरभिमानम् (७४) अनुकूलाभिः कथाभिः माम् अनुवर्त्तमानो (७५) मुहूर्त्तम् आस्त। (७६) नीत्वा च उपकार्य्याम् आत्मसमेन स्नानभोजनशयनादिव्यतिकरेण उपाचरत्। (७७) तल्पगतश्च (७८) स्वप्नेन अनुभूयमानप्रियादर्शनालिङ्गनसुखम् आयसेन निगड़ेन (७९) अतिबलवत् बहुपुरुषैः पीवरभुजदण्डोपकण्ठम् (८०) अबन्धयत् माम्। प्रतिबुद्धश्च (८१) सहसा समभ्यधात्—'अयि! दुर्मते! श्रुतम् आलपितं हतायाः (८२) चन्द्रसेनाया जालरन्ध्रनिःसृतं (८३) तच्चेष्टावबोधप्रयुक्तया अनयया कुब्जया।

---

(७१) क्षपायाम क्षीणा, अतीतेत्यर्थः। क्षपा रात्रिः, ("निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा" इत्यमरः)।

(७२) कृतेति।—कृतः अनुष्ठितः, यथोचितः यथाविहितः, नियमः विधिः येन तथाविधः, समापितप्रातःकृत्य इत्यर्थः।

(७३) उपसृत्य समीपमागत्य।

(७४) निरभिमानम अगर्वम।

(७५) अनुवर्त्तमानः अनुसरन्, प्रीणयन्नित्यर्थः।

(७६) आस्त अतिष्ठत।

(७७) उपकार्य्यां राजसद्म, राजभवनमित्यर्थः, ("उपकार्य्या राजसद्मन्युपकारोचितेऽन्यवत्" इति मेदिनी)। उपाचरत् असेवत।

(७८) तल्पगतं शयनस्थम्।

(७९) आयसेन लौहमयेन। निगड़ेन शृङ्खलेन।

(८०) पीवरेति। पीवरौ स्थूलौ, भुजदण्डौ बाहुदण्डौ, ताभ्याम् उपकण्ठं यथा तथा।

(८१) प्रतिबुद्धं जागरितम्।

(८२) आलपितं वचनम्। हतायाः दुष्टायाः।

(८३) जालरन्ध्रनिःसृतं गवाक्षविवरनिर्गतम्।

त्वं किलाभिलषितो वराक्या कन्दुकावत्या ? तव किलानुजीविना मया स्थेयम् ? त्वद्वचः किल अनतिक्रमता मया चन्द्रसेना कोऽयदासाय दास्यते ?' इत्युक्त्वा पार्श्वचरं पुरुषमेकम् आलोक्य अकथयत्—'प्रक्षिपैनं सागरे' इति। स तु लब्धराज्य इव अतिहृष्टः 'देव ! यत् आज्ञापयति' इति यथाऽऽदिष्टम् अकरोत्। अहन्तु निरालम्बनो भुजाभ्याम् इतस्ततः स्पन्दमानः (८४) किमपि काष्ठं दैवदत्तम् उरसा उपश्लिष्य तावत् अप्लोषि, यावत् अपासरत् (८५) वासरःशर्वरी च सर्वा। प्रत्यूषसि अदृश्यत किमपि वहित्रम्, (८६) अमुत्र (८७) आसन् यवनाः। ते माम् उद्धृत्य रामेषुनाम्ने नाविकनायकाय (८८) कथितवन्तः, 'कोऽपि अयमायसनिगड़बद्ध एव जले लब्धः पुरुषः। सोऽयमपि क्षिपेत् सहस्रं द्राक्षाणां क्षणेन एकेन' (८९) इति। अस्मिन्नेव क्षणे नैकनौकापरिवृतः कोऽपि मद्गुः (९०) अभ्यधावत्। अबिभयुः (९१) यवनाः। तावत् अतिजवाः (९२) नौकाः श्वान (९३) इव

(८४) स्पन्दमानः सञ्चरन्।

(८५) अप्लोषि समतारिषं, भासमान एवातिष्ठमित्यर्थः। अपासरत् अत्यगात्।

(८६) वहित्रम् अर्णवयानम्।

(८७) अमुत्र वहित्रे।

(८८) नाविकनायकाय नाविकाधिपतये।

(८९) द्राक्षाणां मद्यसाधनफलविशेषलताफलानां, ("मृद्वीका गोस्तनी द्राक्षा" इत्यमरः) द्राक्षाणां सहस्रम् एकेनैव क्षणेन अपि क्षिपेत् (सम्भावनायां लिङ्) एतद्विनिमयेन द्राक्षासहस्रलाभ इति सम्भाव्यते।

(९०) मद्गुः युद्धसाधनवहित्रं, पोतदस्युः इति केचित्।

(९१) अबिभयुः भयं प्रापुः।

(९२) अतिजवाः अतिवेगवत्यः।

(९३) श्वानः कुक्कुराः।

वराहम् अस्मत्पोतं पर्य्यरुन्धन्। (९४) प्रावर्त्तत सम्प्रहारः, पराजायिषत (९५) यवनाः। तान् अहम् अगतीन् अवसीदतः समाश्वास्य अवादिषम्—(९६) 'अपनयत (९७) मे निगड़बन्धनम्, अयमहम् अवसादयामि वः सपत्नान्' (९८) इति। अमी (९९) तथा अकुर्वन्। सर्वांश्च तान् प्रतिभटान् भल्लवर्षिणा भीमटङ्कृतेन शार्ङ्गेण लवलवीकृताङ्गान् (१००) अकार्षम्। अवप्लुत्य हतविध्वस्तयोधम् अस्मत्पोतसंसक्त-पोतम् (१) अमुत्र नाविकनायकम् अनभिसरम् अभिपत्य जीव-ग्राहम् (२) अग्रहीषम्। असौ च आसीत् स एव भीमधन्वा। तञ्च अहम् अवबुध्य जातव्रीड़म् अब्रवं—'तात! किं दृष्टानि कृतान्तविलसितानि?' (३) इति। ते तु सांया-

(९४) अस्मत्पोतम् अस्माकं वहित्रम्। पर्य्यरुन्धन् परितो ररुधुः।

(९५) सम्प्रहारः युद्धम्। पराजायिषत पराजिताः, कर्त्तरि इति शेषः।

(९६) तान् यवनान्। अगतीन् निरुपायान्। अवसीदतः विपद्यमानान्। अवादिषम् अवोचम्।

(९७) अपनयत मोचयत।

(९८) अवसादयामि नाशयामि। सपत्नान् शत्रून्।

(९९) अमी यवनाः।

(१००) प्रतिभटान् प्रतियोधान्। भल्लेति।—भल्लानि अस्त्रविशेषान् वर्षतीति तथाविधेन। भीमं टङ्कृतं टङ्कारः यस्य तथोक्तेन। शार्ङ्गेण धनुषा। लवेति।—लवलवीकृतानि खण्डखण्डीकृतानि, अङ्गानि येषां तथाविधान्।

(१) अवप्लुत्य उल्लम्फ्य। हतेति।—हताः नष्टाः, विध्वस्ताः पलायिताश्च, योधा यस्य तथोक्तम्। अस्मदिति।—अस्माकं पोते संसक्ताः पोताः वहित्राणि यस्य तथाभूतम्।

(२) अनभिसरम् असहायम्। अभिपत्य उपेत्य। जीवग्राहं जीवस्य जीवनस्य, ग्राहो ग्रहणं यस्मिन् तद्यथा तथा।

(३) कृतान्तविलसितानि दैवविचेष्टितानि, ("कृतान्तौ यमदेवयोः" इत्यमरः)।

त्रिका (४) मदीयेन एव सूक्तेन मम प्रतिगाढं बद्धा। हर्ष-किलकिलारवम् अकुर्वन्, माञ्च अपूजयन्। दुर्वारा (५) तु सा नौः अननुकूलवातनुन्ना (६) दूरम् अभिपत्य (७) कमपि द्वीपं निविड़म् (८) आश्लिष्टवती। तत्र (९) च स्वादु पानीयम् एधांसि (१०) कन्दमूलफलानि च सञ्चिह्नवो गाढ़पतित-शिलावलयम् (११) अवातराम। तत्र च आसीत् महाशैलः। सोऽहम् 'अहो! रमणीयोऽयं पर्वतनितम्बभागः, कान्त-तरेयं गन्धपाषाणवत्युपत्यका, (१२) शिशिरम् इदमिन्दी-वरारविन्दमकरन्दबिन्दुचन्द्रकोत्तरं गोत्रवारि, (१३) रम्योऽयम् अनेकवर्णकुसुममञ्जरीमञ्जुलतरः तरुवनाभोगः' (१४) इति

(४) सांयात्रिकाः पोतवणिजो वणिजः।

(५) दुर्वारा वारयितुमशक्या, अनिवार्येत्यर्थः।

(६) अननुकूलेति।—अननुकूलेन प्रतिकूलेन, वातेन वायुना, नुन्ना चालिता।

(७) अभिपत्य गत्वा।

(८) निविडं निबिडवृक्षादिपूर्णमित्यर्थः।

(९) तत्र द्वीपे।

(१०) एधांसि काष्ठानि।

(११) सञ्चिह्नवः सङ्ग्रहीतुमिच्छवः। गाढ़ेति।—गाढ़ं दृढ़ं यथा तथा, दीर्घकालपतनात् निश्चलं यथा तथेत्यर्थः, पतितं शिलावलयं मण्डलाकारपाषाणम्।

(१२) कान्ततरा अतिरमणीया। गन्धपाषाणवती गन्धकाख्योपधातुसमाकीर्णा, गन्धकशिलामयीति यावत्। उपत्यका पर्वतासन्नभूमिः, ("उपत्यकाऽद्रेरासन्ना भूमिरूर्द्धमधित्यका" इत्यमरः)।

(१३) शिशिरं शीतलम्। इन्दीवरेति;—इन्दीवराणां नीलोत्पलानाम्, ("इन्दीवरञ्च नीलेऽस्मिन्" इत्यमरः) अरविन्दानां पद्मानाञ्च, मकरन्दबिन्दुभिः पुष्परसपृषतैः, पतितैरिति भावः, चन्द्रकोत्तरं मेचकपूर्णं, ("समौ चन्द्रकमेचकौ" इत्यमरः)। गोत्रवारि पर्वतसलिलम्, ("गोत्रं नाम्नि कुले" इत्यमरः)।

(१४) तरुवनाभोगः वृक्षवनविस्तारः, परिपूर्णतेत्यर्थः।

अक्षमया (१५) दृशा बहुबहु पश्यन् अलक्षिताध्यारूढ-क्षोणीधरशिखरः शोणीभूतम् उदग्रभाभिः पद्मरागसोपान-शिलाभिः (१६) किमपि नालीकपरागधूसरं (१७) सरः समध्यगाम्। स्नातश्च कांश्चित् अमृतस्वादून् बिसभङ्गान् आस्वाद्य अंसलग्नकह्लारः (१८) तीरवर्तिना केनापि भीमरूपेण ब्रह्मराक्षसेन (१९) अभिपत्य 'कोऽसि ? कुतस्त्योऽसि ?' (२०) इति निर्भर्त्सयताऽभ्यधीये। (२१) निर्भयेन च मया सोऽभ्यधीयत—'सौम्य ! सोऽहमस्मि द्विजन्मा, शत्रुहस्तात् अर्णवम्, अर्णवात् यवननावं, यवननावश्चित्रग्रावाणम् (२२) एनं पर्वतप्रदेशं गतो यदृच्छया अस्मिन् सरसि विश्रान्तः। भद्रं तव ?' इति।

(१५) अक्षमया अनिवृत्ततृष्णया, पुनः पुनः दर्शनेनापि अनिवृत्तदर्शनाकाङ्क्षया इत्यर्थः।

(१६) अलक्षितेति।—अलक्षितम् अन्यैरविदितं यथा तथा, अध्यारूढम् उत्थितं, क्षोणीधरस्य पर्वतस्य, शिखरं येन तथाभूतः। शोणीभूतं रक्तीभूतम्। उदग्रभाभिः उच्चकिरणाभिः। पद्मरागेति।—पद्मरागो मणिविशेषः, तन्मय्यः याः सोपानशिलाः सोपानप्रस्तराः ताभिः।

(१७) किमपि अदृष्टपूर्वम्। नालीकेति।—नालीकानां पद्मानां, ("नालीकं पद्मबाणयोः" इति वैजयन्ती) परागैः रजोभिः, ("परागः कौसुमं रजः" इत्यमरः) धूसरम् ईषत्पाण्डुवर्णम्।

(१८) बिसभङ्गान् मृणालच्छेदान्। अंसेति।—अंसे स्कन्धे, लग्नं संसक्तं, कह्लारं सौगन्धिकं, शुक्लवर्णोत्पलविशेष इत्यर्थः, यस्य तादृशः, ("सौगन्धिकन्तु कह्लारम्" इत्यमरः)।

(१९) भीमरूपेण भयङ्कराकारेण। ब्रह्मराक्षसेन यो ब्राह्मणः सन् राक्षसो जातः सः ब्रह्मराक्षसः तेन।

(२०) कुतस्त्योऽसि ? कुत आगतोऽसि ? (अव्ययात् त्यप्)।

(२१) अभ्यधीये अभिहितः, (अभि + धा + कर्मणि लट् इट् च)।

(२२) चित्रेति।—चित्राः मनोज्ञाः, ग्रावाणः प्रस्तराः यस्य तादृशम्।

सोऽब्रूत—'न चेत् ब्रवीषि प्रश्नान्, अश्नामि (२३) त्वाम्' इति। मया उक्तं—'पृच्छ, तावद्भवतु' इति। अथ आवयोः एकया आर्य्यया आसीत् संलापः। (२४)—

'किं क्रूरम्? स्त्रीहृदयं, किं गृहिणः प्रियहिताय? दारगुणाः।
कः कामः? सङ्कल्पः, किं दुष्करसाधनम्? प्रज्ञा'॥ (२५)

इत्युक्त्वा 'धूमिनीगोमिनीनिम्बवतीनितम्बवत्यः प्रमाणम्' इत्युपदिष्टो मया सोऽब्रूत—'कथय कीदृश्यस्ताः?' इति। अत्र उदाहरम्—'अस्ति त्रिगर्त्तो नाम जनपदः। (२६) तत्र आसन् गृहपतयः त्रयः स्फीतसारधनाः सोदर्य्याः (२७) धनकधान्यकधन्यकाख्याः। तेषु जीवत्सु न ववर्ष वर्षाणि द्वादश दशशताक्षः, (२८) क्षीणसारं (२९) सस्यम्, ओषध्यो

---

(२३) अश्नामि भक्षयामि।

(२४) आर्य्यया छन्दोविशेषेण, ("यस्याः प्रथमे पादे द्वादश मात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये पञ्चदश चतुर्थके साऽऽर्य्या॥" इति वचनात्)। संलापः परस्परभाषणं, ("संलापो भाषणं मिथः" इत्यमरः)।

(२५) किमिति।—क्रूरं निष्ठुरं, किम्? स्त्रीहृदयं स्त्रिया हृदयमित्युत्तरम्। गृहिणः गृहस्थस्य, प्रियहिताय प्रीतिकरहितानुष्ठानाय, किम्? के इत्यर्थः। दारगुणाः दाराणां पत्न्याः, गुणाः वात्सल्यपातिव्रत्यकर्मपटुतादयः; उत्तरमेतत्। कः कामः? इष्टसाधननिश्चयः। सङ्कल्पो निश्चय इत्यर्थः; उत्तरमेतत्। दुष्करसाधनं दुष्करं साध्यते अनेनेति तत्, किम्? प्रज्ञा बुद्धिः, दुष्करसाधनीति शेषः; उत्तरम्।

(२६) जनपदः देशः, ("भवेज्जनपदो जानपदोऽपि जनदेशयोः" इति मेदिनी)।

(२७) स्फीतेति।—स्फीतानि प्रचुराणि, साराणि धनानि श्रेष्ठवस्तूनि, मणिमाणिक्यादीनीत्यर्थः, धान्यधनादीन्युत्कर्षाणि वा येषां तथोक्ताः। सोदर्य्याः सहोदराः।

(२८) दशशताक्षः सहस्राक्षः, इन्द्र इत्यर्थः।

(२९) क्षीणसारं क्षीणः क्षयं गतः, सारः उत्कर्षः श्रेष्ठांशो वा यस्य तथाविधम्।

वन्ध्याः, (३०) न फलवन्तो वनस्पतयः, (३१) क्लीवा (३२) मेघाः, क्षीणस्रोतसः स्रवन्त्यः, (३३) पङ्कशेषाणि पल्वलानि, निर्निस्यन्दानि उत्समण्डलानि, (३४) विरलीभूतं (३५) कन्दमूलफलम्, अवहीनाः (३६) कथाः, गलिताः कल्याणोत्सवक्रियाः, (३७) बहुलीभूतानि तस्करकुलानि, अन्योऽन्यम् अभक्षयन् प्रजाः, पर्य्यलुठन् इतस्ततो बलाकापाण्डुराणि (३८) नरशिरःकपालानि, पर्य्यहिण्डन्त शुष्काः (३९) काकमण्डल्यः, शून्यीभूतानि नगर-ग्राम खर्वट-पुटभेदनादीनि। (४०) ते एते गृहपतयः सर्वधान्यनिचयम्

(३०) ओषध्यः व्रीह्यादयः, ("ओषध्यः फलपाकान्ताः" इत्यमरः)। वन्ध्याः निष्फलाः।

(३१) वनस्पतयः पुष्पं विनाऽपि फलवन्तो वृक्षाः, ("अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः" इति मनुः)।

(३२) क्लीवाः निर्जला इत्यर्थः।

(३३) क्षीणस्रोतसः सूक्ष्मप्रवाहाः, शुष्कप्राया इत्यर्थः। स्रवन्त्यः नद्यः।

(३४) निर्निस्यन्दानि क्षरणरहितानि। उत्समण्डलानि प्रस्रवणसमूहाः, ("उत्सः प्रस्रवणं वारि-प्रवाहो निर्झरो झरः" इत्यमरः)।

(३५) विरलीभूतम् अल्पीभूतं, दुष्प्रापमित्यर्थः।

(३६) अवहीनाः क्षीणाः, अवसन्नत्वात् सर्वेषामिति भावः।

(३७) गलिताः रहिताः। कल्याणेति।—कल्याणेन मङ्गलेन, उत्सवक्रिया आनन्दकर्माणि।

(३८) पर्य्यलुठन् परितः लुण्ठितानि अभवन्, भूमौ इतस्ततो निक्षिप्तानि अतिष्ठन् इत्यर्थः। बलाकेति।—बलाका बिसकण्ठिका बकपङ्क्तिः वा, तद्वत् पाण्डुराणि श्वेतानि।

(३९) पर्य्यहिण्डन्त इतस्ततः भ्रमन्ति स्म। शुष्काः आहाराभावात् क्षीणा इत्यर्थः।

(४०) नगरेति।—नगरं बहुसङ्ख्यकजनावासभूतं सुबृहत् स्थानं, ग्रामः ततोऽल्पसङ्ख्यकजनावासः, खर्वटम् "एकतो यत्र तु ग्रामो नगरस्यैकतः स्थितम्।

उपयुज्य अजाविकं, गवलगणं, (४१) गवां यूथं, दासीदासजनम्, अपत्यानि, ज्येष्ठमध्यमभार्य्ये च क्रमेण भक्षयित्वा कनिष्ठभार्य्यां धूमिनी 'श्वो भक्षणीया' इति समकल्पयन्। (४२) अथ कनीयान् धन्यकः प्रियां स्वाम् अत्तुम् अक्षमः तया सह तस्यामेव निशि अपासरत्, (४३) मार्गक्लान्तां च उद्वहन् वनं जगाहे। (४४) स्वमांसासृगपनीतक्षुत्पिपासां तां नयन् अन्तरे (४५) कमपि निकृत्तपाणिपादकर्णनासिकम् (४६) अवनिपृष्ठे विचेष्टमानं (४७) पुरुषम् अद्राक्षीत्। तमपि च आर्द्राशयः (४८) स्कन्धेन उद्वहन् कन्दमूलमृगबहुले गहनोद्देशे यत्नरचितपर्णशालः (४९) चिरम् अवसत्,

निम्नन्तु खर्वटं नाम नदीगिरिसमाकुलम्॥" इत्युक्तलक्षणग्रामविशेषः, पुटभेदनं नगरविशेषः इत्यादीनि।

(४१) सर्वेति।—सर्वेषां सर्वविधानां, अखिलानामिति भावः, धान्यानां यवगोधूमशालादीनां, निचयं राशिम्। अजाविकम् अजाश्च अवयश्चेति तेषां समूह इति (अण्) अजाविकं तन्नोवितच्छागमेषसमूहमित्यर्थः; "अजाविकटम्" इति पाठेऽपि—स एवार्थः। गवलगणं महिषवर्गं, ("गवलो महिषे श्रो तु तस्य शृङ्गेऽपि वर्त्तते" इति वैजयन्ती)।

(४२) समकल्पयन् निरधारयन्।

(४३) अत्तं भक्षयितुम। अपासरत् पलायिष्ट।

(४४) मार्गक्लान्ताम् अध्वश्रान्तां, स्थितामिति शेषः। उद्वहन् स्कन्धे कुर्वन्नित्यर्थः। जगाहे प्रविवेश।

(४५) स्वमांसेति।—स्वस्य आत्मनः, मांसासृग्भ्यां मांसशोणिताभ्याम्, अपनीते निवारिते, क्षुत्पिपासे बभुक्षापिपासे यस्याः ताम्। अन्तरे मध्ये।

(४६) निकृत्तेति।—निकृत्तं छिन्नं, पाणिपादकर्णनासिकं यस्य तादृशम्।

(४७) विचेष्टमानं लुठन्तम्।

(४८) आर्द्राशयः कृपाक्रान्तचित्तः।

(४९) यत्नेति।—यत्नेन प्रयासेन, रचिता निर्मिता, पर्णशाला पत्रकुटीरं येन तथाभूतः।

अमुष्य रोपितव्रणम् इङ्गुदीतैलादिभिः, (५०) आमिषेण शाकेन आत्मनिर्विशेषं (५१) पुपोष। पुष्टश्च तम् उद्रिक्तधातुम् (५२) एकदा मृगान्वेषणाय च प्रयाते धन्यके सा धूमिनी रिरंसया उपातिष्ठत। (५३) भर्त्सिताऽपि तेन बलात्कारम् अभ्यरीरमत्। निवृत्तश्च (५४) पतिम् उदकाभ्यर्थिनम् (५५) 'उद्धृत्य कूपात् पिब, रुजति मे शिरः शिरोरोगः' इति उदञ्चनं (५६) सरज्जुं पुरश्चिक्षेप। उदञ्चयन्तश्च (५७) तं कूपादधः, चरणात् पृष्ठतो गत्वा प्रणुनोद। (५८) तञ्च विकलं (५९) स्कन्धेन उदुह्य (६०) देशात् देशान्तरं परिभ्रमन्ती पतिव्रताप्रतीतिं (६१) लेभे

(५०) अमुं पुरुषम्। रोपितव्रणम् अपनीतक्षतम्। इङ्गुदीति।—इङ्गुदी तापसतरुविशेषः, ("इङ्गुदी तापसतरुः" इत्यमरः) तत्तैलादिभिः तदीयफलतैलादिभिः।

(५१) आमिषेण मांसेन। आत्मनिर्विशेषं स्वतुल्यमित्यर्थः।

(५२) पुष्टं पुष्टशरीरमित्यर्थः। उद्रिक्तधातुं प्रवृद्धरक्तरसादिकम्।

(५३) रिरंसया रन्तुमिच्छया। उपातिष्ठत उपस्थिता, संश्लेषणाय समुन्मुखी अभवत् इत्यर्थः। [अत्र "उपाद्देवपूजा-सङ्गतिकरण-मित्रकरण-पथिष्विति वाच्यम्" (वा०) इति वार्त्तिकेन सङ्गतिकरणार्थे उपपूर्वकात् स्थाधातोरात्मनेपदम्]।

(५४) निवृत्तं प्रत्यागतं, मृगान्वेषणादिति शेषः।

(५५) उदकाभ्यर्थिनं जलपानार्थिनम्।

(५६) उदञ्चनं जलसेचनपात्रम्, ("उत्सेचनं सेकपात्रं तथोदञ्चनमित्यपि" इति वैजयन्ती)।

(५७) उदञ्चयन्तम् उद्धरन्तम्।

(५८) प्रणुनोद पातयामास, निचिक्षेप इत्यर्थः, कूपे इति शेषः।

(५९) विकलं हस्तपादादीन्द्रियवर्जितमित्यर्थः।

(६०) उदुह्य गृहीत्वा।

(६१) पतिव्रताप्रतीतिं सतीति ख्यातिम्।

बहुविधाश्च प्रजाः। पुनः अवन्तिराजानुग्रहात् अतिमहत्या भूत्या (६२) न्यवसत्। अथ पानीयार्थिसार्थजनसमापत्ति-दृष्टोद्धृतम् अवन्तिषु (६३) भ्रमन्तम् आहारार्थिनं भर्त्तारम् उपलभ्य सा धूमिनी 'येन मे पतिर्विकलीकृतः स दुरात्माऽयम्' इति तस्य साधोः चित्रवधम् अज्ञेन राज्ञा (६४) समादेशयाञ्चकार। अन्धकस्तु दत्तपश्चाद्बन्धो वध्यभूमिं नीयमानः सशेषत्वादायुषः 'यो मया विकलीकृतोऽभिमतो भिक्षुः, स चेत् मे पापम् आचक्षीत (६५) युक्तो मे दण्डः' इति अदीनम् अधिकृतं (६६) जगाद। 'को दोषः' इति उपनीय (६७) दर्शितेऽमुष्मिन् (६८) स विकलः पर्य्यश्रुः (६९) पादपतितस्तस्य साधोस्तत् सुकृतम् (७०) असत्याश्च तस्यास्तथाभूतं दुश्चरितम् आर्य्यबुद्धिः आचचक्षे। कुपितेन राज्ञा विरूपितमुखी (७१) सा दुष्कृतकारिणी कृता श्वभ्यः

---

(६२) भूत्या सम्पदा।

(६३) पानीयेति।—पानीयार्थिभिः जलपानेच्छुभिः, सार्थजनैः वणिग्जनैः, समापत्त्या समागमनेन, तत्र उपस्थित्या इत्यर्थः, दृष्टः उद्धृतश्च तम्। अवन्तिषु तदाख्यनगरेषु।

(६४) अज्ञेन यथार्थवृत्तान्तानभिज्ञेन। राज्ञा अवन्तिपतिना।

(६५) पापम् अपराधम्। आचक्षीत कथयेत्।

(६६) अदीनम् अकातरं यथा तथा। अधिकृतं दण्डाधिकारिणं, विचाराध्यक्ष-मित्यर्थः।

(६७) उपनीय समीपमानीय।

(६८) अमुष्मिन् भिक्षौ।

(६९) पर्य्यश्रुः उद्गतबाष्पः।

(७०) तत् सुकृतं तमुपकारम्।

(७१) विरूपितेति।—विरूपितं नासाकर्णच्छेदनादिना कदर्थितं, मुखं यस्यास्तथाविधा।

पाचिका। (७२) अतश्च धन्यकः प्रसादभूमिः। (७३) तत् ब्रवीमि—'स्त्रीहृदयं क्रूरम्' इति।

पुनः अनुयुक्तो गोमिनीवृत्तान्तम् आख्यातवान्।—

'अस्ति द्रविड़ेषु काञ्ची नाम नगरी। तस्याम् अनेक-कोटिसारः (७४) श्रेष्ठिपुत्रः शक्तिकुमारो नाम आसीत्। सोऽष्टादशवर्षदेशीयः चिन्ताम् आपेदे, 'नास्ति अदाराणाम् अननुगुणदाराणां (७५) वा सुखं नाम, तत् कथं नु गुणवत् विन्देयं कलत्रम्?' (७६) इति। अथ परप्रत्ययाहृतेषु (७७) दारेषु यादृच्छिकीं सम्पत्तिम् अनभिसमीक्ष्य कार्त्तान्तिको (७८) नाम भूत्वा वस्त्रान्तपिनद्धशालिप्रस्थो (७९) भुवं बभ्राम। 'लक्षणज्ञोऽयम्' इति अमुष्मे कन्याः कन्यावन्तः प्रदर्शयाम्बभूवुः। यां काञ्चित् लक्षणवतीं सवर्णां (८०) कन्यां दृष्ट्वा

---

(७२) श्वभ्यः कुक्कुरेभ्यः, पाचिका पाककर्त्री, कुक्कुरपाचिकेत्यर्थः।

(७३) प्रसादभूमिः अनुग्रहभाजनम्।

(७४) अनेकेति।—अनेककोटयः बहुकोटिसङ्ख्यकाः, साराः मूलधनानि यस्य तथाभूतः।

(७५) अदाराणां स्त्रीरहितानाम्। अननुगुणेति।—अननुगुणाः अननुरूपाः, दाराः येषां तथाभूतानाम्।

(७६) गुणवत् सगुणम्। विन्देयं लभेय। कलत्रं स्त्रीम्।

(७७) परेति।—परेषां प्रत्ययेन विश्वासेन, आहृतेषु आनीतेषु, परिणीतेषु इत्यर्थः।

(७८) यादृच्छिकीम् इच्छानुरूपाम्। सम्पत्तिं गुणसम्पदमित्यर्थः, मनःप्रीतिमिति भावः। अनभिसमीक्ष्य अनवलोक्य। कार्त्तान्तिकः कृतान्तं दैवं जानातीति कार्त्तान्तिकः लक्षणज्ञ इत्यर्थः, लक्षणदर्शनेन शुभाशुभनिर्णेतेति यावत्, ("कार्त्तान्तिको लक्षणज्ञः" इति वैजयन्ती)।

(७९) वस्त्रान्तेति।—वस्त्रान्तेषु वसनाञ्चलेषु, पिनद्धः बद्धः, शालिप्रस्थः प्रस्थपरिमितं धान्यमित्यर्थः येन तथाभूतः।

(८०) सवर्णां सजातीयाम्।

स किल स्म ब्रवीति—'भद्रे! अस्त्यपि किमनेन शालिप्रस्थेन गुणवदन्नम् अस्मान् अभ्यवहारयितुम्?' (८१) इति। स हसितावधूतो गृहात् गृहं प्रविश्य अभ्रमत्। एकदा तु शिविषु कावेरीदक्षिणतीरेषु पट्टने (८२) सह पितृभ्याम् अवसितमहर्द्धिम् अवशीर्णभवनसारां धात्र्या प्रदर्श्यमानां काञ्चन विरलभूषणां (८३) कुमारीं ददर्श। अस्यां संसक्तचक्षुः (८४) च अतर्कयत्—'अस्याः खलु कन्यकायाः सर्व एव अवयवाः न अतिस्थूलाः, न अतिकृशाः, न अतिह्रस्वाः, न अतिदीर्घाः, न विकटाः, (८५) मृजावन्तश्च। रक्ततलाङ्गुली यवमत्स्यकमलकलशाद्यनेकपुण्यलेखालाञ्छितौ (८६) करौ, समगुल्फसन्धी मांसलौ अशिरालौ च अङ्घ्री, (८७) जङ्घे च आनुपूर्ववृत्ते, पीवरोरुग्रस्ते इव

(८१) अभ्यवहारयितुं भोजयितुम्।

(८२) शिविषु कावेरीदक्षिणतीरस्थतदाख्यदेशेषु, ("शिविर्भद्रबायास्तु दक्षिणं तीरमिष्यते" इति वैजयन्ती)। पट्टने कस्मिंश्चित् नगरे।

(८३) पितृभ्यां मातापितृभ्याम्। अवसितमहर्द्धिं निःशेषितमहासम्पदं, मातापितृहीनां समृद्धिहीनाञ्चेत्यर्थः। अवशीर्णेति।—अवशीर्णः क्षयं गतः, भवनस्य गृहस्य, सारो यस्यास्ताम्। धात्र्या उपमात्रा। प्रदर्श्यमानाम् "अस्याः लक्षण परीक्ष्य" इति निर्दिश्यमानामित्यर्थः। विरलभूषणां निराभरणां यत्किञ्चिदलङ्कारां वा।

(८४) संसक्तचक्षुः दत्तदृष्टिः।

(८५) विकटाः कर्कशा इत्यर्थः।

(८६) मृजावन्तः शुद्धिमन्तः, परिष्कृता इत्यर्थः। रक्तेति।—रक्ते तले तलदेशे, अङ्गुलयश्च ययोस्तादृशौ। यवेति।—यवादिभिः अनेकपुण्यलेखाभिः लाञ्छितौ चिह्नितौ, शोभितौ इत्यर्थः।

(८७) समेति।—समौ सुसदृशौ, नात्युन्नतौ इत्यर्थः, गुल्फसन्धी घुटिकसन्धी ययोस्तादृशौ, ("तद्ग्रन्थी घुटिके गुल्फौ" इत्यमरः)। मांसलौ पीवरौ। अशिरालौ शिरारहितौ। अङ्घ्री चरणौ।

दुरुपलक्ष्ये (८८) जानुनी, सक्तविभक्तः चतुरस्रः कुकुन्दरविभागशोभी रथाङ्गाकारसंस्थितश्च (८९) नितम्बभागः, तनुतरम् ईषन्निम्नं गम्भीरं नाभिमण्डलं, वलित्रयेण च अलङ्कृतम् उदरम्, उरोभागव्यापिनौ उन्मग्नचूचुकौ (९०) विशालारम्भशोभिनौ पयोधरौ, धनधान्यपुत्रभूयस्त्वचिह्नलेखालाञ्छिततले स्निग्धोदग्रकोमलनखमणी ऋज्वनुपूर्ववृत्तताम्राङ्गुली (९१) पाणी, सन्नतांसदेशे सौकुमार्यवत्यौ निमग्नपर्वसन्धी च बाहुलते, तन्वी कम्बुवृत्तबन्धुरा च कन्धरा, (९२) वृत्तमध्यविभक्तरागाधरम्, (९३) असङ्क्षिप्तचारु-

(८८) आनुपूर्व्यवृत्ते पूर्वानुक्रमेण वर्तुले, गोपुच्छाकारवत् क्रमशः गोलाकारे सूक्ष्मे च इति भावः। पीवरेति।—पीवराभ्यां स्थूलाभ्यां, ऊरुभ्यां ग्रस्ते इव तिरोहिते इव। दुरुपलक्ष्ये दुर्दर्शे।

(८९) सक्तविभक्तः समं विभज्य निर्मितः, ("एकचारे समे सक्तम्" इत्यजयः)। चतुरस्रः चतुष्कोणशोभीत्यर्थः। कुकुन्दरेति।—स्त्रीणां नितम्बस्थानस्थित आवर्ताकारः गर्तभेदः कुकुन्दरः, कुकुन्दरयोः स्फिक्कूपकयोः, ("कूपकौ तु नितम्बस्थौ द्वयहीने कुकुन्दरे" इत्यमरः) विभागेन शोभते इति तथोक्तः। रथाङ्गेति।—रथाङ्गस्य चक्रस्य, आकारेण संस्थितः कृतसंस्थानः।

(९०) उन्मग्नेति।—उन्मग्ने उत्थिते, चूचुके कुचाग्रे ययोः तादृशौ, ("चूचुकन्तु कुचाग्रं स्यात्" इत्यमरः)।

(९१) स्निग्धेति।—स्निग्धः मसृणः, उदग्रकोमलः अतिकोमलः, नखमणिः ययोः तादृशौ। ऋज्विति।—ऋजवः सरलाः, अनुपूर्ववृत्ताः क्रमवर्तुलाः, ताम्राः रक्तवर्णाः, अङ्गुलयः ययोः तौ।

(९२) तन्वी क्षीणा। कम्बुवृत्तेति।—कम्बुवत् शङ्खवत्, कम्बुः यथा रेखात्रयसमन्वितो भवति तथा रेखात्रयसमन्विता इति भावः, ("शङ्खः स्यात् कम्बुरस्त्रियाम्" इत्यमरः) वृत्ता वर्तुला, बन्धुरा रम्या, ("बन्धूरबन्धुरौ रम्ये नम्रे" इति विश्वः)। कन्धरा ग्रीवा।

(९३) वृत्तेति।—वृत्तमध्ये वर्तुलमध्यदेशे, विभक्तः रागो लौहित्यं यस्य तादृशोऽधरः दशनच्छदः यस्मिन् तथोक्तम्।

चिबुकम्, (९४) आपूर्णकठिनगण्डमण्डलं, (९५) सङ्गतानुवक्रनीलस्निग्धभ्रूलतम्, (९६) अनतिप्रौढतिलकुसुमसदृश-नासिकम्, (९७) अत्यसितधवलरक्तविभागभासुरमधुरधीर-सञ्चारमन्थरायतेक्षणम् (९८) इन्दुशकलसुन्दरललाटम्, (९९) इन्द्रनीलशिलाकाररम्यालकपङ्क्ति, (१००) द्विगुण-कुण्डलित-म्लान-नालीकनाल-ललितलम्बश्रवणपाशयुगलम् (१) आननकमलम्, अनतिभङ्गुरो बहुलः (२) पर्य्यन्तेऽपि

(९४) असङ्क्षिप्तेति।—असङ्क्षिप्तम् अनल्पं, चारु सुन्दरं, चिबुकम् ओष्ठाधोभागः यस्मिन् तादृशम्।

(९५) आपूर्णेति।—आपूर्णं सम्यक् पूर्णमित्यर्थः, कठिनं घनं, गण्डमण्डलं कपोलभागः यस्मिन् तथाविधम्।

(९६) सङ्गतेति।—सङ्गते मिलिते, "असङ्गत" इति पाठे—असङ्गते असंश्लिष्टे, अनुवक्रे यथाक्रमं कुटिले, नीले स्निग्धे भ्रुवौ लते इव यस्मिन् तथाविधम्।

(९७) अनतिप्रौढेति।—अनतिप्रौढं नातिविकसितं, यत् तिलकुसुमं तत्सदृशी नासिका यस्मिन् तथोक्तम्।

(९८) अत्यसितेति।—अति अतिशयेन, असितेन कृष्णेन, धवलेन सितेन, रक्तेन च एवं विभागेन कृष्णादिभागत्रयेण, भासुरे उज्ज्वले, मधुरे मनोहरे, धीरसञ्चारे अचञ्चलसञ्चारे, विभ्रमरहिते इत्यर्थः, अत एव मन्थरे मन्दे च, मुकुलितप्राये इत्यर्थः, आयते दीर्घे, ईक्षणे नेत्रे यस्मिन् तथोक्तम्।

(९९) इन्दुशकलेति।—इन्दुशकलवत् चन्द्रखण्डवत्, सुन्दरं ललाटं यस्मिन् तथोक्तम्।

(१००) इन्द्रनीलेति।—इन्द्रनीलशिलाकारा नीलकान्तमणिसदृशी, रम्या मनोहारिणी, अलकपङ्क्तिः चूर्णकुन्तलराजिर्यस्मिन् तथोक्तम्।

(१) द्विगुणेति।—द्विगुणं द्विरावृत्तं यथा तथा, कुण्डलितेन कुण्डलीकृतेन, म्लानेन किञ्चिन्म्लानेन, नालीकनालेन पद्मनालेन, ललितं सुन्दरं, ("ललितं त्रिषु सुन्दरम्" इत्यमरः) लम्बं लम्बमानं, श्रवणपाशयुगलं शोभनकर्णद्वयं यस्मिन् तथोक्तम्।

(२) अनतिभङ्गुरः नातिकुटिलः। बहुलः प्रभूतः।

अकपिलरुचिः आयामवान् एकैकनिसर्गसमः (३) स्निग्धनीलो गन्धग्राही च मूर्द्धजकलापः। (४) सा इयमाकृतिर्न व्यभिचरति (५) शीलम्। आसज्जति (६) च मे हृदयम् अस्यामेव, तत् परीक्ष्य एनाम् उद्वहेयम्। अविमृश्यकारिणां हि नियतम् (७) अनेकाः पतन्ति अनुशयपरम्पराः' (८) इति स्निग्धदृष्टिः आचष्ट—'भद्रे! कच्चित् अस्ति कौशलं, शालिप्रस्थेन अनेन सम्पन्नम् (९) आहारम् अस्मान् अभ्यवहारयितुम्?' (१०) इति। ततस्तया वृद्धदासी साकूतम् (११) आलोकिता तस्य हस्तात् प्रस्थमात्रं धान्यम् आदाय क्वचित् अलिन्दोद्देशे सुसिक्तसम्मृष्टे दत्तपादशौचम् (१२) उपावेशयत्। सा कन्या

---

(३) अकपिलेति।—अकपिला अपिङ्गला, ("कडारः कपिलः पिङ्गः" इत्यमरः) रुचिः कान्तिर्यस्य तथाभूतः। आयामवान् अतिदीर्घः। एकैकेति।—एकैकः प्रत्येकः, निसर्गेण स्वभावेन, समः तुल्यः तथाभूतः।

(४) मूर्द्धजकलापः केशपाशः। (केशशब्दादुत्तरः पाशशब्दः बह्वर्थः)।

(५) न व्यभिचरति न विपर्य्यासयति, नान्यथा भवति इत्यर्थः, आकारानुरूपः स्वभावो भविष्यतीति भावः।

(६) आसज्जति आसक्तं भवति।

(७) अविमृश्यकारिणाम् अविविच्यकारिणाम्। नियतं निश्चितम्, अवश्यमित्यर्थः।

(८) पतन्ति उपतिष्ठन्ते। अनुशयपरम्परा अनुतापसमूहाः।

(९) कौशलं नैपुण्यम्। शालिप्रस्थेन प्रस्थः परिमाणविशेषः, ("माषटङ्काक्षविल्वानि कुडवः प्रस्थ आढकः। राशिर्गोणी खारी चेति यथोत्तरचतुर्गुणाः॥" इति शार्ङ्गधरवचनात्) प्रस्थपरिमितेन शरावद्वयपरिमाणेन धान्येनेत्यर्थः। सम्पन्नं विविधव्यञ्जनाढ्यं, सुष्ठुसिद्धमन्नमिति भावः।

(१०) अभ्यवहारयितुं भोजयितुम्।

(११) साकूतं साभिप्रायं, कौशलमस्ति इति ज्ञापकाभिप्रायेण इत्यर्थः, ("आकूतं स्यादभिप्रायः" इति हलायुधः)।

तान् गन्धशालीन् सङ्क्षुद्य मात्रया, (१३) विशोष्य आतपे मुहुर्मुहुः परिवर्त्य (१४) स्थिरसमायां भूमौ नालीपृष्ठेन मृदु मृदु घर्षयन्ती (१५) तुषैः अखण्डैः (१६) तण्डुलान् पृथक् चकार, जगाद च धात्रीं—'मातः! एभिस्तुषैरर्थिनो भूषणमृजाक्रियाक्षमैः (१७) स्वर्णकाराः, तेभ्य इमान् दत्त्वा लब्धाभिः काकिणीभिः स्थिरतराणि अनत्यार्द्राणि नातिशुष्काणि (१८) काष्ठानि, मितम्पचां (१९) स्थालीम्, उभे

---

(१२) अलिन्दोऽङ्कणे द्वारबहिःप्रकोष्ठविशेषे। सुविभक्तसम्मृष्टे आदौ सुष्ठु विभक्तः जलेन क्षालितः, पश्चात् सम्मृष्टः सम्मार्जन्या परिष्कृतस्तस्मिन्। दत्तेति।—दत्तं पादशौचं पादप्रक्षालनजलमिति यावत् यस्मै तथोक्तम्।

(१३) सङ्क्षुद्य कुट्टयित्वा। मात्रया परिमाणेन, यथा ते न खण्डिता भवेयुः एवम्प्रकारेण इत्यर्थः।

(१४) विशोष्य विशेषेण शोषयित्वा, नीरसीकृत्येत्यर्थः। परिवर्त्य ऊर्ध्वाधःक्रमेण परिवर्त्तनं कृत्वेत्यर्थः।

(१५) स्थिरसमायां कठिनायामनुन्नतायाम्। नालीपृष्ठेन दण्डविशेषतलभागेन। मृदु मृदु मन्दं मन्दम्, अन्यथा तण्डुलानां चूर्णता स्यादिति भावः। घर्षयन्ती मार्जयन्ती।

(१६) अखण्डैः अभग्नैः, अच्छिन्नैरित्यर्थः।

(१७) भूषणेति।—भूषणानाम् अलङ्काराणां, मृजा शुद्धिः, मालिन्यापनयनम् इत्यर्थः, सैव क्रिया कार्य्यं, तत्र क्षमैः योग्यैः, एभिरेव तुषैः स्वर्णकाराणाम् अलङ्कार-मार्जनं स्यादिति ते एतान् प्रार्थयन्ते इति भावः।

(१८) काकिणीभिः "वराटकानां दशकद्वयं यत् सा काकिणी" इति लीलावती; विंशतिसङ्ख्यकवराटकैरेका काकिणी, अत्र काकिणीभिरित्यनेन बहु-काकिणीभिर्लब्धाभिरित्यर्थः। स्थिरतराणि सारवन्ति, अतिशीघ्रदहनायोग्यानीति भावः। अनत्यार्द्राणि अनतिशयार्द्राणि, अल्पार्द्राणीति यावत्, अत्यार्द्रत्वे सर्वथा ज्वलनासम्भवादिति भावः। नातिशुष्काणि अल्पशुष्काणि, अतिशुष्कत्वे शीघ्रज्वलनेन अन्नरन्धनापर्याप्तिरिति भावः।

(१९) मितम्पचाम् अल्पपाकिनीम्।

मगधे च प्राहर' इति। तथाकृते तया (२०) तांस्तण्डुलान् अनतिनिम्नोत्तानविस्तीर्णकुक्षौ ककुभोलूखले लोहपत्रवेष्टितमुखेन समशरीरेण विभाव्यमानमध्यतानवेन व्यायतेन गुरुणा खादिरेण मुषलेन (२१) चतुरललितक्षेपणोत्क्षेपणायासितभुजम् (२२) असकृत् अङ्गुलीभिः उद्धृत्योद्धृत्य अवहत्य शूर्पशोधितकणकिंशारुकान् (२३) तण्डुलान् असकृदद्भिः प्रक्षाल्य क्वथितपञ्चगुणे (२४) जले दत्तचुल्लीपूजा (२५) प्राक्षिपत्। प्रश्लथावयवेषु प्रस्फुरत्सु तण्डुलेषु

(२०) तया वृद्धया।

(२१) अनतीति।—न अतिशयेन निम्नः उत्तानः विस्तीर्णश्च कुक्षिरभ्यन्तरं यस्य तादृशे। ककुभोलूखले ककुभः अर्जुनवृक्षः, तन्निर्मिते उलूखले तदाख्यतण्डुलशोधनयन्त्रे इति यावत्, "ऊखलि" इति भाषा। लोहपत्रेति।—लोहपत्रेण तत्कृतखोलेन, वेष्टितं परिवृतं, मुखं यस्य तथोक्तेन। समशरीरेण तुल्यावयवेन, उन्नतानतिरहिताकारेणेति यावत्। विभाव्यमानेति।—विभाव्यमानम् अनुभूयमानं, मध्ये मध्यभागे, तानवं तनुत्वं, क्षीणत्वमित्यर्थः, मुष्टिधारणप्रदेशः इति भावः यस्य तथाभूतेन, धारणसौकर्यार्थं तन्मध्ये तनुत्वम् क्रियते वर्द्धकिभिः इति बोध्यम्। व्यायतेन दीर्घेण। गुरुणा महता, भारवतेत्यर्थः। खादिरेण खदिरकाष्ठनिर्मितेन। मुषलेन उलूखलस्थितधान्यादिताडनदण्डविशेषेणेत्यर्थः।

(२२) चतुरेति।—चतुरं निपुणं, तथा ललितं सुन्दरं यथा तथा, यत् क्षेपणम् अधःपातनम्, उत्क्षेपणञ्च ऊर्ध्वीकरणञ्च, ताभ्याम् आयासितौ क्लेशितौ, भुजौ यस्मिन् तद्यथा तथा।

(२३) असकृत् पुनः पुनः। उद्धृत्य उद्धृत्य सञ्चाल्य सञ्चाल्य। अवहत्य अवघातं कृत्वा, कण्डयित्वा इत्यर्थः। शूर्पेति।—शूर्पेण प्रस्फोटनेन, शोधिताः निःसारिताः, कणाः क्षुद्रावयवाः, "खुद" इति प्रसिद्धाः, किंशारवश्च तण्डुलोर्ध्वत्वग्विशेषाश्च "कुँड़ा" इति प्रसिद्धाः येषां तान्।

(२४) क्वथितेति।—क्वथितम् उष्णीकृतम्, अतएव पञ्चगुणं तण्डुलापेक्षयेति भावः, तस्मिन्। (विशेषणयोरेकस्य विशेष्यत्वविवक्षया समासः)।

(२५) दत्तेति।—दत्ता अनुष्ठिता, चुल्ल्याः पूजा यया तादृशी।

मुकुलावस्थाम् अतिवर्त्तमानेषु, (२६) सङ्क्षिप्य अनलम् उपहितमुखपिधानया स्थाल्या अन्नमण्डम् (२७) अगालयत्। दर्व्या च अवघट्ट्य मात्रया परिवर्त्य समपक्वेषु सिक्थेषु तां स्थालीम् अधोमुखीम् अवातिष्ठिपत्। (२८) इन्धनानि अन्तःसाराणि अम्भसा समभ्युक्ष्य (२९) प्रशमिताग्नीनि कृष्णाङ्गारीकृत्य तदर्थिभ्यः प्राहिणोत्, (३०) 'एभिर्लब्धाः काकिणीर्दत्त्वा शाकं घृतं दधि तैलम् आमलकं चिञ्चाफलं च यथालाभम् आनय' इति। (३१) तथाऽनुष्ठिते च तया द्वित्रान् उपदंशान् उपपाद्य (३२) तत् अन्नमण्डम् आर्द्र-

(२६) प्रम्लानेति।—प्रम्लानाः शिथिलाः मृदुलाः इति यावत्, अवयवाः येषां तादृशेषु। प्रस्फुरत्सु प्रस्पन्दमानेषु, क्वाथ्यमानावस्थायामुद्वेलीभूतेषु इत्यर्थः। मुकुलावस्थां कलिकावस्थाम्, अतिवर्त्तमानेषु अतिक्रामत्सु, विकासोन्मुखेष्विति भावः।

(२७) सङ्क्षिप्य ह्रासयित्वा। उपहितेति।—उपहितं दत्तं, मुखे पिधानं शरावाच्छादनमित्यर्थः, यस्यास्तथाभूतया। स्थाल्या पाकपात्रेण। अन्नमण्डम् अन्ननिस्रावम्।

(२८) दर्व्या खजिकया, हस्ताकारलोहदण्डेनेत्यर्थः। अवघट्ट्य घट्टयित्वा, समन्तात् परिचाल्येत्यर्थः। मात्रया किञ्चिदंशेन। सिक्थेषु भक्तपुलाकेषु, अन्नेषु इति यावत्। अधोमुखीं गालितावशिष्टमण्डनिःसरणार्थमिति भावः। अवातिष्ठिपत् अवस्थापयामास।

(२९) इन्धनानि काष्ठानि। अन्तःसाराणि साद्रदग्धानि अभ्यन्तरदहनयोग्यानीति भावः। समभ्युक्ष्य परिषिच्य।

(३०) तदर्थिभ्यः अङ्गारार्थिभ्य इत्यर्थः। प्राहिणोत् प्रेरयत्, धात्री इति शेषः।

(३१) चिञ्चाफलं तिन्तिडीफलम्। इति, धात्रीमुक्त्वा इति शेषः, प्राहिणोत् इत्यनेनान्वयः।

(३२) उपदंशान् व्यञ्जनानि। उपपाद्य प्रस्तुत्य।

वालुकोपहितनवशरावगतमतिमृदुना (३३) तालवृन्तानिलेन शीतलीकृत्य सलवणसम्भारं दत्ताङ्गारधूपवासञ्च (३४) सम्पाद्य तदपि आमलकं श्लक्ष्णपिष्टम् (३५) उत्पलगन्धि कृत्वा धात्रीमुखेन स्नानाय तम् अनोदयत्। (३६) तया च स्नानशुद्धया दत्ततैलामलकः (३७) क्रमेण सस्नौ। स्नातः सिक्तमृष्टे कुट्टिमे फलकम् आरुह्य पाण्डुहरितस्य त्रिभागशेषलूनस्य अङ्गनकदलीपलाशस्य (३८) उपरि शरावद्वयं दत्तम् आर्द्रम् अभिमृशन् (३९) अतिष्ठत्। सा तु तां पेयाम् (४०) एवाग्रे समुपाहरत्। (४१) पीत्वा च अपनीताध्वक्लमः प्रहृष्टः प्रक्लिन्नसकलगात्रः (४२) स्थितोऽभूत्।

---

(३३) आर्द्रेति।—आर्द्रायां सरसायां, वालुकायाम् उपहितः स्थापितः, यः नवशरावः नूतनशराव इत्यर्थः, तद्गतं तत्स्थम्। अतिमृदुना अल्पेन।

(३४) सलवणसम्भारं लवणाद्युपकरणसहितम्। दत्तेति।—दत्तः अङ्गारधूपस्य वासः सौरभं यत्र तथाभूतं, स च हिङ्ग्वादिना सम्पद्यते।

(३५) श्लक्ष्णपिष्टं सुपिष्टमित्यर्थः।

(३६) तं शक्तिकुमारम्। अनोदयत् प्रेरयामास।

(३७) दत्तेति।—दत्तं तैलम् आमलकञ्च यस्मै तथाभूतः।

(३८) सिक्तमृष्टे आसिक्तशोधिते। कुट्टिमे बद्धभूमौ, इष्टकोपलसमतलप्रदेशे इत्यर्थः। फलकं पीठम्, आरुह्य पीठोपरि उपविश्येत्यर्थः। पाण्डुहरितस्य ईषत् पक्वस्येति भावः। त्रिभागेति।—त्रिभागः शेषो यस्मिन् तद्यथा तथा, लूनस्य छिन्नस्य। अङ्गनेति।—अङ्गने स्थिता या कदली तस्याः पलाशं पत्रं तस्य।

(३९) शरावद्वयं दत्तं—दत्तं शरावद्वयमित्यर्थः। आर्द्रं जलप्रक्षालितमित्यर्थः। अभिमृशन् स्पृशन्।

(४०) सा कन्या। पेयां पेयत्वेन कल्पिताम्, अन्नमण्डमित्यर्थः।

(४१) समुपाहरत् पर्य्यविशत्, ददावित्यर्थः।

(४२) प्रक्लिन्नेति।—प्रक्लिन्नम् आर्द्रीभूतं, सन्तापशून्यमित्यर्थः; सकलं गात्रं यस्य तथाभूतः।

ततस्तस्य शाल्योदनस्य (४३) दर्वीद्वयं दत्त्वा सर्पिर्मात्रां सूपम् उपदंशञ्च उपजहार। (४४) इमञ्च दध्ना च त्रिजातकावचूर्णितेन (४५) सुरभिशीतलाभ्याञ्च कालशेयकाञ्जिकाभ्यां (४६) शेषम् अन्नम् अभोजयत्। सशेषे एव अन्धसि असौ (४७) अतृष्यत्, अयाचत च पानीयम्। अथ नवभृङ्गारसम्भृतम् (४८) अगुरुधूपधूपितम् अभिनवपाटलाकुसुमवासितम् उत्फुल्लोत्पलग्रथितसौरभं वारि नालीधारात्मना (४९) पातयाम्बभूव। सोऽपि मुखोपहितशरावेण हिमशिशिरकणकरालितारुणायमानाक्षिपक्ष्मा धारारवाभिनन्दितश्रवणः

(४३) शाल्योदनस्य शालितण्डुलकृतभक्तस्य।

(४४) सर्पिर्मात्राम् उपयुक्तपरिमाणं घृतम्। सूपं द्विदलव्यञ्जनम्। उपदंशं व्यञ्जनम्। उपजहार ददौ।

(४५) इमं अतिथिकुमारम्। त्रिजातकेति।—त्रिजातकेन सुगन्धिद्रव्यविशेषेण, ("त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम्" इति परिभाषाप्रदीपः) अवचूर्णितेन विलोडितेन।

(४६) कालशेयेति।—कालशेयं गोरसः, घोलमित्यर्थः, [कलश्यां मन्थपात्रे भवं, "दृतिकुक्षि—" (४।३।५६ पा० इति ढञ्] काञ्जिकम् पानविशेषः ताभ्याम्, ("दण्डाहतं कालशेयमरिष्टमपि गोरसः" इति "आरनालकसौवीर-कुल्माषाभिषुतानि च। अवन्तिसोमधान्याम्ल-कुञ्जलानि च काञ्जिके" इति चामरः)।

(४७) अन्धसि अन्ने, ("भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री सदीदिविः", इत्यमरः)। असौ अतिथिकुमारः।

(४८) नवेति।—नवे भृङ्गारे सम्भृतं सञ्चितम्।

(४९) नालीति।—नाली भृङ्गारस्य नलः, तया धारात्मना धारास्वरूपेण, भृङ्गारनलद्वारा अविच्छिन्नप्रवाहेणेत्यर्थः।

(५०) मुखेति।—मुखे निजानने, उपहितः स्थापितः, यः शरावः तेन। हिमेति।—हिमवत् तुषारवत्, शिशिरैः शीतलैः, कणैः जलबिन्दुभिः, करालितानि व्याप्तानि, अरुणायमानानि नयनयोः रक्तिमतायाः [illegible] प्रतिफलनात् रक्तायमानानीति भावः, अक्षिपक्ष्माणि नेत्रलोमानि यस्य तथाभूतः। धारेति।—

स्पर्शसुखोद्भिन्नरोमाञ्चकर्कशकपोलः परिमलप्रवाहोत्पीडफुल्लघ्राणरन्ध्रो माधुर्यप्रकर्षावर्जितरसनेन्द्रियः तत् अच्छं (५०) पानीयम् आकण्ठं पपौ। शिरःकम्पसंज्ञावारिता (५१) च पुनः अपरकरकेण आचमनम् (५२) अदत्त कन्या। वृद्धया तु तदुच्छिष्टम् अपोह्य हरितगोमयोपलिप्ते (५३) कुट्टिमे स्वमेव उत्तरीयकर्पटं व्यवधाय (५४) क्षणम् अशेत। परितुष्टश्च विधिवत् उपयम्य (५५) कन्यां निन्ये। नीत्वा एतदनपेक्षः (५६) कामपि गणिकाम् अवरोधम् (५७) अकरोत्, तामपि असौ (५८) प्रियसखीमिव उपा-

धारया इवेव अभिनन्दिते तर्पिते, श्रवणे कर्णौ यस्य तादृशः। स्पर्शेति।—स्पर्शसुखेन शिशिरधाराजलस्येति भावः, उद्भिन्नेन उद्गतेन, रोमाञ्चेन कर्कशौ परुषौ, कपोलौ गण्डौ यस्य तथाभूतः। परिमलेति।—परिमलस्य अगुरुपाटलादीनां सौरभस्य, प्रवाहोत्पीडेन अनुरभरेण, मृदुकोमलसौरभभरेणेत्यर्थः, फुल्ले विकासं गते, व्याकोचिते इत्यर्थः, घ्राणस्य नासिकायाः, रन्ध्रे विवरे यस्य तथाविधः। माधुर्येति।—माधुर्यस्य स्वादुतायाः, प्रकर्षेण आधिक्येन, आवर्जितं वशीकृतं, परितृप्तमित्यर्थः, रसनेन्द्रियं जिह्वा यस्य तथाभूतः। अच्छं निर्मलम्।

(५१) शिरःकम्पेति।—शिरसः कम्प एव संज्ञा निषेधसूचकः सङ्केतः, ("संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना" इत्यमरः) तया वारिता निषिद्धा।

(५२) अपरकरकेण अपरकमण्डलुना। आचमनम् आचमनीयजलमित्यर्थः।

(५३) अपोह्य अपसार्य। हरितेति।—हरितेन अशुष्केणेत्यर्थः, गोमयेन गोपुरीषेण, उपलिप्ते विशोधिते इति यावत्।

(५४) उत्तरीयकर्पटम् उत्तरीयवसनम्। व्यवधाय आस्तरणीकृत्येत्यर्थः।

(५५) विधिवत् यथाविधि। उपयम्य परिणीय।

(५६) एतदनपेक्षः एतस्यां परिणीतायाम्, अनपेक्षः निरभिलाषः, एतामवज्ञाय इत्यर्थः।

(५७) अवरोधम् अन्तःपुरिकां, गृहिणीमित्यर्थः।

(५८) तामपि गणिकामपि। असौ सः।

चरत्, (५९) पतिञ्च दैवतमिव मुक्ततन्द्रा (६०) पर्य्यचरत्। गृहकार्य्याणि च अहीनम् (६१) अन्वतिष्ठत्, परिजनञ्च दाक्षिण्यनिधिः आत्माधीनम् (६२) अकरोत। तद्गुणवशीकृतश्च भर्त्ता सर्वमेव कुटुम्बं तदायत्तम् (६३) एव कृत्वा तदेकाधीनजीवितशरीरस्त्रिवर्गं निर्विवेश। (६४) तत् ब्रवीमि—'गृहिण्याः प्रियहिताय दारगुणाः' इति।

ततस्तेनानुयुक्तो निम्बवतीवृत्तम् आख्यातवान्।—

'अस्ति सौराष्ट्रेषु वलभी नाम नगरी, तस्यां गृहगुप्तनाम्नो गुह्यकेन्द्रतुल्यविभवस्य (६५) नाविकपतेर्दुहिता रत्नवती नाम। तां किल मधुमत्याः (६६) समुपागम्य बलभद्रो नाम सार्थवाहपुत्रः पर्य्यणैषीत्। (६७) तयाऽपि नववध्वा (६८) रहसि रभसविघ्नितसुरतसुखो (६९) झटिति द्वेषम् अल्पेतरं (७०)

---

(५९) उपाचरत् असेवत।

(६०) मुक्ततन्द्रा अनलसा।

(६१) अहीनं समग्रमित्यर्थः।

(६२) दाक्षिण्यनिधिः औदार्य्यपूर्णा। आत्माधीनं स्ववशम्।

(६३) कुटुम्बं परिजनम्। तदायत्तं तदधीनम्।

(६४) त्रिवर्गं धर्मार्थकामानित्यर्थः, ("त्रिवर्गो धर्मकामार्थैः" इत्यमरः)। निर्विवेश बुभुजे, ("निर्वेशो भृतिभोगयोः" इत्यमरः)।

(६५) गुह्यकेन्द्रेति।—गुह्यकानाम् इन्द्रः कुवेरः, तेन तुल्यः विभवः सम्पत् यस्य तादृशस्य।

(६६) मधुमत्याः तदाख्यनगर्य्याः।

(६७) पर्य्यणैषीत् परिणीतवान्।

(६८) नववध्वा नवोढ़या स्त्रिया।

(६९) रभसेति।—रभसेन वेगेन हेतुना, ("रभसो वेगहर्षयोः" इत्यमरः) अत्यन्तकामेन हेतुनेति भावः, विघ्नितं व्याहतं, सुरतसुखं यस्य तथाभूतः, अविमर्श-सुखप्रयोगात् मुग्धया अननुमोदितसुरत इति भावः।

(७०) अल्पेतरम् अधिकम्।

बबन्ध, न तां पुनः द्रष्टुम् इष्टवान्। तद्गृहागमनमपि सुहृद्वाक्यमतातिवर्त्ती लज्जया परिजहार। (७१) तां च दुर्भगां (७२) तदा प्रभृत्येव 'नेयं रत्नवती, निष्प्रवती च इयम्' इति स्वजनः परजनश्च परिबभूव। (७३) गते च कस्मिंश्चित् कालान्तरे सा तु अनुतप्यमाना 'का मे गतिः?' इति विमृशन्ती (७४) कामपि वृद्धप्रव्राजिकां (७५) मातृस्थानीयां देवशेषकुसुमैः उपस्थिताम् (७६) अपश्यत्। तस्याः पुरो रहसि सकरुणं रुरोद। तयाऽपि अश्रुमुख्या बहुप्रकारम् अनुनीय रुदितकारणं पृष्टा त्रपमाणाऽपि (७७) कार्य्यगौरवात् कथञ्चित् अब्रवीत्—'अम्ब! किं ब्रवीमि, दौर्भाग्यं (७८) नाम जीवन्मरणमेव अङ्गनानां, विशेषतश्च कुलवधूनाम्। तस्य अहमस्मि उदाहरणभूता। (७९) मातृप्रमुखोऽपि ज्ञातिवर्गो माम् अवज्ञया एव पश्यति, तेन सुदृष्टां मां कुरु, (८०) न चेत् त्यजेयम् अद्यैव निष्प्रयोजनान्

(७१) सुहृदिति।—सुहृदां वाक्यमतानि वचनमतानि, अतिवर्त्तते अतिक्रामतीति तथोक्तः, बन्धुवाक्यानवरुद्धित्यर्थः। लज्जया विवेकजनितकौपीनेनेत्यर्थः। परिजहार परितत्याज।

(७२) दुर्भगा पत्युरप्रियानित्यर्थः।

(७३) परजनः अन्यजनः। परिबभूव अवजज्ञे इत्यर्थः।

(७४) विमृशन्ती विचारयन्ती।

(७५) वृद्धप्रव्राजिकां स्थविरसन्यासिनीम्।

(७६) देवेति।—देवानां देवपूजायाः शेषैः, शेषकुसुमैः निर्माल्यपुष्पैः उपलक्षिताम्। उपस्थितां समागताम्।

(७७) त्रपमाणाऽपि लज्जमानाऽपि।

(७८) दौर्भाग्यं पत्युरवाल्लभ्यम्।

(७९) तस्य दौर्भाग्यस्य। उदाहरणभूता दृष्टान्तभूता।

(८०) तेन यस्मात्। सुदृष्टां प्रीतिमतीम् इष्टां, मां कुरु—यथा स मां पश्येत् तथा कुर्विति भावः।

प्राणान्। आविरामाच्च (८१) मे रहस्यं न श्राव्यम्' इति पादयोः पपात। सा एनाम् उत्थाप्य उद्बाष्पा उवाच—'वत्से! माऽध्यवस्यः साहसम्, इयमस्मि त्वन्निदेशवर्त्तिनी। (८२) यावति मया उपयोगः, तावति भवामि अनन्याधीना। (८३) यद्येवासि निर्विण्णा, तपश्चर त्वं मदधिष्ठिता (८४) पारलौकिकाय कल्याणाय। ननु अयमुदर्कः प्राक्तनस्य दुष्कृतस्य, (८५) यत् अनेन आकारेण ईदृशेन शीलेन जात्या च एवम्भूतया समनुगता (८६) सती अकस्मादेव भर्त्तृद्वेष्यतां गताऽसि। यदि कश्चिदस्ति उपायः पतिद्रोहप्रतिक्रियायै, दर्शय (८७) अमुं, मतिर्हि ते पटीयसी' (८८) इति। अथ असौ कथञ्चित् क्षणम् अधोमुखी ध्यात्वा दीर्घोष्णश्वासपूर्वम् अवोचत्—'भगवति! पतिरेकदैवतं वनितानां, विशेषतः कुलजानाम्। अतस्तच्छुश्रूषणाभ्युपायहेतुभूतं किञ्चित् आचरणीयम्। अस्ति

---

(८१) आविरामात् यावत् मे विरतिः प्राणापगम इति यावत्, न श्राव्यं तावदित्यर्थः।

(८२) त्वन्निदेशवर्त्तिनी त्वदादेशपालिनी।

(८३) यावति यावत्परिमिते, यस्मिन् यस्मिन् कार्य्ये इत्यर्थः। उपयोगः उपयोगित्वं, प्रयोजनमित्यर्थः। तावति तावत्परिमिते, तस्मिन् तस्मिन् कार्य्ये इत्यर्थः। अनन्याधीना अन्यस्य अधीना न भवतीत्यनन्याधीना त्वन्मात्राधीनेति यावत्।

(८४) निर्विण्णा वैराग्ययुक्ता, आत्मनि अवज्ञायुक्ता वा। मदधिष्ठिता मदाश्रिता, मदुपदिष्टा इति यावत्।

(८५) उदर्कः उत्तरं फलम्, ("उदर्कः फलमुत्तरम्" इत्यमरः)। प्राक्तनस्य पूर्वजन्मोपार्जितस्य। दुष्कृतस्य पापस्य।

(८६) समनुगता युक्ता।

(८७) पतिद्रोहप्रतिक्रियायै भर्त्तृद्वेष्यतापनयनाय। दर्शय प्रकाशय।

(८८) पटीयसी अतिनिपुणा।

अस्मत्प्रातिवेश्यो (८९) वणिक्, आभिजनेन (९०) विभवेन राजान्तरङ्गभावेन (९१) च सर्वपौरान् अतीत्य वर्त्तते। तस्य कन्या कनकवती नाम मत्समानरूपावयवा ममातिस्निग्धा सखी। तया सह तद्विमानहर्म्यतले ततोऽपि द्विगुणमण्डिता(९२) विहरिष्यामि। त्वया तु तन्मातृप्रार्थनं (९३) सकरुणम् अभिधाय मत्पतिः एतद्गृहं कथञ्चन (९४) आनेयः, समीपगतेषु च युष्मासु क्रीड़ामत्ता नाम कन्दुकं भ्रंशयेयम्। (९५) अथ तम् आदाय तस्य हस्ते दत्त्वा वक्ष्यसि—'पुत्त्र! तव इयं भार्य्यासखी निधिपतिदत्तस्य सर्वश्रेष्ठिमुख्यस्य कन्या कनकवती नाम। त्वाम् इयम् अनवस्थो (९६) निष्करुणश्चेति रत्नवतीनिमित्तम् अत्यर्थं निन्दति। तदेष कन्दुको विप्रलम्भनं (९७) प्रत्यर्पणीयम्' इति। स तथोक्तो नियतम् उन्मुखीभूय तामिव प्रियसखीं मन्यमानो मां बद्धाञ्जलिर्याचमानायै मह्यं भूयस्त्वत्प्रार्थितः साभिलाषम् अर्पयिष्यति। तेन रन्ध्रेण उपश्लिष्य रागम् उज्ज्वलीकृत्य (९८) यथाऽसौ जातसङ्केतो देशान्तरम्

(८९) अस्मत्प्रातिवेश्यः अस्माकं प्रतिवेशी।

(९०) अभिजनेन कुलेन।

(९१) राजान्तरङ्गभावेन राजप्रियतया।

(९२) तद्विमानहर्म्यतले तस्याः कनकवत्याः, विमानहर्म्यतले सप्तभूमिकगृहोपरि, सप्ततलप्रासादोपरि इत्यर्थः, ("विमानो व्योमयाने च सप्तभूमिगृहेऽपि च। घोटके यानमात्रे च पुंनपुंसकयोर्मतः॥" इति मेदिनी)। ततोऽपि तस्याः कनकवत्या अपि। द्विगुणमण्डिता द्विगुणालङ्कृता।

(९३) तन्मातृप्रार्थनं तस्याः कनकवत्याः, मातुः प्रार्थनम्।

(९४) एतद्गृहं कनकवतीगृहम्। कथञ्चन केनापि प्रकारेण।

(९५) नामेत्यव्ययं, व्याजेन क्रीड़ामत्ता सतीत्यर्थः। भ्रंशयेयं क्षिपेयम्।

(९६) अनवस्थः अव्यवस्थितः।

(९७) विप्रलम्भनं विच्छेदपणीयद्रव्यम्।

(९८) रन्ध्रेण छिद्रेण। उपश्लिष्य आश्लिष्य। रागम् अनुरागम्।

आदाय मां गमिष्यति तथोपपादनीयम्' इति। हर्षाभ्युपेतया च अनया तथैव सम्पादितम्। अथ एतां कनकवतीति वृद्ध-तापसीविप्रलब्धः (९९) बलभद्रः सरत्नसाराभरणाम् आदाय निशि नीरन्ध्रे (१००) तमसि प्रावसत्। सा तु तापसी वार्त्ताम् आपादयत्, 'मन्देन मया (१) निर्निमित्तम् उपेक्षिता (२) रत्नवती, श्वशुरौ च परिभूतौ, सुहृदश्च अति-वर्त्तिताः, तदत्र एव संसृष्टो (३) जीवितुं जिह्रेमि' (४) इति बलभद्रः पूर्वेद्युः माम् अकथयत्, नूनमसौ तेन नीता, व्यक्तिः (५) च अचिराद्भविष्यति' इति। तत् श्रुत्वा तद्बान्धवाः तदन्वेषणं प्रति शिथिलयत्नास्तस्थुः। रत्नवती तु मार्गे काञ्चित् पण्यदासीं (६) सङ्गृह्य तया उह्यमानपाथेयाद्युपस्करा खेटकपुरम् (७) अगमत्। अमुत्र च व्यवहारकुशलो (८) बलभद्रः स्वल्पेनैव मूलेन महद्धनम् उपार्जयत् पौराग्र-गण्यश्च आसीत्। परिजनश्च भूयान् अर्थवशात् समाजगाम।

---

उन्मयोजन्य उद्दीप्य, चालितमेनेति भावः। "उन्मुखीकृत्य" इति पाठे—संश्लेष अनुकूलीकृत्य इत्यर्थः।

(९९) वृद्धतापसीविप्रलब्धः वृद्धसन्न्यासिन्या प्रतारितः।

(१००) नीरन्ध्रे निबिड़े।

(१) आपादयत् अघोषयत्। मन्देन मूढेन, ("मूढाल्पापटुनिर्भाग्या मन्दाः स्युः" इत्यमरः)। मया बलभद्रेणेत्यर्थः।

(२) निर्निमित्तम् अकारणम्। उपेक्षिता अवज्ञाता।

(३) अत्रैव आवासे एव। संसृष्टः सङ्गतः, रत्नवत्या सहेति शेषः।

(४) जिह्रेमि लज्जे।

(५) व्यक्तिः प्रकाशः।

(६) पण्यदासीं पण्येन मूल्येन या दास्यं करोति सा पण्यदासी ताम्।

(७) खेटकपुरं तदाख्यं नगरम्।

(८) व्यवहारकुशलः व्यवसायचतुरः।

ततस्तां प्रथमदासीं 'न कर्म करोषि, इष्टं मुष्णासि, (९) अप्रियं ब्रवीषि' इति परुषमुक्त्वा बह्वताडयत्। (१०) चेटी तु प्रसादकालोपाख्यातरहस्यस्य (११) वृत्तान्तैकदेशमात्तरोषा निर्बिभेद। (१२) तत् श्रुत्वा लुब्धेन तु दण्डवाहिना पौरवृद्धसन्निधौ (१३) 'निधिपतिदत्तस्य कन्यां कनकवतीं मोषेण (१४) अपहृत्य अस्मत्पुरे निवसति एष दुर्मतिः बलभद्रः, तस्य सर्वस्वहरणं न भवद्भिः प्रतिबन्धनीयम्' (१५) इति नितराम् अभत्स्यत। भीतश्च बलभद्रम् अभिजगाद रत्नवती—'न भेतव्यम्, एवं ब्रूहि—'नेयं निधिपतिदत्तकन्या कनकवती, वलभ्याम् (१६) एव गृहगुप्तदुहिता रत्नवती नाम इयं दत्ता पितृभ्यां, मया च न्यायोढा, (१७) न चेत् प्रतीथ, प्रणिधिं प्रहिणुत (१८) अस्या बन्धुपार्श्वम्' इति'। बलभद्रस्तु तथोक्त्वा श्रेणीप्रातिभाव्येन (१९) तावत्

---

(९) मुष्णासि चोरयसि।

(१०) अताडयत् प्राहरत्, बलभद्र इति कर्तृपदमूह्यम्।

(११) चेटी दासी, ("चेटी चिरण्टी दासी च" इति वैजयन्ती)। प्रसादेति।—प्रसादकाले अनुग्रहसमये, उपाख्यातं कथितं, यत् रहस्यं गुह्यं, "मया निधिपतिदत्तस्य कन्या कनकवती छलेन अपहृत्य आनीता नेयं मे पत्नी" इति प्रागुक्तमिति यावत्, तस्य।

(१२) आत्तरोषा जातकोपा। निर्बिभेद प्रकाशितवती।

(१३) दण्डवाहिना दण्डाधिकारिणा। पौरवृद्धेति।—पौरवृद्धानां पुरवासिप्राचीनानां, सन्निधौ समीपे।

(१४) मोषेण चौर्येण।

(१५) प्रतिबन्धनीयं व्याहन्तव्यम्।

(१६) वलभ्यां तदाख्यनगर्याम्।

(१७) न्यायोढा यथाविधि परिणीता।

(१८) प्रतीथ प्रत्ययं गच्छथ। प्रणिधिं चरम्। प्रहिणुत प्रेरयत।

(१९) श्रेणीप्रातिभाव्येन श्रेणी, समानशिल्पिसङ्घातः, [illegible]

अवातिष्ठत, यावत् तत्पुरवृत्तलेख्यलब्धवृत्तान्तो गृहगुप्तः खेटकपुरम् आगत्य सह जामात्रा दुहितरम् अतिप्रीतः प्रत्यनैषीत्। तथा दृष्ट्वा रत्नवती कनकवतीति भावयतस्तस्य एव बलभद्रस्य अतिवल्लभा जाता। तदब्रवीमि—कामो नाम सङ्कल्पः' इति।

तदनन्तरम् असौ नितम्बवतीवृत्तान्तम् अप्राक्षीत्। सोऽहमब्रवम्।—

'अस्ति शूरसेनेषु (२०) मथुरा नाम नगरी, तत्र कश्चित् कुलपुत्रः (२१) कलासु गणिकासु च अतिरक्तो (२२) मित्रार्थं स्वभुजमात्रनिर्व्यूढानेककलहः (२३) 'कलहकण्टकः' इति कर्कशैः (२४) अभिख्यापिताख्यः प्रत्यवात्सीत्। (२५) स च एकदा कस्यचित् आगन्तोः (२६) चित्रकारस्य हस्ते चित्रपटं ददर्श। तत्र काचित् आलेख्यगता युवतिरालोकमात्रेण एव कलहकण्टकस्य कामातुरं चेतश्चकार। स च तम् अब्रवीत् —'भद्र! विरुद्धमिव (२७) एतत् प्रतिभाति, यतः कुलजा-

इत्यर्थः, ("ग्रन्थिः स्त्रीपुंसयोः प्रकृतौ समाख्याविलिसंहतौ" इति मेदिनी) तस्याः प्रातिभाव्येन प्रतिभूत्वेन।

(२०) शूरसेनेषु तदाख्यदेशेषु।

(२१) कुलपुत्रः कुलीनः शूद्रो वा, ("कुलपुत्रः कुलीने च शूद्रे च" इति वैजयन्ती)।

(२२) अतिरक्तः अत्यासक्तः।

(२३) स्वभुजेति।—स्वभुजमात्रेण निजबाहुबलमात्रेण, न तु धनादिमर्दनेनेति भावः, निर्व्यूढः कृतः, अनेकैः, लोकैरिति शेषः, कलहः विवादो येन तथाभूतः।

(२४) कर्कशैः परुषभाषिभिरिति यावत्।

(२५) प्रत्यवात्सीत् प्रतिवसति स्म।

(२६) आगन्तोः गृहागतस्य।

(२७) विरुद्धमिव विपरीतमिव।

दुर्लभं ( २८ ) वपुः, आभिजात्यशंसिनी ( २९ ) च नम्रता, पाण्डुरा ( ३० ) च मुखच्छविः, अनतिपरिभुक्तसुभगा च तनुः, प्रौढताऽनुविद्धा ( ३१ ) च दृष्टिः। न च एषा प्रोषितभर्त्तृका, प्रवासचिह्नस्य वेण्यादेः ( ३२ ) अदर्शनात्। लक्ष्म च एतद्दक्षिणपार्श्ववर्त्ति। तदियं वृद्धस्य कस्यचित् वणिजो नाति-पुंस्त्वस्य ( ३३ ) यथार्हसम्भोगालाभपीडिता गृहिणी। त्वया अतिकौशलात् यथादृष्टम् आलिखिता भवितुम् अर्हति' इति। स तम् अभिप्रशस्य आशंसत्—'सत्यमिदम्, अवन्तिपुर्याम् उज्जयिन्याम् अनन्तकीर्त्तिनाम्नः सार्थवाहस्य भार्या यथार्थ-नामा नितम्बवती नाम एषा, सौन्दर्यविस्मितेन मया एवम् आलिखिता' इति। स तदैव उन्मनायमानः तद्दर्शनाय वव्राज ( ३४ ) उज्जयिनीम्। भार्गवो नाम भूत्वा भिक्षा-मिषेण तद्गृहं ( ३५ ) प्रविश्य तां ददर्श। दृष्ट्वा च अत्यारूढ-

(२८) कुलजेति।—कुलजा कुलीनकन्या, तया तासु वा दुर्लभं दुष्प्रापम्, अतिमनोहरमिति भावः।

(२९) आभिजात्यशंसिनी कौलीन्यसूचिका।

(३०) पाण्डुरा पाण्डुवर्णा, पीतभागार्द्धकेतकीपरागसन्निभा इत्यर्थः, कपोत-शुक्लवर्णा इति यावत्, ( "हरिणः पाण्डुरः पाण्डुः" इत्यमरः, "पाण्डुस्तु पीतभागार्द्धः केतकीधूलिसन्निभः" इति शब्दार्णवश्च )।

(३१) प्रौढेति।—प्रौढतया प्रागल्भ्येन, अनुविद्धा युक्ता।

(३२) प्रोषितभर्त्तृका प्रवासस्थपतिका। प्रवासचिह्नस्य प्रवासस्थपतिका-चिह्नस्य। वेण्यादेः केशबन्धस्य, एकवेणीधरत्वादिरूपस्य इति यावत्, ( "वेणी केशबन्धे स्यात् नदीनां सङ्गमेऽपि च" इति विश्वः ); आदिपदेन शरीरा-संस्कारादेर्ग्रहणम्।

(३३) नातिपुंस्त्वस्य नातिपुरुषत्वस्य।

(३४) वव्राज जगाम।

(३५) भार्गवः दैवज्ञः, ( "भार्गवो गणदैवज्ञौ" इति वैजयन्ती )। भिक्षामिषेण भिक्षाच्छलेन। तद्गृहं तस्य अनन्तकीर्त्तेः गृहम्।

मन्मथो (३६) निर्गत्य पौरमुखेभ्यः श्मशानरक्षाम् (३७) अयाचत अलभत च। तत्र लब्धैश्च शवावगुण्ठनपटादिभिः (३८) तामपि अर्हन्तिकां नाम श्रमणिकाम् (३९) उपासाञ्चक्रे। तन्मुखेन च नितम्बवतीम् उपमन्त्रयामास। (४०) सा च एनां निर्भर्त्सयन्ती प्रत्याचचक्षे। (४१) श्रमणिकामुखाच्च दुष्करशीलभ्रंशां कुलस्त्रियम् उपलभ्य रहसि दूतिकाम् अशिक्षयत्—'भूयोऽपि उपतिष्ठ सार्थवाहभार्यां, ब्रूहि च उपह्वरे, (४२) 'संसारदोषदर्शनात् समाधिम् आस्थाय मुमुक्षमाणो मादृशो जनः कुलवधूनां शीलपातने घटते इति क्व घटते ? (४३) एतदपि त्वामपि उदारया समृद्ध्या रूपेण अतिमानुषेण प्रथमेन वयसोपपन्नां किम् इतरनारीसुलभं चापलं स्पृष्टं न वेति परीक्षा कृता। तुष्टाऽस्मि तवैवम् अदुष्टभावतया। त्वाम् इदानीम् उत्पन्नापत्यां द्रष्टुमिच्छामि। भर्त्ता तु भवत्याः केनचित् ग्रहेण (४४) अधिष्ठितः पाण्डुरोगदुर्बलो भोगे च असमर्थः स्थितोऽभूत्। न च शक्यं तस्य विप्रियम् अप्रतिकृत्यापत्यम् अस्माल्लब्धुम्। अतः प्रसीद, वृक्षवाटिकाम् (४५) एकाकिनी प्रविश्य मदुप-

(३६) अभ्यारूढमन्मथः अतिप्रवृद्धमदनः।

(३७) श्मशानेति।—श्मशानस्य रक्षा रक्षाधिकारः ताम्।

(३८) शवावगुण्ठनपटादिभिः मृताच्छादनवसनादिभिः।

(३९) श्रमणिकां बौद्धसन्न्यासिनीम्।

(४०) उपमन्त्रयामास रहसि प्रलोभयामास।

(४१) प्रत्याचचक्षे निराकृतवती।

(४२) उपह्वरे विजने।

(४३) घटते यतते। क्व घटते ? क्व सङ्गच्छते ?।

(४४) ग्रहेण मङ्गलादिदुष्टग्रहविशेषेण।

(४५) वृक्षवाटिकां गृहोद्यानम्।

नीतस्य कस्यचित् मन्त्रवादिनः छन्नमेव (४६) हस्ते चरणम् अर्पयित्वा तदभिमन्त्रितेन तेन (४७) प्रणयकुपिता नाम भूत्वा भर्त्तारम् उरसि प्रहर्त्तुम् अर्हसि, उपर्य्यसौ उत्तमधातुपुष्टम् ऊर्जितापत्योत्पादनक्षमाम् आसादयिष्यति, (४८) अनुवर्त्तिष्यते (४९) च देवीमिव अत्रभवतीं, नात्र शङ्का कार्य्या' इति। सा (५०) तथोक्ता व्यक्तम् अभ्युपैष्यति। नक्तं मां वृक्षवाटिकां प्रवेश्य तामपि प्रवेशयिष्यसि। तावतैव त्वयाऽहम् अनुगृहीतो भवेयम्' इति। सा तथैव उपग्राहितवती। (५१)

सोऽतिप्रीतः तस्यामेव क्षपायां वृक्षवाटिकायां गतो नितम्बवतीं निर्ग्रन्थिकाप्रयत्नेन (५२) उपनीतां पादे परामृशन्निव (५३) हेमनूपुरम् एकमाक्षिप्य (५४) छुरिकया ऊरुमूले किञ्चित् आलिख्य द्रुततरम् अपासरत्। सा तु सान्द्रत्रासा स्वमेव दुर्नयं गर्हमाणा (५५) जिघांसन्तीव

---

(४६) छन्नं निभृतम्; "स्वच्छन्दम्" इति पाठे—स्वतन्त्र, निर्भयमिति यावत्।

(४७) तदभिमन्त्रितेन तेन मन्त्रवादिना, अभिमन्त्रितेन मन्त्रपूतेन। तेन चरणेनेत्यर्थः।

(४८) उपरि तदनन्तरम्। असौ तव भर्त्ता। ऊर्जितेति।—ऊर्जितस्य बलवतः, अपत्यस्य उत्पादने क्षमा योग्या तथाविधाम्। आसादयिष्यति प्राप्स्यति।

(४९) अनुवर्त्तिष्यते अनुगमिष्यति, सेविष्यते इति यावत्।

(५०) सा नितम्बवती।

(५१) उपग्राहितवती अङ्गीकृतवती।

(५२) निर्ग्रन्थिकेति।—निर्ग्रन्थिका श्रमणिका, प्रव्रजितेति यावत्, तस्याः प्रयत्नेन।

(५३) परामृशन्निव स्पृशन्निव।

(५४) आक्षिप्य आकृष्य।

(५५) दुर्नयं दुश्चेष्टितम्; (क्षुभ्नादित्वात् न णत्वम्)। गर्हमाणा निन्दन्ती।

अमर्षिका तदुव्रणं भवनदीर्घिकायां प्रक्षाल्य दत्त्वा पटबन्धनं सामयापदेशात् (५६) अपरञ्च अपनीय नूपुरं शयनपरा त्रिचतुराणि दिनानि एकान्ते निन्ये। स धूर्त्तो 'विक्रेष्ये', इति तेन नूपुरेण तम् अनन्तकीर्त्तिम् उपाससाद। स दृष्ट्वा 'मम गृहिण्या एव एष नूपुरः, कथम् अयमुपलब्धस्त्वया?' इति तम् अनुवाणं निर्बन्धेन (५७) पप्रच्छ। स (५८) तु 'वणिग्-ग्रामस्य (५९) अग्र वक्ष्यामि' इति स्थितोऽभूत्। पुनः असौ स्वगृहिण्यै 'स्वनूपुरयुगलं प्रेषय' इति सन्दिदेश। सा च सलज्जं ससाध्वसञ्च 'अद्य रात्रौ विश्रामप्रविष्टायाः वृक्षवाटिकायां प्रभ्रष्टो ममैकः प्रशिथिलबन्धो नूपुरः। सोऽद्यापि अन्विष्टो न दृष्टः। स पुनः अयं द्वितीयः' इत्यपरं प्राहिणोत्। अनया च वार्त्तया अमुं पुरस्कृत्य स वणिक् वणिग्जनसमाजम् आजगाम। स च अनुयुक्तो धूर्त्तः सविनयम् आवेदयत् —'विदितमेव खलु वः यथाऽहं युष्मदाज्ञया पितृवनम् (६०) अभिरक्ष्य तदुपजीवी प्रतिवसामि। लुब्धाश्च कदाचित् मद्दर्शनभीरवो निशि दहेयुः अपि शवानीति निशासु अपि श्मशानमधिशये, अपरेद्युः दग्धादग्धं (६१) मृतकं चितायाः प्रसभम् (६२) आकर्षन्तीं श्यामाकारां (६३) नारीम् अपश्यम्।

(५६) सामयापदेशात् आमया रोगः, तेन सह वर्त्तमाना सामया, तस्याः अपदेशात् छलात्, पीडाव्याजेनेत्यर्थः।

(५७) अनुवाणम् अकथयन्तम्। निर्बन्धेन आग्रहातिशयेन।

(५८) स धूर्त्तः।

(५९) वणिग्ग्रामस्य वणिक्समूहस्य।

(६०) अनुयुक्तः पृष्टः। पितृवनं श्मशानम्।

(६१) दग्धादग्धं किञ्चिता दग्धं किञ्चिता च अदग्धम् अर्द्धदग्धमित्यर्थः।

(६२) प्रसभं बलात्।

(६३) श्यामाकारां श्यामवर्णाम्।

अर्थलोभात्तु निगृह्य (६४) साध्वसं सा गृहीता, शस्त्रिकया च ऊरुमूले यदृच्छया किञ्चित् उल्लिखितम्। एष च नूपुरः चरणादाक्षिप्तः, तावति एव द्रुतगतिः सा पलायिष्ट। सोऽयमस्य आगमः, परं भवन्तः प्रमाणम्' इति। विमर्शेन (६५) च तस्याः शाकिनीत्वम् ऐकमत्येन (६६) पौराणाम् अभिमतम् आसीत्। भर्त्रा च परित्यक्ता तस्मिन्नेव श्मशाने बहु विलप्य पाशेन उद्बध्य मर्तुकामा तेन धूर्तेन नक्तम् अगृह्यत, अनुनीता च—'सुन्दरि! त्वदाकारोन्मादितेन मया त्वदावर्जने बहून् उपायान् भिक्षुकीमुखेन उपन्यस्य तेषु असिद्धेषु पुनः अयमुपायो यावज्जीवम् असाधारणीकृत्य रन्तुम् आचरितः, तत् प्रसीद अनन्यशरणाय अस्मै दासजनाय' इति मुहुर्मुहुः चरणयोः निपत्य, प्रयुज्य सान्त्वशतानि तामगत्यन्तराम् आत्मवश्याम् अकरोत्, तत् इदमुक्तं—दुष्करसाधनं प्रज्ञा।' इति।

इदम् आकर्ण्य ब्रह्मराक्षसो माम् अपूपुजत्। अस्मिन्नेव क्षणे नातिप्रौढपुन्नागमुकुलस्थूलानि (६७) मुक्ताफलानि सह सलिलविन्दुभिः अम्बरतलात् अपतन्। अहन्तु 'किं नु इदम्?' इति उन्मुखः (६८) आलोकयन् कमपि राक्षसं काञ्चित् अङ्गनां विचेष्टमानगात्रीम् (६९) आकर्षन्तम् अपश्यम्।

---

(६४) निगृह्य पराभाव्य, अनर्थयित्वा इत्यर्थः।

(६५) विमर्शेन विचारेण।

(६६) शाकिनीत्वं डाकिनीसहचरीविशेषत्वम्। ऐकमत्येन एकमतावलम्बनेन।

(६७) नातिप्रौढेति।—नातिप्रौढानि नातिपरिपक्वानि, यानि पुन्नागमुकुलानि तदाख्यपुष्पविशेषस्य मुकुलानि, तद्वत् स्थूलानि।

(६८) उन्मुखः ऊर्ध्वीकृतनेत्रः।

(६९) विचेष्टमानगात्रीं विस्फुरचेष्टमानावयवाम्, इतस्ततः पराहताङ्गयष्टिम् इत्यर्थः, आत्ममुक्तये प्रयत्नपरामिति भावः।

'कथमपहरति अकामामपि स्त्रियमनाचारो नैर्ऋतः ?' (७०) इति गगनगमनमन्दशक्तिः अशक्तवाताप्ये। स तु मत्सम्बन्धो ब्रह्मराक्षसः 'तिष्ठ तिष्ठ पाप! क्व अपहरसि ?' इति भर्त्सयन् उत्थाय अपरराक्षसेन समसज्ज्यत। तान्तु रोषात् अनपेक्षापविद्धाम् (७१) अमरवृक्षमञ्जरीमिव अन्तरिक्षात् आपतन्तीम् उन्मुखप्रसारितोभयकरः कराभ्याम् अग्रहीषम्। उपगृह्य च वेपमानां (७२) सम्मीलिताक्षीं मदङ्गस्पर्शसुखेन इव उद्भिन्नरोमाञ्चां तादृशीमेव ताम् अनवतारयन् अतिष्ठम्। तावत् तौ (७३) उभौ अपि शैलशृङ्गभङ्गैः पादपैश्च रभसोन्मूलितैः मुष्टिपादप्रहारैश्च परस्परम् अक्षपयेताम्। (७४) पुनः अहमतिमृदूनि पुलिनवन्ति कुसुमलवलाञ्छिते सरस्तीरे ऽवरोप्य ससृहं निर्वर्णयंस्तां मत्प्राणैकवल्लभां राजकन्यकां कन्दुकावतीम् अलक्षयम्। सा हि मया समाश्वास्यमाना तिर्य्यक् माम् अभिनिरूप्य जातप्रत्यभिज्ञा सकरुणम् अरोदीत्, अवादीच्च—'नाथ! त्वद्दर्शनात् उपोढ़रागा (७५) तस्मिन् कन्दुकोत्सवे पुनः सख्या चन्द्रसेनया त्वत्कथाभिरेव समाश्वासिता अस्मि। त्वं किल समुद्रमध्ये मज्जितः पापेन मद्भ्रात्रा भीमधन्वनेति श्रुत्वा सखीजनं परिजनञ्च वञ्चयित्वा जीवितं जिहासुः एकाकिनी क्रीड़ावनम् उपागमम्। तत्र च माम् अचकमत कामरूप एष राक्षसाधमः।

(७०) अनाचारः दुराचारः। नैर्ऋतः राक्षसः।

(७१) अनपेक्षेति।—अनपेक्षया निरपेक्षतया, अपविद्धा त्यक्ता ताम्।

(७२) वेपमानां कम्पमानाम्।

(७३) तौ राक्षस-ब्रह्मराक्षसौ।

(७४) अक्षपयेताम् अनाशयेताम्।

(७५) उपोढ़रागा जातानुरागा।

सोऽयं मया भीतया अवधूतप्रार्थन: स्फुरन्तीं मां निगृह्य अभ्यधावत्, अत्र एवम् अवसित: (७६) अभूत्। अहञ्च दैवात् तवैव जीवितेशस्य हस्ते पतिता। भद्रं तव?' इति। श्रुत्वा च तया सह अवरुह्य (७७) नावमध्यारोहम्। मुक्ता च नौ: प्रतिवातप्रेरिता तमेव दामलिप्तं प्रत्युपातिष्ठत। अवरूढाश्च वयम् अश्रमेण। 'तनयस्य च तनयायाश्च नाशात् अनन्यापत्य: तुङ्गधन्वा सुह्मपति: निष्कल: (७८) स्वयं सकलत्र एव निष्कलङ्के गङ्गारोधसि अनशनेन उपरन्तुं प्रतिष्ठते। सह च तेन मर्तुमिच्छति अनन्यनाथोऽनुरक्त: पौरवृद्धलोक:' इति अश्रुमुखीनां प्रजानाम् आक्रन्दम् अशृणुम। अथ अहमस्मै राज्ञे यथावृत्तम् आख्याय तत् अपत्यद्वयं प्रत्यर्पितवान्। प्रीतेन तेन जामाता कृतोऽस्मि दामलिप्तेश्वरेण, तत्पुत्त्रो मदनुजीवी जात:, मदाज्ञया च अमुना प्राणवदुज्झिता चन्द्रसेना कोशदासमेव अभजत। ततश्च सिंहवर्मसाहाय्यार्थम् अत्र आगत्य भर्त्तुस्तव दर्शनोत्सवसुखम् अनुभवामि" इति।

श्रुत्वा "चित्रेयं दैवगति:। अवसरेषु पुष्कल: (७९) पुरुषकार:" इत्यभिधाय भूय: स्मिताभिषिक्तदन्तच्छदो मन्त्रगुप्ते हर्षोत्फुल्लं चक्षु: पातयामास देवो राजवाहन:। स किल करकमलेन किञ्चित् संवृताननो ललितवल्लभारभस-

---

(७६) अवसित: निधनं गत:।

(७७) अवरुह्य पर्वतशिखरादवतीर्येत्यर्थ:।

(७८) निष्कल: स्थविर:, ("निष्कल: स्थविर: वृद्धौ" इति वैजयन्ती। "निष्कल" इति पाठे—व्यर्थधन:, तनयातनययो: अन्वेषणे इति भाव:)।

(७९) पुष्कल: अतिशयेन शोभन:।

दत्तदन्तक्षतव्यसनविह्वलाधरमणिर्निरोष्ठ्यवर्णम् (८१) आत्म-चरितम् आचचक्षे।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते उत्तरपीठिकायां मित्रगुप्तचरितं नाम षष्ठ उच्छ्वासः।

---

## अथ सप्तमोच्छ्वासः।

---

### मन्त्रगुप्तचरितम्।

"राजाधिराजनन्दन! नगररन्ध्रगतस्य (१) ते गतिं जानन् अज्ञश्च गतः कदाचित् कलिङ्गान्। कलिङ्गनगरस्य नात्या-सन्नसंस्थितजनदाहस्थानसंसक्तस्य (२) कस्यचित् कान्तार-धरणिजस्य (३) आस्तीर्णसरसकिसलयसंस्तरे तले निषद्य

---

(८०) संवृताननः आच्छादितवदनः। ललितेति।—ललितया सुन्दर्य्या, वल्लभया कान्तया, रभसेन वेगेन हर्षेण वा, दत्तं यत् दन्तक्षतं, तदेव व्यसनं पीडा, तेन विह्वलः कातरः, अधरमणिः यस्य तथाभूतः। निरोष्ठ्येति।—नास्ति ओष्ठ्यवर्णः ओष्ठोच्चार्य्यवर्णः, पवर्गादिरित्यर्थः यत्र तद्यथा तथा।

इति दशकुमारचरिते षष्ठोच्छ्वासटीका।

(१) नगररन्ध्रगतस्य पर्वतविवरं प्रविष्टस्य।

(२) नात्यासन्नेति।—नात्यासन्नं नातिसन्निहितं, यत् संस्थितजनानां मृत-मनुष्याणां, दाहस्थानं श्मशानमित्यर्थः, तत्संसक्तस्य तत्संलग्नस्य।

(३) कान्तारधरणिजस्य दुर्गमवर्त्मप्रान्तस्थतरोः, ("कान्तारं वर्त्म दुर्गमम्" इत्यमरः)।

निद्रालीढदृष्टिः (४) अशयिषि। गलति (५) च कालरात्रिशिखण्डजालकान्धकारे चरितरक्षसि क्षरितनीहारे निजनिलयनिलीननिःशेषजने नितान्तशीते निशीथे घनतरशाखाशाखान्तरालनिष्क्रांदिनि, (६) नेत्रनिंसिनीं (७) निद्रां निगृह्णन् कर्णदेशं गतं (८) 'कथं खलेन (९) अनेन दग्धसिद्धेन (१०) हिंसाकाले निदेशं दित्सता (११) जन एष रागेण अनर्गलेन अर्दित इत्थं खलीकृतः, (१२) क्रियेतास्य अपक-

(४) निषद्य उपविश्य। निद्रेति।—निद्रया आलीढा आक्रान्ता, दृष्टिर्यस्य तथाभूतः।

(५) गलति अतिक्रामति।

(६) कालेति।—कालरात्र्याः संहाररजन्याः, देव्या इति भावः, शिखण्डानां शिखानां, केशानामिति यावत, जालकं समूह इव, अन्धकारो यस्मिन् तथाभूते। चरितेति।—चरितानि इतस्ततः सञ्चरितानि, रक्षांसि राक्षसा यत्र तादृशे। क्षरितेति।—क्षरिताः पतिताः, नीहाराः शिशिराः यस्मिन् तथाविधे। निजेति।—निजनिलयेषु स्वावासेषु, निलीनाः आलीनाः, निःशेषाः सर्वे, परिजनाः यस्मिन् तथाभूते। निशीथे अर्द्धरात्रे, ("अर्द्धरात्रनिशीथौ द्वौ" इत्यमरः)। घनेति।—घनतराणाम् अतिसान्द्राणां, शाखानां तदाख्यतरूणां, शाखान्तरालं निष्क्रांदयति अव्यक्तशब्दविशेषं कारयतीति तथोक्ते।

(७) नेत्रनिंसिनीं नयनचुम्बिनीम्।

(८) निगृह्णन् सङ्कोचयन्, त्यजन्निति यावत्। कर्णदेशं गतं श्रुतिगोचरतापतितम्।

(९) खलेन दुर्जनेन।

(१०) दग्धसिद्धेन कृततापसेन।

(११) निदेशम् आज्ञाम्। दित्सता दातुमिच्छता, कुर्वतेति यावत्।

(१२) जन एषः मद्रूपो जनः। रागेण प्रेमावेशेन। अनर्गलेन अप्रतिबन्धेन। अर्दितः पीडितः, आयत्तीकृत इति यावत्। इत्थम् अनेन प्रकारेण, आज्ञादानेनैवं; खलीकृतः उपद्रुतः। खलीकृत इत्यत्र इत्थमिति विशेषणं हिंसाकालेऽपि अविचार्य्य निदेशं दित्सतेति विशेषार्थविवरणार्थम्।

नरेन्द्रस्य केनचित् अनन्तशक्तिना सिद्ध्यन्तरायः?' (१३) इति किङ्करस्य किङ्कर्याश्च अतिकातरं रटितम्। (१४) तत् आकर्ण्य 'का एष सिद्धः? का च सिद्धिः? किञ्च अनेन किङ्करेण करिष्यते?' इति दिदृक्षाक्रान्तहृदयः किङ्करगतया दिशा (१५) किञ्चित् अन्तरं गतः तरलतरनराखिशकलरचितालङ्काराक्रान्तकायं दहनदग्धकाष्ठनिष्ठाङ्गाररजःकृताङ्गरागं तडिल्लताकारजटाधरं हिरण्यरेतसि अरण्यचक्रान्धकारराक्षसे अपगृहीतनानेन्धनग्रासचञ्चदर्चिषि दक्षिणेतरेण (१६) करेण तिलसिद्धार्थकादीन् निरन्तरचटचटायितानाः

(१३) (क्रियेतेति प्रार्थनायां विधिलिङ्)। कुनरेन्द्रस्य कुः कुत्सितः, अभद्र इत्यर्थः, नरेन्द्रः राजा, प्रभुरिति यावत्, तस्य। अनन्तशक्तिना अनन्ता अशेषा, शक्तिः सामर्थ्यं यस्य तथाभूतेन, महाप्रभावेण इत्यर्थः। सिद्ध्यन्तरायः सिद्धेः कृतार्थतायाः, अन्तरायः विघ्नः; कश्चिदनन्तशक्तिरस्य पापस्य सिद्धिं प्रतिबध्नात्विति निष्कर्षः।

(१४) किङ्करस्य दासस्य। किङ्कर्याः दास्याः। अतिकातरम् अतिकरुणम्। रटितं विलपितम्।

(१५) किङ्करगतया दिशा यतः किङ्कररटितं श्रुतं तया दिशेत्यर्थः।

(१६) तरलेति।—तरलतरैः अतिभास्वरैः, अतिशुभ्रैरित्यर्थः, नराणाम् अस्थ्नां कङ्कालानां, शकलैः खण्डैः, रचितेन कल्पितेन, अलङ्कारेण भूषणेन, आक्रान्तः व्याप्तः, कायो यस्य तथाभूतम्। दहनेति।—दहनेन अग्निना, दग्धानां काष्ठानां निष्ठया नाशेन, निःशेषतया भस्मीभवनेनेत्यर्थः, ("निष्ठानिष्पत्तिनाशान्ताः" इत्यमरः) ये अङ्गाराः तेषां रजोभिः भस्मभिरित्यर्थः, कृतः अङ्गरागः अङ्गविलेपनं येन तथाभूतम्। तडिदिति।—तडिल्लतायाः सौदामन्याः, आकार इव आकारो यासां तादृश्यः, या जटाः तासां धरः तम्। हिरण्यरेतसि अग्नौ। अरण्येति।—अरण्यचक्रस्य काननमण्डलस्य, ये अन्धकाराः, तेषां राक्षसे भक्षकारिणीति भावः। अपेति।—अपेन गृहीतानां ग्रासानां, नानेन्धनानां विविधकाष्ठानां, ग्रासेन भक्षणेन, दहनेनेति भावः, चञ्चन्त्यः स्फुरन्त्यः, अर्चिषः शिखा यस्य तादृशे, ("अर्चिर्हेतिः शिखा स्त्रियाम्" इत्यमरः)। दक्षिणेतरेण वामेन।

किरन्तं (१७) कञ्चित् अद्राक्षम्। तस्य अग्रे स कृताञ्जलिः किङ्करः 'किं करणीयम्? दीयतां निदेशः' इति अतिष्ठत्। आदिष्टः (१८) च अयं तेन अतिनिकृष्टाशयेन (१९) 'गच्छ, कलिङ्गराजस्य कर्दनस्य कन्यां कनकलेखां कन्यान्तःपुरात् इहानय' इति। स च तथा अकार्षीत्। ततश्च एनां त्रासेन अलघीयसा अस्रजर्जरेण (२०) च कण्ठेन रणरणिकागृहीतेन (२१) च हृदयेन 'हा तात! हा जननि!' इति क्रन्दन्तीं कीर्णम्लानशेखरस्रजि शीर्णनहने शिरसिजानां सञ्चये निगृह्यासिना शिलाशितेन शिरश्चिकर्त्तिषया अचेष्टत। (२२) झटिति च आच्छिद्य (२३) तस्य हस्तात् तां असिलतां तया निकृत्य (२४) तस्य तत् शिरः सजटाजालं निकटस्थस्य कस्यचित् जीर्णशालस्य स्कन्धरन्ध्रे न्यदधाम्। (२५)

---

(१७) तिलेति।—तिलाश्च सिद्धार्थकाः श्वेतसर्षपाश्च, आदयो येषां तान्, हवनीयद्रव्यविशेषानित्यर्थः। निरन्तरेति।—निरन्तरं चटचटायितान् चटचटेति शब्दं कुर्वत इत्यर्थः। आकिरन्तं प्रक्षिपन्तम्।

(१८) आदिष्टः आज्ञप्तः।

(१९) अतीति।—अतिशयेन निकृष्टः नीचः, आशयो यस्य तेन।

(२०) त्रासेन भयेन। अलघीयसा महता। अस्रजर्जरेण बाष्पावरुद्धेन।

(२१) रणरणिकेति।—रणरणिकया उद्वेगातिशयेन, गृहीतम् आक्रान्तम्, अभिभूतमित्यर्थः, तेन।

(२२) कीर्णेति।—कीर्णा विक्षिप्ता, अत एव म्लाना म्लाना, शेखरस्रक् शिरोमाल्यं यस्य तादृशि। शीर्णनहने श्लथबन्धने। शिरसिजानां केशानाम्। सञ्चये समूहे। निगृह्य सुदृढं धृत्वेत्यर्थः। असिना खड्गेन। शिलाशितेन शिलायां शाणितेन। शिर इति।—शिरसः चिकर्त्तिषा छेदनेच्छा तया। अचेष्टत उद्यतः।

(२३) आच्छिद्य आकृष्य।

(२४) तया असिलतया। निकृत्य छित्वा।

तन्निध्याय हृष्टतरः स राक्षसः क्षीणाधिः (२६) अकथयत् —'आर्य्य! कदर्य्यस्य अस्य कदर्थनात् (२७) नः कदाचित् निद्रा न आयाति नेत्रे। तर्जयति (२८) त्रासयति च अन्त्ये च आज्ञां ददाति। तदत्र कल्याणराशिना साधीयः कृतं, यदेष नरकाकः कारणानां नारकीणां रसज्ञानाय (२९) नीतः शीतेतरदीधितिदेहजस्य (३०) नगरं, तदत्र दयानिधेः अनन्ततेजसस्त्वेयं जनः काञ्चित् आज्ञां चिकीर्षति, आदिश, अलं कालहरणेन' इति अभणीत्। (३१) आदिशञ्च तं—'सखे! मा एषा सज्जनाचरिता सरणिः (३२) यदणीयसि कारणेऽनणीयान् (३३) आदरः सन्दृश्यते, न चेत् इदं नेच्छसि, मा इयं सन्नताङ्गयष्टिः (३४) अक्लेशार्हा सती अनेन अकृत्य-

(२५) खङ्खरन्ध्रे आकाशविवरे। न्यदधात् निहितवान्; "न्यदधात्" इत्यत्र "न्यचिक्षिप" इति पदं मुक्ताविवरणायां केचित् पठन्ति।

(२६) तत् कार्य्यम्। निध्याय दृष्ट्वा; "तन्निधायहृष्टतरः" इति पाठे—तत्र निधायेन निधानेन, अत्यन्तहृष्टः इति भावः। स राक्षसः विकटरूप इत्यर्थः। क्षीणाधिः विगतमनोव्यथः, ("पुंस्याधिर्मानसी व्यथा" इत्यमरः)।

(२७) कदर्य्यस्य कुत्सितस्य। कदर्थनात् पीड़नात्।

(२८) तर्जयतीत्यत्र अस्मानिति शेषः।

(२९) कल्याणराशिना प्रभूतमङ्गलाश्रयेणेत्यर्थः। साधीयः अतिसाधुकार्य्यम्। नरकाकः नरेषु काक इव क्रूर इति भावः, नरकाकः नराधम इत्यर्थः। कारणानां यातनानां, ("कारणा यातना तीव्रवेदना" इत्यमरः)। नारकीणां नरकसम्बन्धिनीनाम्। रसज्ञानाय आस्वादानुभवाय।

(३०) शीतेतरेति।—शीतेतरा उष्णाः, दीधितयो यस्य सः शीतेतरदीधितिः सूर्य्यः, तस्य देहजः पुत्रः, यमन इत्यर्थः, तस्य।

(३१) कालहरणेन कालक्षेपेण। अभणीत् अवदत् अकथीत्।

(३२) सज्जनाचरिता साधुजनानुसृता। सरणिः पन्थाः।

(३३) अणीयसि स्वल्पे। अनणीयान् महान्।

(३४) सन्नतेति।—सन्नता स्तनभारात् अवनता, अङ्गयष्टिर्यस्याः सा ईदृशी।

कारिणा (३५) अत्यर्थं क्लेशिता, तदयैनां निजनिलयं, नान्यदितः किञ्चिदस्ति चित्ताराधनं (३६) नः' इति ।

अथ तदाकर्ण्य कर्णशेखरनिलीननीलनीरजायितां धीरेतरतारकां दृशं तिर्य्यक् किञ्चित् अञ्चितां सञ्चारयन्ती, सलिलचरकेतनशरासनानतां चिल्लिकालतां ललाटरङ्गस्थलीलास्यनर्त्तकीं लीलालसं लालयन्ती, कण्टकितरक्तगण्डलेखा, रागलज्जाऽन्तरालचारिणी, (३७) चरणाग्रेण तिरश्चीननखार्चिश्चन्द्रिकेण (३८) धरणीतलं साचीकृताननसरसिजं (३९) लिखन्ती, दन्तच्छदकिसलयलङ्घिना, हर्षास्रसलिलधारासीकरकणजालक्लेदितस्य (४०) स्तनतटचन्दनस्य

(३५) अकृत्यकारिणा अकार्य्यकारिणा, तापसेनेति शेषः ।

(३६) चित्ताराधनं मनःप्रीतिकरम् ।

(३७) कर्णेति ।—कर्णशेखरे कर्णोपरि, निलीनं स्थितं, यत् नीलनीरजं नीलोत्पलं, तदिवाचरिता ताम् । धीरेति ।—धीरेतरा चपला, तारका यस्याः ताहशीम् । दृशं दृष्टिम् । तिर्य्यक् तिरश्चीनं यथा तथा । किञ्चित् ईषत् । अञ्चितां चलिताम् । सञ्चारयन्ती प्रेरयन्ती । सलिलेति ।—सलिले चरतीति सलिलचरो मकरः, केतनं ध्वजो यस्य तस्य कामस्येत्यर्थः, शरासनं धनुः, तद्वत् आनतां वक्रामिति यावत् । चिल्लिकालतां भ्रूलताम् । ललाटेति ।—ललाटमेव रङ्गस्थली नृत्यशाला, तस्यां यत् लास्यं वाद्यनृत्यगीतमिश्रं, तौर्य्यत्रिकमिति यावत्, तत्र नर्त्तकीं नृत्यन्तीमिति यावत् । लीलालसं विलासमन्थरम् । लालयन्ती चालयन्ती; "नामयन्ती" इति पाठे—नर्त्तयन्ती, परिचालयन्तीति यावत् । कण्टकितेति ।—कण्टकिते पुलकिते, रक्ते गण्डलेखे कपोलौ यस्यास्तथाभूता । रागेति ।—रागलज्जयोः अनुरागत्रपयोः, अन्तराले मध्ये, चरतीति तथोक्ता, रागाविष्टा लज्जिता चेत्यर्थः ।

(३८) तिरश्चीनेति ।—तिरश्चीना तिर्य्यक् प्रसृता, नखार्चिषां नखप्रभाणां, चन्द्रिका उद्योतः यस्य ताहशेन ।

(३९) साचीकृतेति ।—साचीकृतम् ईषद्वक्रावनमितम्, आननसरसिजं मुखकमलं यस्मिन् तद्यथा तथा ।

(४०) दन्तच्छदेति ।—दन्तच्छदः अधर एव, किसलयः पल्लवः, तं लङ्घयति

आर्द्रतां निरस्यता आस्यान्तरालनिःसृतेन अतनीयसाऽनिलेन हृदयलक्ष्यदलनदक्षरतिसहचरशरस्यदायितेन (४१) तरङ्गित-दशनचन्द्रिकाणि (४२) कानिचित् एतानि अक्षराणि कल-कण्ठी कलानि असृजत् (४३)—'आर्य्ये! केन कारणेन एनं दासजनं कालहस्तात् आच्छिद्य अनन्तरं रागानिल-चालितरणरणिकातरङ्गभङ्गानङ्गसागरे क्षिपसि? (४४) यथा ते चरणसरसिजरजःकणिका, (४५) तथाऽहं चिन्तनीया। यद्यस्ति दया तेऽत्र जने, अनन्यसाधारणः करणीयः स एष चरणाराधनक्रियायाम्। (४६) यदि च कन्यागाराध्यासनं रहस्यचरणादनर्थं (४७) आशङ्केरत, न एतदस्ति, रक्ततरा

कम्पयतीति यावत् तथाविधेन। हर्षेति।—हर्षेण आनन्देन, यानि नयनसलिलानि अश्रूणि, आनन्दबाष्पाणीत्यर्थः, तेषां धारायाः सन्ततीनां, शीकरकणजालेन शीकर-बिन्दुनिचयेन, क्लेदितस्य आर्द्रतामापादितस्य इत्यर्थः।

(४१) आर्द्रतां सरसत्वम्। निरस्यता अपनयता। आस्यान्तरालनिःसृतेन मुखविवरात् निर्गच्छता। अतनीयसा अनल्पेन, सुदीर्घेण इति यावत्। हृदयेति।—हृदयमेव लक्ष्यं शरव्यं, तस्य दलने वेधने, तस्मिन् दक्षः निपुणः, यः रतिसहचरः कामः, तस्य शरस्यदायितेन बाणवेग इव आचरता, "सहचरसायकस्य दायितेन" इति पाठे—मन्मथनाराचप्रियेण, अत एव उष्णेन इति भावः।

(४२) तरङ्गितेति।—तरङ्गिता सञ्जाततरङ्गा, स्फुरिता इति यावत्, दशनानां चन्द्रिका आलोकः यैः तथाविधानि।

(४३) कलकण्ठी मधुरकण्ठी। कलानि मधुराणि इत्यर्थः। असृजत् उच्चारयामासेत्यर्थः।

(४४) रागानिलेति।—राग एव अनिलः वायुः, तेन चालिता रणरणिका उत्कण्ठा एव, तरङ्गाः सन्त्यस्मिन्निति तथाभूते। क्षिपसि पातयसि।

(४५) चरणेति।—चरण एव सरसिजं कमलं, तस्य रजःकणिका रजसः धूल्याः, अथवा—परागस्य, कणिका बिन्दुरित्यर्थः।

(४६) चरणाराधनक्रियायां पादपद्मसेवने।

(४७) कन्यागाराध्यासने कन्याऽन्तःपुरस्थितौ। रहस्यचरणात् गुप्तप्रकाशात्। अनर्थः विपद्।

हि नस्तत्र सख्यसेव्यश्च (४८) यथा न कश्चिदेतत् ज्ञास्यति तथा यतिष्यन्ते' इति। स च अहं देहजेन आकर्णाकृष्ट-सायकासनेन (४९) चेतसि अतिनिर्दयं ताड़ितस्तत्कटाक्ष-कालायसनिगड़गाढ़संयतः किङ्करानननिहितदृष्टिः (५०) अगादिषं—'यद्येयं रथचरणजघना कथयति, तथा चेत् न आचरेयं, नयेत नक्रकेतनः क्षणेन एकेन अकीर्त्तनीयां दशाम्। (५१) जनमेनं (५२) सह तयानया कन्यया कन्यागृहं हरिणनयनया' (५३) इति। नीतश्च अहं निशा-चरेण शारदजलधरजालकान्ति कन्यकानिकेतनम्। (५४) तत्र च काञ्चित् कालकलां चन्द्राननानिर्दिष्टात् चन्द्रशालैक-देशे तद्दर्शनचलितधृतिः (५५) अतिष्ठम्। सा च स्वच्छन्दं

(४८) सख्यः वयस्याः। सेव्याः दास्यः।

(४९) देहजेन आत्मभुवा, कामेनेत्यर्थः। आकर्णेति।—आकर्णं कर्णपर्य्यन्तम्, आकृष्टं सायकासनं शरासनं येन तथाभूतेन।

(५०) अतिनिर्दयं गाढ़म्। ताड़ितः प्रहृतः। तदिति।—तस्याः कन्यायाः, कटाक्ष एव कालायसनिगड़ः लौहशृङ्खलं, तेन गाढं दृढं संयतः बद्धः। किङ्करेति।—किङ्करस्य तस्य राक्षसस्य, आनने मुखे, निहिता अर्पिता, दृष्टिर्येन तथाभूतः।

(५१) रथेति।—रथचरणः चक्रं, तद्वत् जघनं कटिपुरोभागः यस्याः तादृशी, पृथुलजघनेत्यर्थः ("क्लीबे तु जघनं पुरः" इत्यमरः) आचरेयम् अनुतिष्ठेयम्। नयेत प्रापयेत। नक्रकेतनः मकरकेतनः, काम इत्यर्थः। क्षणेन अल्पेनैव कालेन। अकीर्त्तनीयाम् अवचनीयाम्। दशां शेषावस्थां, मृत्युमित्यर्थः।

(५२) एनं जनं मामित्यर्थः।

(५३) हरिणनयनया मृगाक्ष्या।

(५४) शारदेति।—शारदः शरत्कालिकः, यः जलधरः मेघः, शुभ्रमेघ इत्यर्थः, तस्य जालं समूहः, तस्येव कान्तिर्यस्य तथाविधम्। कन्यकानिकेतनं कन्यान्तःपुरम्।

(५५) कालकलाम् स्वल्पसमयम्। चन्द्रानना चन्द्रमुखी वा कन्या, तया

शयानाः करतलास्फालनसङ्घट्टनाऽपनीतनिद्राः (५६) काश्चित् अधिगतार्थाः (५७) सख्यः अकार्षीत्। अथ आगत्य ताश्चरण-निहितशिरसः चरदस्रकरालितेक्षणा निजशेखरकेसराग्र-संलग्नषट्चरणगणरणितसंवर्धितकलगिरः (५८) शनैः अकथयन्—'आर्य्य! यदत्यादित्यतेजसः (५९) ते एषा नयनलक्ष्यतां (६०) गता, ततः कृतान्तेन (६१) न गृहीता, दत्ता च स्वयं चित्तजेन गरीयसा (६२) मात्मीकृत्य रागान-लम्। (६३) तदनेन आश्चर्यरत्नेन नलिनाक्षस्य (६४) ते·

निर्दिशन् चाटुशत्। चन्द्रशालेति।—चन्द्रशाला उपरितनं गृहं, ("चन्द्रशाला शिरोगृहम्" इत्यमरः। "चिलेर घर" इति भाषा) तस्या एकदेशे एकस्मिन् विभागे। तद्दर्शनेति।—तस्याः कन्यायाः, दर्शनेन वर्धिता प्रचुरा धृतिर्धैर्यं यस्य तथाभूतः।

(५६) करतलेति।—करतलस्य पाणिसंघट्टनया मन्दस्फालनेन, अपनीता निद्रा यासां तथाविधाः।

(५७) अधिगतेति।—अधिगतः ज्ञातः, अर्थः वस्तु, दर्पणदर्शनघटितवृत्तान्त इत्यर्थः याभिः तथाविधाः।

(५८) चरणेति।—चरणयोः, नमीति शेषः, निहितं शिरो याभिः तथाभूताः, प्रणतिपतिता इत्यर्थः। चरदिति।—चरद्भिः गलद्भिः, अस्रैः बाष्पैः, आनन्दजैरिति भावः, करालिते व्याप्ते, ईक्षणे यासां तथोक्ताः। निजेति।—निजशेखरेषु स्वस्वशिरोभूषणमालिकास्वित्यर्थः, यानि केसराणि बकुलकुसुमानि नागकेसरकुसुमानि वा, तेषाम् अग्रेषु संलग्नानां स्थितानां, षट्चरणानां भ्रमराणां, गणेन यत् रणितं गुञ्जितं, तेन संवर्धिताः सञ्जातसंशयाः, कलाः मधुराः, गिरः वाचः यासां तथोक्ताः, भ्रमरवत्मधुरभाषिण्य इत्यर्थः।

(५९) अत्यादित्येति।—आदित्यमतिक्रान्तम् अत्यादित्यं तेजो यस्य तथाभूतस्य, सौरप्रतापवर्धिन इत्यर्थः।

(६०) नयनलक्ष्यतां दृष्टिगोचरताम्।

(६१) कृतान्तेन यमेन, ("कृतान्तो यमदैवयोः" इत्यमरः)।

(६२) दत्ता, भवते इत्याशयः। चित्तजेन मनोभवेन। गरीयसा गुरुणा।

(६३) रागानलम् अनुरागाग्निम्।

(६४) नलिनाक्षस्य कमलनयनस्य।

रत्नशैलशिलातलस्थिरं रागतरलेन (६५) अलाङ्कृतया हृदयम्, अव्यापारितार्थं (६६) स्तनतटं गाढालिङ्गनैः सदृशतरस्य सहचरस्य (६७) च' इति। ततः सव्रीडजनेन प्रतिदक्षिणेन दृढतरीकृतस्नेहनिगडः तथा सनताङ्ग्या सङ्गत्य अरंसिषि। (६८)

अथ कदाचित् आयासितजायारहितचेतसि, (६९) लालसालिलङ्घनम्लानघनकेसरे, (७०) राजदरण्यस्थलीललाटलीलायिततिलके, (७१) ललितानङ्गराजाङ्गीकृतनिर्निद्रकर्णिकारकाञ्चनच्छत्रे, (७२) दक्षिणदहनसारथिरयाहूतसह-

(६५) रत्नेति।—रत्नशैलस्य सुमेरोरित्यर्थः, यत् शिलातलं, तद्वत् स्थिरं दृढं, निश्चलमित्यर्थः। रागतरलेन अनुरागचञ्चलेन।

(६६) अव्यापारिताढं अकृतार्थं, अफलमित्यर्थः, क्रियतामिति शेषः।

(६७) सदृशतरस्य अतिमात्रानुरूपस्य, सहचरस्य सङ्गिनः, स्वामिन इत्यर्थः।

(६८) प्रतिदाक्षिण्येन अनुदारेण। दृढेति।—दृढतरीकृतः स्नेह एव निगडो यस्य तथाभूतः, अतिदृढप्रणयशृङ्खलाबद्धः इत्यर्थः। अरंसिषि रमणमकार्षम्।

(६९) आयासितेति।—आयासितं क्लेशितं, जायारहितानां वियोगिनामित्यर्थः, चेतो येन तथाभूते, विरहोद्दीपके इति भावः।

(७०) लालसेति।—लालसानां लोलुपानां, मधुलुब्धानामित्यर्थः, अलीनां भ्रमराणां, लङ्घनेन आक्रमणेन, म्लानाः क्लान्ताः, घनाः सान्द्राः, केसराः पुन्नागा बकुला वा यत्र तथाभूते, ("पुन्नागे पुरुषस्तुङ्गः केसरो देववल्लभः" इति "अथ केसरे बकुलः" इति चामरः)।

(७१) राजदिति।—राजत् शोभमानम्, अरण्यस्थल्या वनभूमेः, स्त्रिया इति ध्वनिः, ललाटे भाले, लीलायितं लीलावदाचरितं, विलासार्थं व्यवहृतमित्यर्थः, तिलकं तिलकुसुमं, रचनाविशेषश्च इति ध्वनिः, यस्मिन् तादृशे, प्रस्फुटिततिलपुष्पे इत्यर्थः।

(७२) ललितेति।—ललितः सुन्दरः, विलासीति यावत्, ("ललितं त्रिषु सुन्दरम्" इत्यमरः) यः अनङ्गः स एव राजा अनङ्गराजः मदनमहीपतिः, तेन अङ्गीकृतः स्वीकृतः, निजमस्तकोपरि धृतः इत्यर्थः, निर्निद्रः विकसितः, कर्णिकारः

कारचञ्चरीककलिके, ( ७३ ) कालाण्डजकण्ठरागरक्तरक्ता-धरारतिरणाग्रसरणशालिनि, ( ७४ ) शालीनकन्यकाऽन्तः-करणसङ्क्रान्तरागलाञ्छितलज्जे, ( ७५ ) दर्दुरगिरितटचन्दनाश्लेष-शीतलानिलाचार्यदत्तनानालतानृत्यलीले ( ७६ ) काले (७७) कलिङ्गराजः सह अङ्गनाजनेन सह च तनयया सकलेन च नगरजनेन दश तीर्णा च दिनानि हिमकरकिरणजाला-

---

आरग्वधपुष्पमेव, ("कर्णिकारः पुंनागारग्वधौ च द्रुमोत्पलं" इति मेदिनी) आतपत्रं छत्रीकृतं यस्मिन् तथाभूते।

( ७३ ) दाक्षिणेति।—दाक्षिणः यः दहनसारथिः अग्निसखो वायुः, तस्य रयेण वेगेन, प्रभावेणेति यावत्, आहूताः आनीताः, सहकारेषु आम्रतरुषु, ("आम्र-श्चूतो रसालोऽसौ सहकारोऽतिसौरभः" इत्यमरः) चञ्चरीकाः भ्रमराः, कलिकाः कोरकाश्च यस्मिन् तथाभूते, ("कलिका कोरकः पुमान्" इत्यमरः। "चञ्चल-कलिके" इति पाठे—चञ्चलाः कम्पनशीलाः, कलिकाः कोरकाः यस्मिन् तथाभूते।

( ७४ ) कालाण्डजेति।—कालाण्डजाः कालाः कृष्णवर्णाः, अण्डजाः पक्षिणः, पिकाः, कोकिला इत्यर्थः, ("वनप्रियः परभृतः पिकः कालाण्डजः स्मृतः" इति वैजयन्ती) तेषां कण्ठरागेण कण्ठमाधुर्येण, मधुरस्वरेणेति यावत्, रक्तानां कान्तं प्रति रागिणीनां, रक्ताधराणां रक्तदशनच्छदानां, नारीणामित्याशयः, रतिः सुरतमेव, रणः सङ्ग्रामः, तस्य अग्रसरणेन प्रथमसमुद्योगेन, शालते शोभते इति तथाविधे।

( ७५ ) शालीनेति।—शालीनानाम् अधृष्टानाम्, अप्रगल्भानामित्यर्थः, कन्यकानाम् अन्तःकरणेषु सङ्क्रान्तेन समुदितेन, रागेण अनुरागेण, प्रेमावेशेन इत्यर्थः, लाञ्छिता लज्जा यस्मिन् तादृशे; यद्वा—शालामर्हतीति शालीनं सलज्जं, कन्यकाऽन्तः-करणं, तत्र सङ्क्रान्तेनेति योजना।

( ७६ ) दर्दुरेति।—दर्दुरो नाम मलयाचलसन्निहितः पर्वतविशेषः, ("शैलौ मलयदर्दुरौ" इति दर्शनात्) दर्दुराख्यो गिरिश्चेति दर्दुरगिरिः तस्य तटेषु ये चन्दनाः तदाख्यतरवः, तेषामाश्लेषेण आलिङ्गनेन, स्पर्शेनेत्यर्थः, शीतलः यः अनिलः वायुः, स एवाचार्यः शिक्षागुरुरित्यर्थः, तेन दत्ता शिक्षिता, नानालतानां, अन्यलतानामिति ध्वनिः, नृत्यलीला यस्मिन् तथाभूते, दक्षिणपवनकम्पितलतानिचये इत्यर्थः। "दर्दुरः वाद्यभेदः, स एव गिरितटम्" इति केचित्।

( ७७ ) काले वसन्तसमये इत्यर्थः।

लङ्घनीये, (७८) रणदलिसङ्घसंलङ्घितनतलताग्रकिसलयालीढसैकततटे, (७९) तरलतरङ्गशीकरासारसङ्गशीतले (८०) सागरतीरकानने क्रीडारसजातासक्तिः (८१) आसीत्। अथ सन्ततगीतसङ्गीतसङ्गताङ्गनासङ्गसम्भृतशृङ्गारहेलानिरर्गलानङ्ग-सङ्घर्षहर्षितस्य (८२) रागतृष्णैकतन्त्रस्य तत्र रन्ध्रे मन्युनाथेन (८३) जयसिंहेन सलिलतरणसाधनानीतेन अनेकसङ्ख्येन अनीकेन द्राक् (८४) आगत्य अगृह्यत सकलत्रः, (८५) सा च अनीयत त्रासतरलाक्षी दयिता (८६) नः सह सखीजनेन

(७८) दिनेति।—दिनकरस्य सूर्य्यस्य, किरणजालैः अलङ्घनीये दुष्प्रवेशे इत्यर्थः, अतिसान्द्रत्वादिति भावः; "दिनकर" इत्यत्र "सहस्रकरकिरण" इति पाठेऽपि—स एवार्थः।

(७९) रणदिति।—रणतां गुञ्जताम्, अलीनां भ्रमराणां, सङ्घैः निवहैः, संलङ्घिताः समाक्रान्ताः, अत एव नता या लता वल्ल्यः, तासाम् अग्रकिसलयैः पल्लवाग्रैः, आलीढं स्पृष्टं, सैकततटं सिकतामयतीरं यस्मिन् तादृशे।

(८०) तरलेति।—तरलेभ्यः चञ्चलेभ्यः, तरङ्गेभ्यः ये शीकरासाराः वातोद्धूतजलकणानां सर्वतः प्रसरणानि, तेषां सङ्गेन संसर्गेण, शीतले।

(८१) सागरतीरकानने समुद्रतटवने। क्रीडेति।—क्रीडायां विहारे, यः रसः अनुरागः, तस्मिन् जाता आसक्तिरावेशः यस्य तथाविधः।

(८२) सन्ततेति।—सन्तत सततं, गीतेषु ज्ञातगानेषु, सङ्गीतेषु सङ्गतानाम् आविष्टानाम्, अङ्गनानां सङ्गेन या शृङ्गारहेला निधुवनलीला, तया निरर्गलः निष्प्रतिबन्धः, अनङ्गसङ्घर्षः कामसंसर्गः, तेन हर्षितः आनन्दितः।

(८३) रागेति।—रागेषु अनुरागेषु, या तृष्णा पिपासा, अभिलाषः इत्यर्थः, तस्या एकतन्त्रः एकायत्तः, तस्याधीन इत्यर्थः। रन्ध्रे छिद्रे, प्रमादे इति यावत्। मन्युनाथेन मन्युदेशाधिपेन।

(८४) सलिलेति।—सलिलेभ्यः यत् तरणं पारगमनं सन्तरणं वा, तस्य साधनैः उपायैः, नौकादिभिरित्यर्थः, आनीतेन। अनेकसङ्ख्येन बहुसङ्ख्येन। अनीकेन सैन्येन। द्राक् झटिति, सहसेत्यर्थः।

(८५) सकलत्रः सस्त्रीकः।

कनकलेखा। तदाऽहं दाहेन अनङ्गदहनजनितेन अन्तरिता-न्तःकरणवृत्तिः ( ८७ ) चिन्तयन् दयिता गलितगात्रकान्तिः (८८) इति अतर्कयं—'गता सा कलिङ्गराजतनया जनिता जनयित्र्या ( ८९ ) च सह अरिहस्तम्। निरस्तधैर्यस्तां स राजा नियतं सञ्जिघृक्षेत्, (९० ) तदसह्या च सा सती गरलमादिना ( ९१ ) सद्यः सन्तिष्ठेत। ( ९२ ) तस्याञ्च तादृशीं दशां गतायां जनस्यास्य अनन्यजेन ( ९३ ) कृतेन शरीरधारणा। (९४) तत् का स्यादगतिः?' (९५) इति।

अत्रान्तरे (९६) अन्धनगरात् आगच्छन् अग्रजः ( ९७ ) कश्चिदैक्ष्यत। ( ९८ ) तेन च इयं कथा कथिता, यथा

---

(८६) अनीयत नीता। तरलेति।—तरलेन अधैर्येण, तरले कातरे, अंशुके यथाऽस्तथोक्ता। दयिता प्रिया।

(८७) अनङ्गदहनजनितेन कामाग्निजनितेन। अन्तरितेति।—अन्तरिता तिरोहिता, अन्तःकरणवृत्तिः यस्य तथाभूतः।

(८८) गलितेति।—गलिता भ्रष्टा, गात्रस्य अङ्गस्य, कान्तिर्यस्याः तथोक्ताः, मलिनदेहा इत्यर्थः।

(८९) जनिता जनकेन, पित्रेत्यर्थः। जनयित्र्या मात्रा।

(९०) सञ्जिघृक्षेत् सङ्ग्रहीतुमिच्छेत्, अवश्यं सङ्ग्रहीष्यतीति भावः।

(९१) तदसह्या तदक्षमा। गरलमादिना गरः उपविषं कृत्रिमविषं वा, ("गरो रोगे गरं क्लीवं चोपविषे विषे" इति मेदिनी) रसः विषं, तदादिना।

(९२) सन्तिष्ठेत म्रियेत।

(९३) जनस्यास्य ममेत्यर्थः। अनन्यजेन स्वयम्भुवा, कामेनेत्यर्थः।

(९४) शरीरधारणा देहस्थितिः।

(९५) गतिः उपायः।

(९६) अन्तरे अवसरे।

(९७) अग्रजः ब्राह्मणः।

(९८) ऐक्ष्यत दृष्टः।

किञ्च 'जयसिंहेन अनेकनिकारदत्तकदर्थनाजिघांसितः (९९) स कर्दनः कनकलेखादर्शनैधितेन रागेण अरज्यत। (१००) सा च दारिका यक्षेण केनचित् अधिष्ठिता (१) न तिष्ठत्यग्रे नरान्तरस्य, (२) आयस्यति च नरेन्द्रसार्थसङ्कर्षणेन तन्निराकरिष्यन् नरेन्द्रः, (३) न च अस्ति सिद्धिः' (४) इति। तेन च अहं दर्शिताशः शङ्करनृत्यरङ्गदेशजातस्य जरत्सालस्य स्कन्धरन्ध्रान्तर्जटाजालं निष्कृष्य तेन जटिलतां गतः, कन्थाचीरसञ्चयान्तरितसकलगात्रः (५) कांश्चित् शिष्यान् अग्रहीषम्। तांश्च नानाऽऽश्चर्य्यक्रियाऽतिसंहितात् जनात् आकृष्टान्-

---

(९९) अनेकैरिति।—अनेकैः बहुभिः, निकारैः परिभवैः, भर्त्सनासूचकवाक्यैः इत्यर्थः, दत्तेन कदर्थनेन ताडनादिना, जिघांसितः हन्तुमिष्टः।

(१००) कनकेति।—कनकलेखादर्शनेन एधितः वर्द्धितः तेन। रागेण अनुरागेण। अरज्यत रञ्जितः।

(१) अधिष्ठिता आविष्टा।

(२) नरान्तरस्य अपरपुरुषस्य, राज्ञ इत्यर्थः।

(३) आयस्यति क्लिश्यति। नरेन्द्रेति।—नरेन्द्राणां भूतादिचिकित्सकानाम्, "ओझा" इति प्रसिद्धानां, सङ्कर्षणेन समाकर्षणेन। तत् यक्षाधिष्ठितत्वमिति भावः। निराकरिष्यन् अपनेष्यन्। नरेन्द्रः राजा।

(४) सिद्धिः कृतकार्य्यता, उपशम इति यावत्।

(५) दर्शितेति।—दर्शिता आशा यस्मै तथाभूतः। शङ्करेति।—शङ्करस्य हरस्य, यत् नृत्यं नर्त्तनं, तस्य रङ्गदेशः रङ्गभूमिः, श्मशानमित्यर्थः, तत्र जातस्य। जरत्सालस्य जीर्णतरोः। स्कन्धरन्ध्राणाम् अन्तर्मध्ये, स्थापितमिति शेषः, जटाजालं जटासङ्घ, प्राक् मयैव निहतस्य दग्धसिद्धस्येति शेषः। निष्कृष्य निःसार्य्य। तेन जटाजालेन, शिरोवेष्टितेनेति भावः। जटिलतां गतः जटाधरः सन्नित्यर्थः। कन्थेति।—कन्थाचीरसञ्चयेन जीर्णकन्थाखण्डसमूहेन, अन्तरितम् आच्छादितं, सकलं गात्रं येन तथाभूतः।

(६) नानेति।—नाना विविधाः, आश्चर्य्यक्रियाः अद्भुतकर्मानुष्ठानानि, ताभिः अतिसंहितात् विप्रलब्धात्, यद्वा—अतिसङ्घेन एकीभूतात्, तद्दर्शनार्थमेकत्र समा-

चेलादित्यागात् (६) नित्यहृष्टान् अकार्षम्। अथासिषं (७) च दिनैः कैश्चिदन्ध्रनगरम्। तस्य नात्यासन्ने सलिलराशि-सदृशस्य कलहंसगणदलितनलिनदलसंहतिगलितकिञ्जल्क-शकलशारस्य सारसश्रेणिशेखरस्य (८) सरसस्तीरकानने कृतनिकेतनः (९) स्थितः। शिष्यजनकथितचित्रचेष्टाकृष्ट-सकलनागर-जनाभिसन्धानदक्षः (१०) सन् दिशि दिशि इति प्रकीर्त्ये जनेन, (११) 'य एष जरदरण्यस्थलीसरस्तीरे स्थण्डिलशायी यतिः, (१२) तस्य किल सकलानि, सरह-

---

गतादिति भावः। जनात् लोकात्। आकृष्टान आहृतानि, अन्नचेलादीनि अन्न-वस्त्रादीनि, तेषां त्यागात् दानात्।

(७) अयासिषम् अगमम्।

(८) नात्यासन्ने नातिसन्निहिते, किञ्चिद्दूरे इत्यर्थः। सलिलराशिसदृशस्य समुद्रतुल्यस्य। कलहंसेति।—कलहंसानां गणैः दलितानां खण्डितानां, नलिन-दलानां कमलपत्राणां, संहतिभ्यः समूहेभ्यः, गलितैः पतितैः, किञ्जल्कानां केशराणां, शकलैः खण्डैः, शारस्य कर्बुरस्य, विचित्रवर्णस्य इत्यर्थः। सारसेति।—सारसानां पक्षिविशेषाणां, श्रेणिः शेखरं शिरोभूषणं यस्य तथाभूतस्य, उपरिकीर्ण-सारसबहुलस्येत्यर्थः।

(९) कृतनिकेतनः कृतावसथः।

(१०) शिष्येति।—शिष्यजनैः कथिताभिः कीर्त्तिताभिः, चित्राभिः अद्भुताभिः, चेष्टाभिः क्रियाभिः, आकृष्टानाम् आनीतानां, सकलानां नागरजनानाम् अभि-सन्धाने प्रतारणायां, दक्षः निपुणः, "अतिसन्धानदक्षः" इति पाठे—अतिसन्धानं विशेषतो नागरभावज्ञानोपायः, तत्र दक्षः पटुः, प्रवीण इति यावत्।

(११) दिशि दिशि प्रतिदिशम्। इति वक्ष्यमाणवचनम्। प्रकीर्त्ये कीर्त्तितोऽस्मि, कथितोऽस्मि इत्यर्थः, (कीर्त्तयतेः कर्मणि लट् उत्तमपुरुषैकवचने रूपम्)। जनेन नागरिकलोकेन।

(१२) जरदिति।—जरती प्राचीना, जीर्णेत्यर्थः, या अरण्यस्थली वनभूमिः, तस्याः सरस्तीरे सरोवरतटे। स्थण्डिलशायी वनाच्छादितभूमिशयनशीली। यतिः संन्यासी।

रहस्यानि, सषडङ्गानि (१३) च छन्दांसि रसनाग्रे (१४) सन्निहितानि। अन्यानि च शास्त्राणि, येन यानि न ज्ञायन्ते, स तेषां तत्सकाशात् (१५) अर्थनिर्णयं करिष्यति। असत्येन नास्य आस्यं (१६) संसृज्यते। सशरीरः (१७) च एष दयाराशिः। एतत्सङ्गेन (१८) अद्य चिरं चरितार्था दीक्षा। (१९) तच्चरणरजःकणैः कैश्चन शिरसि कीर्णैः (२०) अनेकस्यानेक आतङ्कश्चिरं चिकित्सकैः असंहार्यैः संहृतः। (२१) तदङ्घ्रिक्षालनसलिलसेकैः निष्कलङ्कशिरसां (२२) नश्यन्ति क्षणेन एकेनाखिलनरेन्द्रयन्त्रलाञ्छनसङ्कटा ग्रहाः। (२३) न

(१३) रहस्यानि गोपनीयानि, निगूढतात्पर्यसहितानि इत्यर्थः, औपनिषदानि इति भावः, ("रहस्या स्त्री नदीभेदे गोपनीयेऽभिधेयवत्" इति मेदिनी)। सषडङ्गानि षड्भिः अङ्गैः शिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्योतिषैः सहितानि।

(१४) छन्दांसि वेदाः। रसनाग्रे जिह्वाग्रे।

(१५) तेषां शास्त्राणाम्। तत्सकाशात् तस्य यतेः समीपात्।

(१६) आस्यं मुखम्।

(१७) सशरीरः मूर्त्तिमान्।

(१८) एतदिति।—एतस्य यतेः, सङ्गेन सम्यक् ग्रहणेन; "एतत्सकाशा-दर्थग्रहेण" इति पाठे—एतस्य महापुरुषस्य, सकाशात् सान्निधेः, अर्थग्रहेण मन्त्रार्थबोधेन।

(१९) चरितार्था सम्पन्नप्रयोजना, सफलेति यावत्। दीक्षा संस्कारः।

(२०) कीर्णैः विक्षिप्तैः, धूतैरिति यावत्।

(२१) आतङ्कः रोगः। चिरं दीर्घकालम्। असंहार्यैः अप्रतीकार्यैः। संहृतः नाशितः।

(२२) तदङ्घ्रीति।—तस्य यतेः, अङ्घ्रिक्षालनसलिलसेकैः पादप्रक्षालनजल-सेचनैः। निष्कलङ्क निष्पापं, शिरो येषां तथोक्तानाम्।

(२३) अखिलेति।—अखिलानां सर्वेषां, नरेन्द्राणां भूतादिचिकित्सकानां, यन्त्रेषु समन्तरेखाङ्कितमात्. लङ्घयन्ति अतिक्राम्यन्तीति तादृशाः; "यन्त्रलङ्घिन्"

तस्य शक्यं शक्तेः इयत्ताज्ञानं, न चास्य अहङ्कारकणिका' (२४) इति ।

सा च इयं कथा अनेकजनास्यसञ्चारिणी (२५) तस्य कनकलेखाऽधिष्ठानःधनदाप्ताकरनिराक्रियाऽतिसक्तचेतसः आम्बेरपस्य आकर्षणाय (२६) अभवत् । स च महरट्टः आगत्य आदरेण अतिगरीयसा (२७) अर्चयन् अर्थैश्च शिष्यान् सङ्गृह्णन् अधिगतक्षणः (२८) कदाचित् काङ्क्षितार्थसाधनाय शनैः अयाचिष्ट । ध्यानधीरः स्थानदर्शितज्ञानसन्निधिः (२९) च एनं निरीक्ष्य निचाय्य (३०) अकथयत्—'तात ! स्थाने (३१) एव हि यत्नः ; तस्य हि कन्यारत्नस्य सकलकल्याणलक्षणैकराशेः अधिगतिः क्षीरसागरशयनालङ्कृतायाः गङ्गादि-नदी-सहस्र-

---

इत्यत्र "यवनाङ्गनाः" इति पाठान्तरम् । अत्युत्तराः अतिदारुणाः । यद्वा, दयादीना-मनुत्तरविशेषाः ; "अत्युत्तारायताः" इति पाठे—कुपितान्निन्यादिनत्वाभि नत्वादियुताश्च ।

(२४) अहङ्कारकणिका अहमिकालेशः ।

(२५) अनेकेति ।—अनेकजनानाम आस्यसञ्चारिणी मुखोच्चारितेत्यर्थः ।

(२६) कनकेति ।—कनकलेखायाम् अधिष्ठानम आश्रयो यस्य तादृशः, यः धनदस्य कुबेरस्य, आप्ताकरः किङ्करः, यक्ष इत्यर्थः, तस्य निराक्रियायां निराकरणे, अतिसक्तम अतिशयेनोन्मुखं, चेतो यस्य तथाविधस्य । आम्बेरपश्च राजः, जयसिंह-श्चेत्यर्थः । आकर्षणाय तत्समीपानयनाय ।

(२७) अतिगरीयसा अतिमहता ।

(२८) अधिगतक्षणः प्राप्तसमयः ।

(२९) ध्यानधीरः समाधिनिष्ठः । स्थानेति ।—स्थाने योग्ये देशे, दर्शितः प्रकटितः, ज्ञानस्य प्रज्ञायाः, सन्निधिः सान्निध्यं, प्रकार इत्यर्थः येन तथोक्तः ।

(३०) निचाय्य विलोक्य ।

(३१) स्थाने युक्त इत्यर्थः, ("युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः) ।

(३२) सकलेति ।—सकलानां कल्याणानां मङ्गलानां, शुभसूचकानामित्यर्थः, लक्षणानां चिह्नानाम्, एकराशेः एकाधारस्येत्यर्थः । अधिगतिः प्राप्तिः । क्षीरेति ।—

हारयष्टिराजितायाः धराऽङ्गनाया एव आसादनाय साधनम्। (२२) न च स यक्षस्तदधिष्ठात्री केनचित् नरेन्द्रेण (२३) तस्या लीलाञ्चितनीलनीरजदर्शनायाः (२४) दर्शनं सहते, तदत्र सन्त्यन्तां त्रीणि अस्त्राणि, यैः (२५) अहं यतिष्येऽर्थस्य (२६) अस्य साधनाय' इति। तथाऽऽदिष्टे च हृष्टे व्रतीशे गते निशि निशि निर्निशाकरार्चिषि नीरन्ध्रान्धकारकणनिकरनिगीर्णदशदिशि निद्रानिगडितनिखिलजनदृशि (२७) निर्गत्य जलतलनिलीनगाहनीयं नीरन्ध्रं कच्छाच्छिद्रीकृताम्बरं (२८) तत् एकतः (२९) सरस्तटं तीर्थमसि-

---

नीरसागरः एव रसना काञ्ची, तया अलङ्कृतायाः राजितायाः। अङ्गेति।—गङ्गादिनदीसहस्रमेव हारयष्टिः तया राजितायाः भूषितायाः। धराऽङ्गनायाः भूकान्तायाः। आसादनाय अधिगमाय। साधनम् उपायः।

(२३) नरेन्द्रेण मन्त्रवादिना राज्ञा वा।

(२४) लीलेति।—लीलया विलासेन, अञ्चितम् आकुञ्चितं शोभितं वा, नीलं नीरजमिव नीलोत्पलमिव, दर्शनं नेत्रं यस्याः तथाभूतायाः।

(२५) यैः अस्त्रैः।

(२६) अर्थस्य कार्यस्य।

(२७) निर्निशेति।—निः नास्ति, निशाकरस्य चन्द्रस्य, अर्चिः भाः, प्रभा इत्यर्थः यस्यां तथाभूतायां, ("ज्वालाभासोर्न पुंस्यर्चिः" इत्यमरः) चन्द्रालोकशून्यायामित्यर्थः। नीरन्ध्रेति।—नीरन्ध्राणां निबिडानाम्, अन्धकाराणां कणनिकरैः बिन्दुसमूहैः, निगीर्णाः कवलिताः, आवृता इत्यर्थः, दश दिशो यस्यां तथाभूतायाम्। निद्रेति।—निद्रया निगडिताः शृङ्खलिताः, अवरुद्धा इत्यर्थः, निखिलानां जनानां दृशो यस्यां तादृश्याम्।

(२८) जलेति।—जलस्य तलेन अधोभागेन, निलीनं यथा तथा गाहनीयं प्रवेशनीयम्। नीरन्ध्र निः नास्ति, रन्ध्रं दूषणं, काष्ठकङ्करपाषाणादिकमित्यर्थः, ("रन्ध्रन्तु दूषणे छिद्रे" इति मेदिनी) अपसारितकाष्ठकङ्करादिकमित्यर्थः। कच्छादिति।—कच्छात् अञ्चलात्, छिद्रीकृतं क्षततमम्, अम्बरम् वसनं यस्य तथाभूतम्।

(२९) एकतः एकस्यां दिशि।

यातं च दिनत्रये अस्तगिरिशिखरगैरिकतटसाधारण-च्छायतेजसि अचलराजकन्यकाकदर्थनया अन्तरिक्षाख्येन शङ्करशरीरेण संसृष्टायां (५०) सन्ध्याङ्गनायाः रक्तचन्दन-चर्चितैकस्तनकलशदर्शनीये (५१) दिनाधिनाथे, जनाधि-नाथः (५२) स आगत्य जनस्य अस्य धरणिन्यस्तचरण-नखाङ्किरणच्छादितकिरीटः (५३) कृताञ्जलिः अतिष्ठत्; आदिष्टश्च—'दिष्ट्या (५४) दृष्टेष्टसिद्धिः, इह जगति हि न निरीहदेहिनं (५५) श्रियः संश्रयन्ते। श्रेयांसि च सकलानि अनलसानां (५६) हस्ते नित्यसान्निध्यानि, (५७) यतस्ते

(५०) अस्तेति।—अस्तगिरेरस्ताचलस्य, शिखरे शृङ्गे, गैरिकतटसाधारणी गैरिकव्याप्तभूमिसमाना, छाया कान्तिर्यस्य तथाभूतं, तेजो यस्य तादृशे, आरक्ततेजसीत्यर्थः। अचलेति।—अचलराजः हिमालयः, तस्य कन्यका गौरी, तस्याः कदर्थनया उत्पीडनेन, विरक्तीकरणेनेति यावत्। अन्तरीक्षाख्येन आकाशनाम्ना। शङ्करशरीरेण शङ्करस्य देहेन, आकाशमूर्त्येत्यर्थः। संसृष्टायाः सङ्गतायाः।

(५१) रक्तेति।—रक्तचन्दनेन चर्चितः रञ्जितः, यः एकस्तनकलशः एक-कुचकुम्भः, तद्वत् दर्शनीयः तस्मिन्।

(५२) जनाधिनाथः राजा।

(५३) जनस्य अस्य ममेत्यर्थः। धरणीति।—धरणिन्यस्तैः भूमिपतितैः, चरणनखाङ्किरणैः; यद्वा—धरणिन्यस्तं यत् चरणं तस्य नखाङ्किरणैः छादितं किरीटं मुकुटं यस्य तथाभूतः, यद्वा—धरण्यां न्यस्तं स्थापितं, अत एव चरणनखानां मम पादनखराणां, किरणैः छादितं व्याप्तं, किरीटं यस्य तथाभूतः, भूमिपातितशिरा इत्यर्थः।

(५४) दिष्ट्या भाग्येन, तवेति शेषः।

(५५) निरीहदेहिनं निश्चेष्टं प्राणिनम्।

(५६) अनलसानाम् आलस्यवर्जितानाम्, उद्योगिनामित्यर्थः।

(५७) नित्यसान्निध्यानि सततसन्निहितानि।

साधीयसा (५८) सञ्चरितेन अनाकलितकलङ्केन (५९) अचिरेण अत्यादररचितेन आकृष्टचेतसा जनेन अनेन (६०) सरस्तथा संस्कृतं, (६१) यथा इह तेऽस्य सिद्धिः स्यात्। तत् एतस्यां निशि गलदर्धायां गाहनीयं, (६२) गाहनानन्तरञ्च सलिलतले सततगतीन् अन्तःसञ्चारिणः (६३) सन्निरुध्य यथाशक्ति शय्या कार्य्या। ततश्च तटस्खलित-जल-स्थगित-जलजषण्ड-चलितदण्ड-कण्टकाग्रदलितटङ्क-राजहंस-वास-जर्जररसितदत्तकर्णस्य (६४) जनस्य क्षणादाकर्णनीयं (६५) जनिष्यते जलसङ्घातस्य किञ्चित् आरटितम्। (६६) शान्ते च तत्र सलिलरटिते क्लिन्नगात्रः (६७) किञ्चित् आरक्तदृष्टिः येन आकारेण निर्यास्यसि, निचाय्य तं (६८) निखिलजन-

(५८) साधीयसा अतिसाधुना।

(५९) अनाकलितकलङ्केन अस्पृष्टपापेन।

(६०) अनेन जनेन मयेत्यर्थः।

(६१) संस्कृतं शोधितम्।

(६२) तत् सरः। गलदर्धायां गतार्द्धायां, निशीथावसाने इत्यर्थः। गाहनीयं प्रवेशनीयम्।

(६३) सततगतीन् वायून्, प्राणानित्यर्थः। अन्तःसञ्चारिणः देहान्तःस्थान्।

(६४) तटेति।—तटे तटदेशे, स्खलितेन पतितेन, वायोरुत्थिततरङ्गवेगात् पतितेनेत्यर्थः, जलेन स्थगितम् आच्छन्नं, यत् जलजषण्डं पद्मवृन्दं, तस्य चलितस्य कम्पितस्य, दण्डस्य नालस्य, कण्टकाग्रेण दलिताः विद्धाः, टङ्काः चञ्चवः येषां तादृशा ये राजहंसाः, तेषां वासेन, यानि जर्जराणि भग्नानि, दीनानि इत्यर्थः, रसितानि शब्दितानि, तेषु दत्तौ कर्णौ येन तथाभूतस्य।

(६५) आकर्णनीयं श्रवणीयम्।

(६६) आरटितं शब्दः।

(६७) क्लिन्नगात्रः आर्द्रशरीरः।

(६८) निचाय्य दृष्ट्वा। तम् आकारम्।

नवानन्दकारिणं न स यत्नः अप्यन्यथतः स्थितये । स्थिर-तरनिहितस्नेहशृङ्खलानिर्मण्डितस्य कन्यकाहृदयं क्षणेन एकेन असहनीयदर्शनान्तरायं ( ६९ ) स्यात् । अस्याश्च वराङ्गनाया नात्याहृतनिराकृतारिचक्रं चक्र ( ७० ) करतलगतं चिन्तनीयं, न तत्र संशयः । तच्चेदिच्छसि, अनेकशास्त्रज्ञानधीरधिषणैः अधिकृतैः ( ७१ ) इतरैश्च हितैषिभिः आकलय्य ( ७२ ) जालिकशतमानाय्य अन्तरङ्गजनशतैः यथेष्टदृष्टान्तरालं (७३) सरः क्रियेत, रक्षा च तीरात् त्रिंशद्दण्डान्तराले ( ७४ ) सैनिकजनेन सादरं ( ७५ ) रचनीया । कस्तत्र तज्जानाति, यच्छिद्रेणारयोऽवकीर्षन्ति’ इति । तत् तस्य हृदयहारि ( ७६ ) जातम् । तदधिकृतैश्च तत्र कृत्ये रन्ध्रदर्शनाक्षमैः (७७) इच्छाश्च राज्ञः कन्यकाऽतिरागजनिता नितान्तनिष्फलां निश्चित्यार्थ

( ६९ ) असहनीयेति ।—असहनीयः असमनीयः, दर्शनस्य प्रत्यभिज्ञानमात्रावलम्बनस्येति भावः, अन्तरायः विघ्नः यस्य तथाभूतं, अदर्शनमपि त्वामदृष्ट्वा सा कन्या न स्थातुं शक्ष्यतीति भावः ।

( ७० ) नात्याहृतेति ।—नात्याहृतं नातिप्रयत्नं यथा तथा, निराकृतानि अरीणां शत्रूणां, चक्राणि मण्डलानि यस्य तथाभूतम् । चक्रं मण्डलम् ।

( ७१ ) अनेकेति ।—अनेकशास्त्राणां ज्ञानेन धीरा परिपक्वेति यावत्, धिषणा प्रज्ञा येषां तादृशैः । अधिकृतैः अमात्यादिभिः ।

( ७२ ) आकलय्य विविच्य, सम्मन्त्र्य इत्यर्थः ।

( ७३ ) अन्तरङ्गजनशतैः आत्मीयजनगणैः, "अन्तरं नागरशतैः" इति पाठे—अनेकनागरिकैरन्तरं सरोमध्यभागम् इति योजनीयम् । यथेष्टेति ।—यथेष्टं यथाकामं, दृष्टम् अन्तरालं यस्य तथाभूतम् ।

( ७४ ) त्रिंशदिति ।—त्रिंशत् त्रिंशत्संख्यकाः, दण्डाः लगुडाः, चतुर्हस्तप्रमाणा इति भावः, यस्य तादृशे, अन्तराले व्यवधाने, विंशत्यधिकशतहस्तान्तराले इत्यर्थः ।

( ७५ ) सादरं सावधानम् ।

( ७६ ) हृदयहारि मनोज्ञम्, अभिमतमित्यर्थः ।

( ७७ ) रन्ध्रदर्शनाक्षमैः छिद्रदर्शनाक्षमैः ।

एष न निर्बन्धः। तथास्थितस्य तदासादनदृढतराग्रहस्य (७८) स आख्यायत (७९)—'राजन्! अत्र ते जनान्ते (८०) चिरं स्थितं, (८१) न च एकत्र चिरस्थानं नः (८२) अस्तं, कृतकृत्यश्च इह न द्रष्टासि। (८३) यस्य ते राष्ट्रे आसाद्यासादितं, (८४) तस्य ते किञ्चित् अनाचर्य्य (८५) कार्य्यं गतिः आर्य्यगर्ह्या (८६) इति अत्र एतच्चिरस्थानस्य कारणं, तच्च अद्य सिद्धम्; (८७) गच्छ गृहान्, यथार्हजलेन कृष्णगन्धेन स्नातः सितस्रगङ्गरागः (८८) शक्तिसदृशेन दानेन आराधितधरणितलतैतिलगणः तिलस्नेहसिक्तयस्त्यग्रग्रथित-चेलाञ्चलखण्डकाग्निशिखासहस्रग्रस्तनैशान्धकारराशिः (८९)

(७८) तदिति।—तस्याः कनकलेखायाः, आसादने अधिगमे, दृढतरः आग्रहो यस्य तथाभूतः।

(७९) आख्यायत अकथ्यत, मया इति शेषः।

(८०) जनान्ते जनावासान्ते इत्यर्थः।

(८१) स्थितं, मयेति शेषः।

(८२) नः अस्माकं, यतीनामिति भावः।

(८३) द्रष्टासि द्रक्ष्यसि, त्वं मामिति शेषः।

(८४) आसादि अलाभि। आसादितं प्राप्तम्।

(८५) अनाचर्य्य अकृत्वा।

(८६) आर्य्यगर्ह्या आर्य्यैः साधुः गर्हणीया।

(८७) सिद्धं, त्वदुपकारकरणेनेति भावः।

(८८) सितेति।—सिताः श्वेताः, स्रजः अङ्गरागाश्च यस्य तथाभूतः, शुक्ल-माल्यगन्धधर इत्यर्थः।

(८९) आराधितेति।—आराधिताः अर्च्चिताः, धरणितलतैतिलगणाः भूदेवगणाः, ब्राह्मणा इत्यर्थः, येन तादृशाः, ब्राह्मणार्च्चयितेत्यर्थः। तिलेति।—तिलस्नेहेन तिलतैलेन, सिक्तम् आर्द्रीकृतं, यस्त्यग्रग्रथितं दारुखण्डाग्रनिबद्धं, यत् चेलाञ्चलखण्डकं छिन्नवस्त्रैकदेशः, (स्वार्थे कन्) "मशाल" इति यस्य प्रसिद्धिः, तस्य अग्निशिखासहस्रैः ग्रस्तः निरस्तः, नैशः निशाभवः, अन्धकारराशिर्येन तथाभूतः।

आगत्यार्थसिद्धये यतेथाः' इति। स किल कृतज्ञतां दर्शयन् 'अतिमहिष्ठेषा सिद्धिर्यदस्मद्विधैः (८०) इह आर्य्याणां, कष्टा च इयं निःसङ्गता, (८१) या निरागसं (८२) दासजनं त्याजयति। न च निषेधनीया गरीयसां गिरः' इति स्नानाय तडागम् अयासीत्। अहञ्च निर्गत्य निर्जने निशीथे सरसस्तीररन्ध्रनिलीनः सन् ईषच्छिद्रदत्तकर्णः स्थितः। स्थिते च अर्द्धरात्रे कृतयथाऽऽदिष्टक्रियः स्थानस्थानरचितरक्षः स राजा जालिकजनान् आनीय निराकृतान्तःशल्यं शङ्काहीनः सरःसलिलं सलीलगतिः अगाहत। गतश्च कीर्णकेशं (८३) संहृतकर्णनासिकं सरसस्तलं हास्तिनं नक्रलीलया (८४) नीरान्तर्निलीनया तं तथाऽयथानं कन्धरायां कन्यया न्यग्रहीषम्। (८५) खरतरकालदण्डघट्टनातिचण्डैश्च करचरणाघातैः निर्दयदत्तनिग्रहः क्षणेन एकेन अजहात् स चेष्टाम्। ततश्च आकृष्य तच्छरीरं तीरच्छिद्रे निधाय नीरान्निरयासिषम्। सद्यः सङ्गतानाञ्च सैनिकानां तत् अन्वचिन्तीयत (८६) आकारान्तरग्रहणम्। गजस्कन्धगतः सितच्छत्रादिसकलराजचिह्नराजितः चण्डतरदण्डिदण्डताड़न-

(८०) अस्मद्विधैः अनुरक्तैः।

(८१) निःसङ्गता सङ्गराहित्यम्।

(८२) निरागसं निरपराधम्।

(८३) कीर्णकेशं विक्षिप्तमूर्द्धजम्।

(८४) हास्तिनं हस्तो प्रमाणमस्य, (अण्) सरसस्तलमित्यस्य विशेषणत्वेन योजनीयम्। नक्रलीलया नक्रस्य कुम्भीरस्य, लीलया विलासेन, "हस्तिनक्रलीलया" इति पाठे—हस्तितुल्यः नक्रः नक्रस्तल्लीलयेत्यर्थः।

(८५) न्यग्रहीषं निगृहीतवानस्मि।

(८६) अन्वचिन्तीयत प्रतिचिन्तमिव आचरति स्म।

न्यस्तजनदत्तान्तरया राजरथ्यया यातस्तां निशां रसनयननिरस्तनिद्रारतिः (९७) अनैषम्। नीते च जनाभिलक्ष्यतां लाक्षारसदिग्धदिग्गजशिरःसदृशे शक्रदिगङ्गनारत्नादर्शे अर्कचक्रे कृतकरणीयः किरणजालकरालरत्नराजिराजितराजार्हासनाध्यासी (९८) यथासदृशाचारदर्शिनः शक्त्यान्विताङ्गान् सन्निधिनिषादिनः सहायान् (९९) अगादिषं— 'दृश्यतां शक्तिरार्षी (१००) यत्तस्य यक्षैः अजेयस्य (१) इन्द्रियाणां संस्कारेण नीरजसा नीरजसान्निध्यशालिनि सहर्षालिनि (२) सरसि सरसिजदलसन्निकाशच्छायस्य (३) अधिकतरदर्शनीयस्य आकारान्तरस्य सिद्धिः आसीत्। अथ

(९७) रसेति।—रसेन अनुरागेण, आदरेणेव कनकलेखायाः प्राप्तिसम्भावनाजनितानन्दविशेषेणेत्यर्थः, नयनाभ्यां निरस्ता अपगता, निद्रारतिः निद्राभिलाषः यस्य तथाभूतः, आनन्देन निर्निद्र इत्यर्थः।

(९८) जनाभिलक्ष्यतां लोकलोचनगोचरताम्। लाक्षेति।—लाक्षारसेन अलक्तकद्रवेण, दिग्धं लिप्तं, यत् दिग्गजशिरः ऐरावतमस्तकं, तत्सदृशे तत्सदृशे। शक्रेति।—शक्रस्य इन्द्रस्य, दिक् प्राची एव, अङ्गना तस्याः रत्नादर्शे मणिदर्पणस्वरूपे। अर्कचक्रे सूर्यमण्डले। कृतकरणीयः समापितप्रातःकृत्य इत्यर्थः। किरणेति।—किरणजालेन प्रभानिचयेन, करालाः व्याप्ता, या रत्नराजिः तया राजितं शोभितं, यत् राजार्हं नृपयोग्यम्, आसनं सिंहासनमित्यर्थः, तदध्यासी तदासीन इत्यर्थः।

(९९) शक्तेति।—शक्त्या अन्वितानि अक्षुण्णानि, अङ्गानि येषां तान्। सन्निधिनिषादिनः समीपस्थान्। सहायान् अमात्यादीन्।

(१००) आर्षी ऋषिसम्बन्धिनी।

(१) अजेयस्य अवशीकार्यस्य।

(२) संस्कारेण शुद्धिसम्पादनेन। नीरजसा रजोगुणवर्जितेन। नीरजेति।—नीरजानां कमलानां, सान्निध्येन सन्निधानेन, शालते शोभते इति तथोक्ते। सहर्षालिनि आनन्दितमधुकरे।

(३) सरसिजेति।—सरसिजदलं पद्मपत्रं, तत्सन्निकाशा तत्सदृशी, छाया कान्तिर्यस्य तादृशस्य।

सकलनास्तिकानां जायेत लज्जानतं शिरः। तदिदानीं चन्द्रशेखर-नरकशासन-सरसिजासनादीनां त्रिदशेशानां (४) स्थानानि आदररचितनृत्यगीताराधनानि क्रियन्ताम्; क्रियन्तां च गृहादितः क्लेशनिरसनसहानि अर्थिसार्थैः धनानि' इति। आश्चर्यरसातिरेकहृष्टदृष्टयस्ते 'जय जगदीश! स्वतेजसा अतिशय्य दश दिशः स्थगयन् (५) निजेन यशसा आदिराज-यशांसि' (६) इति असकृत् आशास्य आरचयन् (७) यथादिष्टाः क्रियाः।

स च अहं दयितायाः सखीं हृदयस्थानीयां शशाङ्कसेनां कन्यकां कदाचित् कार्य्यान्तरागतां रहसि आचचक्षे— 'कच्चिदयं जनः कदाचित् आसीत् दृष्टः?' इति। अथ सा हर्षकाष्ठां (८) गतेन हृदयेन ईषदालक्ष्यदशनदीधितिलतां लीलालसं लासयन्ती (९) ललिताञ्चित-करशाखान्तरित-दन्तच्छदकिसलया हर्षजलक्लेदजर्जर-निरञ्जनेक्षणा (१०)

(४) चन्द्रशेखरेति।—चन्द्रशेखरः शिवः, नरकशासनः विष्णुः, सरसिजासनः ब्रह्मा, तदादीनां तत्प्रभृतीनाम्। त्रिदशेशानां देवाधिपानाम्।

(५) स्थगयन् आच्छादयन्।

(६) आदिराजयशांसि आदिराजानां मनु-मान्धातृप्रभृतीनां यशांसि।

(७) आरचयन् अन्वतिष्ठन्। "आचरन्" इति पाठे—अकुर्वन् इत्याशयः।

(८) हर्षकाष्ठाम् आनन्दातिशयम्।

(९) ईषदिति।—ईषदालक्ष्या किञ्चित् दर्शनीया, दशनदीधितिर्दन्तदीप्तिरेव, लता ताम्। लासयन्ती चालयन्ती।

(१०) ललितेति।—ललितं सविलासं यथा तथा इत्यर्थः, अञ्चितया आकुञ्चितया मनोज्ञया वा, करशाखया कराङ्गुल्या, अन्तरितः आच्छादितः, दन्तच्छदः अधर एव, किसलयः पल्लवः यस्या तादृशी। हर्षेति।—हर्षजलेन आनन्दबाष्पेण, यः क्लेदः आर्द्रीभावः, तेन जर्जरे व्याप्ते, अश्रुकलुषे इत्यर्थः, निरञ्जने अञ्जनरहिते च, दुःखेनेति भावः, ईक्षणे नयने यस्याः तादृशी।

रचिताञ्जलिः 'नितरां जाने, यदि न स्यादैन्द्रजालिकस्य जालं (११) किञ्चिदेतादृशं, कथञ्चैतत् कथय ?' इति स्नेह-निर्यन्त्रणं (१२) शनैः अगादीत्। अहञ्च अस्यै कार्त्स्न्येन (१३) आख्याय तदाननसङ्क्रान्तेन सन्देशेन सञ्जनय्य सहचर्याः (१४) निरतिशयं हृदयाह्लादं, ततश्च एतया दयितया निरर्गलोन्नतातिसत्कृत-कालिङ्गनाथन्यायदत्तया (१५) सङ्गत्य अन्ध्र-कालिङ्ग-राज्यप्राप्तौ तस्यास्य अरिणा लिलङ्घयिषितस्य (१६) अङ्गराजस्य साहाय्यकायालघीयसा साधनेन आगत्यात्र तं सखिजनसङ्गतस्य यादृच्छिकदर्शनानन्दराशिलाङ्घितचेताः (१७) जातः" इति।

तस्य तत् कौशलं स्मितज्योत्स्नाऽभिषिक्तदन्तच्छदः सह सुहृद्भिः अभिनन्द्य "चित्रमिदं महामुनेः वृत्तम्; अत्रैव (१८) खलु फलितमतिकष्टं तपः। तिष्ठतु तावत् नर्म, (१९) हर्षप्रकर्षस्पृशोः प्रज्ञा-सत्त्वयोः दृष्टमिह स्वरूपम्" इति अभिधाय

(११) जालं कपट, मायेति यावत्।

(१२) स्नेहनिर्यन्त्रणं प्रेमनिर्बाधम्।

(१३) कार्त्स्न्येन साकल्येन विस्तरेणेत्यर्थः।

(१४) सञ्जनय्य उत्पाद्य। सहचर्याः सख्याः, कनकलेखाया इत्यर्थः।

(१५) निरर्गलोन्नतेति।—निरर्गलोन्नतं निर्बाधं यथा तथा, अतिसत्कृतेन कृतातिसत्कारेण, कालिङ्गनाथेन न्याय्येन विधिना, दत्तया।

(१६) "अन्ध्र-कालिङ्गराज्यप्राप्तौ" इत्यत्र "अन्ध्र-कालिङ्गराज्यं कलिङ्गनाथे न्यासम्" इति पाठान्तरम्, अत्र न्यासं न्यासमर्पणम्। (क्रियापदमेतत्)। अरिणा चण्डवर्मणा। लिलङ्घयिषितस्य लङ्घयितुमिष्टस्य।

(१७) अलघीयसा विपुलेन। साधनेन सैन्येन। यादृच्छिकेति।—यादृच्छिकं यदृच्छानिष्पन्नं, सहसा प्राप्तमित्यर्थः, यत् दर्शनं, तेन यः आनन्दराशिः, तेन लाङ्घितम् अभिभूतं, चेतो यस्य तादृशः।

(१८) अत्रैव इहलोके एव।

(१९) नर्म परिहासः।

पुनः "अवतरतु भवान्" इति बहुश्रुते (२०) विश्रुते विकच-राजीवसदृशं (२१) दृशं चिक्षेप देवो राजवाहनः ।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते उत्तरपीठिकायां मन्त्रगुप्तचरितं नाम सप्तम उच्छ्वासः ।

---

## अथ अष्टमोच्छ्वासः ।

### विश्रुतचरितम् ।

कोऽपि आचचक्षे—

"देव ! मयाऽपि परिभ्रमता विन्ध्याटव्यां कोऽपि कुमारः क्षुधा तृषा च क्लिश्यन् अक्लेशार्हः क्वचित् कूपाभ्यासेऽष्ट-वर्षदेशीयो (१) दृष्टः । स च त्रासगद्गदम् अगदत्—'महा-भाग ! क्लिष्टस्य मे क्रियताम् आर्य्य ! साहाय्यकम् । अस्य मे प्राणापहारिणीं (२) पिपासां प्रतिकर्त्तुम् उदकम् उदञ्चन् (३) इह कूपे कोऽपि निष्कलः मम एकशरणभूतः (४)

(२०) बहुश्रुते विदुषि, बहुशास्त्राभिज्ञे इत्यर्थः ।

(२१) विकचराजीवसदृशं विकसितपद्मतुल्यम् ।

इति सप्तमोच्छ्वासटीका ।

---

(१) कूपाभ्यासे कूपसमीपे । अष्टवर्षदेशीयः ईषदसमाप्ताष्टवर्ष इत्यर्थः । (ईषदूने देशीयर्-प्रत्ययः) ।

(२) प्राणापहारिणीं प्राणनाशिनीम् ।

(३) प्रतिकर्तुमपनेतुम् । उदञ्चन् उत्क्षिपन्, उत्तोलयन् इत्यर्थः ।

(४) निष्कलः स्थविरः, ("निष्कलः स्थविरः समौ" इति वैजयन्ती) । एकशरणभूतः एकमात्राश्रय इत्यर्थः ।

पतितः। तम् अलम् (५) अस्मि न अभ्युद्धर्त्तुम्' इति। अथ अहमभ्येत्य प्रतत्या (६) कयाऽपि व्रततया उत्तार्य्यं तञ्च बालं वंशनालीमुखोद्धृताभिः (७) अद्भिः फलैश्च पक्वैः शरक्षेपो-च्छ्रितस्य लकुचवृक्षस्य (८) शिखरात् पाषाणपातितैः प्रत्यानीतप्राणवृत्तिम् आपाद्य (९) तरुतलनिषण्णः तं जरन्तम् (१०) अब्रवं—'तात ! क एष बालः ? को वा भवान् ? कथञ्च इयम् आपदापन्ना ?' इति। सोऽश्रुगद्गदम् अगदत्—'श्रूयतां महाभाग !—

अस्ति विदर्भो नाम जनपदः। तस्मिन् भोजवंशभूषणम् अंशावतार इव धर्मस्य, अतिसत्त्वः, (११) सत्यवादी,

(५) अलं समर्थः, ("अलं व्यर्थसमर्थयोः" इत्यमरः)।

(६) प्रतत्या लतया, ("वल्ली तु व्रततिर्लता" इत्यमरः)।

(७) वंशनालीमुखोद्धृताभिः वंशनाली वंशनिर्मितसुदीर्घनलविशेषः, "चोङ्" इति प्रसिद्धा, सा एव मुखम् उपायः, तेन उद्धृताभिरुत्तोलिताभिः।

(८) पक्वैः पञ्च षट् वा परिमाणमेषामिति तथोक्तैः, पञ्चभिः षड्भिर्वेत्यर्थः। शरेति।—शरक्षेपः बाणोत्क्षेपणं, तत्प्रमाणमित्यर्थः, उच्छ्रितस्य उन्नतस्य, ऊर्द्ध्वं सवेगनिक्षिप्तो बाणः यावद्दूरम् उत्पातमर्हति, तावत्प्रमाणोन्नतस्य इत्यर्थः। लकुच-वृक्षस्य डहुतरोः, ("लकुचो लिकुचो डहुः" इत्यमरः)।

(९) प्रत्यानीतेति।—प्रत्यानीता प्रत्यावर्त्तिता, प्राणानां वृत्तिः स्थितिर्यस्य तथाभूतम्। आपाद्य कृत्वा।

(१०) जरन्तं वृद्धम्।

(११) भोजानां जनपदानां राजानः (इत्यण् तस्य बहुषु लोपः) भोजाः भोजदेशनृपाः, तेषां वंशभूषणं कुलाभरणम्। (एतद्दर्शनात् भोजदेशात् परमेव यस्तो दक्षिणा निरमायीति यत् केनचिन्न उक्तं तत् आपाततः ; "भोजेन दूतो रघवे विसृष्टः" इति रघुवंशेऽपि भोजनृपतिनामोल्लेखमात्रेण तथापि भोजदेशात् अर्वाचीनताऽऽपत्तेः, भोजदेशनृपाणाञ्च वाञ्छिततेन बहुलात् कथं भोजदेशस्यैव इह प्रयुक्तमाख्याते ?)। अतिसत्त्वः महाबलः।

वदान्यः, (१२) विनीतः, विनेता (१३) प्रजानां, रञ्जितभृत्यः, कीर्त्तिमान्, उदग्रः, बुद्धि-मूर्त्तिभ्याम् उत्थानशीलः, (१४) शास्त्रप्रमाणकः, शक्य-भव्य-कल्यारम्भी, सम्भावयिता बुधान्, प्रभावयिता (१५) सेवकान्, उद्भावयिता (१६) बन्धून्, न्यग्भावयिता (१७) शत्रून्, असम्बद्धप्रलापेषु (१८) अदत्तकर्णः, कदाचित् अपि अवितृष्णो (१९) गुणेषु, अतिनिष्णातः (२०) कलासु, नेदिष्ठो (२१) धर्मार्थसंहितासु, स्वल्पेऽपि सुकृते सुतरां (२२) प्रत्युपकर्त्ता, प्रत्यवेक्षिता कोशवाहनयोः, (२३)

(१२) वदान्यः दानशीलः, ("स्युर्वदान्यस्थूललक्ष्य-दानशौण्डा बहुप्रदे" इत्यमरः)।

(१३) विनेता शिक्षयिता, शिष्टाचारप्रवर्त्तक इत्यर्थः।

(१४) उदग्रः उन्नतः। बुद्धि-मूर्त्तिभ्यां प्रज्ञा-तनुभ्याम्। उत्थानशीलः अभ्युदयसम्पन्नः, राज्यरक्षार्थं यत्नवान् इत्यर्थः।

(१५) शक्येति।—शक्यं स्वशक्तिसाध्यं कर्म, भव्यं कुशलं कर्म, ("भावुकं भविकं भव्यं कुशलं क्षेमम्" इत्यमरः) कल्यः विधिः, तद्विहितं कर्मेत्यर्थः, तदारम्भी तदनुष्ठाता। सम्भावयिता सत्कर्त्ता, सम्भावनाशील इति यावत्; (एवं सर्वत्र शीलार्थे तृन्, अतः कर्मणि न षष्ठी)। बुधान् विदुषः। प्रभावयिता प्रभावसम्पन्नान् कर्त्ता, अभ्युदयं प्रापयिता इति यावत्।

(१६) उद्भावयिता संवर्धयिता, द्रव्यादिदानेन आप्याययिता इत्यर्थः।

(१७) न्यग्भावयिता अभिभावयिता।

(१८) असम्बद्धप्रलापेषु असङ्गतवाक्येषु।

(१९) अवितृष्णः अवीतरागः, सानुराग इत्यर्थः।

(२०) अतिनिष्णातः अतिनिपुणः, ["निनदीभ्यां स्नातेः कौशले" (८।३।८९ पा०) इति सूत्रेण षत्वम्। "प्रवीणे निपुणाभिज्ञ-विज्ञनिष्णातशिक्षिताः" इत्यमरः]।

(२१) नेदिष्ठः अतिनिकटवर्त्ती।

(२२) सुकृते उपकारे कृते। सुतराम् अतिशयेन।

(२३) प्रत्यवेक्षिता स्वयं परिदर्शकः। कोश-वाहनयोः कोशो धनागारं, वाहनम् अश्वादि तयोः।

यत्नेन परीक्षिता सर्वाध्यक्षाणाम्, उत्साहयिता (२४) कृतकर्मणाम् अनुरूपैः दानमानैः, सद्यःप्रतिकर्त्ता दैवमानुषीणाम् आपदां, (२५) षाड्गुण्योपयोगनिपुणः, मनुमार्गेण प्रणेता चातुर्वर्ण्यस्य, पुण्यश्लोकः, (२६) पुण्यवर्मा नाम आसीत्। स पुण्यैः कर्मभिः प्राप्य पुरुषायुषं (२७) पुनः अपुण्येन प्रजानामगण्यत अमरेषु। (२८) तदनन्तरम् अनन्तवर्मा नाम तदायतिः (२९) अवनिमध्यतिष्ठत्। स सर्वगुणैः

(२४) उत्साहयिता उत्साहवर्द्धयिता।

(२५) सद्यः अविलम्बेन, प्रतिकर्त्ता प्रतिविधाता। दैवेति।—"हुताशनो जलं व्याधिर्दुर्भिक्षं मरकं ततः। इति पञ्चविधं दैवम्" इत्युक्तदैवीनां "मानुषं व्यसनं मतः॥ आयुक्तकेभ्यश्चौरेभ्यः परेभ्यो राजवल्लभात्। पृथिवीपतिलोभाच्च नराणां पञ्चधा मतम्॥" इत्युक्तमानुषीणाञ्च। आपदां विपदाम्।

(२६) षाड्गुण्येति।—षड्गुणाः एव षाड्गुण्यं, "सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः" इत्युक्तम्। तत्र अरि-विजिगीष्वोर्व्यवस्थया सम्मेलनं सन्धिः, विग्रहो युद्धं, आसन्न अरिं प्रति विजिगीषोः यात्रा, आसनम् अरि-विजिगीष्वोः तुल्यबलत्वात् आक्रमणानन्तरं कालप्रतीक्षणम्, अन्योऽन्यप्रतिबद्धशक्तिकयोः कालप्रतीक्षया तूष्णीम्भावेन स्थितिरित्यर्थः, द्वैधं द्वैधीभावः, बलिनोः द्विषतोः समीपे "इदं राज्यमस्य तवाधीनम्" इत्येवमुक्त्वा वाचाऽऽत्मसमर्पणतया स्थितः इति उभयत्रैव वाचा आत्मानं समर्पयन् द्वैधीभावमाश्रित्य दुर्गाश्रयेणावस्थानमित्यर्थः, आश्रयः प्रबला आक्रान्तस्य प्रबलाश्रयणं, तस्य उपयोगे प्रयोगे, निपुणः पटुः। मनुमार्गेण मनुप्रणीतराजधर्मपद्धत्या। प्रणेता चालयिता। चातुर्वर्ण्यस्य ब्राह्मणादिवर्णचतुष्टयानाम्। पुण्यश्लोकः पावनयशाः, ("श्लोकौ यशसि पद्ये च" इत्यमरः)।

(२७) प्राप्य जीवित्वेत्यर्थः। पुरुषायुषं पुरुषस्य आयुः जीवनकालः तत् पुरुषायुषम्, (अच्समासान्तः) शताब्दमित्यर्थः, विंशत्यधिकशतवर्षाणीति यावत्, (व्याप्तौ द्वितीया)।

(२८) अगण्यत गणितः, लोकैरिति शेषः। अमरेषु देवेषु, देवत्वं प्राप्तेत्यर्थः।

(२९) तदायतिः तस्मात् आयतिः प्रभावः, जीवदवस्थायां तेन इत्यर्थः यस्य सः, तत्प्रभावेणैव प्रभावसम्पन्न इत्यर्थः, ("आयत्या प्रभावेऽपि आयतिः" इत्यमरः) यद्वा—तस्मात् आयतिः आगमः यस्य तथाविधः, तत्पुत्र इत्यर्थः।

सम्बुद्धोऽपि दैवात् दण्डनीत्यां नात्यादृतः ( ३० ) अभूत्। तम् एकदा रहसि वसुरक्षितो नाम मन्त्रिवृद्धः पितुरस्य बहुमतः प्रगल्भवाक् ( ३१ ) अभाषत—'तात! सर्वैव आत्मसम्पत् अभिजनात् ( ३२ ) प्रभृति अन्यूनैव भवभवति ( ३३ ) लक्ष्यते, बुद्धिश्च निसर्गपट्वी ( ३४ ) कलासु नृत्यगीतादिषु चित्रेषु च काव्यविस्तरेषु प्राप्तविस्तारा तव इतरेभ्यः प्रतिविशिष्यते। ( ३५ ) तथाऽपि असौ अप्रतिपद्य आत्मसंस्कारम् अर्थशास्त्रेषु, ( ३६ ) अनग्निसंशोधिता इव हेमजातिः नातिभाति ( ३७ ) बुद्धिः। बुद्धिहीनो ( ३८ ) हि भूभृत् अत्युच्छ्रितोऽपि ( ३९ ) परैः अध्यारुह्यमाणम् ( ४० ) आत्मानं न चेतयते, ( ४१ ) न च शक्तः साध्यं साधनं वा विभज्य वर्त्तितुम्। ( ४२ )

( ३० ) दण्डनीत्यां राजनीतौ। नात्यादृतः अनत्यादरवानित्यर्थः, राजनीतिविशेषेष्वादरेण न शिक्षितवानिति भावः।

( ३१ ) प्रगल्भवाक् वाग्मी।

( ३२ ) अभिजनात् वंशात्, ("कुलान्यभिजनान्वयौ। वंशोऽन्ववायः सन्तानः" इत्यमरः)।

( ३३ ) भवभवति जायमानोऽपि भवतीत्यर्थः।

( ३४ ) निसर्गपट्वी स्वभावनिपुणा।

( ३५ ) इतरेभ्यः अपरलौकिकेभ्यः। प्रतिविशिष्यते विशिष्टा भवतीत्यर्थः।

( ३६ ) अप्रतिपद्य अप्राप्य। आत्मसंस्कारं स्वपाटवम्। अर्थशास्त्रेषु नीतिशास्त्रेषु।

( ३७ ) नातिभाति न अतिमात्रं शोभते।

( ३८ ) बुद्धिहीनः तादृशप्रज्ञावर्जितः।

( ३९ ) अत्युच्छ्रितोऽपि अत्युन्नतोऽपि।

( ४० ) परैः शत्रुभिः। अध्यारुह्यमाणम् आक्रम्यमाणम्, अभिभूयमानमित्यर्थः।

( ४१ ) चेतयते अवबुध्यते। ( चेतिरत्र स्वार्थे णिजन्तः )।

( ४२ ) साध्यं कार्यम्। साधनं कारणम्; यद्वा—साध्यं विजेतुं शक्यं

अयथावृत्तस्य कर्म्मसु प्रतिहन्यमानः स्वैः परैश्च (४३) परिभूयते। न च अवज्ञातस्य आज्ञा प्रभवति प्रजानां योगक्षेमसाधनाय। (४४) अतिक्रान्तशासनाश्च (४५) प्रजा यत्किञ्चनवादिन्यो यथाकथञ्चित्प्रवर्त्तिन्यः सर्वाः स्थितीः सङ्किरेयुः, (४६) निर्म्मर्य्यादश्च लोको लोकादितोऽमुतश्च स्वामिनम् आत्मानञ्च भ्रंशयेत्। (४७) आगमदीपदृष्टेन (४८) खल्वध्वना सुखेन वर्त्तते लोकयात्रा। (४९) दिव्यं हि चक्षुर्भूतभवद्भविष्यत्सु व्यवहित-विप्रकृष्टादिषु च विषयेषु (५०) शास्त्रं नाम अप्रतिहतवृत्ति। (५१) तेन हीनः

---

विवर्त्तं, साधनं तत्सम्पादकम्। विभज्य विविच्य, सैन्यादि विभज्य यथास्वरूपं ज्ञात्वा इत्यर्थः। वर्त्तितुं व्यवहर्त्तुम्, अनेन साधनेन इदं साध्यते अनेनापरमित्येवं विभागेन व्यवहर्त्तुं नालमित्यर्थः।

(४३) अयथावृत्तः यथोचितमनाचरन्नित्यर्थः। प्रतिहन्यमानः प्रतिबध्यमानः। स्वैः आत्मीयैः। परैः शत्रुभिः।

(४४) अवज्ञातस्य परिभूतस्येत्यर्थः। योगेति।—योगोऽलब्धस्य लाभः, क्षेमं लब्धपरिरक्षणं, (तदुक्तम्—"अप्राप्तप्रापणं योगः क्षेमं प्राप्तस्य रक्षणम्। द्वयञ्च साधयेत् भूपः प्रजानां विधिवत् सदा॥" इति) तयोः साधनाय सम्पादनाय।

(४५) अतिक्रान्तशासनाः लङ्घिताज्ञाः, शासनातिक्रामिण्य इत्यर्थः।

(४६) स्थितीः मर्य्यादाः, सदाचारानित्यर्थः। सङ्किरेयुः विक्षिपेयुः, उल्लङ्घयेयुरित्यर्थः।

(४७) इतोऽस्मात्। अमुतः परस्मात्। भ्रंशयेत् पातयेत्।

(४८) आगमेति।—आगमः शास्त्रमेव, दीपः, तेन दृष्टः निरूपित इत्यर्थः, तेन।

(४९) लोकयात्रा संसारस्थितिः।

(५०) व्यवहितेति।—व्यवहिताः तिरोहिताः, निकटस्था अपि कुड्यादिनाच्छादिता इत्यर्थः, विप्रकृष्टाः दूरवर्त्तिनः, तदादिषु तत्प्रभृतिषु। विषयेषु पदार्थेषु।

(५१) अप्रतिहतवृत्ति अप्रतिबद्धप्रसरम्।

मतोरपि (५२) आयत-विशालयोः लोचनयोः अन्ध एव जन्तुः, अर्थदर्शनेषु असामर्थ्यात्। (५३) अतो विहाय बाह्यविद्यासु अभिषङ्गम् आगमयस्व (५४) दण्डनीतिं कुलविद्याम्। तदर्थानुष्ठानेन च आवर्जितशक्तिसिद्धिः अस्खलितशासनः शाधि (५५) चिरम् उदधिमेखलाम् उर्वीम्' इति।

एतदाकर्ण्य 'स्थाने एव (५६) गुरुभिः अनुशिष्टम्। (५७) तथा क्रियते' इति अन्तःपुरम् अविशत्। तां च वार्तां पार्थिवेन प्रमदासन्निधौ प्रसङ्गेन उदीरिताम् (५८) उपनिशम्य समीपोपविष्टः, चित्तानुवृत्तिकुशलः, प्रसादवित्तः, (५९) गीतनृत्यवादित्रादिषु अवाह्यः, वाह्यनागरोपरायणः, पटुः,

---

(५२) तेन शास्त्रेण, तज्ज्ञानेनेति यावत्। मतोरपि विद्यमानयोरपि।

(५३) जन्तुः प्राणी। अर्थदर्शनेषु कार्यसाधनेषु। असामर्थ्यात् अयोग्यत्वात्।

(५४) अभिषङ्गम् आसक्तिम्, ("अभिषङ्गस्त्वभिभवे सङ्गे आक्रोशनेऽपि च" इति वैजयन्ती)। आगमयस्व अनुशीलय, दण्डनीतिशिक्षादुःखं सहस्वेति भावः, ["आगमेः क्षमायाम्" (वा०) इत्यात्मनेपदम्। ण्यन्तस्येदं रूपम्। गमिरत्र स्वार्थे णिजन्तः]।

(५५) तदर्थानुष्ठानेन तस्या दण्डनीतेः, अर्थस्य अनुष्ठानेन पर्यालोचनेन। आवर्जितेति।—आवर्जिता वशीकृता, शक्तेः प्रभावमन्त्रोत्साहजायाः, सिद्धिः सम्पादनं येन तथाभूतः। अस्खलितेति।—अस्खलितम् अक्षुण्णम्, अप्रतिहतमिति भावः, शासनं यस्य तथाभूतः। शाधि पालय।

(५६) स्थाने एव युक्तमेव।

(५७) अनुशिष्टम् उपदिष्टम्।

(५८) उदीरितां कीर्तिताम्।

(५९) प्रसादवित्तः प्रसादेन राजानुग्रहेण, वित्तः ख्यातः, विशेषेण राजप्रसादभाजनमित्यर्थः, अथवा—प्रसादः पुरस्काररूपेण दत्तं वस्तु, वित्तं धनं यस्य तथाभूतः, राजप्रसादलब्धधनजीवीत्यर्थः, यद्वा—प्रसन्नताकारणमेव वित्तं वित्तसाधनं यस्य, प्रसन्नतोपार्जनपटुरित्यर्थः।

(६०) अवाह्यः अबहिर्भूतः, आसक्तः इत्यर्थः। वाह्यनागरोपरायणः पर-

अयन्त्रितमुखः, बहुभङ्गिविशारदः, परमर्मान्वेषणपरः, (६०) परिहासयिता, परिवादरुचिः, पैशुन्यपण्डितः, (६१) सचिवमण्डलादपि उत्कोचहारी, सकलदुर्नयोपाध्यायः, कामतन्त्रकर्णधारः, कुमारसेवको (६२) विहारभद्रो नाम स्मितपूर्वं व्यज्ञापयत्—'देव! दैवानुग्रहेण यदि कश्चिद्राजानं भजति विभूतिः, तम् अकस्मात् उच्चावचैः उपप्रलोभनैः कदर्थयन्तः स्वार्थं (६३) साधयन्ति धूर्ताः। तथा हि, (६४) केचित् प्रेत्य किल (६५) लभ्यैः अभ्युदयातिशयैः आशाम् उत्पाद्य मुण्डयित्वा शिरः, बद्ध्वा दर्भरज्जुभिः, अजिनेन (६६) आच्छाद्य,

---

नारीरतः वेश्यासक्तो वा इत्यर्थः। पटुः चतुरः। अयन्त्रितमुखः निरर्गलाननः, अनल्पभाषी बहुभाषी इत्यर्थः। बह्विति।—बह्वीषु विविधासु, भङ्गिषु वक्रोक्तिषु, ("भङ्गिः स्याद्वक्रभणितम्" इति वैजयन्ती) विशारदः निपुणः। परेति।—परेषां मर्म गुह्यमित्यर्थः, तदन्वेषणपरः तदनुसन्धायीत्यर्थः।

(६१) परिवादरुचिः परनिन्दाप्रियः। पैशुन्यपण्डितः खलतानिपुणः।

(६२) उत्कोचहारी तवाहमभीष्टोपकारं करिष्यामि, यदि मह्यमियत् द्रव्यं दीयते इत्येवं प्रलोभ्य जनात् हरति अर्थहरणं, तुभ्यं मया एतत् दीयते यदि त्वं मे अभीष्टोपकारं करिष्यसीत्येवं परिभाष्य अन्यस्मै अर्थदानञ्च उत्कोचः, तं हरति आदत्ते इति तथाविधः। सकलेति।—सकलानां दुर्नयानां दुश्चेष्टितानाम्, उपाध्यायः आचार्यः। कामेति।—कामतन्त्रस्य कामव्यापारस्य, कर्णधारः नाविकः, ("कर्णधारस्तु नाविकः" इत्यमरः) नायक-नायिकयोः संयोजने प्रणयकोपादि-भञ्जने च सहायभूत इति भावः। कुमारसेवकः आ-कुमारपरिचारकः।

(६३) भजनं पालनम्, आश्रय इत्यर्थः। विभूतिः सम्पदः। उच्चावचैः विविधैः। उपप्रलोभनैः एतस्मिन् कृते एतत् सेत्स्यति, एतस्मिन् साधिते महान् अर्थलाभः स्यात् इत्येव लोभप्रदर्शनैः। कदर्थयन्तः क्लेशयन्तः। स्वार्थं स्वकार्यम्।

(६४) तथा हि तमेवार्थं आमीह।

(६५) प्रेत्य अमुत्र, परलोके इत्यर्थः, ("प्रेत्यामुत्र भवान्तरे" इत्यमरः)। किलेत्यलीके, अमुत्र लभ्योऽस्तीति अलीकमित्यर्थः।

(६६) अजिनेन मृगचर्मणा।

नवनीतेन उपलिप्य, अनशनं (६७) च शाययित्वा सर्वस्वं स्वीकरिष्यन्ति। तेभ्योऽपि घोरतराः पाषण्डिनः (६८) पुत्रदारशरीरजीवितानि अपि मोचयन्ति। (६९) यदि कश्चित् पटुजातीयो (७०) न श्रद्धे मृगतृष्णिकायै (७१) हस्तगतं त्यक्तुम् इच्छेत्, तम् अन्ये (७२) परिवार्य्याहुः,— 'एकामपि काकिणीं कार्षापणलक्षम् आपादयेम, (७३) शराहतं सर्वशत्रून् घातयेम, एकशरीरमात्रमपि मर्त्यं चक्रवर्त्तिनं विदधीमहि, (७४) यदि अस्मदुद्दिष्टेन (७५) मार्गेण आचर्य्यते' (७६) इति। स पुनः इमान् प्रत्याह—'कोऽसौ मार्गः?' इति। पुनः इमे ब्रुवते—'ननु चतस्रो राजविद्याः त्रयी वार्त्ता आन्वीक्षिकी दण्डनीतिरिति। (७७) तासु

(६७) अनशनम् अनाहारम्।

(६८) पाषण्डिनः पाषण्डाः, वेदविहितधर्मं परित्यज्य तान्त्रिकधर्मवर्त्तिन इति यावत्।

(६९) मोचयन्ति त्याजयन्ति, सर्वं खलु त्यक्त्वा वनं गच्छेत्युपदिशन्तीति भावः।

(७०) पटुजातीयः पटुप्रकारः, चतुरकल्पः इत्यर्थः, (प्रकारे जातीयर्-प्रत्ययः)।

(७१) मृगतृष्णिकायै मरीचिकायै, मिथ्याभ्युदयलाभरूपानिश्चिताशायै इत्यर्थः, ("मृगतृष्णा मरीचिका" इत्यमरः)।

(७२) अन्ये अपरे, धूर्त्ता इति भावः।

(७३) काकिणीं वराटकविंशतिमित्यर्थः, ("वराटकानां दशकद्वयं यत् सा काकिणी" इति लीलावती)। कार्षापणलक्षं षोडशपणानां लक्षमित्यर्थः, ("कार्षापणः कार्षिके स्यात् पणषोडशकेऽपि च" इति विश्वः)। आपादयेम कर्त्तुं शक्नुयाम इत्यर्थः।

(७४) एकशरीरमात्रम् एकाकिनमित्यर्थः। विदधीमहि कुर्मः।

(७५) अस्मदुद्दिष्टेन अस्माभिः प्रदर्शितेन।

(७६) आचर्य्यते अनुष्ठीयते।

(७७) राजविद्याः राज्ञा शिक्षणीयाः विद्याः शास्त्राणि। त्रयी त्रिवेदी, ऋग्यजुःसामानीत्यर्थः, तत्र धर्माधर्मनिरूपणम्। वार्त्ता कृष्यादिशास्त्रं, येन

तिसस्त्रयी-वार्त्ताऽऽन्वीक्षिक्यो महत्यो मन्दफलाश्च, (७८) ताः तावत् आसताम्, (७९) अधीष्व तावत् दण्डनीतिम्, इयम् इदानीम् आचार्य्यविष्णुगुप्तेन मौर्य्यार्थे (८०) षड्भिः श्लोकसहस्रैः संक्षिप्ता, (८१) सैवेयम् अधीत्य सम्यक् अनुष्ठीयमाना यथोक्तकर्मक्षमा' इति। स तथेत्यधीते शृणोति च, तत्रैव जरां गच्छति तन्त्रं किल शास्त्रं शास्त्रान्तरानुबन्धि, सर्वमेव वाङ्मयम् अविदित्वा न तत्त्वतोऽधिगम्यते। (८२) भवतु कालेन बहुना अल्पेन वा तदर्थाधिगतिः, (८३) अधिगतशास्त्रेण (८४) च आदौ एव पुत्रदारम् (८५) अपि न विश्वास्यम्। आत्मकुक्षेः अपि कृते (८६) तण्डुलैः इयद्भिः

कृषिगोरक्षावाणिज्यादिसम्पद्रक्षण ख्यात। आन्वीक्षिकी तर्कशास्त्रं, विज्ञानशास्त्रम् इति यावत्। दण्डनीतिः अर्थशास्त्रं, नयानयनिरूपकशास्त्रम् इति यावत्, तदुक्तम्—"आन्वीक्षिक्यान्तु विज्ञानं धर्माधर्मौ त्रयीस्थितौ। अर्थानर्थौ च वार्त्तायां दण्डनीत्यां नयानयौ॥" इति मनुः।

(७८) तासु विद्यासु। महत्यः विस्तीर्णाः। मन्दफला अल्पप्रयोजनाः, यादृशेन प्रयासेन ता अधीयन्ते तादृक् फलं ताभ्यः न प्राप्यते इति भावः।

(७९) आसतां तिष्ठन्तु।

(८०) आचार्य्यविष्णुगुप्तेन उपाध्यायचाणक्येन। मौर्य्यार्थे मौर्य्यस्य मुरा नाम काचित् शूद्रजातीया महिला, तस्या अपत्यं पुमान् मौर्य्यः चन्द्रगुप्तः, तस्यार्थे तस्य शिक्षार्थमित्यर्थः।

(८१) संक्षिप्ता सङ्क्षेपेण रचिता।

(८२) शास्त्रान्तरेति।—शास्त्रान्तरम् अनुबध्नाति अनुगच्छतीति तथोक्तं, शास्त्रान्तरज्ञानसापेक्षमित्यर्थः। वाङ्मयं शास्त्रम्। अधिगम्यते ज्ञायते।

(८३) तदर्थाधिगतिः तस्य शास्त्रस्य, अर्थाधिगतिः तात्पर्य्यावबोधः इति यावत्।

(८४) अधिगतशास्त्रेण शिक्षितशास्त्रेण।

(८५) पुत्रदारं पुत्राश्च दाराश्चेति समाहारे पुत्रदारम्।

(८६) आत्मकुक्षेः स्वोदरस्य। कृते निमित्तम्।

इयानोदनः (८७) सम्पद्यते, इयत ओदनस्य पाकाय एतावत् इन्धनं पर्य्याप्तमिति मानोन्मानपूर्वकं (८८) देयम्। उत्थितेन (८९) च राज्ञा क्षालिताक्षालिते (९०) मुखे मुष्टिम् अर्द्धमुष्टिं वा अभ्यन्तरीकृत्य कृत्स्नम् (९१) आयव्ययजातम् अह्नः प्रथमेऽष्टमे भागे श्रोतव्यम्। शृण्वत एवास्य (९२) द्विगुणम् अपहरन्ति तेऽध्यक्षधूर्त्ताः। चत्वारिंशतं चाणक्योपदिष्टान् आहरणोपायान् (९३) सहस्रधा अध्यात्मबुद्ध्यैव ते विकल्पयितारः। (९४) द्वितीये अन्योऽन्यं विवदमानानां प्रजानाम् आक्रोशैः (९५) दह्यमानकर्णः कं जीवति। तत्रापि प्राड्विवाकादयः स्वेच्छया जय-पराजयौ विदधानाः पापेन अकीर्त्या च भर्त्तारम् आत्मनश्च अर्थैः योजयन्ति। (९६)

(८७) ओदनः अन्नम्।

(८८) इन्धनं काष्ठम्। पर्य्याप्तं प्रकामं, प्रभूतमिति यावत्। मानेति।—मानः प्रस्थादिपरिमाणम्, उन्मानः तोलनदण्डकृतपरिमाणं, ("तुलायच्छेद उन्मानो मानः प्रस्थादिभिः कृतः" इति वैजयन्ती) तौ पूर्वे यत्र तद्यथा तथा।

(८९) उत्थितेन, शयनादिति शेषः।

(९०) क्षालिताक्षालिते क्रियताऽंशेन क्षालितं धौतं, क्रियता च अक्षालितम् अधौतं तथाभूते, यद्वा—धौते अधौते वा इत्यर्थः।

(९१) मुष्टिम् अर्द्धमुष्टिं परिमाणविशेषौ। अभ्यन्तरीकृत्य खादित्वा इत्यर्थः, अथवा मुष्टिमितमर्द्धमुष्टिमितं वा भक्ष्यद्रव्यम् अभ्यन्तरीकृत्य अभ्यवहार्य्य इत्यर्थः। कृत्स्नं समग्रम्।

(९२) शृण्वत एव आकर्णयत एव, अस्य शृण्वन्तमिमनादृत्य इत्यर्थः, (अनादरे षष्ठी)।

(९३) आहरणोपायान् सङ्ग्रहोपायान्।

(९४) विकल्पयितारः व्यवस्थापयितारः।

(९५) द्वितीये अष्टौ द्वितीयेऽष्टमे भागे। आक्रोशैः स्वार्थितवचनैः।

(९६) विदधानाः घटयन्तः; 'विधादधानाः' इति पाठ—व्यवहाराः,

तृतीये स्नातुं भोक्तुं च लभते। भुक्तस्य यावदन्नपरिणामः, (९७) तावदस्य विषभयं न शाम्यत्येव। भुक्त्वा चतुर्थे हिरण्यप्रतिग्रहाय (९८) हस्तं प्रसारयन्नेव उत्तिष्ठति। पञ्चमे मन्त्रचिन्तया महान्तम् आयासम् (९९) अनुभवति। तत्रापि मन्त्रिणो मध्यस्था इव (१००) अन्योऽन्यं मिथः सम्भूय दोष-गुणौ दूत-चारवाक्यानि (१) शक्याशक्यतां देश-काल-कार्य्यावस्थाश्च स्वेच्छया विपरिवर्त्तयन्तः स्व-पर-मित्रमण्डलानि (२) उपजीवन्ति, बाह्याभ्यन्तरांश्च कोपान् गूढम् उत्पाद्य प्रकाशं प्रशमयन्त इव (३) स्वस्वामिनम् अवशम् अवगृह्णन्ति। (४) षष्ठे स्वैरविहारो (५) मन्त्रो वा सेव्यः। सोऽस्य एतावान् स्वैरविहारकालः, यस्य तिस्रः त्रिपादोत्तरा नाड़िकाः। (६) सप्तमे चतुरङ्गबलप्रत्यवेक्षणप्रयासः।

---

विवादशीलाः इत्यर्थः, शार्ङ्गिवाकादय इत्यस्य विशेषणम्। भर्तारं स्वामिनम्। अकीर्त्त्यां अपयशसा। आत्मनः स्वान्। वर्धयन्ति सङ्गमयन्ति।

(९७) अन्नःपरिणामः भुक्तान्नपरिपाक इत्यर्थः, ("भिस्सा स्त्री भक्तमन्धोऽन्नम्" इत्यमरः)।

(९८) हिरण्यप्रतिग्रहाय सुवर्णग्रहणाय, राजग्राह्यकरादानायेति यावत्।

(९९) आयासं क्लेशम्।

(१००) मध्यस्था इव उदासीना इव।

(१) दूतेति।—दूताः सन्देशहराः, ("स्यात् सन्देशहरो दूतः" इत्यमरः) चाराः गूढपुरुषाः, ये गुप्तं चरन्तः स्वपरराष्ट्रवृत्तं सङ्गृह्णन्तीति भावः, तेषां वाक्यानि।

(२) विपरिवर्त्तयन्तः विपर्य्यासयन्तः। स्वपरमित्रमण्डलानि "इन्द्रास्ते शुश्रमाणां वर्दं प्रत्येकमभिधीयते" इति नियमेन स्वमण्डलं परमण्डलं मित्रमण्डलञ्चेत्यर्थः।

(३) प्रशमयन्त इव शान्तिं नयन्त इव।

(४) अवशं तेषामधीनमित्यर्थः। अवगृह्णन्ति वशीकुर्वन्ति।

(५) स्वैरविहारः स्वेच्छाविहारः।

(६) तिस्रः नाड़िकाः दण्डाः, त्रिपादोत्तराः त्रयः पादा उत्तरे अधिका यासां

अष्टमेऽस्य सेनापतिसखस्य विक्रमचिन्ताक्लेशः। पुनः उपास्यैव सन्ध्यां प्रथमे रात्रिविभागे गूढपुरुषा द्रष्टव्याः। तन्मुखेन च अतिनृशंसाः शस्त्राग्नि-रसप्रणिधयः (७) अनुष्ठेयाः। द्वितीये भोजनानन्तरं श्रोत्रिय इव स्वाध्यायम् आरभते। (८) तृतीये तूर्य्यघोषेण संविष्टः (९) चतुर्थ-पञ्चमौ शयीत किल। कथमिव अस्य अजस्रचिन्तायासैः विह्वलमनसो वराकस्य निद्रासुखम् उपनमेत ?। (१०) पुनः षष्ठे (११) शास्त्र-चिन्ता-कार्य्यचिन्तारम्भः। सप्तमे तु मन्त्रग्रहो (१२) दूताभि-प्रेषणानि च। दूताश्च नाम उभयत्र (१३) प्रियाख्यान-

---

नाडिकाः, पादोनदण्डचतुष्टयम्, अर्द्धयामरूपम् इत्यर्थः, अर्थात् पञ्चचत्वारिंश-न्मिनिटाधिकास्त्रयो दण्डा इत्याशयः ; व्यावहारिकघटिकामानेन तु सार्द्धघटिकामात्रम् (१॥० घण्टा) इत्यवगन्तव्यम्।

(७) शस्त्रेति।—शस्त्राग्नि-रसानां प्रणिधयः गूढपुरुषाः, चरा इत्यर्थः, ("प्रणिधिः प्रार्थने चरे" इत्यमरः); तत्र शस्त्रप्रणिधिः कृपाणप्रहर्त्ता, अग्निप्रणिधिः गृहादिदाहकः, रसप्रणिधिः विषप्रयोक्ता, ("शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसः" इति मेदिनी)।

(८) श्रोत्रिय इव छान्दस इव, वैदिक इव इत्यर्थः, ("श्रोत्रियच्छान्दसौ समौ" इत्यमरः ; श्रोत्रियलक्षणं यथा स्मृतौ—"एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य च। षट्कर्म्मनिरतो विप्रः श्रोत्रियो नाम धर्म्मवित् ॥")। स्वाध्यायं वेदपाठम्, आरभते प्रक्रमते, वेदम् अनुशीलयतीत्यर्थः।

(९) तूर्य्यघोषेण वादित्रविशेषस्वनेन। संविष्टः शयितः, निद्रित इत्यर्थः, ("संवेशः शयने ध्याने सत्यमार्गोऽवधेऽपि च" इत्यजयः। "स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि" इत्यमरश्च)।

(१०) वराकस्य तपस्विनः अनुकम्पार्हस्य वा ; "वराकस्य" इत्यत्र "वा कस्य" इति पाठे—कस्य वा निरन्तरचिन्तनैः शुष्कचित्तस्य निद्रासुखम् उपनमेत् उपतिष्ठे-दित्यर्थः।

(११) षष्ठे रात्रेः षष्ठभागे।

(१२) मन्त्रग्रहः मन्त्रणाग्रहणम्।

लब्ध्वान् अर्थान् वीतशुल्कबाधवर्त्मनि (१४) वणिज्यया वर्द्धयन्तः कार्य्यम् अविद्यमानमपि लेशेन (१५) उत्पाद्य अनवरतं भ्रमन्ति। अष्टमे पुरोहितादयोऽभ्येत्य एवमाहुः,—'अद्य दृष्टो दुःस्वप्नः, दुःस्थाः ग्रहाः, शकुनानि च अशुभानि, शान्तयः क्रियन्तां, सर्वमस्तु सौवर्णमेव होमसाधनम्, एवं सति कर्म गुणवत् (१६) भवति। ब्रह्मकल्पा इमे ब्राह्मणाः, कर्म एभिः स्वस्त्ययनं (१७) कल्याणतरं भवति। ते च अमी कष्टदारिद्र्याः (१८) बह्वपत्या यज्वानो वीर्य्यवन्तश्च (१९) अद्यापि अप्राप्तप्रतिग्रहाः, (२०) दत्तञ्चैभ्यः स्वर्ग्यमायुष्यम् अरिष्टनाशनञ्च (२१) भवति' इति लघु लघु दापयित्वा

(१३) नाम कुत्सायाम्। उभयत्र येन प्रेरिता यदन्तिकाच्च प्रेरिता तयोरुभयोः कलाभ्यादित्यर्थः; "उभयतः" इति पाठान्तरम्।

(१४) वीतेति।—वीता रहिता, शुल्कस्य वणिग्भिर्वाणिज्यकरणे राजदेयस्य करविशेषस्य, बाधा प्रतिबन्धक इत्यर्थः, शुल्काय बाधा पीडनमित्यर्थः वा, यत्र तादृशे, वर्त्मनि पथि।

(१५) लेशेन छलेनापि, बिन्दुमात्रं सूत्रमवलम्ब्य इत्यर्थः।

(१६) दुःस्था मन्दस्थानगताः, दुरदृष्टशंसिन इति भावः। ग्रहाः रव्यादयः। शकुनानि शुभाशुभसूचकलक्षणानि, दक्षवामनेत्रस्पन्दनादीनि इति यावत्। गुणवत् सफलं, सुष्ठु इत्यर्थः।

(१७) ब्रह्मकल्पा हिरण्यगर्भतुल्याः। स्वस्त्ययनं स्वस्ति धर्मद्वाराऽभिप्रेतार्थसिद्धिः, तस्य अयनं प्रापकं, यागदानादि शान्तिकर्म इति यावत्।

(१८) कष्टदारिद्र्याः कष्टं क्लेशकरं, दारिद्र्यं येषां तादृशाः, सुदरिद्रा इत्यर्थः।

(१९) यज्वानः यथाविधि यज्ञानुष्ठातारः, ("यज्वा तु विधिनेष्टवान्" इत्यमरः)। वीर्य्यवन्तः तेजस्विनः, महाप्रभावा इत्यर्थः।

(२०) अप्राप्तप्रतिग्रहाः अलब्धदानाः।

(२१) स्वर्ग्यं स्वर्गसाधनम्। आयुष्यम् आयुर्वृद्धिकरम्। अरिष्टनाशनम् अशुभशान्तिकरम्।

तन्मुखेन (२२) स्वयम् उपांशु (२३) भक्षयन्ति। तदेवमर्थनिघ्नम् अविच्छिन्नसुखलेशम् (२४) आयासबहुलम् अविरलकदर्थनस्य नयतो नयज्ञस्य (२५) आस्तां चक्रवर्तिता, (२६) स्वमण्डलमात्रमपि दुरारक्ष्यं (२७) भवेत्। शास्त्रज्ञसमाज्ञातो हि यद्ददाति यत् मानयति यत् प्रियं ब्रवीति तत् सर्वम् अभिसन्धातुम् (२८) इति अविश्वासः। अविश्वास्यता हि जन्मभूमिः अलक्ष्म्याः। यावता च नयेन विना न लोकयात्रा, स लोकत एव सिद्धः, न अत्र शास्त्रेणार्थः। स्तनन्धयोऽपि (२९) हि तैः तैः उपायैः स्तनपानं जनन्या लिप्सते। (३०) तदपास्यातियन्त्रणाम् अनुभूयन्तां यथेष्टम् इन्द्रियसुखानि। येऽप्युपदिशन्ति 'एवमिन्द्रियाणि जेतव्यानि, (३१) एवम् अरिषड्वर्गः (३२) त्याज्यः, सामादिः उपायवर्गः (३३) स्वेषु परेषु (३४) च अजस्रं प्रयोज्यः, सन्धि-विग्रहचिन्तयैव

(२२) तन्मुखेन तद्द्वारेण।

(२३) उपांशु रहसि।

(२४) अविच्छिन्नसुखलेशं सुखलेशवर्जितमित्यर्थः।

(२५) अविरलकदर्थनम् अनवरतक्लेशं यथा तथा। नयतः कालम् अतिवाहयतः। नयज्ञस्य नीतिज्ञस्य, राज्ञ इति शेषः।

(२६) चक्रवर्तिता साम्राज्यम्।

(२७) दुरारक्ष्यं दुःखेन आरक्षणीयम्।

(२८) अभिसन्धातुं प्रवञ्चयितुम्।

(२९) स्तनन्धयोऽपि स्तन्यपायी अपि, शिशुरपीत्यर्थः।

(३०) लिप्सते लब्धुमिच्छति, लभते इत्यर्थः।

(३१) जेतव्यानि वशीकार्याणि।

(३२) अरिषड्वर्गः कामक्रोधलोभमोहमदमात्सर्यरूपः।

(३३) सामादिः साम दानं भेदो दण्डश्चेत्यर्थः, उपायवर्गः उपायचतुष्टयं, ("भेदो दण्डः साम दानमित्युपायचतुष्टयम्" इत्यमरः)।

(३४) स्वेषु स्वराष्ट्रेषु। परेषु परराष्ट्रेषु।

नेयः (३५) कालः, स्वल्पोऽपि सुखस्य अवकाशो न देयः' इति; तैः अपि एभिर्मन्त्रिवकैः (३६) युष्मत्तवीर्य्यार्जितं धनं दासीगृहेषु (३७) एव भुज्यते। के च एते वराकाः? येऽपि मन्त्रकर्कशाः (३८) तन्त्रकाराः शुक्राङ्गिरस-विशालाक्ष-बाहु-दन्तिपुत्र-पराशरप्रभृतयः, तैः किमरिषड्वर्गो जितः? कृतं वा तैः शास्त्रानुष्ठानम्? तैः अपि हि प्रारब्धेषु कार्य्येषु दृष्टे सिद्ध्यसिद्धी। पठन्त्येव अपठद्भिः अभिमन्यीयमाना (३९) बहवः। ननु इदम् उपपन्नं (४०) देवस्य, यत् ते सर्वलोकस्य वन्द्या (४१) जातिः, अयातयामं (४२) वयः, दर्शनीयं वपुः, अपरिमाणा विभूतिः, तत् सर्वं सर्वाविश्वासहेतुना सुखोपभोगप्रतिबन्धिना बहुमार्गविकल्पनात् (४३) सर्वकार्य्येषु अमुक्तसंशयेन तन्त्रावापेण (४४) एव मा कथा मा कथा वृथा। सन्ति हि ते दन्तिनां दशसहस्राणि, हयानां लक्षत्रयम्, अनन्तश्च

(३५) नेयः अतिवाहनीयः।

(३६) मन्त्रिवकैः मन्त्रिणः बका इव तैः, बकवृत्तिचारिभिः धूर्तैः इत्यर्थः, ("अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः। शठो मिथ्याविनीतश्च बकव्रतचरो द्विजः॥" इति मनुः)।

(३७) दासीगृहेषु वेश्यालयेषु।

(३८) मन्त्रकर्कशाः मन्त्रणायां कठोराः, निपुणा इत्यर्थः; "मतिकर्कशाः" इति पाठे—कठोरचित्ताः इत्यर्थः।

(३९) अभिमन्यीयमानाः श्लाघ्यमानाः।

(४०) उपपन्नं युक्तियुक्तं, स्वभावत एव सिद्धमित्यर्थः, न तु उपायसाध्यमिति भावः।

(४१) वन्द्या आराध्या।

(४२) अयातयामम् अजीर्णं, नवमित्यर्थः।

(४३) बहुमार्गेति।—बहूनां मार्गाणां नयवर्त्मनां, विकल्पनात् पर्यालोचनात्।

(४४) अमुक्तसंशयेन अव्यवस्थितचित्तेन, सन्देहबहुलेनेत्यर्थः। तन्त्रावापेन तन्त्रः

प्रादाताम्; (४५) अपि च, पूर्णानि एव हेमरत्नैः कोषगृहाणि। (४६) सर्व एष जीवलोकः समग्रमपि युगसहस्रं भुञ्जानो न ते कोष्ठागाराणि (४७) रेचयिष्यति। किमिदम् अपर्याप्तं (४८) यत् अन्यार्जितायासः (४९) क्रियते? जीवितं हि नाम जन्मवतां चतुःपञ्चानि (५०) अहानि, तत्रापि भोगयोग्यम् अल्पाल्पं वयःखण्डम् अपण्डिताः पुनः अर्जयन्त एव ध्वंसन्ते, नार्जितस्य वस्तुनो लवमपि (५१) आस्वादयितुम् ईशते। किं बहुना, राज्यभारं भारक्षमेषु अन्तरङ्गेषु भक्तिमत्सु समर्प्य अप्सरःप्रतिरूपाभिः अन्तःपुरिकाभिः रममाणो गीत-सङ्गीत-पानगोष्ठीश्च यथर्तु बध्नन् यथार्थं कुरु शरीरलाभम्' इति पञ्चाङ्गस्पृष्टभूमिः (५२)

शास्त्रमूलकस्वराष्ट्रचिन्तनम्, आवापः तदन्यराष्ट्रचिन्तनं तयोः समाहारः तेन, ("तन्त्रः स्वराष्ट्रचिन्तायामावापः परचिन्तने" इति कोषः);

(४५) प्रादातां प्रददतुरित्यर्थः।

(४६) कोषगृहाणि धनागाराणि।

(४७) कोष्ठागाराणि कुसूलगृहाणि, धान्यादिसञ्चयपूर्णगृहाणीत्यर्थः, ("पुंसि कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा" इत्यमरः)।

(४८) अपर्याप्तम् अयथेष्टम्, अप्रभूतम् इत्यर्थः, सर्वमेव ते प्रभूतं विद्यते इति भावः।

(४९) अन्यार्जितायासः अन्येषु अर्जितेषु अर्जनव्यापारेषु, आयासः क्लेशः; "अन्यार्जनायासः" इति पाठे—अन्यार्जनाय इतोऽप्यधिकधनार्जनव्यापाराय, आयासः परिश्रमः इत्यर्थः।

(५०) चतुरिति।—स्वल्पायुषः स्वल्पकालस्थायित्वात् चतुःपञ्चान्यहानीत्युक्तम्।

(५१) अपण्डिताः निर्बोधाः। लवमपि लेशमपि।

(५२) "यथार्थम्" इत्यत्र "यथार्हम्" इति पाठान्तरम्। पञ्चाङ्गेति।—पञ्चानाम् अङ्गानां समाहारः पञ्चाङ्गी, ("जानुबाहुद्वयं मूर्धा पञ्चाङ्गम्" इत्युत्पलिनी) तया स्पृष्टा भूमिर्येन तथाभूतः।

अञ्जलिचुम्बितचूडः चिरम् अशेत। (५३) प्राहसच्च प्रीतिफुल्ललोचनोऽन्तःपुरप्रमदाजनः। जननाथश्च सस्मितम् उत्तिष्ठन् 'ननु हितोपदेशात् गुरवो भवन्तः, किमिति गुरुत्वविपरीतम् (५४) अनुष्ठितम्?' इति तम् उत्थाप्य क्रीडानिर्भरम् अतिष्ठत्।

अथ एतेषु दिनेषु भूयोभूयः प्रस्तुतेऽर्थे (५५) प्रेर्य्यमाणो मन्त्रिवृद्धेन वचसा अभ्युपेत्य ममैव "अचित्तज्ञः" (५६) इति अवज्ञातवान्। अथ एवं मन्त्रिणो मनसि अभूत्—'अहो! मे मोहात् बालिश्यम्!! (५७) अयाचितेऽर्थे नोदयन् अर्थीव अधिगतोऽहमस्य हास्यो (५८) जातः!! स्पष्टमस्य चेष्टानाम् अयाथापूर्व्यम्; (५९) तथा हि, न मां स्निग्धं पश्यति, न स्मितपूर्वं भाषते, न रहस्यानि विवृणोति, (६०) न हस्ते स्पृशति, न व्यसनेषु अनुकम्पते, न उत्सवेषु अनुगृह्णाति, न विलोभनवस्तु प्रेषयति, न मत्सुकृतानि प्रगणयति, न मे गृहवार्त्तां पृच्छति, न मत्पक्षान् प्रत्यवेक्षते, न माम् आसन्नकार्य्येषु अभ्यन्तरीकरोति, न माम् अन्तःपुरं प्रवेशयति; अपि च माम् अनर्हेषु (६१) कर्मसु नियुङ्क्ते,

---

(५३) चिरं बहुक्षणम्। अशेत प्राणमदित्यर्थः।

(५४) गुरुत्वेति।—पादपतनेनेति भावः।

(५५) प्रस्तुते प्रकृते। अर्थे कार्य्ये।

(५६) अचित्तज्ञः आशयानभिज्ञः।

(५७) मोहात् अज्ञानात्। बालिश्यं मूर्खता।

(५८) अयाचिते अनभिमते। नोदयन् नियोजयन्। अर्थीव भिक्षुरिव। अधिगतः हेयः, शत्रुरित्यर्थः ("हेयोऽधिगत उच्यते" इति हलायुधः)। हास्यः उपहसनीयः।

(५९) अयाथापूर्व्यं पूर्वापरवैपरीत्यम्।

(६०) विवृणोति प्रकाशयति।

(६१) अनर्हेषु अयोग्येषु।

मदासनमन्यैः अवष्टभ्यमानम् (६२) अनुजानाति, मद्वैरिषु विश्रम्भं दर्शयति, मदुक्तस्य उत्तरं न ददाति, मत्समान-दोषान् विगर्हति, मर्मणि माम् उपहसति, स्वमतमपि मया वर्ण्यमानं प्रत्यवक्षिपति, (६३) महार्हाणि वस्तूनि मत्प्रहि-तानि नाभिनन्दति, नयज्ञानां स्खलितानि (६४) मत्समक्षं मूर्खैः उद्घोषयति। सत्यमाह चाणक्यः 'चित्तज्ञानानुवर्ति-नोऽनर्था (६५) अपि प्रियाः स्युः, दक्षिणा (६६) अपि तद्भावबहिष्कृताः (६७) द्वेष्या भवेयुः' इति। तथाऽपि का गतिः? (६८) अविनीतोऽपि न परित्याज्यः पितृपैतामहैः अस्मादृशै अयमधिपतिः। अपरित्यजन्तोऽपि कम् उपकारम् अश्रूयमाणवाचः कुर्मः? सर्वथा नयज्ञस्य वसन्तभानोः अश्मकेन्द्रस्य हस्ते राज्यमिदं पतितम्। अपि नाम आपदो भाविन्यः (६९) प्रकृतिस्थम् एनम् आपादयेयुः? (७०) अन-र्थेषु सुलभव्यलीकेषु (७१) क्वचित् उत्पन्नोऽपि द्वेषः मद्वृत्त-

(६२) अवष्टभ्यमानम् आक्रम्यमाणम्, अध्यास्यमानम् इति यावत्।

(६३) विगर्हति इत्यत्र परस्मैपदं महाकविप्रयोगत्वात् सोढव्यम्। "परस्मैपद-मप्याहुः क्वचिदेवात्मने पदे" इत्यनुशासनादात्मनेपदं सिध्यति वा। प्रत्यवक्षिपति अवमानयति।

(६४) स्खलितानि दोषान्।

(६५) चित्तेति।—चित्तस्य आशयस्य, ज्ञानं बोधः, तत् अनुवर्तन्ते अनुसर-न्तीति तथोक्ताः, आशयानुरूपमाचरन्त इत्यर्थः। अनर्था दुर्जना इत्यर्थः।

(६६) दक्षिणा उदाराः, साधव इत्यर्थः।

(६७) तद्भावेति।—तस्य भावात् आशयात्, बहिष्कृताः बहिर्भूताः, तदा-शयानुरूपं कर्म अकुर्वन्त इत्यर्थः।

(६८) गतिरुपायः।

(६९) भाविन्यः भविष्यन्त्यः।

(७०) आपादयेयुः कुर्युः।

(७१) अनर्थेषु दुर्जनेषु। सुलभेति।—सुलभम् अनायासलभ्यं, व्यलीकम्

मध्ये न रोचयेत्? भवतु, भविता तावत् अनर्थः, स्तम्भित-पिशुनजिह्वा (७२) यथाकथञ्चित् अभ्रष्टपदां स्थापयेयम्' इति।

एवं गते मन्त्रिणि, राजनि च कामवृत्ते (७३) चन्द्रपालितो नाम अश्मकेन्द्रामात्यस्य इन्द्रपालितस्य सूनुरसद्वृत्तः पित्रा निर्वासितो नाम (७४) भूत्वा बहुभिः चारणैः (७५) वञ्चीभिः अनल्पकौशलाभिः शिल्पकारिणीभिः (७६) अनेकच्छद्माकारैश्च गूढपुरुषैः परिवृतोऽभ्येत्य विविधाभिः क्रीडाभिः विहारभद्रम् आत्मसादकरोत्। (७७) अमुना च एव सङ्गेन (७८) राजन्यास्पदम् (७९) अलभत। लब्धरन्ध्रश्च (८०) स यद्यद्व्यसनम् आरभते, (८१) तत् तथेति

अभ्रष्टेन, अभ्रष्टकरणान्यापदाय इत्यर्थः: ऐषा तादृशीषु, ("भ्रष्टोऽकमाधयाश्चाय-वेलस्येष्व पीडने" इति विश्वः) इष्टापदार्थोष्विति यावत्।

(७२) अनर्थः अमङ्गलम्। स्तम्भितेति।—स्तम्भिता निश्चलीकृतेत्यर्थः, कुण्ठितेति यावत्, पिशुना सूचिका, दोषप्रकाशकारिणीति भावः, ("पिशुनौ खलसूचकौ" इत्यमरः) जिह्वा येन तादृशम्, मामित्यर्थः।

(७३) कामवृत्ते स्वेच्छाचारिणि।

(७४) नामेत्यलीके, पित्रा निर्वासनस्य असत्यत्वादिति भावः, यद्वा—असद्वृत्तः पित्रा निर्वासितो नाम सद्वृत्तोऽपि राजकार्यवशात् व्याजेन असद्वृत्ततां गतः, तस्मादसौ नाम पित्रा निर्वासितः दूरीकृतः, दूरीकरणमपि व्याजेनेत्यर्थः।

(७५) चारणैः कुशीलवैः, राज्ञां कीर्त्तिगायकैः वन्दिविशेषैरित्यर्थः, गायकैर्वा, ("चारणास्तु कुशीलवाः" इत्यमरः, "चारणौ गायकः समौ" इति च वैजयन्ती)।

(७६) शिल्पकारिणीभिः चित्रकारीभिरित्यर्थः।

(७७) आत्मसादकरोत् आत्माधीनं चकार।

(७८) अमुना विहारभद्रेणैव। सङ्गेन हेतुना, सहैवेति यावत्।

(७९) आस्पदं प्रतिष्ठाम्।

(८०) लब्धरन्ध्रः प्राप्तच्छिद्रः।

(८१) व्यसनं काम-क्रोधजनितो दोषः; तच्चाष्टादशविधं, तथा च मनुः—"मृगयाक्षो दिवास्वप्नः परीवादः स्त्रियो मदः। तौर्यत्रिकं वृथाट्या च कामजो

मवर्णयत्—'देव ! यथा मृगया हि औपकारिकी, न तथा अन्यत्। अत्र (८२) हि व्यायामोत्कर्षात् (८३) आरब्धु उपकर्त्ता दीर्घाध्वलङ्घनक्षमो जङ्घाजवः, कफापचयात् आरोग्यैक-मूलम् आशयाग्निदीप्तिः, (८४) मेदोऽपकर्षात् (८५) अङ्गानां स्थैर्यकार्कश्यातिलाघवादीनि, शीतोष्णवातवर्षक्षुत्पिपासासहत्वं, सत्त्वानाम (८६) अवस्थान्तरेषु चित्तचेष्टितज्ञानं, हरिणगवल-गवयादिवधेन शस्त्रलोपप्रतिक्रिया, वृकव्याघ्रादिघातेन स्थलपथ-शल्यशोधनं, (८७) शैलाटवीप्रदेशानां विविधकर्मक्षमाणाम् आलोचनम्, आटविकवर्गविश्रम्भणम, उत्साहशक्तिसन्धुक्षणेन प्रत्यनीकवित्रासनम (८८) इति बहुतमा गुणाः। व्यूतेऽपि

दशको गणः॥ पैशुन्य साहसं द्रोहः ईर्ष्याऽसूयाऽर्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः॥" इति। आरभते प्रक्रमते, राजेति शेषः।

(८२) अत्र मृगयायाम्।

(८३) व्यायामोत्कर्षात् व्यायामः शारीरपरिश्रमः, तस्य उत्कर्षात् अति-रेकात्।

(८४) कफापचयात् कफस्य श्लेष्मणः, अपचयात् क्षयात्। आशयाग्निदीप्तिः आशयस्य कोष्ठस्य, अग्नेः जाठराग्नेरित्यर्थः, दीप्तिः उद्दीपना।

(८५) मेदोऽपकर्षात् मेदसः अपकर्षात् अपचयात्, स्थौल्यकारकमेदःक्षया-दिति भावः।

(८६) सत्त्वानां जन्तूनाम्।

(८७) शस्त्रेति।—शस्त्राणां लोपस्य दरिद्यादिज्ञानस्येति भावः, प्रतिक्रिया प्रतिविधानम्। वृकेति।—वृकाः ईहामृगाः, "चांच्" इति ख्याताः कुक्कुराकारा हरिणघातकाः श्वाप्रविशेषा इत्यर्थः, ("कोक ईहामृगो वृकः" इत्यमरः) व्याघ्रादयः शार्दूलादयः, तेषां घातेन वधेन स्थलेति।—स्थलपथस्य शल्यं विपत् इति भावः, तस्य शोधनं प्रतीकारः।

(८८) आटविकेति।—अटव्यां वामने चरन्तीति आटविकाः व्याधादयः, तेषां वर्गस्य समूहस्य, विश्रम्भणं विश्वासोत्पादनम्। उत्साहेति।—उत्साहशक्तेः विक्रमबलस्य, ("विक्रमबलम् उत्साहशक्तिः" इति कामन्दकीये) सन्धुक्षणेन

द्रव्यराशिः (८९) तृणवत् त्यागात् अनुपमानम् आशयौदार्य्यं, (९०) जय-पराजयानवस्थानात् हर्ष-विषादयोः अविधेयत्वं, (९१) पौरुषैकनिमित्तस्य अमर्षस्य (९२) वृद्धिः, अक्षहस्तभूम्यादिगोचराणाम् अत्यन्तदुरुपलक्ष्याणां कूटकर्मणाम् उपलक्षणात् (९३) अनन्तबुद्धिनैपुण्यम्, एकविषयोपसंहारात् चित्तस्य अतिचित्रम् (९४) ऐकाग्र्यम्, अध्यवसायसहचरेषु साहसेषु अतिरतिः, अतिकर्कशपुरुषप्रतिसंसर्गात् अनन्यधर्षणीयता, मानावधारणम्, अक्षपणाच्च शरीरयापनम् (९५)

उद्दीपनेन, वर्द्धनेनेति यावत् । प्रत्यनीकेति ।—प्रत्यनीकानां प्रतिपक्षाणां, विभावनं भयोत्पादनम् ।

(८९) द्रव्यराशिः अर्थनिचयश्च ।

(९०) अनुपमानं निरुपमम् । आशयौदार्य्यं चित्तस्य उदारता ।

(९१) जयेति ।—जयस्य पराजयस्य तयोरनवस्थानात् स्थिरत्वाभावात् । अविधेयत्वम् अवश्यत्वम्, अनभिभूतत्वमिति भावः ।

(९२) पौरुषैकनिमित्तस्य पराक्रमैककारणस्य । अमर्षस्य कोपस्य ।

(९३) अक्षेति ।—अक्षे पाशकक्रीडायां, हस्तगोचराणां भूम्यादिगोचराणाञ्च हस्तकौशलेन भूम्यादौ व्यापककौशलेन च प्रतिपक्षप्रतारणाविषयीभूतानामित्यर्थः । अत्यन्तदुरुपलक्ष्याणाम् अतिदुरनुभवानाम् । कूटकर्मणां कपटव्यवहाराणाम् । उपलक्षणात् अनुभवात् ।

(९४) एकेति ।—एकस्य विषयस्य व्यापारस्य, उपसंहारात् सङ्कुचादेशात्, संक्षेपादित्यर्थः, एकस्मिन्नेव विषये मनःसमाधानादिति भावः । अतिचित्रम् अत्याश्चर्य्यम् ।

(९५) अध्यवसायेति ।—अध्यवसायः उत्साहः, दृढतरोद्योगः इत्यर्थः, स एव सहचरः सहायः येषां तथाभूतेषु । साहसेषु बलकर्मसु । अतिरतिः अत्यासक्तिः । कर्कशेति ।—अतिकर्कशैः अतिनिष्ठुरैः, पुरुषैः अपर्द्धाभिरिति भावः, प्रतिसंसर्गात् सङ्गत्या सततसहवासात् वा । अनन्यधर्षणीयता अन्यैरनभिभवनीयत्वम्, दुर्द्धर्षं जनं सहचारिणः पुरुषाः पराभिभवात् रक्षन्तीति भावः । मानावधारणं दम्भाभावात् परिमाणज्ञानम् । अक्षपणम् अदीनम्, अकातरमित्यर्थः । शरीरयापनं देहयात्रासम्पादनम् ।

इति। उत्तमाङ्गनोपभोगेऽपि अर्थ-धर्मयोः सफलीकरणं, पुष्कलः पुरुषाभिमानः, भावज्ञानकौशलम्, (९६) अलोभक्लिष्टम् आचेष्टितम्, (९७) अखिलासु कलासु (९८) वैचक्षण्यम्, अलब्धोपलब्धि-लब्धानुरक्षण-रक्षितोपभोग-भुक्तानुसन्धान-रुष्टानुनयादिषु अजस्रम् (९९) अभ्युपायरचनया बुद्धि-वाचोः पाटवम्, (१००) उत्कृष्टशरीरसंस्कारात् सुभगवेशतया लोकसम्भावनीयता, (१) परं सुहृत्प्रियत्वं, गरीयसी परिजनव्यपेक्षा, (२) स्मितपूर्वाभिभाषित्वम्, उदात्तसत्त्वता, दाक्षिण्यानुवर्त्तनम्, (३) अपत्योत्पादनेन उभयलोकश्रेयस्करत्वमिति। पानेऽपि नानाविधरागभङ्गपटीयसाम् आसवानाम् (४) आसेवनात् स्पृहणीयवयोव्यवस्थापनम्, (५)

(९६) अर्थधर्मयोरिति —अर्थस्य धनस्य, सफलीकरणं कृतार्थता, अर्थलब्धस्त्रीसम्भोगात् निरुपमसुखस्य प्राप्तिरिति भावः; धर्मस्य ऐहिकामुष्मिकसुखसाधनस्य कर्त्तव्यकर्मणः सफलीकरणं पुत्रोत्पादन-संसारपरिरक्षणादेः सम्पादनादिति भावः। पुष्कलः श्रेष्ठः, महानित्यर्थः, ("श्रेयान् श्रेष्ठः पुष्कलः स्यात्" इत्यमरः)। पुरुषाभिमानः पुरुषोऽहमित्यभिमानः। भावेति।—भावस्य आशयस्य, ज्ञाने कौशलं नैपुण्यम्।

(९७) अलोभक्लिष्टं निर्लोभम्। आचेष्टितं व्यवहारः।

(९८) कलासु चतुःषष्टिविधासु शिल्पविद्यासु।

(९९) अलब्धेति।—अलब्धाया उपलब्धिः लाभः, लब्धाया अनुरक्षणं, रक्षितायाः उपभोगः, भुक्तायाः, स्वेनेति भावः, अनुसन्धानं सुख-दुःखादिचिन्तनं, रुष्टायाः कुपितायाः, अनुनयः सान्त्वनम्, एवमादिषु। अजस्रं सततम्।

(१००) पाटवं नैपुण्यम्।

(१) सुभगवेशतया मनोहरपरिच्छदतया। लोकेति।—लोकानां सम्भावनीयता आदरणीयता।

(२) परिजनेति।—परिजनेषु परिवारेषु, व्यपेक्षा निरनुरोधनम्।

(३) उदात्तसत्त्वता महत्त्ववत्ता। दाक्षिण्यानुवर्त्तनं सारल्यानुसरणम्।

(४) नानेति।—नानाविधेषु रागभङ्गेषु कामादिविकारेषु, पटीयसां.

अहङ्कारप्रकर्षात् अशेषदुःखतिरस्करणम्, अनङ्गरागदीपनात् (६) अङ्गनोपभोगशक्तिमत्सुखताम्, अपराधप्रमार्जनात् मनःशल्योन्मार्जनम्, अश्राव्यशंसिभिः अनर्गलप्रलापैः विश्वासोपबृंहणं, (७) मत्सरानुबन्धात् आनन्दैकतानता, शब्दादीनाम् इन्द्रियार्थानां सातत्येन अनुभवः, संविभागशीलतया सुहृद्वर्गसंवर्द्धनम्, (८) अनुपमानम् अङ्गनावरणम्, अनुत्तराणि (९) विलसितानि, भयार्त्तिहरणाच्च साङ्ग्रामिकत्वम् (१०) इति। वाक्पारुष्यं, दण्डो दारुणः, दूषणानि च अर्थानामिव यथाऽवकाशम् औपकारिकाणि। (११) न हि मुनिरिव

---

दक्षाणाम्; "रोगभङ्ग" इति पाठे—रोगनाशे पटीयसाम्। आसवानां मद्यानाम्।

(५) आसेवनात् सम्यक् उपयोगात्, उपयुक्तमात्रया पानादित्यर्थः। स्थूरीयेति।—स्थविरीयस्य वयसः यौवनस्यान्यथः, व्यवस्थापनं स्थिरीकरणं, यथाविधि मद्यपायिनो हि दीर्घकालं सन्ततः सबलाः सयौवना एव तिष्ठन्तीति भावः।

(६) अशेषेति।—अशेषस्य दुःखस्य तिरस्करणम् आच्छादनम्। अनङ्गेति।—अनङ्गः कामः, तस्मिन् रागः इच्छा, तस्य दीपनात् वर्द्धनात्।

(७) अपराधेति।— अपराधस्य दोषस्य, प्रमार्जनात् अवहेलनात्। मनः-शल्यस्य चित्तोद्वेगस्य, उन्मार्जनं निरसनम्। अश्राव्येति।—अश्राव्यस्य गुह्यविषयस्य, शंसिभिः सूचकैः। विश्वासोपबृंहणं प्रत्ययवर्द्धनम्।

(८) मत्सरेति।—मत्सरस्य अपरशुभद्वेषस्य, ("मत्सरोऽन्यशुभद्वेषः" इत्यमरः) अननुबन्धात् अननुसरणात्। आनन्दैकतानता केवलानन्दमयत्वम्। शब्दादीनां शब्दरसगन्धस्पर्शरूपाणामित्यर्थः। इन्द्रियार्थानाम् इन्द्रियभोग्यवस्तूनाम्। सातत्येन नैरन्तर्येण। अनुभवः भोगः। संविभागशीलतया सुविवेकवत्तयेत्यर्थः, अपक्षपातित्वेनेति यावत्। सुहृद्वर्गसंवर्द्धनम् अभिमतार्थप्रदानैः मित्रवर्गसमाराधनम्।

(९) अनुत्तराणि उत्तररहितानि, अत्युत्कृष्टानीति भाव.।

(१०) भयेति।—भयेन वा आर्त्तिः पीडा, खेदेन इत्यर्थः, तस्या हरणात्। साङ्ग्रामिकत्वं सङ्ग्रामे साधुः साङ्ग्रामिकः तस्य भावः युद्धपटुत्वमित्यर्थः।

नरपतिः उपशमरतिः अभिभवितुम् अरिकुलमलम् अवलम्बि-तुञ्च लोकतन्त्रम्' ( १२ ) इति।

असौ अपि गुरूपदेशमिव अत्यादरेण तस्य मतम् अन्ववर्त्तत। तच्छीलानुसारिण्यश्च प्रकृतयो विशृङ्खलम् ( १३ ) असेवन्त व्यसनानि, ( १४ ) सर्वश्च समानदोषतया न कश्चित् छिद्रान्वेषणाय ( १५ ) अयतिष्ट, समानभर्तृप्रकृतयः तन्त्राध्यक्षाः स्वानि स्वानि कर्मफलानि ( १६ ) अभक्षयन्। ततः क्रमात् आयद्वाराणि व्यशीर्य्यन्त, ( १७ ) व्ययमुखानि विट-विधेयतया विभोः अहरहः ( १८ ) व्यवर्द्धन्त। सामन्त-पौर-जानपदमुख्याश्च समानशीलतया उपारूढ़विस्रम्भेण ( १९ ) राज्ञा सजानयः पानगोष्ठीषु अभ्यन्तरीकृताः ( २० ) स्वं स्व-

( ११ ) वाक्पारुष्यं कर्कशवचनप्रयोगः, दारुणो दण्डः दण्डपारुष्यमित्यर्थः। अर्थानां दूषणानि देयस्य अदानम् अदेयस्य बलात् हरणमित्यादीनि। यथाऽवकाशं यथासमयं, समयानुसारेणेत्यर्थः। औपकारिकाणि उपकारकर्माणि।

( १२ ) अवलम्बितुं धारयितुम्। लोकतन्त्रं लोकव्यापारं, प्रजास्थितिमित्यर्थः।

( १३ ) विशृङ्खलं यथेच्छं, निर्बाधम् इत्यर्थः।

( १४ ) व्यसनानि पूर्वोक्तानि सुरादीनि।

( १५ ) छिद्रान्वेषणाय दोषानुसन्धानाय।

( १६ ) समानेति।—समानाः भर्त्रा प्रकृतयः स्वभावाः येषां तादृशाः। तन्त्राध्यक्षाः राजकार्याधिकारिणः। स्वानि स्वानि निजनिजहस्तगतानि इत्यर्थः। कर्मफलानि राजस्वादीनि।

( १७ ) व्यशीर्य्यन्त विशीर्णानि बभूवुः, क्षयगतानीत्यर्थः।

( १८ ) विटविधेयतया विटानां धूर्त्तानां, विधेयतया वशीभूततया, वेश्या-सुरादिधूर्त्तपरतन्त्रतयेति यावत्। विभोः राज्ञः। अहरहः प्रतिदिनम्।

( १९ ) सामन्तेति।—सामन्ताः स्वदेशासन्नवर्त्तिनो राजानः, अधीना नृपा इत्यर्थः, तथा पौराः जानपदाश्च तेषु मुख्याः प्रधानपुरुषाः। समानशीलतया तुल्य-स्वभावत्वेन। उपारूढ़ः जातः, विस्रम्भः विश्वासः यस्य तादृशेन।

( २० ) सह जायया वर्त्तमानाः सजानयः सभार्य्याः इत्यर्थः, [ "जायाया

आचारम् अत्यचारिषुः। (२१) तदङ्गनासु (२२) च अनेकापदेशपूर्वम् अपाचरत् (२३) नरेन्द्रः। तदन्तःपुरेषु (२४) च असौ भिन्नवृत्तेषु मन्दत्रासा (२५) बहुसुखैः प्रवर्त्तन्त। सर्वश्च कुलाङ्गनाजनः सुलभभङ्गिभाषणरतो भग्नचारित्रयन्त्रणः (२६) तृणायापि न मत्वा भर्त्तॄन् धाष्टगणमन्त्रणाम् (२७) अशृणोत्। तन्मूलाश्च कलहाः सामर्षाणाम् (२८) उदभवन्। अशक्यन्त दुर्बला बलिभिः। अपाह्रियन्त धनवतां धनानि तस्करादिभिः। अपह्रुतपरिभूतयः प्रहृताश्च (२९)

लिङ्" (५।४।१३४ पा०) इति समासान्तः]। पानगोष्ठीषु मद्यपानसभासु। अत्यन्तगोचरीकृताः परिचिता इत्यर्थः।

(२१) अत्यचारिषुः अतिक्रामन्ति स्म।

(२२) तदङ्गनासु तेषां सामन्तादीनाम्, अङ्गनासु नारीषु।

(२३) अनेकापदेशपूर्वं बहुव्याजपूर्वमित्यर्थः। अपाचरत व्यभिचारमकरोदित्यर्थः।

(२४) तदन्तःपुरेषु तस्य राज्ञः, अन्तःपुरेषु अन्तःपुरस्थमहिलास्वित्यर्थः।

(२५) भिन्नवृत्तेषु भ्रष्टचरित्रेषु। मन्दत्रासा निर्भया इत्यर्थः।

(२६) सुलभेति।—सुलभं सहजं, यत् भङ्गिभाषणं वक्रोक्तिकथनं, तत्र रतः तत्पर इत्यर्थः; "प्रायुक्तभङ्गिभाषणरतः" इति पाठान्तरे—प्रायुक्ता स्वामिनीना, भङ्गिभाषणं व्यङ्ग्योक्तिः, तत्र रतः प्रवीण इत्यर्थः। भग्नेति।—भग्नं नष्टं, चारित्रस्य सदाचाररक्षणस्य, यन्त्रणं बन्धनं यस्य तादृशः, यद्वा—भग्नं नष्टं, चारित्रमेव यन्त्रणं बन्धनं येन।

(२७) तृणायेति।—तृणाय न मत्वा तृणवदनादृत्य इत्यर्थः, ["मन्यकर्मण्यनादरे विभाषाऽप्राणिषु" (२।३।१७ पा०) इति सूत्रेण तिरस्कारार्थे कर्मणि चतुर्थी। उपपदीभूत-मन्यधात्वर्थमनपेक्ष्य "मत्वा" इत्यत्र "गणयित्वा" इति पाठान्तरमपि समीचीनमेव]। धाष्टगणेति।—धाष्टगणस्य जारवर्गस्य, ("धाष्टो जारे विधातरि" इत्यमरः) मन्त्रणाम् उपदेशम्।

(२८) तन्मूलाः तन्निबन्धनाः। कलहाः विवादाः। सामर्षाणां सक्रोधानाम्, स्वस्ववनितानामिति भावः।

पातकपथाः। हृतबान्धवाः हृतवित्ता अधनन्धातुराश्च मुक्त-कण्ठम् आक्रोशन् (३०) अश्रुकण्ठाः प्रजाः। दण्डश्च अयथा-प्रणीतो (३१) भयक्रोधौ अजनयत्। कृशकुटुम्बेषु (३२) लोभः पदम् अधत्त। विमानिताश्च तेजस्विनो मानेन अदह्यन्त। तेषु तेषु च अकृत्येषु प्रासरन् परोपजापाः। (३३)

तदा च मृगयुवेशमृगवाहुल्यवर्णनेन अद्रिद्रोणीः अनप-सारमार्गाः शुष्कतृणवंशगुल्माः प्रवेश्य द्वारतोऽग्निविसर्गैः, (३४) व्याघ्रादिवधे प्रोत्साह्य तन्मुखपातनैः, (३५) दृष्टकूप-

(२९) अपहृतेति।—अपहृता परिभूतिः परिभवः येषां ताहृशाः, परिभव-हीना इत्यर्थः। प्रहृताः आविष्कृताः, शुद्धाः इति यावत्, निरन्तरविचरणादि-रूपकर्मणादिभिः सर्वतो नीता इति भावः; प्रायशः सर्वे एव पातकमाचरन्ति, न तेषां कोऽपि शासिता आसीदिति निष्कर्षः।

(३०) मुक्तकण्ठम उच्चैःस्वरेणेत्यर्थः। आक्रोशन् वदन्ति स्म।

(३१) दण्डः शास्तिः, राजकीयविचारश्च इति शेषः। अयथाप्रणीतः अन्याय-विहितः, अयथोचित इत्यर्थः; "अयथाप्रहितः" इति पाठे—अविधिप्रयुक्तः।

(३२) कृशकुटुम्बेषु निर्धनपरिवारेषु।

(३३) अकृत्येषु अकार्येषु, दुष्कार्येष्वित्यर्थः; सरित्सिति शेषः। प्रासरन् प्रावर्त्तन्त। परोपजापाः शत्रुप्रयुक्ता भेदा इत्यर्थः।

(३४) तदेत्यादि।—तदा तस्मिन् समये। मृगयुवेशेति।—मृगयुर्व्याधः, ("मृगाविध मृगयुर्व्याधः" इत्यमरः) तस्य वेशेन छद्मना इत्यर्थः, मृगाणां बाहुल्यं प्राचुर्यम अनायासलभ्यत्वं वा, तस्य वर्णनेन कीर्त्तनेन। अद्रिद्रोणीः द्रोणी काष्ठ-पाषाणादिकृतनौकाकारजलसेचनी, अद्रिषु या द्रोणीः द्रोण्याकारव्यवस्थितभूमीनाम्, अनपसारमार्गाः निर्गमनोपायविरहिताम् पर्वतावनद्धोर्ध्वरन्ध्रविशेषा-निति यावत्, पर्वतकन्दराः इत्यर्थो वा, पर्वतनदीभेदानिति केचित्। अनपसारेति।—नास्ति अपसारस्य निर्गमस्य, मार्गः यासु ताः। शुष्केति।—शुष्काणि तृणानि वंशगुल्माः वेणुस्तम्बाश्च यासु ताः। प्रवेश्य, जनान्तर्वर्त्तः प्रवेशाम् पुरुषानिति शेषः। द्वारतः द्रोणीनां द्वारेषु इत्यर्थः। अग्निविसर्गैः अग्निदानैः।

(३५) व्याघ्रादीति।—यस्मिन् वने व्याघ्रः स्थितः, तं हत्वा राज्य रक्षण

तृष्णोत्पादनेन अतिदूरचारितानां प्राणहारिभिः (३६) क्षुत्पिपासाऽभिवर्द्धनैः, तृणगुल्मगूढक्षतटप्रदरपातहेतुभिः विषममार्गप्रधावनैः, (३७) विषमुखीभिः क्षुरिकाभिः चरणः कण्टकोद्धरणैः, (३८) विष्वग्विसर्पविच्छिन्नानुयातृतया एकाकीकृतानां यथेष्टघातनैः, (३९) मृगदेहापराधैः नाम इषुमोक्षणैः, सपणबन्धम् (४०) अधिकह्य अद्रिशृङ्गाणि दुरधिरोहाणि अनन्यलक्ष्यैः प्रभ्रंशनैः, (४१) आटविकच्छद्मना विपिनेषु विरल-

सत्त्व च वीर्यं दर्शयतेत्येवंरूपेण प्रोत्साह्य उद्दीप्य, तन्मुखपातनैः तेषां व्याघ्रादीनां मुखेषु पातनैः, वीरपुरुषाणामिति शेषः।

(३६) इष्टेति।—इष्टेषु मनोज्ञेषु, कूपेषु तृष्णा स्पृहा, तज्जलपानेच्छा इत्यर्थः, तस्याः उत्पादनेन अस्मिन् प्रदेशे मनोहरः कूपोऽस्ति तस्य जलमतीव स्वादुतरं, गच्छत, यदि तत् पातुमिच्छथ इत्येवं प्रलोभनेनेति भावः। अतिदूरचारितानां बहुदूरं नीतानाम्। प्राणहारिभिः प्राणनाशकैः।

(३७) तृणेति।—तृणानां गुल्मैः स्तम्बैः, गूढं छन्नं तटं यस्य तादृशे, प्रदरे गर्त्ते, पातस्य पातनस्य, हेतुभिः। विषमेति।—विषममार्गो दुर्गमवर्त्म, तत्र प्रधावनैः प्रकर्षेण द्रुतगमनैः।

(३८) विषेति।—विषं मुखे यासां ताभिः विषलिप्ताग्राभिरित्यर्थः। क्षुरिकाभिः असिकाभिः। चरणेति।—चरणेभ्यः पादेभ्यः, कण्टकोद्धरणैः कण्टकवहिष्करणैः।

(३९) विष्वगिति।—विष्वक् समन्तात्, इतस्ततः इत्यर्थः, विसर्पेण गमनेन, सर्पविक्षेपेणेत्यर्थः, "प्रचार" इति वा पाठः, तत्रापि स एवार्थः; विच्छिन्नाः विच्युताः, अनुयातारः अनुगामिनः येषां ते विष्वग्विसर्पविच्छिन्नानुयातारः, तेषां भावः तत्ता तया। एकाकीकृतानां निःसहायानामित्यर्थः। यथेष्टघातनैः यथेच्छविनाशैः।

(४०) मृगेति।—मृगाणां देहेभ्यः अपराधैः भ्रष्टैः। नामेत्यलीके। इषुमोक्षणैः शरक्षेपैः, मृगवधच्छलेन वेध्यानां देहे शरपातनैरिति भावः। सपणबन्धं पणबन्धपूर्वं, यदि कश्चिदिदं पर्वतशृङ्गमधिरोढुं शक्नोति तस्मै एतत् ददामीति पणबन्धं कृत्वेति भावः।

(४१) दुरधिरोहाणि अधिरोढुमशक्यानीत्यर्थः, अतितुङ्गानीति भावः। अनन्यलक्ष्यैः अन्यैरलक्षणीयैः, अन्येषामदृश्यभावेनेत्यर्थः। प्रभ्रंशनैः पातनैः।

सैनिकानां प्रतिरोधनैः, (४२) अक्षद्यूतपक्षियुद्धयात्रोत्सवादिसङ्कुलेषु बलवदनुप्रवेशनैः (४३) इतरेषां हिंसोत्पादनैः, गूढोत्पादितव्यलीकेभ्योऽप्रियाणि (४४) प्रकाशं लब्ध्वा साक्षिषु तद्विख्याप्य अकीर्त्तिगुप्तिहेतुभिः (४५) पराक्रमैः, परकलत्रेषु (४६) सुहृत्त्वेनाभियोज्य जारान् भर्त्तॄन् उभयं वा प्रहृत्य तत्साहसोपन्यासैः, (४७) योग्यनारीहारितानां सङ्केतेषु प्रागुपनिलीय पश्चादभिद्रुत्य अकीर्त्तनीयैः प्रमापणैः, (४८) उपप्रलोभ्य बिलप्रवेशेषु निधानखननेषु मन्त्रसाधनेषु च विघ्नव्याजसाध्यैर्व्यापादनैः, (४९) मत्तगजाधिरोहणाय प्रेर्य

(४२) आटविकच्छद्मना परराष्ट्रसैन्यच्छलेन। विपिनेषु काननेषु। विरलसैनिकानाम् अल्पसैनिकपुरुषाणाम्। प्रतिरोधनैः अवरोधनैः, येन ते तेभ्यो न निर्यान्तीति भावः।

(४३) अक्षेति।—अक्षक्रीडादिजनतास्वित्यर्थः। बलवताम् अनुप्रवेशनैः येन ते अक्षद्यूतनिरतादयः पराजीयन्ते इति भावः।

(४४) गूढेति।—गूढं छन्नं यथा तथा, उत्पादितं व्यलीकम् अप्रियं येषां तेभ्यः। अप्रियाणि कटूक्तिप्रभृतीनीत्यर्थः।

(४५) अकीर्त्तीति।—अकीर्त्तिः अयशः, प्रच्छन्नव्यलीकजनितश्चेति भावः, गुप्तिः गोपनञ्च, हेतुभिः।

(४६) परकलत्रेषु परनारीषु।

(४७) अभियोज्य संयोज्य। तदिति।—तस्य साहसस्य जारादिहननरूपस्य, उपन्यासैः कीर्त्तनैः।

(४८) योग्येति।—योग्याभिरनुरूपाभिः, नारीभिः हारितानां सङ्केतस्थानम् नीतानामित्यर्थः। सङ्केतेषु सङ्केतस्थानेषु। प्राक् पूर्वम्। उपनिलीय छन्नं स्थित्वेत्यर्थः; "प्रागुपनीय" इति पाठे—प्रथमम् आनीय, सङ्केतस्थानेषु इति बोद्धव्यम्। पश्चात् अनन्तरम्। अभिद्रुत्य धावित्वा। अकीर्त्तनीयैः अकथनीयैः। प्रमापणैः घातनैः।

(४९) उपप्रलोभ्य लोभं दर्शयित्वा। विघ्नेति।—विघ्ना अन्तराया एव, व्याजाः छलानि, तत्साध्यैः तत्कृतैरित्यर्थः। व्यापादनैः हिंसनैः।

प्रत्यपायनिवर्त्तनैः, (५०) व्यालहस्तिनं कोपयित्वा लक्ष्यीकृत-मुख्यमण्डलेषु अपक्रमणैः, (५१) दायाद्यर्थे विवदमानान् उपांशु (५२) हत्वा प्रतिपक्षेषु अयशःपातनैः, (५३) सामन्त-पुरजनपदेषु अयथावृत्तान् अप्रकाशमभिपद्य (५४) तद्वैरि-नामघोषणैः, योग्याङ्गनाभिः अहर्निशम् अभिरमय्य (५५) राजयक्ष्मोत्पादनैः, (५६) वस्त्राभरणमाल्याङ्गरागादिषु रस-विधानकौशलैः, (५७) चिकित्सामुखेन आमयोपबृंहणैः, (५८)

(५०) प्रेर्य्य प्रोत्साह्येत्यर्थः। प्रत्यपायेति।—प्रत्यपायानाम् अपायप्रतिकूलानां, यथा ते न नश्यन्ति तादृशानामुपायानामिति भावः, निवर्त्तनैः प्रतिबन्धनैः; "प्रत्यवाय-निवर्त्तनैः" इति पाठान्तरं, तत्पक्षे—प्रत्यवायः पापं, तस्य निर्वर्त्तनैः सम्पादनैः, तेषां हिंसया पापाचरणैरित्यर्थः।

(५१) व्यालहस्तिनं दुष्टगजम्। कोपयित्वा क्रोधान्धीकृत्य। लक्ष्यीकृतेति।—लक्ष्यीकृतेषु कोपेन तदाक्रमणाय धावता तेन हस्तिना विषयीकृतेषु, मुख्यमण्डलेषु प्रधानपुरुषनिवहेषु मध्ये, अपक्रमणैः गूढभावेन ततः स्वयं पलायनैः।

(५२) दायाद्यर्थे दायः पैतृकं धनं, तदादि तत्प्रभृतिसम्पत्, तदर्थे तन्निमित्तम्। उपांशु रहसि।

(५३) प्रतिपक्षेषु विरोधिषु शत्रुषु। अयशःपातनैः एते इमान् हतवन्त इत्येवमकीर्त्तिघोषणैरिति भावः।

(५४) सामन्तेति।—सामन्तानां स्वदेशानन्तरवर्त्तिनृपाणां, पुरेषु जनपदेषु चेत्यर्थः। अयथावृत्तान् अन्यायाचरणशीलान्। अप्रकाशं छन्नम्। अभिपद्य व्यापाद्य।

(५५) योग्येति।—योग्याभिरनुरूपाभिः, अङ्गनाभिर्नारीभिः। अभिरमय्य विहार्य्य।

(५६) राजेति।—राजयक्ष्मणः क्षयरोगस्य, उत्पादनैः सञ्जननैः।

(५७) रसेति।—रसः विषं, तस्य विधानं प्रयोगः, तत्र कौशलैः नैपुण्यैः, कौशलेन वस्त्रादिषु विषनिक्षेपैरित्यर्थः।

(५८) आमयोपबृंहणैः रोगवृद्धिकरणैः; "आमयोपवर्द्धनैः" इति वा पाठः, तत्पक्षेऽपि स एवार्थः।

अन्यैश्च अभ्युपायैः अश्मकेन्द्रप्रयुक्ताः तीक्ष्णरसदादयः (५९) प्रक्षपितप्रवीरम् अनन्तवर्मकटकं जर्जरम् (६०) अकुर्वन्।

अथ वसन्तभानुर्भानुवर्माणं नाम वानवास्यं (६१) प्रोत्साह्य अनन्तवर्मणा व्यग्राहयत्। (६२) तत्पराभृष्टराष्ट्रपर्यन्तः (६३) च अनन्तवर्मा तम् अभियोक्तुं बलसमुत्थानम् (६४) अकरोत्। सर्वसामन्तेभ्यश्च अश्मकेन्द्रः प्रागुपेत्य अस्य (६५) प्रियतरोऽभूत्। अपरेऽपि सामन्ताः समगंसत। (६६) गत्वा च अभ्यर्णे नर्मदारोधसि (६७) न्यविशन्त। तस्मिंश्च अवसरे महासामन्तस्य (६८) कुन्तलपतेः अवन्तिदेवस्य आत्मनाटकीयां क्ष्मातलोर्वशीं (६९) नाम चन्द्रपालितादिभिः अतिप्रशस्तनृत्य-

(५९) अश्मकेन्द्रप्रयुक्ताः अश्मकदेशाधिपतिना वसन्तभानुना नियुक्ताः, प्रेरिता इत्यर्थः। तीक्ष्णरसदादयः विषप्रयोक्तृगूढपुरुषप्रभृतयः।

(६०) प्रक्षपितेति।—प्रकर्षेण क्षपिता नाशिताः, प्रवीराः प्रकृष्टवीरा यस्य तादृशम्। अनन्तवर्मकटकम् अनन्तवर्मसैन्यम्। जर्जरं विध्वस्तम्।

(६१) वानवास्यं वने वसन्तीति वनवासिनः, ते अत्र सन्तीति वानवास्याः (अस्त्यर्थे ष्य-प्रत्ययः) वनेचराधिपतिरित्यर्थः, तम्।

(६२) व्यग्राहयत् अयोधयत्।

(६३) तदिति।—तेन भानुवर्मणा, पराभृष्टः आक्रान्तः, राष्ट्रस्य पर्यन्तः प्रान्तसीमा यस्य तथाभूतः।

(६४)—बलसमुत्थानं सैन्योद्योगम्।

(६५) प्राक् पूर्वं, प्रथममित्यर्थः। उपेत्य समीपमागत्य। अस्य अनन्तवर्मणः।

(६६) समगंसत सङ्गताः, समागताः इति यावत्, अस्य अनन्तवर्मणः साहाय्यार्थमिति भावः। (अकर्मकात् सम्-पूर्वक गम्-धातोरात्मनेपदित्वम्)।

(६७) अभ्यर्णे निकटवर्तिनि। नर्मदारोधसि नर्मदातीरे।

(६८) महासामन्तस्य प्रधानसामन्तस्य।

(६९) आत्मनाटकीयां स्वनर्तकीम्। क्ष्मातलोर्वशीं भूतलोर्वशीं, परमसुन्दरीत्वात् भूतले अवतीर्णाम् उर्वशीमिवेति भावः।

कौशलाम् आहूय अनन्तवर्मा नृत्यम् अद्राक्षीत्। अतिरक्तश्च (७०) भुक्तवान् इमां मधुमत्ताम्। अश्मकेन्द्रस्तु कुन्तलपतिम् एकान्ते समभ्यधत्त—'प्रमत्त एष राजा कलत्राणि नः परामृशति, (७१) कियत्यवज्ञा सोढ़व्या? मम शतमस्ति हस्तिनां, पञ्चशतानि च ते, तत् आवां सम्भूय मुरलेशं (७२) वीरसेनम्, ऋचीकेशम (७३) एकवीरं, कोङ्कणपतिं (७४) कुमारगुप्तं, नासिक्यनाथञ्च (७५) नागपालम् उपजपाव। (७६) ते च (७७) अवश्यम् अस्य अविनयम् असहमाना अस्मन्मतेन एव उपावर्त्तेरन्। (७८) अयञ्च वानवास्यः प्रियं मे मित्रम्, अमुना एनं दुर्विनीतम् अग्रतो व्यतिषक्तं (७९) पृष्ठतः प्राहरेम, कोशवाहनञ्च विभज्य गृह्णीमः' इति। हृष्टेन च अमुना अभ्युपेते, (८०) विंशतिं वरांशुकानां, (८१) पञ्चविंशतिं काञ्चनकुङ्कुमपलानां प्राभृती-

(७०) अतिरक्तः अत्यासक्तः।

(७१) परामृशति स्पृशति, बलात्करोतीत्यर्थः।

(७२) सम्भूय मिलित्वा। मुरलेशं मुरला नर्मदा नदी, तत्सन्निकृष्टदेशाधिपम्।

(७३) ऋचीकेशं तदाख्यदेशाधिपम्।

(७४) कोङ्कणपतिं तदाख्यदेशनाथम्।

(७५) नासिक्यनाथं नासिक्यदेशनायकम्।

(७६) उपजपाव भेदयाव, एतान् अनन्तवर्मणः पारवश्यात् विच्युतान् करवावेत्यर्थः, (आशंसायां लोट्)।

(७७) ते च वीरसेनादयः।

(७८) उपावर्त्तेरन् तिष्ठेयुः।

(७९) व्यतिषक्तम् आक्रान्तमित्यर्थः, अभियुक्तम् इति यावत्।

(८०) अमुना अनन्तदेवेन। अभ्युपेते तथाऽस्त्विति स्वीकृते।

(८१) वरांशुकानाम् उत्कृष्टवसनानाम्।

त्याप्तमुखेन (८२) तैः सामन्तैः (८३) सम्मन्त्र्य तानपि स्वमतावस्थापयत्। उत्तरेद्युः (८४) तेषां सामन्तानां वानवास्यस्य च अनन्तवर्मा नयद्वेषात् आमिषत्वम् (८५) अगमत्। वसन्तभानुश्च तत्कोशवाहनम् अवशीर्णम् आत्माधिष्ठितम् (८६) एव कृत्वा 'यथाप्रयासं यथाबलञ्च विभज्य गृह्णीत, युष्मदनुज्ञया येन केनचित् अंशेन अहं तुष्यामि' इति शाठ्यात् सर्वानुवर्त्ती (८७) तेनैव आमिषेण (८८) निमित्तीकृतेन उत्पादितकलहः सर्वसामन्तान् अध्वंसयत्। (८९) तदीयञ्च (९०) सर्वस्वं स्वयमेव अग्रसत्। वानवास्यं केनचित् अंशेन अनुगृह्य प्रत्यावृत्य सर्वम् अनन्तवर्मराज्यम् आत्मसादकरोत्।

अस्मिंश्च अन्तरे मन्त्रिवृद्धो वसुरक्षितः कैश्चित् मौलैः (९१) सम्भूय बालमेनं भास्करवर्माणम् अस्यैव ज्यायसीं भगिनीं त्रयोदशवर्षां मञ्जुवादिनीम्, (९२) अनयोश्च मातरं

---

(८२) "काञ्चनकुङ्कुमकम्बलानाम्" इति पाठे—काञ्चनवर्णकुङ्कुमसंवासित-कम्बलानां पञ्चविंशतिम् इति भावः। प्राभृतीकृत्य उपायनीकृत्य। आप्तमुखेन विश्वस्तात्मीयमुखेन।

(८३) तैः सामन्तैः वीरसेनप्रमुखैरित्यर्थः।

(८४) उत्तरेद्युः परस्मिन् दिने।

(८५) नयद्वेषात् नीतिशास्त्रावहेलनात्। आमिषत्वं भोग्यवस्तुत्वम्, ("आमिषं पुंनपुंसकम्। भोग्यवस्तुनि सम्भोगेऽप्युत्कोचे पललेऽपि च।" इति मेदिनी) तैर्हृत इति भावः।

(८६) अवशीर्णं विध्वस्तम्। आत्माधिष्ठितं स्वायत्तम्।

(८७) शाठ्यात् कापट्यात्। सर्वानुवर्त्ती सर्वमनोरञ्जनकारी।

(८८) आमिषेण भोग्यद्रव्येण।

(८९) अध्वंसयत् अनाशयत्।

(९०) तदीयं तत्तत्सामन्तसम्बन्धि।

(९१) मौलैः कुलक्रमागतभृत्यैरित्यर्थः।

(९२) मञ्जुवादिनीं तन्नामधेयाम्।

महादेवीं वसुन्धराम् (९३) आदाय अपसर्पन् (९४) आपदोऽस्या भावितया(९५)दाहज्वरेण देहम् अजहात्। (९६) अस्मादृशैः मित्रैस्तु नीत्वा माहिष्मतीं (९७) भर्त्तृद्वैमातुराय भ्रात्रे (९८) मित्रवर्मणे सापत्न्या देवी दर्शिता अभूत्। तांच आर्य्याम् अनार्य्योऽसौ अन्यथा अभ्यमन्यत। (९९) निर्भर्त्सितश्च तया 'सुतमियम् अखण्डचारित्रा राज्यार्हं चिकीर्षति' (१००) इति नैर्घृण्यात् (१) तम् एनं बालम् अजिघांसीत्। (२) इदन्तु ज्ञात्वा देव्या अहमाज्ञप्तः,—'तात! नालीजङ्घ! जीवता अनेन अर्भकेण (३) यत्र क्वचित् अवधाय जीव, (४) जीवेयं चेत् अहमपि एनम् अनुसरिष्यामि। (५) ज्ञापय मां क्षेमप्रवृत्तिः

---

(९३) वसुन्धरां तदाख्याम्।

(९४) अपसर्पन् पलायमानः।

(९५) भावितया अवश्यम्भाविन्या।

(९६) अजहात् अत्यजत्।

(९७) माहिष्मतीं तदाख्यां नगरीम्।

(९८) भर्त्तृद्वैमातुराय—भर्त्तुर्द्वैमातुराय द्वितीयाया मातुरपत्याय वैमात्रेयाय, ["मातुरुत्संख्यासम्भद्रपूर्वायाः" (४।१।११५ पा०) इति सूत्रेण मातृशब्दस्य उदादेशः अण्-प्रत्ययश्च]। भ्रात्रे देवरायेत्यर्थः।

(९९) असौ मित्रवर्मा। अभ्यमन्यत मनस्कामकरोत्, रिरंसया चारित्रनाशाय चकमे इत्यर्थः।

(१००) अखण्डचारित्रा अभ्रष्टचारित्रा, सतीत्यर्थः। राज्यार्हं राज्याधिकारिणम्। चिकीर्षति कर्त्तुमिच्छति।

(१) नैर्घृण्यात् निर्दयत्वात्।

(२) अजिघांसीत् हन्तुमैच्छत्।

(३) अर्भकेण बालकेन, (सहार्थे तृतीया)।

(४) अवधाय अवहितो भूत्वा, सावधानेनेत्यर्थः। जीव प्राणान् रक्ष।

(५) जीवेयं प्राण्याम्। चेत् यदि। तर्हि एनमनुसरिष्यामि अनुगमिष्यामि।

स्ववार्त्ताम्' (६) इति। अहन्तु मङ्गले राजकुले कथञ्चित् एनं निर्गमय्य विन्ध्याटवीं व्यगाहिषि। पादचारदुःखितञ्च एनम् आश्वासयितुं घोषे (७) क्वचित् अहानि कानिचित् विश्रमय्य तत्रापि राजपुरुषसम्पातभीतो दूरम् अपासरम्। तत्रास्य दारुणपिपासापीडितस्य वारि दातुकामः कूपेऽस्मिन् अवभ्रश्य पतितः, त्वया एवम् अनुगृहीतः। त्वमेव अस्य अतः शरणमेधि (८) विशरणस्य (९) राजसूनोः' इति अञ्जलिम् अवध्नात्।

'किमीया (१०) जात्या अस्य माता?' इति अनुयुक्तो (११) मया अमुना (१२) उक्तं—'पाटलिपुत्रस्य वणिजो वैश्रवणस्य दुहितरि सागरदत्तायां कोशलेन्द्रात् कुसुमधन्वनोऽस्य माता जाता' इति। 'यद्येवम् एतन्मातुर्मत्पितुश्चैको मातामहः' इति सस्नेहं तमहं सस्वजे। वृद्धेन उक्तं—'सिन्धुदत्तपुत्त्राणां कतमस्ते (१३) पिता?' इति। 'सुश्रुतः' इत्युक्ते सोऽत्यहृष्यत्।

(६) ज्ञापय निवेदय। क्षेमेण प्रवृत्तः संनिवृत्तः कुशलमवस्थितः, यत्र क्वचन निर्विघ्नेन गत्वा इत्यर्थः। स्ववार्त्तां निजवृत्तान्तं, स्वप्रवृत्तिमिति यावत्।

(७) आश्वासयितुं सान्त्वयितुं, विश्रामयितुम् इत्यर्थः। घोषे आभीरपल्ल्याम्, ("घोष आभीरपल्ली स्यात्" इत्यमरः)।

(८) अतः अस्मात्, परमिति शेषः। शरणम् आश्रयः। एधि भव।

(९) विशरणस्य अनाथस्य।

(१०) किमीया? किंस्वरूपा? किंजातीया? इत्यर्थः, ["वृद्धाच्छः" (४।२।११४ पा०) इति छ-प्रत्ययान्तोऽयं प्रयोगः]। अस्य बालकस्य।

(११) अनुयुक्ते पृष्टे।

(१२) अमुना नालीजङ्घेन।

(१३) "सिन्धुदत्तपुत्त्राणां कतमस्ते" इत्यत्र "पद्मोद्भवपुत्त्रयोः कतरस्ते" इति पाठः साधुतया प्रतिभाति, यस्मात् सिन्धुदत्तस्याप्रसक्तत्वात् सुश्रुतपितुः पद्मोद्भवेति नामत्वात्, तथा पद्मोद्भवस्य पुत्त्रबहुत्वाभावादिति।

अहन्तु 'तं यथावस्थितम् अश्मकं नयेन (१४) एव उन्मूल्य बालमेनं पित्र्ये पदे प्रतिष्ठापयेयम्' इति प्रतिज्ञाय 'कथमस्य एनां क्षुधं क्षपयेयम् ?' इति अचिन्तयम्। तावत् आपतितौ च कस्यापि व्याधस्य त्रीन् इषून् अतीत्य (१५) द्वौ मृगौ स च व्याधः। तस्य हस्तात् अवशिष्टमिषुद्वयं कोदण्डञ्च आक्षिप्य (१६) अवधिषम्। एकश्च सपत्राकृतः अन्यश्च निष्पत्राकृतः (१७) अपतत्। तयोः एकं मृगं दत्त्वा मृगयवे (१८) अन्यस्य अपलोमत्वचः क्लोमापोह्य निष्कुलाकृत्य विकृत्य (१९) उर्वस्थिग्रीवादीनि शूलाकृत्य (२०) दावाङ्गारेषु, (२१) तप्तेन आमिषेण (२२) तयोः आत्मनः (२३)

(१४) यथावस्थितं नीतिमार्गस्थितम्। अश्मकम् अश्मकेन्द्रम्। नयेन नीतिमार्गेण।

(१५) अतीत्य अतिक्रम्य।

(१६) कोदण्डं धनुः। आक्षिप्य आकृष्य।

(१७) सपत्राकृतः सह पत्रेण पक्षेण इति सपत्रः, तथाकृतः सपुङ्खशरप्रवेशनेनातिव्यथितः कृतः, [ "सपत्र-निष्पत्रादतिव्यथने" ( ५।४।६१ पा० ) इति डाच् प्रत्ययान्तः ]। निष्पत्राकृतः तद्भिन्नो विद्धः, सपुङ्खस्य शरस्य अपरपार्श्वतो निर्गमनेनातिव्यथितः कृतः।

(१८) मृगयवे व्याधाय।

(१९) अपलोमत्वचः अपगतलोमचर्मणः। क्लोम तिलकं, पिपासास्थानम् इत्यर्थः, [ "अधस्तु दक्षिणे भागे हृदयात् क्लोम तिष्ठति। जलवाहिशिरामूलं तृष्णाच्छादनकृन्मतम्॥" इति भावप्रकाशवचनात् ) अपोह्य निःसार्य। निष्कुलाकृत्य निर्गतं कुलम् अन्तरवयवानां समूहः यस्मात् तथा कृत्वा, शिरास्नाय्वादीनि अभ्यन्तरात् निष्कोष्य इत्यर्थः, [ "निष्कुलान्निष्कोषणे" (५।४।६२ पा०) इति डाच् ]। विकृत्य विच्छिद्य।

(२०) शूलाकृत्य शूलेन पाचयित्वा, शूलवेधनेन दग्ध्वा पाकं निष्पाद्येत्यर्थः। [ "शूलात् पाके" ( ५।४।६५ पा० ) इति डाच् ]।

(२१) दावाङ्गारेषु वनानलेषु।

(२२) तप्तेन उष्णेन। आमिषेण मांसेन।

(२३) तयोः बालक-मातामहयोः। आत्मनः मम।

च सुधम् अत्यतार्षम्। (२४) एतस्मिन् कर्मणि मत्कौठवेन (२५) अतिहृष्टं किरातम् अस्मि पृष्टवान्—'अपि जानासि माहिष्मतीवृत्तान्तम् ?' इति। असौ आचष्ट—'तत्र व्याघ्रत्वचो हतीश्च (२६) विक्रीय अद्य एवागतः, किं न जानामि ? प्रचण्डवर्मा नाम चण्डवर्मानुजो मित्रवर्मदुहितरं मञ्जुवादिनीं विलिप्सुः अभ्येति, (२७) तेनोत्सवोत्तरा (२८) पुरी' इति।

अथ कर्णे जीर्णम् (२९) अब्रवं—'धूर्तो मित्रवर्मा दुहितरि सम्यक् प्रतिपत्त्या (३०) मातरं विश्वास्य तन्मुखेन प्रत्याकृष्य (३१) बालकं जिघांसति। तत् प्रतिगत्य कुशलम् अस्य महात्मानो देव्यै रहो (३२) निवेद्य पुनः 'कुमारः शार्दूलभक्षितः' इति प्रकाशम् आक्रोशनं (३३) कार्य्यम्। स दुर्मतिः अन्तःप्रीतो बहिर्दुःखं दर्शयन् देवीम् अनुनेष्यति। पुनः तया त्वन्मुखेन स वाच्यः,—'यदपेक्षया (३४) त्वन्मतम्

(२४) अत्यतार्षं अपारयमित्यर्थः; "अचतार्षम्" इति पाठे—अतिदृप्ताकार्षम।

(२५) मत्कौलवेन मम दास्येनेत्यर्थः।

(२६) व्याघ्रत्वचः व्याघ्रचर्माणि। हतीः चर्मपुटकानि।

(२७) विलिप्सुः विशेषेण लब्धुमिच्छुः। "विलुप्सुः" इति पाठस्तु चिन्त्यः। अभ्येति आगच्छति।

(२८) उत्सवोत्तरा उत्सवभूयिष्ठा।

(२९) जीर्णं वृद्धम।

(३०) दुहितरि मञ्जुवादिन्यामित्यर्थः। सम्यक् प्रतिपत्त्या यथायथं कर्त्तव्यतान्वानेन, स्नेहप्रदर्शनेनेत्यर्थः।

(३१) प्रत्याकृष्य प्रत्यानीय।

(३२) रहः निर्जने।

(३३) आक्रोशनम् उच्चैः रोदनम।

(३४) यदपेक्षया यस्य तनयस्य, अपेक्षया अनुरोधेन।

अत्यक्रमिषं, (३५) सोऽपि बालः पापेन मे परलोकम् अगात्। अद्य तु त्वदादेशकारिण्येवाहम्' इति। स तथोक्तः प्रीतिं प्रतिपद्य अभिपत्स्यते। (३६) पुनः अनेन वत्सनाभनाम्ना (३७) महाविषेण संयोज्य (३८) तोयं, तत्र मालां मज्जयित्वा तया स (३९) वक्षसि मुखे च हन्तव्यः, 'स एव अयमसिप्रहारः पापीयसस्तव भवतु, यद्यस्मि पतिव्रता।' पुनः अनेन अगदेन सङ्क्रमिते (४०) अम्भसि तां मालां मज्जयित्वा स्वदुहित्रे (४१) देया। मृते तु तस्मिंस्तस्यामपि निर्विकारायां (४२) सत्यां 'सती'त्येव एनां प्रकृतयोऽनुवर्त्तिष्यन्ते। (४३) पुनः प्रचण्डवर्मणे सन्देश्यम् (४४)—'अनाथकम् (४५) इदं राज्यम्, अनेन (४६) एव सह बालिका इयं स्वीकर्त्तव्या' (४७) इति। तावत (४८) आवां

(३५) अत्यक्रमिषम् अतिक्रान्तवती।

(३६) प्रतिपद्य प्राप्य। अभिपत्स्यते समीपमागमिष्यति, त्वां सम्भोक्तुमिति शेषः।

(३७) वत्सनाभनाम्ना वत्सनाभाख्येन।

(३८) संयोज्य मिश्रयित्वा।

(३९) तया मालया। स मित्रवर्मा।

(४०) अनेन मद्दत्तेन एतेन। अगदेन सञ्जीवनाख्येन विषनाशकेन औषध-विशेषेण, ("सञ्जीवनं त्वगदकम्" इति वैजयन्ती)। सङ्क्रमिते सम्मिश्रिते।

(४१) स्वदुहित्रे निजकन्यायै मञ्जुवादिन्यै।

(४२) तस्मिन् मित्रवर्मणि। तस्यां दुहितरि मञ्जुवादिन्याम्। निर्विकारायां विकारशून्यायाम्, अविकृतभावेन जीवितायामित्यर्थः।

(४३) अनुवर्त्तिष्यन्ते अनुसरिष्यन्ति।

(४४) सन्देश्यं वाचिकं प्रेषणीयम्।

(४५) अनाथकम् अराजकम्; "अनायकम्" इति पाठान्तरम्।

(४६) अनेन राज्येन।

(४७) बालिका मञ्जुवादिनी, स्वीकर्त्तव्या परिणयेन ग्रहीतव्या, त्वयेति शेषः।

कापालिकवेशच्छन्नौ (४९) देव्यैव दीयमानभिक्षौ पुरो बहिः उपश्मशानं (५०) वत्स्यावः। पुनः आर्यप्रायान् (५१) पौरवृद्धान् आप्तांश्च मन्त्रिवृद्धान् एकान्ते ब्रवीतु देवी— 'स्वप्नेऽद्य मे देव्या विन्ध्यवासिन्या कृतः प्रसादः, 'अद्यारभ्य चतुर्थेऽहनि प्रचण्डवर्मा मरिष्यति। पञ्चमेऽहनि रेवातटवर्त्तिनि मद्भवने परीक्ष्य वैजन्यं (५२) जनेषु निर्गतेषु कपाटम् उद्घाट्य त्वत्सुतेन सह कोऽपि द्विजकुमारो निर्यास्यति। स राज्यम् इदमनुपाल्य बालन्ते प्रतिष्ठापयिष्यति। स खलु बालो मया व्याघ्रीरूपया तिरस्कृत्य (५३) स्थापितः। सा च इयं वत्सा मञ्जुवादिनी तस्य द्विजातिदारकस्य दारत्वेन (५४) एव कल्पिता' इति। तदेतत् अतिरहस्यं युष्मासु एव गुप्तं तिष्ठतु, यावदेतत् उपपत्स्यते' (५५) इति।

स (५६) साम्प्रतम् अतिप्रीतः प्रयातः। अथैवायं यथाचिन्तितम् अनुष्ठितोऽभूत्। प्रतिदिशञ्च लोकवादः प्रासर्पत् (५७)—'अहो माहात्म्यं पतिव्रतानाम्!! असि-

(४८) तावत् तदानीम्।

(४९) कापालिकेति।—कापालिकास्तान्त्रिकव्रतपराः, तस्य वेशेन छन्नौ तिरोहितौ।

(५०) उपश्मशानं श्मशानसमीपे, (सामीप्येऽव्ययीभावः)।

(५१) आर्य्यप्रायान् साधुप्रायान्।

(५२) मद्भवने मदागारे। परीक्ष्य प्रमाणेन निश्चित्य। वैजन्यं विजनत्वम्।

(५३) तिरस्कृत्य आच्छाद्य, गोपायित्वेत्यर्थः।

(५४) द्विजातिदारकस्य द्विजबालकस्य। दारत्वेन भार्य्यात्वेन।

(५५) उपपत्स्यते संवर्त्स्यति।

(५६) स हंसः।

(५७) प्रासर्पत् प्रासरत्।

प्रहार एव हि स मालाप्रहारः तस्मिन् जातः, न प्रथमम् उपधियुक्तम् (५८) एतत् कर्मेति वक्तुं, यतस्तदेव दत्तं दाम दुहितुः स्तनमण्डनम् (५९) एव तस्यै जातं, न मृत्युः। योऽस्याः पतिव्रतायाः आसनम् अतिवर्त्तेत, स भस्मैव भवेत्' इति।

अथ महाव्रतिवेशेन मां च पुत्रं च भिक्षायै प्रविष्टौ दृष्ट्वा प्रस्नुतस्तनी प्रत्युत्थाय हर्षाकुलम् अब्रवीत्—'भगवन्! अयम् अञ्जलिः, अनाथोऽयं जनोऽनुगृह्यताम्, अस्ति मम एकः स्वप्नः, स किं सत्यः? न वा?' इति। मया उक्तं—'फलमस्य अद्यैव द्रक्ष्यसि' इति। 'यदि एवं, बहु भागधेयम् अस्या वो दास्याः, स खलु अस्याः सानाथ्यशंसी (६०) स्वप्नः' इति मद्दर्शनरागबद्धसाध्वसां (६१) मञ्जुवादिनीं प्रणमय्य भूयोऽपि सा हर्षगर्भम् अब्रूत—'तच्चाविमथ्या, सोऽयं युष्मदीयो बालकपाली श्वो (६२) मया निरोद्धव्यः' इति। मया अपि सस्मितं मञ्जुवादिनीरागलीनदृष्टिलीढधैर्य्येण (६३) 'एवमस्तु' इति लब्धभिक्षो नालीजङ्घम् आकार्य्य (६४) निर्गत्य

(५८) उपधियुक्तं कूटयुक्तम्।

(५९) स्तनमण्डनं स्तनयोर्भूषणम्।

(६०) सानाथ्यशंसी सह नाथेन वर्त्तमाना सनाथा सपतिका, तस्या भावः सानाथ्यं पतिलाभः, तत् शंसतीति तथाभूतः, सनाथतासूचकः।

(६१) मद्दर्शनेति।—मम दर्शनेन यः रागः अनुरागः, तेन बद्धं जातं, साध्वसं यस्यास्तथाभूता ताम्।

(६२) बालकपाली बालकपती, कुमारभिक्षुक इत्यर्थः। श्वः आगामिनि दिवसे इत्यर्थः।

(६३) मञ्जुवादिनीति।—मञ्जुवादिन्याः रागेण प्रेमावेशेन, लीना संसक्ता, या दृष्टिः, तया लीढं कवलितं, धैर्य्यं यस्य तादृशेन; "रागलीनदृष्टि" इति पाठे—रागेण अनुरागेण, लीना मग्ना, या दृष्टिः तया।

(६४) आकार्य्य आहूय।

ततश्च तं (६५) च अनुयान्तं शनैः अपृच्छम्—'क्व असौ अल्पायुः प्रश्रितः प्रचण्डवर्मा ?' इति। सोऽब्रूत—'राज्यमिदं ममेति अपास्तशङ्को (६६) राजास्थानमण्डपे (६७) एव तिष्ठति उपास्यमानः (६८) कुशीलवैः' (६९) इति। 'यदि एवमुद्याने तिष्ठ' इति तं जरन्तम् आदिश्य तत्प्राकारैकपार्श्वे (७०) क्वचिच्छून्यमठिकायां मात्राः समवताय्य (७१) तद्गणानियुक्तराजपुत्रः कृतकुशीलववेशलीलः प्रचण्डवर्माणम् एत्यान्वरञ्जयम्। अनुरञ्जितातपे तु समये (७२) जनसमाजज्ञानोपयोगीनि संगृह्य (७३) नृत्यगीतनाना-वादितादि-हस्तलङ्घनगाम् (७४) ऊर्ध्वपादालातपादापीडस्रांशुक-

(६५) तं नालीजङ्घम्।

(६६) अपास्तशङ्कः निःशङ्कः।

(६७) राजास्थानमण्डपे राजसभागृहे।

(६८) उपास्यमानः सेव्यमानः।

(६९) कुशीलवैः चारणैः, ("चारणास्तु कुशीलवाः" इत्यमरः)।

(७०) जरन्तं वृद्धमित्यर्थः। तदिति।—तस्य सभामण्डपस्य, प्राकारैकपार्श्वे प्राचीरैकभागे।

(७१) मात्राः परिच्छदान्, कापालिकवेशोपयुक्ता इत्यर्थः, ("मात्रा परिच्छदेऽल्पेऽपि प्रकृतौ कर्णभूषणे" इति वैजयन्ती)। समवताय्य अवतारणीय।

(७२) अनुरञ्जितेति।—अनुरञ्जितः रक्तीभूतः, आतपः सूर्य्यालोकः यस्मिन् तादृशे, समये दिवावसानकाले इत्यर्थः।

(७३) जनेति।—जनसमाजस्य लोकसङ्घातस्य, ज्ञानोपयोगीनि ज्ञानविषयीभूतानि, चारणानीति शेषः, यथा ते तदभिप्रायं जानन्ति तदुपयोगिव्यापारानित्यर्थः; संगृह्य समाहृत्य, गीतादिकमित्यर्थः।

(७४) नृत्येति।—नृत्यं नर्त्तनं, गीतं गानं, नानावादितं विविधवीणादिवाद्यादि-प्रभेदः, तदादिभिः तत्प्रभृतिभिः च, हस्तलङ्घनम् हस्तकौशलं द्रुतक्रमसारणम्।

(७५) ऊर्ध्वेति।—ऊर्ध्वपादं "कराभ्यामवनौ स्पृष्ट्वा भूमिं व्योमनि संस्पृशः उत्तानीकृत्य चरणावूर्ध्वपादं तदुच्यते।" अलातचक्रम्, पादापीडम् "उत्क्षिप्य

मकरलङ्घनादीनि ( ७५ ) मत्स्योद्वर्तनादीनि ( ७६ ) च करणानि, ( ७७ ) पुनः आदायादाय आसन्नवर्तिनां छुरिकाः ताभिः ( ७८ ) उपाहितवर्मा ( ७९ ) चित्रदुष्कराणि करणानि (८०) श्येनपातोत्क्रोशपातादीनि (८१) दर्शयन् विंशति-चापान्तरालावस्थितस्य ( ८२ ) प्रचण्डवर्मणः छुरिकया एकया प्रत्युरसं प्रहृत्य (८३) 'जीव्यात् (८४) वर्षसहस्रं वसन्तभानुः' इति अभिगर्जन् मल्लाश्रम उत्क्रमितुम् उद्यतासिः (८५) कस्यापि

---

चरणमन्यं कृत्वैव कुञ्चितम्। नृत्यत्यनुमतं तिर्यक् तदलातकमेव च ॥" इत्युक्तलक्षणं, ते आपीडौ भूषणे यस्य तादृशं क्रीडनमित्यर्थः, हस्तिक-मकरलङ्घनं हस्तिक-मकरयोः प्रचारादिवत् क्रीडाविशेष इत्यर्थः, एवमादीनि।

( ७६ ) मत्स्योद्वर्तनादीनि मत्स्यवदुल्लुण्ठनादीनि।

( ७७ ) करणानि क्रियाः, चेष्टाविशेषानित्यर्थः ; एवमुत्तरत्र।

( ७८ ) आदाय आदाय गृहीत्वा गृहीत्वा, एकवारं गृहीत्वा पुनस्तेभ्यो दत्त्वा पुनर्गृहीत्वेत्यर्थः, क्रीडनप्रकार एव इति बोध्यम्। छुरिकाः असिकाः। ताभिः छुरिकाभिः।

( ७९ ) उपाहितवर्मा संयुक्तदेहः, ( "वर्म विग्रहः। कायो देहः" इत्यमरः )।

( ८० ) चित्रदुष्कराणि चित्राणि आश्चर्याणि, दुष्कराणि अन्यैः दुःसाध्यानि। करणानि व्यापारान्।

( ८१ ) श्येनपातेति।—श्येनः पक्षिविशेषः, तस्य पातः "परिक्रम्याम्बरीक्षेषु सम्प्राप्योर्ध्वमदृश्यताम्। आकस्मिकाभिपातेन श्येनपात उदीरितः॥" इत्युक्तलक्षणं पतनम्, उत्क्रोशः कुररपक्षी, ( "उत्क्रोश-कुररौ समौ" इत्यमरः ) "कांकटे पाखी" इति भाषा, तस्य पातः पतनविशेषः, तत्प्रभृतीनि।

( ८२ ) विंशतीति।—विंशतिचापं विंशतिधनुः, अशीतिहस्तप्रमाणम् इत्यर्थः, अन्तरालं व्यवधानं, तत्रावस्थितस्य।

( ८३ ) प्रत्युरसम् उरसीति प्रत्युरसं, ( विभक्त्यर्थे अव्ययीभावेऽच्-समासान्तः ) वक्षसि। प्रहृत्य आहत्येत्यर्थः।

( ८४ ) जीव्यात् जीवतु।

( ८५ ) मल्लाश्रमं मल्लशरीरम्। उत्क्रमितुं लङ्घितुम्, आक्रमितुमित्यर्थः। उद्यतासिः उद्यतखड्गः।

चारभटस्य (८६) पीवरांसबाहुशिखरम् (८७) आक्रम्य तावता एव तं विचेतीकुर्वन् (८८) आकुलस्य लोकम् उच्चकू-कुर्वन् (८९) द्विपुरुषोच्छ्रितं (९०) प्राकारम् अत्यलङ्घयम्। अवप्लुत्य (९१) च उपवने मदनुपातिनाम (९२) 'एष पन्था दृश्यतां' इति ब्रुवाण एव नालीजङ्घसमीकृतसैकतास्पृष्टपाद-न्यासया (९३) तमालवीथ्या च अनुप्राकारं (९४) प्राचा (९५) प्रतिप्रधावितः पुनः अवाचा (९६) उच्चितेष्टकचितत्वात् (९७) अलक्ष्यपातेन (९८) प्रद्रुत्य (९९) लङ्घितप्राकारवप्र-खात-वलयः (१००) तस्यां शून्यमठिकायां तूर्णमेव प्रविश्य प्रतिमुक्त-

(८६) चारभटस्य चरतीति चरः, चर एव चारः, (अण्) तत्र स्वार्थ इ-त्यर्थः, स चासौ भटः वीरश्चेति तथोक्तस्य।

(८७) पीवरेति।—पीवरः मांसलः, अंसः स्कन्धो यत्र तादृशं, बाहुशिखरं भुजोपरिभागम्।

(८८) तं भटम्। विचेतीकुर्वन् मोहयन्नित्यर्थः।

(८९) आकुलं सम्भ्रमान्वितम्। उच्चकूकुर्वन् ऊर्ध्वदृष्टीकुर्वन्।

(९०) द्विपुरुषोच्छ्रितं पुरुषद्वयसमानोन्नतम्।

(९१) अवप्लुत्य अधो लम्फयित्वा।

(९२) मदनुपातिनां मामनुधावताम्।

(९३) नालीजङ्घेति।—नालीजङ्घेन समीकृतः समतामापादितः, अत एव सैकते वालुकामयस्थाने, अस्पृष्टः अलाञ्छित इत्यर्थः, पादन्यासः चरणविन्यासचिह्न-मित्यर्थः यस्यां तथाभूतया, नालीजङ्घेन चरणचिह्नप्रोञ्छनादिति भावः।

(९४) अनुप्राकारं प्राकारस्य समीपे, (विभक्त्यर्थे अव्ययीभावः)।

(९५) प्राचा पूर्वदिशा।

(९६) अवाचा दक्षिणया दिशा।

(९७) उच्चितेति।—उच्चितैः राशीकृततया सञ्चितैः, इष्टकैः चितत्वात् व्याप्तत्वात्, आच्छादितत्वादित्यर्थः।

(९८) अलक्ष्येति।—अलक्ष्यः अदृश्यः, पातः प्रधावनं तेन।

(९९) प्रद्रुत्य धावित्वा।

(१००) लङ्घितेति।—लङ्घितम् अतिक्रान्तं, प्राकारवप्रस्य प्राचीरभूतमृत्तिका-स्तूपस्य, खातवलयं परिखावेष्टनं येन तथाभूतः।

पूर्ववेशः (१) सह कुमारेण (२) मत्कर्मतुमुलराजद्वारदुःखलब्धवर्त्मा (३) श्मशानोद्देशम् अभ्यगाम्। प्रागेव तस्मिन् (४) दुर्गागृहे प्रतिमाऽधिष्ठाने एव (५) मया कृतं भग्नपार्श्वस्थैर्यस्थूलप्रस्तरस्थगितबाह्यद्वारं (६) बिलम्। अथ गलति (७) मध्यरात्रे वर्षवरोपनीतमहार्हरत्नभूषणपट्टनिवसनौ (८) तत् बिलमावां प्रविश्य तूष्णीम् (९) अतिष्ठाव।

देवी तु पूर्वेद्युः एव यथार्हम् अग्निसंस्कारं मालवाय (१०) दत्त्वा प्रचण्डवर्मणे, (११) चण्डवर्मणे च ताम् अवस्थाम्

(१) प्रतिमुक्तपूर्ववेशः प्रतिमुक्तः पिनद्धः, परिहित इत्यर्थः, ("आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत्" इत्यमरः) पूर्ववेशः येन तादृशः, गृहीतपूर्वकापालिकपरिच्छद इत्यर्थः।

(२) कुमारेण राजपुत्रेण।

(३) मदिति —मम कर्मणा पूर्वोक्तव्यापारेण, तुमुलं सङ्कुलं, यत् राजद्वारं, तस्मिन् दुःखेन लब्धं प्राप्तं, वर्त्म पन्था येन तादृशः।

(४) तस्मिन् श्मशाने।

(५) प्रतिमाऽधिष्ठाने एव प्रतिमायाः स्थाने एव।

(६) भग्नेति।—भग्नं त्रुटितं, पार्श्वयोः पार्श्वाभ्यां वा स्थैर्यं दार्ढ्यं यस्य तादृशेन, स्थूलेन बृहता, प्रस्तरेण पाषाणेन, स्थगितम् आच्छादितं, बाह्यं बहिर्भवं, द्वारं यस्य तादृशम्।

(७) गलति अतिक्रामति।

(८) वर्षवरेति।—वर्षवरेण "ये त्वल्पसत्त्वाः प्रथममात्मीयाः स्त्रीस्वभाविनः। जात्या न दुष्टाः कार्येषु ते वै वर्षवराः स्मृताः॥" इत्युक्तलक्षणेन राज्ञामन्तःपुररक्षकेण षण्ढेन, "खोजा" इति भाषा; ("षण्ढो वर्षवरः" इत्यमरः। वर्षे रेतोवर्षणं वृणोति वृ-अच्) महादेवीप्रेषितेनेति भावः, उपनीतानि उपस्थापितानि, आनीतानीत्यर्थः, महार्हाणि महामूल्यानि, रत्नभूषणानि रत्नखचितालङ्काराः, पट्टनिवसनानि पट्टवस्त्राणि च ययोः तथाभूतौ, परिहिततत्तदलङ्कारवसनावित्यर्थः।

(९) तूष्णीं मौनभावेनेत्यर्थः।

(१०) मालवाय मालवदेशीयाय।

(११) प्रचण्डवर्मणे चण्डवर्मानुजाय।

अश्मकेन्द्रोपधिकृताम् एव सान्दिश्य, (१२) उत्तरेद्युः प्रत्यूष एव पूर्वसङ्केतितपौरामात्यसामन्तवृद्धैः सह अभ्येत्य भगवतीम् अर्चयित्वा सर्वजनप्रत्यक्षं परीक्षितकुक्षिवैजन्यं (१३) तद्भवनं विधाय दत्तदृष्टिः सह जनेन स्थित्वा पटीयांसं (१४) पटहशब्दम् अकारयत्। अणुतररन्ध्रप्रविष्टेन (१५) तेन नादेन अहं दत्तसङ्केतः (१६) शिरसा एव उत्क्षिप्य सप्रतिमं लोहपादपीठम् (१७) अंसलपुरुषप्रयत्नदुश्चलम् (१८) उभयकरविधृतम् (१९) एकपार्श्वम् एकतो निवेश्य निरगमं, निरगमयं च कुमारम्। अथ यथापूर्वम् अर्चयित्वा दुर्गाम् उद्घाटितकपाटः प्रत्यक्षीभूय प्रत्ययहृष्टदृष्टीः स्पष्टरोमाञ्चम् उद्यताञ्जलिरूढविस्मयाश्च (२०) प्रणिपतन्तीः प्रकृतीरभ्यधाम् —'इत्थं देवी विन्ध्यवासिनी मन्मुखेन युष्मान् आज्ञापयति,

(१२) तामवस्थां, भ्रातुरिति शेषः। अश्मकेन्द्रस्य वसन्तभानोः, उपधिः कूट-प्रयोगः, तेन कृताम्। सान्दिश्य वाचिकं प्रेष्य।

(१३) परीक्षितेति।—परीक्षितं परिदर्शितं, कुक्षेः अभ्यन्तरस्य, वैजन्यं जनशून्यत्वं यस्य तादृशं, यथा ते कथमपि अस्मदुपधिकृतमेतत् सर्वमिति न विशङ्केयुरिति भावः।

(१४) पटीयांसं महान्तमित्यर्थः।

(१५) अणुतरेति।—अणुतरेण अतिक्षुद्रेण, रन्ध्रेण छिद्रेण, प्रविष्टः तेन।

(१६) दत्तसङ्केतः दर्शितेङ्गितः, ज्ञापितवृत्तान्त इति भावः।

(१७) सप्रतिमं प्रतिमासहितम्। लोहपादपीठं लोहमयचरणासनम्।

(१८) अंसलेति।—अंसलस्य बलवतः, ("बलवान् मांसलोऽंसलः" इत्यमरः) पुरुषस्य प्रयत्नेनापि प्रयासेनापि, दुश्चलं चालयितुमशक्यम्।

(१९) उभयेति।—उभयकराभ्यां विधृतम् अवलम्बितम्।

(२०) उद्यतेति।—उद्यताः अञ्जलयः यासां ताः; रूढः सञ्जातः, विस्मयः आश्चर्यं यासां ताः; उद्यताञ्जलयश्च ताः रूढविस्मयाः उद्यताञ्जलिरूढविस्मयाः तादृशीः, बद्धकरपुटविस्मयान्विता इत्यर्थः।

—'मया सकृपया शार्दूलरूपेण तिरस्कृत्य (२१) अस्य वो दत्तः, तम् एनम् (२२) अद्य प्रभृति मत्पुत्रतया मन्दभागधेय (२३) इति परिगृह्णन्तु भवन्तः।' अपि च दुर्घटकूटकोटिघटना-पाटव-प्रकटशाठ्यनिष्ठुराश्मकघटघट्टनात्मानं (२४) मां मन्यध्व-मस्य (२५) रक्षितारम्; रत्नानिर्वेशः (२६) च अस्य स्वसेयं (२७) सुभ्रूः अभ्यनुज्ञाता मह्यम् आर्य्यया' (२८) इति।

श्रुत्वा एतत् 'अहो! भाग्यवान् भोजवंशो यस्य त्वम् आर्य्यादत्तो (२९) नाथः' इति अप्रीयन्त प्रकृतयः। सा तु वाचाम् अगोचरां (३०) हर्षावस्थाम् अस्पृशत मे श्वश्रूः। तदहरेव च यथावत् अग्राहयत् मञ्जुवादिनीपाणिपल्लवम्। प्रपन्नायाञ्च (३१) यामिन्यां सम्यगेव विलं प्रत्यपूरयम्।

---

(२१) तिरस्कृत्य आच्छाद्य।

(२२) एनं बालकम्।

(२३) मन्देति।—मन्दः अल्पः, क्षीण इत्यर्थः, ("मन्दाल्पापटुनिर्भाग्याः" इत्यमरः) भागधेयो यस्य तादृशः।

(२४) दुर्घटेति।—दुर्घटा दुःसाध्या, या कूटकोटिः कपटसमूहः, तस्याः घटनापाटवेन योजनानैपुण्येन, प्रकटं सुव्यक्तं शाठ्यं धूर्त्तता यस्य तादृशः, निष्ठुरः निर्दयः, यः अश्मकः अश्मकराजः, वसन्तभानुरित्यर्थः, स एव घटः, तस्य घट्टनः विघातनः, विदलन इत्यर्थः, आत्मा स्वरूपं यस्य तथाविधम्।

(२५) मन्यध्वं जानीत, यूयमिति शेषः। अस्य बालकस्य।

(२६) रत्नानिर्वेशः रत्नरूपभृतिः, रत्नरूपवेतनमित्यर्थः, ("निर्वेशो भृतिभोगयोः" इत्यमरः)।

(२७) स्वसा भगिनी। इयं मञ्जुवादिनी।

(२८) आर्य्यया देव्या।

(२९) आर्य्यादत्तः आर्य्यया देव्या दत्तः।

(३०) "वाचामगोचरम्" इति पाठे—क्रियाविशेषणम्; वाचामगोचरं यथा स्यात् तथा इति योजना।

(३१) प्रपन्नायाम् उपस्थितायाम्।

अलब्धरन्ध्रश्च लोको नष्टमुष्टिचिन्तादिकथनैः अभ्युपायान्तर-प्रयुक्तैः (३२) दिव्यांशतामिव मम समर्थयमानो (३३) मदाज्ञां न अत्यवर्त्तत। (३४) राजपुत्रश्च आर्य्यापुत्र (३५) इति प्रभावहेतुः (३६) प्रसिद्धिः आसीत्। तञ्च गुणवति अह्नि भद्राकृतम् उपनाय्य (३७) पुरोहितेन पाठयन्नीतिं राजकार्य्याणि अन्वतिष्ठम्, अचिन्तयञ्च—'राज्यं नाम शक्तित्रयायत्तं, (३८) शक्तयश्च मन्त्रप्रभावोत्साहाः परस्परानुगृहीताः कृत्येषु क्रमन्ते। (३९ मन्त्रेण हि विनिश्चयोऽर्थानां, प्रभावेण प्रारम्भः, (४०) उत्साहेन निर्वह-

(३२) अलब्धरन्ध्रः अप्राप्तच्छिद्र, अदृष्टदेवागारच्छिद्र इत्यर्थः। नष्टेति—नष्टा विलुप्ता, या मुष्टिचिन्ता चौर्य्यचिन्ता इत्यर्थः, तदादीनां कथनैः। अभ्युपायेति।—अभ्युपायान्तराणाम् उपायविशेषाणां, प्रयुक्तैः प्रयोगैः, प्रयोगहेतुभिरित्यर्थः, एतादृशः उपायः कल्पितो देशेषु येन लोकाः सुखेन चौर्य्यादिचिन्तां विना कालं नयन्ति, तथाकृते च सत्य एवायं देवांशः, न चेत् अस्माकं सहसा एतादृशं सुभिक्षमस्य शासने कथं स्यादिति भावः।

(३३) दिव्यांशतां दिव्यपुरुषांशसम्भवत्वम्। समर्थयमानः सम्भावयन्।

(३४) अत्यवर्त्तत अत्यक्रामत।

(३५) आर्य्यापुत्रः देवीपुत्रः।

(३६) प्रभावहेतुः प्रतापकारणम्।

(३७) तं राजपुत्रम्। गुणवति शुभे। भद्राकृतं मुण्डितमित्यर्थः, ["भद्राच्चेति वक्तव्यम्" (वा०) इति डाजन्त-भद्राकृतशब्दोऽत्र प्रयुक्तः। "भद्राकृतिम्" इति पाठे—सौम्याकृतिमित्यर्थः]। उपनाय्य उपनयनविधिना संस्कार्य्य।

(३८) शक्तित्रयायत्तं शक्तित्रयाधीनम्।

(३९) परस्परानुगृहीताः अन्योऽन्यसहकृताः। कृत्येषु कार्य्येषु, सन्धिविग्रहादिषु इति यावत्। क्रमन्ते स्फीता भवन्ति, प्रभवन्ति इत्यर्थः, ["वृत्तिसर्गतायनेषु क्रमः" (१।३।३८ पा०) इति तङ्]।

(४०) मन्त्रेण मन्त्रणया। विनिश्चयः अवधारणम्। अर्थानां कर्त्तव्यवस्तूनाम्। प्रभावेण प्रभुशक्त्या। प्रारम्भः प्रवर्त्तनं, कार्य्येष्विति शेषः।

याम् । (४१) अतः पञ्चाङ्गमन्त्रमूलो (४२) द्विरूपप्रभाव-स्कन्धः (४३) चतुर्गुणोत्साहविटपो (४४) द्विसप्ततिप्रकृति-पत्रः (४५) षड्गुणकिसलयः (४६) शक्तिसिद्धिपुष्पफलश्च (४७)

---

(४१) उत्साहेन उत्साहशक्त्या । निर्वहणं सिद्धिलाभः ।

(४२) पञ्चाङ्गेति ।—पञ्च सहायादयः, अङ्गानि यस्य तादृशः, मन्त्रः मूलम् अङ्घ्रिः यस्य तादृशः ; पञ्चाङ्गान्याह कामन्दकः,—"सहायाः साधनोपायाः विभागो देशकालयोः । विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते ॥" इति ।

(४३) द्विरूपेति ।—द्विरूपः द्विगुणः द्विविधो वा, कोष-दण्डोभयजनितत्वादिति भावः, प्रभावः स्कन्धः काण्ड इव यस्य तथाभूतः, ("स प्रभावः प्रतापश्च यत्तेजः कोषदण्डजम्" इत्यमरः)।

(४४) चतुर्गुणेति ।—चतुर्गुणाः चतुरात्मकाः, चतुर्दिक्षु प्रसृता इति भावः, उत्साहाः विक्रमबलानि एव, विटपाः शाखा यस्य तथाविधः ; यद्वा—कार्यारम्भेषु स्थिरतरः अध्यवसायः उत्साहः, तस्य साम-दान-भेद-दण्डरूपोपायचतुष्टयसाध्यत्वात् चतुर्गुणत्वं, स विटपः शाखेव यस्य सः ।

(४५) द्विसप्ततीति ।—द्विसप्ततिः द्वाभ्यामधिका सप्ततिः, तत्सङ्ख्यका इत्यर्थः, स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलपौरश्रेणिरूपाणामष्टानां राज्याङ्गानां मध्ये स्वामिनो नायकत्वेन परित्यागात् सुहृदश्च द्वादशराजचक्रमध्यपातित्वात् परशेषात् षट्कत्व, तस्य च द्वादशराजचक्रविषयकत्वात् द्विसप्ततित्वं प्रकृतीनाम् । द्वादश राजानश्च—"अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम् । तथारिमित्रमित्रञ्च विजिगीषोः पुरःसराः ॥ पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरः । आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः ॥" विजिगीषोः पुरःसराः पञ्च, पृष्ठस्थाः पार्ष्णिग्राहः आक्रन्दः पार्ष्णिग्राहासारः आक्रन्दा-सारः इति चत्वारः, विजिगीषुर्दशमः । "अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः । अनुग्रहे संहतयोः समर्थो व्यस्तयोर्वधे ॥ मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः ॥" इति ; तथा च द्वादशभिः षट्के गुणिते द्विसप्ततित्वं सम्पद्यते ; एवञ्च द्विसप्ततिः प्रकृतयः पत्राणीव यस्य तादृशः ।

(४६) षडिति ।—षट् गुणाः सन्धिविग्रहयानासनद्वैधसमाश्रयाः, किसलयाः पल्लवाः इव यस्य तथाविधः ।

(४७) शक्तीति ।—शक्तयः प्रभावोत्साहमन्त्रजाः तिस्रः, सिद्धयश्च शक्तित्रय-साध्याः भूहिरण्यसुहृत्प्राप्तिरूपास्तिस्रः, यथाक्रमं पुष्पाणि फलानि च इव यस्य तथोक्तः,

नयवनस्पतिर्नेतुः (४८) उपकरोति। स च अयम् अनेकाधिकारवत्त्वात् असहायेन (४९) दुरुपजीव्यः। (५०) यस्तु अयमार्य्यकेतुर्नाम मित्रवर्ममन्त्री, स कोशलाभिजनत्वात् (५१) कुमारमातृपक्षो मन्त्रिगुणैश्च युक्तः, तन्मतिम् अवमत्यैव ध्वस्तो मित्रवर्मा, स चेत् लब्धः पेशलः' (५२) इति। अथ नालीजङ्घं रहसि अशिक्षयं—'तात! आर्य्यमार्य्यकेतुम् एकान्ते ब्रूहि, 'को न्वेष मायापुरुषः, (५३) य इमां राज्यलक्ष्मीम् अनुभवति? (५४) स च अयम् अस्मद्बालो भुजङ्गेन (५५) अमुना परिगृहीतः (५६) किमुपेक्ष्यते? (५७)

---

तत्र च शक्तीनां सिद्धिरूपफलहेतुत्वात् पुष्पत्वं, शक्तिहेतुकत्वाच्च सिद्धीनां फलत्वमिति बोध्यं, शक्तिपुष्पः सिद्धिफल इत्यर्थः, षड्गुणाः शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः इति भावः।

(४८) नयवनस्पतिः नीतिवृक्षः। नेतुर्नायकस्य।

(४९) अनेकाधिकारवत्त्वात् बह्वाश्रयत्वात्, बहुसाधनत्वादित्यर्थः। असहायेन निःसहायेन।

(५०) दुरुपजीव्यः दुःखेन उपजीवनीयः, रक्षणीय इत्यर्थः; "दुरुपजीवः" इति पाठे—दुःखेन उपजीवः उपजीवनं, प्राणनम् इत्यर्थः, यस्य स तथाभूतः, नयमार्गेण रक्षणमतिदुःसाध्यमिति भावः।

(५१) कोशलाभिजनत्वात् कोशला जनपदाः, अभिजनः जन्मभूमिः यस्य तस्य भावः तस्मात्।

(५२) तन्मतिं तस्य प्रज्ञाम्। अवमत्यैव अवज्ञायैव, तन्निषेधमविगणय्य देवीं प्रति धर्षणाभिलाषादिति भावः। ध्वस्तः ध्वंसं गतः। स आर्य्यकेतुः। पेशलः चारुः, सुधर्मित्यर्थः, भवेदिति शेषः।

(५३) मायापुरुषः कापटिकः।

(५४) अनुभवति भुङ्क्ते।

(५५) अस्मद्बालः अस्माकं राजकुमारः। भुजङ्गेन विटेन, धूर्त्तेनेत्यर्थः, ("भुजङ्गौ विट-सर्पयोः" इत्यमरः)।

(५६) परिगृहीतः आविष्टः, आक्रान्त इत्यर्थः, अधीनीकृत इति यावत्।

मुष्येत वा ?' इति। स 'यत् वदिष्यति तदस्मि बोध्यः' इति। सोऽन्यदैवं माम् आवेदयत्—'मुहुरुपास्य प्राभृतैः, प्रवर्त्य (५८) चित्राः कथाः, संवाह्य (५९) पाणिपादम्, अतिविश्रम्भदत्तक्षणं (६०) तम् अप्राक्षं त्वदुपदिष्टेन नयेन। सोऽपि एवम् अकथयत्—'भद्र! मैवं वादीः, अभिजनस्य शुद्धिदर्शनम् (६१) असाधारणं बुद्धिनैपुण्यम्, (६२) अतिमानुषं प्राणबलम्, (६३) अपरिमाणम् औदार्य्यम्, (६४) अत्याश्चर्य्यम् अस्त्रकौशलम्, (६५) अनल्पं शिल्पज्ञानम्, (६६) अनुग्रहार्द्रं चेतः, तेजश्चाप्यविषह्यमभ्यमित्रीणम् (६७) इति। अस्मिन्नेव

(५७) उद्वीर्य्येण मुष्येत।

(५८) मुहुः पुनः पुनः। उपास्य आराध्य, सेवित्वा इत्यर्थः। प्राभृतैः उपायनैः। प्रवर्त्य प्रस्ताव्य।

(५९) संवाह्य मर्दयित्वा, सेवित्वेति यावत्।

(६०) अतीति।—अतिविश्रम्भेण अतिविश्वासेन, दत्तः क्षणः समयः, अवसरः इत्यर्थः, येन तम्।

(६१) अभिजनस्य अन्वयस्य, कुलस्येत्यर्थः ("सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ" इत्यमरः)। शुद्धिदर्शनं शुद्धेर्निर्मलत्वस्य, दर्शनं दृश्यते अनेनेति दर्शनं ज्ञापकमित्यर्थः।

(६२) असाधारणम् असामान्यम्। बुद्धिनैपुण्यं प्रज्ञापाटवम्।

(६३) अतिमानुषम् अलौकिकम्। प्राणबलं प्राणानां सामर्थ्यम्।

(६४) अपरिमाणम् असीमम्। औदार्य्यं महत्त्वम्।

(६५) अत्याश्चर्य्यम् अद्भुतम्। अस्त्रकौशलम् अस्त्रचालननैपुण्यम्।

(६६) अनल्पं समधिकम्। शिल्पज्ञानं कारुकौशलम्।

(६७) अविषह्यं दुःसहम्; "अपरविषह्यम्" इति पाठे—परैः विषह्यं परविषह्यं, तन्न भवति इत्यपरविषह्यं विपक्षदुःसहम् इति भावः। अभ्यमित्रीणम् अमित्रम् अभिमुखीकृत्य गमनयोग्यं, सामर्थ्येन शत्रूणां सम्मुखं गन्तुमपराङ्मुखम् इत्यर्थः, अकुतोभयम् इति भावः; ("यो गच्छत्यलं विद्विषतः प्रति। सोऽभ्यमित्रोऽभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि" इत्यमरः)।

सन्निपातिनो ( ६८ ) गुणाः, ये अन्यत्र ( ६९ ) एकैकशोऽपि दुर्लभाः। (७०) द्विषताम् एष चिरविल्वद्रुमः, प्रजानान्तु (७१) चन्दनतरुः, तम् उद्धृत्य ( ७२ ) नीतिज्ञम्मन्यम् अश्मकम् इमञ्च राजपुत्रम् अनेन ( ७३ ) पित्र्ये पदे प्रतिष्ठितमेव विद्धि, नात्र संशयः कार्य्यः' इति। तच्चापि श्रुत्वा भूयो भूयश्च उपदाभिः ( ७४ ) विशोध्य ( ७५ ) तं ( ७६ ) मे मतिसहायम् अकरवम्। ततस्तेन (७७) सत्यशौचयुक्तान् (७८) अमात्यान् विविधव्यञ्जनांश्च (७९) गूढपुरुषान् (८०) उदपादयम्। तेभ्यः च उपलभ्य लुब्धसमृद्धम् अत्युत्सिक्तम ( ८१ ) अविधेयप्रायञ्च

( ६८ ) सन्निपातिनः समवायवर्त्तिनः; "सन्निपातिताः" इति पाठे—एकत्र विनिवेशिताः, सङ्घशः संस्थापिता इति यावत्।

( ६९ ) ये गुणाः। अन्यत्र अन्यस्मिन् पुरुषे।

( ७० ) दुर्लभा दुष्प्रापाः।

( ७१ ) चिरविल्वद्रुमः करञ्जवृक्षभेदः, "नाटाकरञ्ज" इति ख्यातः, कण्टक-पूर्णत्वात् तथात्वम्; ("चिरविल्वो नक्तमालः करजश्च करञ्जके" इत्यमरः)। प्रजानां जनानाम्।

( ७२ ) उद्धृत्य उन्मूल्य।

( ७३ ) नीतिज्ञम्मन्यम् आत्मानं नीतिज्ञं मन्यते इति तथोक्तम्। अश्मकं वसन्तभानुम्। अनेनेति हेतौ तृतीया।

( ७४ ) उपदाभिः उपहारैः, उपढौकनैरित्यर्थः, ("उपायनमुपग्राह्यमुपहारस्तथोपदा" इत्यमरः)।

( ७५ ) विशोध्य विशुद्धं कृत्वा इत्यर्थः, सम्परीक्ष्येति यावत्।

( ७६ ) तम् आर्यकेतुम्।

( ७७ ) ततस्तेन तस्य साह्यात्, तत्सहायेन च इत्यर्थः।

( ७८ ) सत्यशौचयुक्तान् सत्यवादिनः निर्लोभांश्चेत्यर्थः।

( ७९ ) विविधव्यञ्जनान् नानालिङ्गधारिण इत्यर्थः।

( ८० ) गूढपुरुषान् गुप्तचरान्।

( ८१ ) अत्युत्सिक्तम् अतिगर्वितम्।

प्रकृतिमण्डलम्, (८२) अलुब्धताम् अभिविख्यापयन्, (८३) धार्मिकत्वम् उद्भावयन्, नास्तिकान् कदर्थयन्, (८४) कण्टकान् विशोधयन्, (८५) अमित्रोपधीरपघ्नन्, (८६) चातुर्वर्ण्यञ्च स्वधर्मकर्मसु (८७) स्थापयन् अभिसमाहरन् (८८) अर्थान्; अर्थमूला हि दण्डविशिष्टकर्मारम्भाः, (८९) न च अन्यत् अस्ति पापिष्ठं तत्र दौर्बल्यादित्याकलय्य योगान् (९०) अन्वतिष्ठं, अचिन्तयञ्च—'सर्वोऽप्यतिशूरः सेवकवर्गो मयि तथाऽनुरक्तो यथाऽऽज्ञया स्वप्राणानपि तृणाय मन्यते। राज्यद्वितय-सैन्यसामग्र्या (९१) च नाहम् अश्मकेशात् (९२) वनन्त-

(८२) आविधेयप्रायं प्रायेण अवशीभूतम्। प्रकृतिमण्डलं प्रजावर्गम्।

(८३) अलुब्धताम् अलोलुपता, स्वस्येति शेषः। अभिविख्यापयन् प्रकटयन्।

(८४) नास्तिकान् नास्ति परलोक इत्यभिमानिनः। कदर्थयन् कुत्सयन्।

(८५) कण्टकान् क्षुद्रान् शत्रून्। विशोधयन् उन्मूलयन्।

(८६) अमित्रेति।—अमित्राणाम् उपधीः कूटप्रयोगान्। अपघ्नन् विफलयन्।

(८७) चातुर्वर्ण्यं ब्राह्मणक्षत्रवैश्यशूद्रानित्यर्थः। स्वधर्मकर्मसु स्वस्ववर्णोचित-धर्मकर्मानुष्ठानेषु।

(८८) अभिसमाहरन् उपार्जयन्; "अभिसमाहरेयम्" इति पाठे—सङ्गृहीतुं शक्नुयामित्यर्थः; [ "शकि लिङ्" (३।३।१७२ पा०) इति लिङ्]।

(८९) अर्थमूला अर्थसाध्या इत्यर्थः; "अर्थानर्थमूला" इति पाठे—अर्थः अनर्थश्च मूलं येषां तादृशाः, तत्र यथानुष्ठाने अर्थः, अयथानुष्ठाने अनर्थ इति भावः। दण्डेति।—दण्डानां विशिष्टकर्मणाञ्च आरम्भाः अनुष्ठानानि।

(९०) तत्र तेषु अर्थेषु। दौर्बल्यात् दुर्बलत्वात्, अल्पतामपेक्ष्य इत्यर्थः। अन्यत् अपरम्। पापिष्ठम् अधिकं पापम्। नास्तीति आकलय्य विविच्य। योगान् उपायान्, अर्थलब्धोपायानित्यर्थः, ("योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु" इत्यमरः) अर्थहीनतापेक्षया दुःखान्तरं नास्तीति भावः।

(९१) राज्यद्वितयेति।—राज्ययोर्द्वितयस्य निजवर्ग-अश्मकवर्गराज्ययोरिति भावः, सैन्यसामग्र्या बलसम्पत्त्या।

(९२) अश्मकेशात् अश्मकेन्द्रात्।

भानोर्न्यूनो नीत्याविष्टश्च ; (९३) अतो वसन्तभानुं पराजित्य विदर्भाधिपतेः अनन्तवर्मणः पुत्रं भास्करवर्माणं पितुः पदे स्थापयितुम् अलमस्मि । 'अयञ्च राजसूनुः भवान्या पुत्रत्वेन परिकल्पितः, अहञ्च अस्य साहाय्ये नियुक्तः' इति सर्वत्र किंवदन्ती सञ्जाताऽस्ति । अद्यापि चैतन्मत्कपटकृत्यं (९४) न केनापि विदितम् । अवस्थाश्च अस्मिन् भास्करवर्मणि राजतनये 'अयमस्मत्स्वामिनोऽनन्तवर्मणः पुत्रो भवान्याः प्रसादात् एतद्राज्यम् अवाप्स्यति' इति बह्वाशा वर्त्तन्ते । अश्मकेशसैन्यं च राजसूनोर्भवानीसाहाय्यं विदित्वा 'देव्याः शक्तेः पुरो न बलवती मानवी शक्तिः' इति अस्माभिर्विग्रहे चलचित्तमिव उपलक्ष्यते । अवन्त्याश्च मौलाः प्रकृतयः प्रथममेव राजसुताभ्युदयाभिलाषिण्यः, इदानीञ्च पुनः मया दानमानाद्यावर्जनेन विश्वासिता विशेषेण राजपुत्रमेव अभिकाङ्क्षन्ति । अश्मकेन्द्रान्तरङ्गाश्च सेवका मदीयैः विश्वास्यतरैः पुरुषैः प्रभूतां प्रीतिम् उत्पाद्य मदाज्ञया रहस्युपजप्ताः (९५) 'यूयम् अस्मन्मित्राणि, अतोऽस्माकं शुभोदर्कं (९६) वचो वाच्यमेव । अत्र भवान्या राजसूनोः साहाय्यकाय विश्रुतं (९७) विश्रुतं (९८) नियुज्य तद्धस्तेन अश्मकेन्द्रस्य वसन्तभानोस्तत्पक्षे स्थित्वा ये च अनेन (९९) सह योत्स्यन्ति तेषामपि अन्तकातिथिभवनं

(९३) नीत्याविष्टः नीतिपरः ।

(९४) मत्कपटकृत्यं मदीयच्छद्मव्यवहारम् ।

(९५) उपजप्ताः भेदिताः ।

(९६) अस्माकम् अस्माभिरुक्तैः । शुभोदर्कं कल्याणोत्तरफलम्, ("उदर्कः फलमुत्तरम्" इत्यमरः) ।

(९७) विश्रुतं विख्यातम् ।

(९८) विश्रुतं मदाख्यम् ।

(९९) अनेन विश्रुतेन, राजसूनुना वा ।

विहितम्। यावत् अश्मकेन्द्रेण स जन्यवृत्तिः (१००) न जातः तावदेनम् अनन्तवर्मतनुजं भास्करवर्माणम् अनुसरिष्यथ। स (१) वीतभयो भूयसीं (२) प्रवृत्तिम् (३) आसाद्य सपरिजनः सुखेन निवत्स्यति, न चेद्भवानीत्रिशूलवध्यो भविष्यति। भवान्या च मयेति आज्ञप्तमस्ति यत् एकवारं सर्वेषां कथय; अतो मया युष्माभिः सह मैत्रीमवबुध्य सर्वेभ्यो गदितम्।' (४) इति आकर्ण्य तेऽश्मकेन्द्रान्तरङ्गभृत्या राजसूनोः भवानीवरं विदित्वा पूर्वमेव भिन्नमनस आसन्; विशेषतश्च मदीयमिति वचनं श्रुत्वा ते सर्वेऽपि मद्वशे समभवन्। एतं सर्वमपि वृत्तान्तम् अवबुध्य अश्मकेशेन व्यचिन्ति—'या राजसूनोर्मौलाः प्रजास्ताः सर्वा अपि एनमेव प्रभुम् अभिलषन्ति। मदीयश्च वाह्य-आभ्यन्तरो भृत्यवर्गो भिन्नमना इव लक्ष्यते। एवं यद्यहं समाम् अवलम्ब्य गृहे एव स्थास्यामि, तत्र उत्पन्नोपजापं (५) स्वराज्यम् अपि परित्रातुं (६) न शक्ष्यामि। अतो यावता भिन्नचित्तेन (७) मदवबोधकं (८) प्रकटयता (९) मल्लेन सह मिथो वचनं (१०) न सञ्जातं, तावतैव

(१००) जन्यवृत्तिर्युद्धव्यापारवान्।
(१) सः यः भास्करवर्मानुसारी भविष्यतीति भावः।
(२) भूयसीं महतीम्।
(३) प्रवृत्तिं वृत्तिं, जीविकामित्यर्थः, ("प्रवृत्तिर्वृत्तिवार्तयोः" इति यादवः)
(४) गदितं कथितम्।
(५) उत्पन्नोपजापं जातभेदम्।
(६) परित्रातुं रक्षितुम्।
(७) भिन्नचित्तेन उपजप्तमनसा।
(८) मदवबोधकं मदीयवार्तादिसूचकं वचनमिति भावः।
(९) प्रकटयता प्रकाशयता।
(१०) मल्लेन मदीयहेरम्बेन। मिथो वचनं परस्परभेदवचनमित्यर्थः।

तेन साकं (११) विग्रहं रचयामि, इत्येवं विहिते (१२) सोऽवश्यं मदग्रे क्षणम् अवस्थास्यते' (१३) इति निश्चित्य अन्यायेन पराराज्याक्रमणपातकप्रेरितः (१४) ससैन्यो मृत्युमुखमिव अस्मत्सैन्यम् अभ्ययात्। तमभ्यायान्तं विदित्वा राजपुत्रः पुरः (१५) अभवत्। अतोऽश्मकेन्द्रम् एव तुरगाधिरूढो यावत् अभ्यसरं, तावत् सर्वा एव तत्सेनाः (१६) 'यत् अयम् एतावतोऽपरिमितस्य अस्मत्सैन्यस्य उपरि एक एव अभ्यागच्छति, तदत्र भवानीवर एव असाधारणं कारणं, नान्यत्' इति निश्चित्य आलेख्यलिखिता (१७) इव अवस्थिताः। ततो मयाऽभिगम्य युद्धाय समाहूतो वसन्तभानुः समेत्य माम् असिप्रहारेण हन्तुम अभ्यद्रवत्। अहञ्च शिखाविशीर्णविफलित-तदसिप्रहारः (१८) प्रतिप्रहारेण तं प्रहृत्य (१९) अवक्रान्तम् (२०) अश्मकेन्द्रशिरोऽवनौ विनिपात्य तत्सैनिकान् अवदम्—'अतः परमपि ये युयुत्सवो भवन्ति, ते समेत्य मया युध्यन्तां, न चेत्

(११) साकं सार्द्धं, ("साकं सार्द्धं समं सह" इत्यमरः)।

(१२) विहिते कृते।

(१३) स्थः; स्थितः। (अवस्थास्यते इत्यत्र अव-पूर्वकत्वात् स्था-धातोरात्मनेपदित्वम्)।

(१४) परेति।—परस्य अनन्तवर्मणः, राज्यस्य आक्रमणम् अतिक्रमणं, बलपूर्वकमवरोध इत्यर्थः, तदेव पातकं, तेन प्रेरितः।

(१५) पुरः अग्रे, अग्रेसर इत्यर्थः।

(१६) तत्सेनाः तस्य अश्मकेन्द्रस्य सेनाः।

(१७) आलेख्यलिखिताः चित्रार्पिताः।

(१८) शिखेति।—शिखाविद्धं शिर शिखाग्रेणेत्यर्थः, विफलितः व्यर्थीकृतः, तस्य वसन्तभानोः, असिप्रहारः येन तथाभूतः।

(१९) प्रहृत्य आघातं कृत्वा।

(२०) अवक्रान्तं छिन्नम्।

राजसूनुचरणप्रणामं विधाय तदीयाः सन्तः स्वस्ववृत्त्युपभोग-पूर्वकं निजान् निजान् अधिकारान् निःशङ्कं परिपालयन्तः सुखेन प्रवर्तिष्यन्ताम्' इति। मद्वचनश्रवणानन्तरं सर्वेऽपि अश्मकेन्द्रसेवकाः स्वस्ववाहनात् सहसा अवतीर्य्य राजसूनुम् आनम्य तदनुवर्त्तिनः समभवन्। ततोऽहं तत् अश्मकेन्द्रराज्यं राजसूनुसात् विधाय तद्रक्षणार्थं मौलान् स्वान् अधिकारिणो नियुज्य आत्मीभूतेन अश्मकेन्द्रसैन्येन च साकं विदर्भान् अभ्येत्य राजधान्यां तं राजतनयं भास्करवर्माणम् अभिषिच्य पित्र्ये पदे न्यवेशयम्।

एकदा च मात्रा वसुमत्या सह अवस्थितं तं राजानं (२१) व्यजिज्ञपं—'मया एकस्य कार्य्यस्य आरम्भश्चिकीर्षितः (२२) अस्ति। स यावत् न सिध्यति तावन्मया न कुत्रापि एकत्राव-स्थातुं शक्यम्; अत इयं मङ्गार्य्या त्वङ्गिनो मञ्जुवादिनी कियन्ति अहानि युष्मदन्तिकमेव तिष्ठतु। अहञ्च यावदिष्ट-जनोपलम्भं (२३) कियन्तमपि अनेहसं (२४) भुवं परिभ्रम्य तम् आसाद्य पुनः अत्र समेष्यामि'। इति आकर्ण्य मात्राऽनुमतेन राज्ञा अहमगादि—'यत् अस्माकमेतद्राज्योपलम्भलक्षणस्य एतावतोऽभ्युदयस्य असाधारणो हेतुर्भवानेव; भवन्तं विना क्षणमपि अस्माभिः इयं राज्यधूर्न निर्वाह्या; अतः किमेवं वक्ति भवान्?'। इति आकर्ण्य मया प्रत्यवादि—'युष्माभिः अयं चिन्तालवोऽपि (२५) न चित्ते चिन्तनीयः; युष्मद्गृहे यः

(२१) राजानं भास्करवर्माणम्।

(२२) चिकीर्षितः कर्तुमभिलषितः।

(२३) यावदिति।—इष्टजनस्य प्रियजनस्य, उपलम्भं लाभं यावदित्यर्थः।

(२४) अनेहसं कालं, ("कालो दिष्टोऽप्यनेहाः" इत्यमरः)।

(२५) चिन्तालवोऽपि स्वल्पाऽपि चिन्ता।

सचिवरत्नम् आर्य्यकेतुः अस्ति, स इहत्रिविधानाम् अनेकेषां राज्यानां धुरम् उद्वोढुं शक्तः। ततस्तं तत्र नियुज्य अहं गमिष्यामि' इत्यादिवचनजातैः प्रलोभितोऽपि मज्जननीभ्यां नृपोऽनेकैः आग्रहैः मां कियन्तमपि कालं प्रयाणोपक्रमात् (२६) न्यवर्त्तयत्, उत्कलाधिपतिः प्रचण्डवर्म्मणो राज्यं मह्यं प्रादाच्च। अहञ्च तद्राज्यम् आत्मसात् कृत्वा राजानम् आमन्त्र्य यावत् त्वदन्वेषणाय प्रयाणोपक्रमं करोमि, तावदेव अङ्गनाथेन सिंहवर्म्मणा स्वसाहाय्याय आकारितोऽत्र समागतः पूर्वपुण्यपरिपाकात् स्वामिना (२७) समगंसि।"

ततस्ते तत्र सङ्गता अपहारवर्मोपहारवर्माऽर्थपाल-प्रमति-मित्रगुप्त-मन्त्रगुप्त-विश्रुताः सर्वे कुमाराः पाटल्यां यौवराज्यम् उपभुञ्जानं समाकारणे (२८) पूर्वकृतसङ्केतं वामलोचनया भार्य्यया सह कुमारं सोमदत्तं सेवकैः आनाय्य सराजवाहनाः सम्भूय अवस्थिता मिथः प्रमोदसंवलिताः कथा यावद्विदधति, तावत् पुष्पपुरात् राज्ञो राजहंसस्य आज्ञापत्रम् आदाय समागता राजपुरुषाः प्रणम्य राजवाहनं व्यज्ञापयन्— "स्वामिन्! भवज्जनकस्य भूपतेः राजहंसस्य आज्ञापत्रमिदं गृह्यताम्।" इत्याकर्ण्य समुत्थाय भूयो भूयः सादरं प्रणम्य सदसि तत्र आज्ञापत्रम् अग्रहीत्। शिरसि च आधाय तत उत्तार्य्य उन्मोच्य (२९) राजा राजवाहनः सर्वेषां शृण्वतामेव अवाचयत्—"स्वस्ति श्रीः पुष्पपुरराजधान्याः श्रीराजहंस-भूपतिः चम्पानगरीम् अधिवसतो राजवाहनप्रमुखान् कुमारान्

(२६) प्रयाणोपक्रमात् प्रस्थानारम्भात्, प्रस्थानोद्यमादित्यर्थः।

(२७) आकारितः आहूतः। स्वामिना, त्वयेति शेषः।

(२८) समाकारणे समाह्वाने।

(२९) उन्मोच्य उन्मुद्र्य, मुद्रां भङ्क्त्वा इत्यर्थः।

आशास्य (२०) आज्ञापत्रं प्रेषयति, यथा—यूयमितो माम् आमन्त्र्य प्रणम्य प्रस्थिताः पथि कस्मिंश्चित् वनोद्देशे उपशिवालयं स्कन्धावारम् अवस्थाप्य स्थिताः। तत्र राजवाहनं शिवपूजार्थं निशि शिवालये स्थितं प्रातः अनुपलभ्यावशिष्टाः सर्वेऽपि कुमाराः 'सहैव राजवाहनेन राजहंसं प्रणंस्यामः, न चेत् प्राणांस्त्यक्ष्यामः' इति प्रतिज्ञाय सैन्यं परावर्त्य राजवाहनम् अन्वेष्टुं पृथक् प्रस्थिताः। एतं भवद्वृत्तान्तं ततः प्रत्यावृत्तानां सैनिकानां मुखात् आकर्ण्य असह्यदुःखोदन्वति (२१) मग्नमनसौ उभौ अहं युष्मज्जननी च 'वामदेवाश्रमं गत्वा एतद्वृत्तान्तं तद्विदितं (२२) विधाय (२३) प्राणपरित्यागं कुर्वः' इति निश्चित्य तदाश्रमम् उपगतौ तं मुनिं प्रणम्य यावत् स्थितौ, तावदेव तेन त्रिकालज्ञेन मुनिना विदितमेव अस्मन्मनीषितं (२४) निश्चयम् अवबुध्य प्रावोचि—'राजन्! प्रथममेव एतत् सर्वं युष्मन्मनीषितं योगबलादज्ञासि, यदेते त्वत्कुमाराः राजवाहननिमित्तं कियन्तं कालम् आपदमासाद्य भाग्योदयात् असाधारणेन पराक्रमेण विहितदिग्विजयाः प्रभूतानि राज्यानि उपलभ्य षोडशवर्षान्ते विजयिनं राजवाहनं पुरस्कृत्य प्रत्येत्य (२५) तव वसुमत्याश्च पादान् अभिवाद्य भवदाज्ञाविधायिनो भविष्यन्ति; अतः तन्निमित्तं किमपि साहसं न विधेयम्' इति। तदाकर्ण्य तत्प्रत्ययात् धैर्यमवलम्ब्य अद्य प्रभृति अहं देवी च प्राणम्

---

(२०) आशास्य आशीर्वादैरभिनन्द्येत्यर्थः।

(२१) असह्यदुःखोदन्वति दुःसहदुःखसागरे।

(२२) तद्विदितं तेन वामदेवेन, विदितं ज्ञातम्।

(२३) विधाय कृत्वा।

(२४) अस्मन्मनीषितम् अस्मदभिलषितम्।

(२५) प्रत्येत्य प्रत्यागत्य।

अधारयाव। इदानीम् आवन्तवर्त्तिनि अवधौ वामदेवाश्रमे गत्वा विज्ञप्तिः कृता—'स्वामिन्! त्वदुक्तावधिः पूर्णप्रायो भवति, तत्प्रवृत्तिः त्वया अद्यापि विज्ञायते?' इति। श्रुत्वा मुनिः अवदत्—'राजन्! राजवाहनप्रमुखाः सर्वेऽपि कुमाराः अनेकान् दुर्जयान् शत्रून् विजित्य दिग्विजयं विधाय भूमण्डलं वशीकृत्य चम्पायाम् एकत्र सङ्गताः। तव आज्ञापत्रम् आदाय तदानयनाय प्रेष्यन्तां शीघ्रमेव सेवकाः।' इति मुनिवचनम् आकर्ण्य भवदाकारणाय आज्ञापत्रं प्रेषितमस्ति। अतःपरं चेत् क्षणमपि यूयं विलम्बं विधास्यथ, ततो मां वसुमतीञ्च मातरं कथावशेषौ एव श्रोष्यथ। इति ज्ञात्वा पानीयमपि पथि भूत्वा पेयम्" इति। एवं पितुः आज्ञापत्रं मूर्ध्नि विधृत्य गच्छेमेति निश्चयं चक्रुः। अथ वशीकृतराज्यरक्षापर्याप्तानि सैन्यानि समर्थतरान् पुरुषान् आप्तान् स्थाने स्थाने नियुज्य कियता सैन्येन मार्गरक्षां विधाय "पूर्वशत्रुं मालवेश्वरं मानसारं पराजित्य तदपि राज्यं वशीकृत्य पुष्पपुरनगरे राज्ञो राजहंसस्य देव्याः वसुमत्याश्च पादान् नंस्याम." एवं निश्चित्य स्वस्वभार्यासंयुताः परिमितेन सैन्येन मालवेशं प्रति प्रस्थिताः। प्राप्य च उज्जयिनीं तदैव सहायभूतैः तैः कुमारैः परिवृतेन राजवाहनेन अतिबलवानपि मालवेशो मानसारः क्षणेन पराजिग्ये (५६) निहतश्च। ततः तद्दुहितरम् अवन्तिसुन्दरीं समादाय चण्डवर्मणा तन्मन्त्रिणा पूर्वं कारागृहे रक्षितं पुष्पोद्भवं कुमारं सकुटुम्बं तत उन्मोचितं सह नीत्वा मालवाधीशराज्यं वशीकृत्य तद्रक्षणाय कांश्चित् सैन्यसहितान् मन्त्रिणो नियुज्य सर्वेऽपि स्वपरिमितसैन्यसहितास्ते कुमाराः पुष्पपुरं समेत्य राजवाहनं पुरस्कृत्य तस्य राजहंसस्य मातुर्वसुमत्याश्च चरणान्

---

(५६) पराजिग्ये [ "उप सि(?)टार्कः" (७।१।५७ पा०) इति कुत्वम् ]।

ऽभिवन्दितवन्तः। तौ च पुत्रसमागमं प्राप्य परमानन्दम् अधिगतौ। ततो राज्ञो वसुमत्याश्च देव्याः समक्षं वामदेवो राजवाहनप्रमुखाणां दशानाम् अपि कुमाराणाम् अभिलाषं विज्ञाय तान् आज्ञापयत्—"भवन्तः सर्वेऽपि एकवारं गत्वा स्वानि स्वानि राज्यानि न्यायेन परिपालयन्तु। पुनर्यदा इच्छा भवति तदा पित्रोश्चरणाभिवन्दनाय आगन्तव्यम्" इति। ततस्ते सर्वेऽपि कुमारास्तन्मुनिवचनं शिरसि आधाय तं प्रणम्य पितरौ च गत्वा दिग्विजयं विधाय प्रत्यागमनान्ते स्वस्ववृत्तं पृथक् पृथक् मुनिसमक्षे न्यवेदयन्। पितरौ च कुमाराणां निज-विक्रमावबोधकानि अतिदुर्घटानि चरितानि आकर्ण्य परमा-नन्दम् आप्नुताम्। ततो राजा मुनिं सविनयं व्यजिज्ञपत्—"भगवन्! तव प्रसादात् अस्माभिर्मनुजमनोरथाधिकाम् अवाङ्मनसगोचरं (१७) सुखम् अधिगतम्, अतःपरं मम स्वामि-चरणसन्निधौ वानप्रस्थाश्रमम् अधिगत्य आत्मसाधनम् (१८) एव विधातुम् उचितम्; अतः पुष्पपुरराज्ये मानसार-राज्ये च राजवाहनम् अभिषिच्य अवशिष्टानि राज्यानि नवभ्यः कुमारेभ्यो यथोचितं सम्प्रदाय ते कुमाराः राजवाहनाज्ञाविधा-यिनः तदेकमत्या वर्त्तमानाश्चतुरुदधिमेखला वसुन्धरां समुद्धृत्य कण्टकान् यथा उपभुञ्जन्ति तथा विधेयं स्वामिना" इति। तेषां तत्पितुर्वानप्रस्थाश्रमग्रहणोपक्रमनिषेधे भूयांसम् आग्रहं (१९) विलोक्य मुनिः तानवदत्—"भो. कुमारकाः! अयं युष्मज्जनक एतद्वयःसमुचिते पथि वर्त्तमानः कायक्लेशं विनैव

---

(१७) अवाङ्मनसगोचरं वाङ्मनसयोरविषयं, वर्णनातीतं चिन्तातीतञ्चेति यावत्।

(१८) स्वामिचरणेति।—स्वामिनश्च, चरणसन्निधौ चरणसमीपे। आत्म-साधनं परमात्मचिन्तनम्।

(१९) भूयांसं महान्तम्। आग्रहं यत्नम्।

महाश्रमस्थो वानप्रस्थाश्रमाश्रयणाय समुत्सुकः सर्वथा भवद्भिर्न निवारणीयः। अत्र स्थितस्त्वयं भगवद्भक्तिम् उपलप्स्यते। भवन्तश्च पितृसन्निधौ न सुखम् अवाप्स्यन्ति"। (४०) इति महर्षेः आज्ञाम् अधिगम्य ते पितुर्वानप्रस्थाश्रमाधिगमप्रतिषेधाग्रहम् अत्यजन्। राजवाहनं पुष्पपुरेऽवस्थाप्य तदनुज्ञया सर्व्वेऽपि परिजनाः स्वानि स्वानि राज्यानि प्रतिपाल्य स्वेच्छया पित्रोः समीपे गतागतम् अकुर्व्वन्। एवम् अवस्थितास्ते राजवाहनप्रमुखाः सर्व्वेऽपि कुमाराः राजहंसाज्ञया सर्व्वमपि वसुधावलयं (४१) न्यायेन परिपालयन्तः परस्परम् ऐकमत्येन वर्त्तमानाः पुरन्दरप्रभृतिभिः (४२) अपि अतिदुर्लभानि राज्यसुखानि अन्वभूवन्।

इति श्रीदण्डिना कृतौ दशकुमारचरिते विश्रुतचरितं नाम अष्टम उच्छ्वासः।

इति श्रीदण्डिना कृता दशकुमारचरितस्य उत्तरपीठिका समाप्ता।

---

(४०) अवाप्स्यन्ति प्राप्स्यन्ति, अधीनत्वादिति भावः।

(४१) वसुधावलयं पृथिवीमण्डलम्।

(४२) ऐकमत्येन एकमतावलम्बनेन। पुरन्दरप्रभृतिभिः इन्द्रादिभिः।

इति अष्टमोच्छ्वासटीका।

इति बि, ए, उपाधिधारिणा पण्डितकुलपतिना श्रीजीवानन्दविद्यासागर-भट्टाचार्य्येण विरचिता छात्रबोधिनी व्याख्या।

